# पञ्चतन्त्रम् ।

## श्रीविष्णुशर्म्मणा सङ्कलितम् ।

पण्डितकुलपतिना

बि, ए, उपाधिधारिणा

श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितया

तदात्मजाभ्यां

पण्डितश्रीमदाशुबोधविद्याभूषण-पण्डितश्रीमन्नित्यबोध-

विद्यारत्नाभ्यां प्रतिसंस्कृतया च व्याख्यया

समलङ्कृतं प्रकाशितञ्च ।

दशमसंस्करणम्

कलिकातामहानगर्य्याम्

वाचस्पत्ययन्त्रे

मुद्रितम्

ई १९३०

प्रकाशक— पण्डित-श्रीआशुबोध-विद्याभूषण
तथा
पण्डित-श्रीनित्यबोध-विद्यारत्न।

प्राप्तिस्थान— २नं०, रमानाथ मजुमदार ष्ट्रीट्, आम्हार्ष्ट-
ष्ट्रीट् पोष्ट-अफिस। कलिकाता।

प्रिण्टर—वि, वि, मुखर्जी।
२ नं०, रमानाथ मजुमदार ष्ट्रीट्, कलिकाता।

# पञ्चतन्त्रेऽभिनवावतरणिका ।

श्रूयते किल पुरा समस्तशास्त्रसारदृश्वानः कतिनो नीतिशास्त्रेषु सुराचार्य्य-भार्गवादयः स्वष्टजनुरूर्ध्वं पञ्चशत-तमशरदादौ आविर्भूय भुवि पृथुलं प्रतनतममितनयशास्त्रं विरचय्याभिनवपद्धत्या कृत्स्ननिर्णेतॄणां श्रियमेवास्य विधातुं परिपोषयितुञ्चैतदलमेशतेति । अथ विष्णुगुप्तापरनामधेयो धीरधिषणः कौटिल्यः, मौर्य्यवंशावतंसं क्षितितलं शासतं नृप-मणिं चन्द्रगुप्तं सरित्पतिप्रतीकाशां दण्डनीतिं सुखमवबोध-यितुमेव षड्भिः सहस्रेण श्लोकैः संक्षिप्य सारभूतमेकं नीति-शास्त्रं प्राणैषीत् । ततस्तस्यैव अन्तेसदा कामन्दकेनापि नीति-सारनामकमपरमेकं नीतिशास्त्रं प्राणायि । गते चेत्थं बहु-तिथे काले क्रमादेतदाचार्य्यपरम्परया अधीतिबोधाऽऽचरण-प्रचारणादिदोषेण दुर्बोधत्वं विषमत्वञ्च नीतम् ।

अथ कोऽपि धीमान् लोकाचारसुचारुविचारचतुरः अति-कठोरं शास्त्रमेतदतिसरलं सुगमञ्च संविधातुं मृगविहङ्गमादि-कथाभिषेण सुकुमारधियां पृथुकानां मृणालपेलवावदातचेतांसि समाकृष्यार्थजिगापयिषयेव च पञ्चभिस्तन्त्रैर्नियन्त्रितं प्रत्यग्र-मिमं नयग्रन्थं विरचितवान् । को हि नामासौ कोविदः ग्रन्थ-मिमं प्राणैष्ट, तदधुनाऽपि केऽपि विशदीकर्त्तुं नेहषत ; परन्त्वेत-द्ग्रन्थप्रस्तावनायामालोक्यते यत्, विष्णुशर्मनामा कश्चिन्नयचणः नियतमुन्मार्गगामिनामविदुषां राजतनयानां सरलेनैवोपायेन विपश्चिन्मतमत्यर्थेषु प्रवर्त्तनाय ग्रन्थमिमं रचयामासेति । सहस्राधिकसंवत्सरतमसमयमेतिह्यञ्चैतत् प्रचरति, पद्यैश्चापि चैवमेव ग्रन्थारम्भे ग्रन्थकृता । तल्लिपिकर्त्रा केनचिद्विदुषा विष्णुशर्मनाम्नि कस्मिंश्चित् नीतिनिष्णाते विपश्चिति तद्ग्रन्थकृतित्वं किमारोपितम् ? इत्यनिशं विभावयतां विपर्य्यासग्राहग्रास-

प्रस्तावत्यर्थं समाकुलानि च भवन्ति नवीनप्रत्नतत्त्वविदां मनांसि। सत्यप्येवं, विष्णुशर्म्मैव एतस्य ग्रन्थस्य रचयिता मङ्गाङ्क-कश्च, तत्र नास्ति किमपि तथ्यमवदातं तोषकरञ्च प्रमाणम्।

दृश्यते हि महाकविकुलपुङ्गवविशाखदत्तविरचितनाटके मुद्राराक्षसे गृहीतनटशरीरः कौटिल्यः स्वयमेवाह—"अस्ति चास्माकं सहाध्यायि मित्रं विष्णुशर्म्मा नाम ब्राह्मणः; स चौश-नस्यदण्डनीतौ, चतुःषष्ट्यङ्गे ज्योतिःशास्त्रे च परं प्रावीण्यमुप-गतः" इति। असौ विष्णुशर्म्मा एव पञ्चतन्त्रस्य रचयितेति मन्यन्ते केचित्। तेषां मते असौ हि महामनाः खृष्टाविर्भावात् पूर्वं तृतीयस्य शतसंवत्सरस्यान्ते चतुर्थस्यादौ वोदियाय; यतो महाबलमौर्य्यवंशप्रतिष्ठापकः नृपवरः चन्द्रगुप्तः खृष्टजननात् प्राक् द्वादशाधिकत्रिशततमाब्दे सुसहायकं नयाभिज्ञचाणक्य-मवाप्यैव तदोजसा नव नन्दान् पराजित्य तदीयसिंहासनमधि-चकारेति। चाणक्यसुहृत् विष्णुशर्म्माऽपि तदैव समजनीति।

अपरे च मुद्राराक्षसोक्तसंवादः न प्रमाणमिति मन्यन्ते, न स्वीकुर्वन्ति च चाणक्यमित्रं विष्णुशर्म्मैव पञ्चतन्त्रस्य रचयितेति। पर्य्यालोच्यैतं विवदमानानां विविधवादमस्माभिः क एव पञ्च-तन्त्रस्यास्य रचयितेति नैव सम्यक् निर्णीयते; को हि महात्मा कदैवैतत् व्यरचयत्, तदपि न सुष्ठु कैरपि स्थिरीकृतम्; वयमिह कथञ्चिदेव तत् आलोचयिष्यामः।

केषाञ्चिदेव ग्रन्थानां रचनासमयनिर्णयावसरे अविसंवादिनौ वाह्याभ्यन्तरप्रमाणरूपौ द्वावप्येतावुपायौ सम्यगपेक्षणीयौ परि-ग्रहणीयौ च, यावेवेदानीमनुमन्यन्ते नवीनाः प्रत्नतत्त्वनिर्णय-निपुणाः। तत्र वाह्यप्रमाणं यथा,—

पञ्चतन्त्ररचनासमये सुस्फुटमविज्ञातेऽपि गौणेनैवानेनाभ्यु-पायेनैतस्य कियदेवावगन्तुं शक्यते एव। पारसीकाधिराजः नसिवानः खृष्टीयैकत्रिंशदधिकपञ्चशततमसमायाः प्रभृति

एकोनाशीत्यधिकपञ्चशततमाब्दं यावत् नृपासनमलञ्चकार ।
तदानीं तद्देशत एव बुर्जरचुमिराभिधेयः कश्चित् महाभिषक्
पारदीयापरनामपेह्लवीति-भाषया पञ्चतन्त्रमेतदन्ववादीत् ।

इदञ्च पुरा राजतनयान् सुशिक्षयितुमेव मन्त्रिवृद्धैस्तैरेव
सयत्नं समगोपायि ; यतश्चैतत् तन्त्रं राजनीति-दण्डनीतिप्रभृति-
भूयिष्ठमेवासीत् । प्रोक्तभिषग्वरेणातिमहतैवायासेनैतत् सङ्गृही-
तम् ; अतश्चार्वाचीनाश्चानुमिन्वन्ति यत्, एतत् खृष्टाविर्भावात्
परं पञ्चमशताब्दे प्रचरति स्म, नो चेत् खृष्टीयषष्ठशताब्दे
वैदेशिकैरस्यानुवादः कृत इत्यसम्भावित एवाऽऽभाति ।

कथं हि तत्त्वानुसन्धित्सुभिः कमपि कालमनिर्णीय केवलं
पञ्चमशताब्दे एव रचितमेतदिति निरणायि, तत्रास्त्येतदेवाधो-
लिखितम् आभ्यन्तरिकं प्रमाणम् ; यथा,—

पञ्चतन्त्रे तु मौहूर्त्तिकवरेण्यवराहमिहिरस्य कृतेः ज्योतिषां
निचयात् कियन्तः श्लोकाः समुद्धृत्य विनिवेशिता इति दृश्यन्ते ।
अर्वाग्भवाश्च सुधियः दृष्ट्वैतन्निश्चिन्वन्ति यत, वराहमिहिरोदयस्य
अधस्तादेवैतत् काव्यं निरमायीति । असौ हि ज्योतिर्विदग्रणीः
खृष्टीयषट्सप्तत्यधिकचतुःशततमाब्दे आविरासीदिति निरधारि ।

ततश्च बाह्याऽभ्यन्तरप्रमाणाभ्याम् एवं स्थिरीभवति यत्
खृष्टीयैकोनाशीत्यधिकपञ्चशततमाब्दात् परतः षट्सप्तत्यधिक-
चतुःशततमाब्दात् पुरतः एव नैतद्विरचितमिति ।

माघप्रभृतीनां तत्रभवतां महाकवीनामत्र कियन्तः श्लोकाः
दृश्यन्ते । महाकविः माघस्तु खृष्टीयनवमशताब्दे एव प्राणिति स्म
इति निर्द्धारितम् ; तस्मात् य एव हि प्राक् पञ्चतन्त्ररचनाकालः
निर्णीतः, तेनैव सह महान् विरोधः आपतति, तत्तु सुधीभिर्ध्येयम् ।

अत्र हि विद्वत्प्रवरः म्याक्‌डोनेल इत्थमभिदधाति,—न हि
भवति पञ्चतन्त्रं मूलीभूतं काव्यम् ; अस्य हि मूलं पञ्चभि-
स्तन्त्रैर्न हि पुरा तन्त्रितमासीत् ; यतश्चैतदतीव प्रततमसन्-

दितं द्वादशात्मकतन्त्रैरुपलक्षितं दृश्यते ; न हि भवति तस्य काव्यस्याभिधेयं पञ्चतन्त्रमेव, पञ्चमङ्गारूपमङ्केतेनैवाख्यापिता वा न भवति अस्यान्यविधा काऽप्यपराख्येति । सत्यं हि एतत्, पञ्चतन्त्रम् असम्पूर्णं सदेव समाप्तिमागतम् ; नास्ति नयशिक्षितानां नृपसुतानामपि विनयत्वज्ञापनं, ग्रन्थकृत उपसंहारवचनं, भरतवाक्यम् आशीःसंसूचकञ्च ग्रन्थसमाप्तौ ।

काव्यमेतत् पारसीक-ग्रीसीय-आरबीय-सिरियकभाषाभिः तत्रत्रीणावह्वाङ्गश्चानूदितम् ; तत्र चारबीयानुवादस्य नाम "कालीलदामना" सिरियकानुवादस्य च "कालिलग् दमनग्" इति । दृष्टैर्तद्विद्वत्प्रवरः स्याकडोनलोऽनुमन्यते यत्, द्वे अपि एते नामनी नूनं करटक-दमनकयोरपभ्रंशभूते ; अन्यदप्याह यत् पञ्चभ्योऽप्यधिकानि अत्र तन्त्राण्यासन् ; अतोऽस्यैवाभिधानमज्ञातं, संस्कृतमूलग्रन्थस्तु विलुप्तः ; तस्य तु किन्नामासीत्, को वाऽस्य रचयितेति कैरपि न ज्ञायते ।

किञ्चासौ इदमप्याह, तस्मिन् हि विलुप्ते संस्कृतमूलग्रन्थे बौद्धभावव्यूहा विशेषतश्च प्रासरन् ; ततश्च तान्त्रिकाः वेदविदः द्विजातयः तांस्तांश्च भावान् स्वधर्माननुकूलान् मतविशेषांश्च पर्य्यहार्षुः ; तेनैवातिमहतो द्वादशभागमितस्य नीतिशास्त्रस्य शरीरं स्वल्पमेवावाशिषत्, पञ्चतन्त्रे एव पर्य्यवसीत्र ; तदेतदेवाधुनातनं नीतिशास्त्रं पञ्चतन्त्रं प्रचरति, बौद्धभावावेशिताः विविधाः कथास्तस्मादेवातानुश्रयन्ते ।

हुयेङ्साङ्नामकः चीनदेशीयः परिव्राजकः स्वीयभारतभ्रमणवृत्तान्तावलीविवृतौ एवमेवाभ्यधात् । यदाऽसौ स्वयमेव भारतभूमौ शाक्यसिंहसिद्धिस्थलीं बुद्धगयां बौद्धमहातीर्थं नालन्दादिविद्यालयं विहारादिकञ्चावलोकयितुम् उपागमत्, तदा भिक्षुकागाराणि विहारतीर्थप्रभृतीनि विगतप्रभाणि चाद्राक्षीदिति ।

एतेन, बौद्धधर्मस्यावनतिस्तदागमनात् पुरत एव भवितु-मारब्धेति प्रतीयते ; काले चैतस्मिन्नेव पञ्चमशताब्दशेषार्द्धमारभ्य षष्ठशताब्दं यावत् व्यरचि पञ्चतन्त्रम्, इति निरधारि प्रागेशा-स्त्राभिः ; अतस्तस्मिन् किल काले बौद्धभावबहुलेषु पुस्तकेषु सम्यगनादरो न पुनश्चिरम् ; तथाऽपि मूलमेतद्ग्रन्थस्यातीव मनोरमं, बालजनशिक्षणानुकूलं, सुकुमारधियामन्तेवासिनाञ्चा-तीव उपकारकमेवेति विभाव्याद्यमिश्राः सनातनधर्मगृह्या गुरवः कुत्रचित् परिवर्त्य परिवर्द्ध्य चैतत् अत्यन्तं स्वेषां शिष्याणां पाठनादिमकार्षुः। भूयसायासेन परिवर्त्तितेऽप्येतस्मिन् बौद्ध-धर्मप्रभावः तत्समग्रपद्धतिश्च सर्वथैव न व्यलुपत्।

पञ्चतन्त्रे बौद्धप्रभावपारम्पर्य्यादागता बहूनां क्षपणकादी-नाञ्च विविधाः कथा उपवर्णिताः, बौद्धानुभाववशादेवैते शब्दाश्चात्र व्यवाह्रियन्त ; नो चेत् तत्सामाजिकशब्दानामत्र ग्रन्थे प्रयोगस्य नास्ति कोऽप्यन्यविधो हेतुः।

अपि चास्माभिरत्र जिनार्चनवर्णितः ५०९ पत्राङ्कतः १२। १३।१४ सङ्ख्यकश्लोकेषु मधुरमुपवर्णिता दृश्यते, परिवर्त्तितेऽपि पञ्चतन्त्रे तेषां तेषाञ्च बौद्धभावसमुदायानां दर्शनात् मूल-भूतस्यैतस्य बौद्धभावभूयिष्ठत्वमासीदिति अनुमीयते।

मठशब्दानाञ्च भूरिशः प्रयोगात् मठश्चात्र बौद्धसम्प्रदाय-सिद्धमठ एवेति कैश्चित् अबोधि ; "मठश्छात्रादिनिलयः" कथं न भवतीति कैरपि नाशङ्कितम् ; अपि च यत् भगवतोऽद्वैत-वादप्रचारैकगुरोः शङ्करस्य जननात् प्राक् बौद्धेभ्यः ऋते भारते-ऽन्येषां केषामपि साम्प्रदायिकानां मठो नासीदिति, पञ्चतन्त्रञ्च भगवच्छङ्कराविर्भावात प्रागेव विरचितम् ; अतश्चात्र ग्रन्थे व्यवहृताः मठशब्दा बौद्धमठमेव प्रत्याययन्तीति वेदितव्यम्।

अपि चात्र धृतानि वीरबलाद्युपाख्यानानि वेतालपञ्च-विंशतिग्रन्थेऽन्यत्रापि च दृश्यन्ते ; अतः 'वन्फे' इत्याख्यः

सुधीवर्य्यो बौद्धजातकग्रन्थत एतानि सङ्कलितानीत्यन्वमिनोत्, यत् आख्यायिकाश्चैताः बौद्धजातकग्रन्थेषु दृश्यन्ते इति।

इत्थमेवात्र समादधति अर्वाचीनाः प्रत्नतत्त्वानुसन्धित्सवः यत्,—केनापि महता परमविदुषा नयकुशलेन विविधेभ्यो नीतिशास्त्रेभ्यः धर्मसंहिताभ्यश्चैतानि रत्नाकररत्नान्यनर्घ्याणि सङ्गृह्यैतत् समकलि। रचनापाटवभङ्गीषु निरीक्ष्यमाणास्वपि चानुशीलितासु सुसूक्ष्मधिया कैरपि निर्णेतुं न शक्यते यत्, केन हि महात्मना कदैतद्विरचितमिति।

यावदेवात्र प्रमाणमधिगतं, तत्र तत्र तु विश्वस्य एताव-न्मात्रमेवाभिधातुं शक्यते यत्,—खृष्टीयषट्सप्तत्यधिकचतुःशत-तमाब्दादारभ्य एकोनाशीत्यधिकपञ्चशततमशरदं यावत् तत् समाऽभ्यन्तरं एवैतन्निरमायीति। यावच्चैतस्मिन् किमपि समी-चीनं विद्वन्मानसामोदकरञ्च प्रमाणान्तरं न सङ्गृह्यते, तावदिद-मेव वक्तुं शक्यते यत्, उक्तसंवत्सराभ्यन्तरत एवैतत् केनापि कारुणिकेन कवित्वकीर्त्तिसम्पदेऽपि अस्पृहयता स्वनामा-प्रदायैव प्रथितादिनयविद्विष्णुशर्मनाम्नैवैतत् प्रकाशीकृतमिति। किञ्चात्र विभिन्नमतानां बहुधा विवादे प्रचरत्यपि,—

"सकलार्थशास्त्रसारं जगति समालोक्य विष्णुशर्मेदम्।
तन्त्रैः पञ्चभिरेतच्चकार सुमनोहरं शास्त्रम्" ॥

इति ग्रन्थादौ ग्रन्थकृत्परिचयदर्शनात् प्राचीनसंवादं संरक्ष्य चास्माभिर्विष्णुशर्मनाम्नैवैतत् प्रचारीकृतमित्यलमनल्पजल्पने-नेति। शं भूयात्।

ई॰ संवत् १९१९
कलिकाता।

श्रीमज्जीवानन्दविद्यासागरपौत्रः
एम, ए, बि, एल्, इत्युपाधिकः
श्रीपञ्चानन शर्मा।

# पञ्चतन्त्रस्य कथानां सूची।


| विषयाः | पृष्ठाङ्काः |
| --- | --- |
| ग्रन्थकर्तृमङ्गलाचरणम् ... ... ... | १ |
| ग्रन्थावतरणिका ... ... ... | २ |
| कथामुखम् ... ... ... | २ |


## मित्रभेदे—


| | |
| --- | --- |
| कथाप्रस्तावना ... ... ... | ७ |
| वणिग्-वृषभ-सिंह-शृगालानां कथा ... ... | ७ |
| कीलोत्पाटिवानरकथा ... ... ... | १४ |
| शृगाल-दुन्दुभिकथा ... ... ... | ४० |
| नृपति-दन्तिल-गोरम्भकथा ... ... ... | ५१ |
| देवशर्माख्यद्विज-आषाढभूतिकयोः, युध्यमानहुडुद्वय-जम्बुकानां, द्विज-सभार्यकौलिक-दूतिका-नापितभार्याश्च कथा ... | ६५ |
| विष्णुरूपधारिकौलिक-राजकन्याकथा ... ... | ८८ |
| वायसी-कृष्णसर्प-कनकसूत्रकथा ... ... ... | १०० |
| बक-कुलीरककथा ... ... ... | १०१ |
| सिंह-शशककथा ... ... ... | १०८ |
| मत्कुण-मन्दविसर्पिण्योः कथा ... ... ... | १२२ |
| नीलवर्णशृगाल-सिंहादीनां कथा ... ... | १२५ |
| उष्ट्र-काक-सिंह-द्वीपि-शृगालादीनां कथा ... ... | १३६ |
| समुद्र-टिट्टिभयोः कथा ... ... ... | १४८ |
| हंसद्वय-कच्छपानां कथा ... ... ... | १५१ |
| त्रयाणां मत्स्यानां कथा ... ... ... | १५३ |
| चटका-काष्ठकूट-मक्षिका-दर्दुर-कुञ्जराणां कथा ... ... | १५९ |
| सिंह-वृक-शृगालानां कथा ... ... ... | १७३ |

| विषयाः | | | | पृष्ठाङ्काः |
|---|---|---|---|---|
| वानरयूथ-सूचीमुखपक्षिकथा | ... | ... | ... | १८४ |
| वानर-वनचटकाकथा | ... | ... | ... | १८६ |
| धर्मबुद्धि-पापबुद्धिकथा | ... | ... | ... | १८९ |
| बक-नकुल-कृष्णसर्पकथा | ... | ... | .. | १९४ |
| वणिकपुत्र-तुलादण्ड-बालकानां कथा | | ... | ... | १९६ |
| नरपति-वानरयोः, चौरविप्र-वणिकचतुर्विप्र-किरातानाञ्च कथा | | | ... | २०० |


## मित्रसम्प्राप्तौ—


| | | | | |
|---|---|---|---|---|
| काक-कूर्म-मृग-मूषिककथा | ... | ... | ... | २०६ |
| लघुपतक-चित्रग्रीव-हिरण्यककथा | ... | ... | ... | २०८ |
| हिरण्यक-ताम्रचूड-बृहत्स्फिक्कथा | ... | ... | ... | २३४ |
| लुञ्चिततिलविक्रयणप्रसङ्गे ब्राह्मण-ब्राह्मणीकथा | | ... | ... | २३९ |
| शूकर-पुलिन्द-शृगालानां कथा | ... | ... | ... | २४३ |
| प्रासव्यसर्प-कन्यापितृयानां कथा | ... | ... | ... | २५७ |
| सौमिलक-दैवपुरुषद्वयकथा | ... | ... | ... | २६९ |
| प्रलम्बवृषण-शृगाल-शृगालीकथा | ... | ... | ... | २७६ |


## काकोलूकीये—


| | | | | |
|---|---|---|---|---|
| वायसराजमेघवर्ण-उलूकराजारिमर्दनयोः कथा | | ... | ... | ३०४ |
| काकोलूकानां नित्यवैरोत्पत्तिकथा | | ... | ... | ३२९ |
| हस्ति-शशकानां कथा | ... | ... | ... | ३३४ |
| शश-कपिञ्जल-मार्जाराणां कथा | ... | ... | ... | ३४० |
| ब्राह्मण-छागल-धूर्तत्रयकथा | ... | ... | ... | ३५२ |
| महासर्प-पिपीलिकानां कथा | ... | ... | ... | ३५७ |
| ब्राह्मण-तत्पुत्र-सर्प-दीनारकथा | ... | ... | ... | ३६४ |
| स्वर्णपिच्छहंस-सौवर्णपक्षि-नरपतीनां कथा | | ... | ... | ३६६ |
| व्याध-कपोत-कपोतीनां कथा | ... | .. | ... | ३६८ |
| वृद्धवणिक्-तत्पत्नी-चौराणां कथा | ... | ... | ... | ३८१ |
| चौर-राक्षस-ब्राह्मणानां कथा | ... | ... | ... | ३८३ |
| वल्मीकस्थसर्प-उदरस्थसर्पयोः कथा | | ... | ... | ३८७ |

| विषयाः | पृष्ठाङ्काः |
| --- | --- |
| रथकार-तत्पत्नी-तज्जाराणां कथा ... ... ... | ३९१ |
| रमणीरूपिमूषिका तपस्विब्राह्मणयोः कथा ... ... | ३९७ |
| सुवर्णविट्कपक्षि नरपत्यादीनां कथा ... ... | ४०६ |
| शृगाल-तद्बिलगतसिंहकथा ... ... ... | ४०८ |
| मण्डूक-कृष्णसर्पकथा ... ... ... | ४२१ |
| भ्रष्टचारित्रब्राह्मणी-घृतान्धब्राह्मणकथा ... ... | ४२५ |


## लब्धप्रणाशे—


| | |
| --- | --- |
| वानर-मकरकथा ... ... ... | ४३९ |
| गङ्गदत्त प्रियदर्शनकथा ... ... ... | ४५१ |
| सिंह-शृगाल-रासभकथा ... ... ... | ४६१ |
| नरपति-युधिष्ठिराख्यकुम्भकारकथा ... .. | ४६८ |
| सिंह-सिंहशिशु-शृगालवत्सकथा ... ... ... | ४७० |
| ब्राह्मण तत्पत्नी तज्जारपङ्गूनां कथा ... ... | ४७४ |
| नन्द वररुचि-तद्भार्याणां कथा ... .. | ४७९ |
| व्याघ्रचर्मावृतरासभकथा ... .. ... | ४८१ |
| हालिकपत्नी-तज्जार शृगालीकथा ... ... | ४८६ |
| रथकार घण्टायुक्तदासेरककथा ... ... ... | ४९० |
| सिंह व्याघ्र द्वीपि-मृतहस्ति शृगालकथा .. ... | ४९६ |
| चित्राङ्गनामकसारमेयकथा ... ... | ५०२ |


## अपरीक्षितकारके—


| | |
| --- | --- |
| श्रेष्ठिमणिभद्र-नापित क्षपणकरूपिपद्मनिधि क्षपणक धर्माधिकरणिकानां कथा | ५०४ |
| ब्राह्मण तत्पत्नी-नकुलानां कथा ... ... ... | ५१५ |
| चतुर्णां ब्राह्मणपुत्राणां कथा ... ... .. | ५१८ |
| सिंहकारकब्राह्मणपुत्राणां कथा .. ... ... | ५२९ |
| पण्डितमूर्खाणां चतुर्णां ब्राह्मणवटूनां कथा ... ... * | ५३१ |
| एकबुद्धि-शतबुद्धि-सहस्रबुद्धीनां कथा ... ... | ५३६ |
| शृगाल गायकगर्दभयोः कथा ... ... ... | ५४० |

| विषयाः | पृष्ठाङ्काः |
| --- | --- |
| चतुर्भुजमन्थरकौलिककथा ... ... ... | ५४४ |
| सोमशर्मतात शक्तुभाण्डयोः कथा ... ... ... | ५५१ |
| वानर-चन्द्राख्यनृपयोः कथा ... ... ... | ५५३ |
| विकाल-राक्षस-वानराणां कथा ... ... ... | ५६२ |
| त्रिस्तनीकन्या-अन्ध-कुब्जानां कथा ... ... ... | ५६७ |
| राक्षस-प्रच्छकब्राह्मणयोः कथा ... ... ... | ५६८ |
| एकोदरपृथग्ग्रीवभारण्डपक्षिणः कथा ... ... ... | ५७५ |
| सर्प-कर्कट-ब्राह्मणानां कथा ... ... ... | ५७८ |

# श्लोकोक्तविषयाणाम् अकारादिक्रमेण निघण्टुः।


| विषयाः | श्लोकाङ्काः |
|---|---|
| अक्षमता ··· | मि-भे० १४३ |
| अतिथिः (सत्कारः) | मि-भे० १८१—१८३, २११। का० १५२, १६२। ल० २—५ |
| अतिलोभः ··· | अ० २२ |
| अत्यल्पस्वीकारनिन्दा ··· | मि-भे० ३१६ |
| अदृष्टम् ··· | मि-भे० ३५१। मि-स० ८५, १८४। अ० ३०, ४२, ४३ |
| अनधिकारचर्चा ··· | मि-भे० ४२२ |
| अनित्यता ··· | मि-स० १९२ |
| अनिर्वृतिः ·· | मि-भे० २२९ |
| अनुशोचना | मि-भे० ३६२—३६४ |
| अपकारिणः दमनम् · | मि-भे० ३६५, ३९७ |
| अपरितोषपापम् ··· | मि-भे० ३०५ |
| अप्रश्ने कथनम् | मि-भे० ३३, ३४, ४२३। का० ४ |
| अवध्यः ··· | मि-भे० ३१४ |
| अभक्ष्यनिन्दा ··· | मि-भे० ३१८ |
| अभयदानम् ··· | मि-भे० ३१२ |
| अमरत्वम् ··· | मि-भे० १३९ |
| अराजकता ··· | का० ७१ |
| अर्थः | मि-भे० २—१०, १७४। मि-स० ९२—९४, १२४, १२५ |
| अर्थसामर्थ्यम् ··· | मि-स० ७१, ८९, [illegible] |
| अल्पगुणवतां निन्दा··· | मि-भे० ३०[illegible] |
| अविवेकः ··· | मि-भे० ४४०। ल० २[illegible] |
| अविश्रामभूमिः ··· | मि-भे० २८३। का० [illegible] |
| असज्जनकृता सतां निन्दा | मि-भे० ४४७, ४४[illegible] |
| असती, तल्लक्षणं तद्दोषश्च··· | मि-भे० १८४—१८७, १[illegible] |
| असन्धेयः ··· | ल० १५ |
| अस्थाने पाण्डित्यम् ··· | मि-भे० ४[illegible] |
| अस्पृश्यता ··· | का० ११६—११[illegible] |
| अहङ्कारः | मि-भे० ३२९, ३३७—३४०, ३[illegible] |
| अहिंसा ··· | ल० ४[illegible] |
| आत्मगुप्तिः ··· | मि-भे० २[illegible] |
| आत्मपापत्यागः ··· | मि-भे० २२[illegible] |
| आत्मरक्षा | ···मि-भे० ३८५—३८९। का० ८२—८[illegible] |
| आत्मीयता | मि-भे० ११० मि-स० १७७ |
| आयुः ··· | मि-स० ८५ |
| आवश्यकता ··· | मि-भे० ७७ |
| आश्रयः ··· | मि-भे० १३, ११९ |
| आसनम् ··· | का० ४४—५० |
| इन्द्रियं, तद्दमनफलञ्च | मि-स० १९ |

| विषयाः | श्लोकाङ्काः |
|---|---|
| उद्यमलक्षणम् ... | मि·सं० ६० |
| उत्तरम् ... | मि·भे० ६४ |
| उन्मादः | मि·सं० १४६—१४८ । का० २८ |
| उदरपोषणम् ... | मि·भे० २७८ |
| उपदेशः ... | मि·भे० ४२१ । मि·सं० १९६ । का० २४५—२४९ । ल० ७७ । अ० ५१, ७२, ७५, ९८ । |
| उपभोगविधिः ... | मि·सं० ८४ |
| उपायकौशलम् | मि·भे० २२८, २३०, ३५८ |
| एकता ... | मि·भे० ३६० |
| कन्याजननदुःखम् ... | मि·भे० २२२—२२४ |
| कन्यादान-पात्रनिर्णयः ... | का० २१० |
| कन्यालक्षणम् ... | अ० ८९, ९० |
| कर्णेजप-दोषकथनम् ... | मि·भे० ३२५ |
| कर्त्तव्यता | मि·भे० १४१, ३९० । अ० १७, १८ |
| कलह-दोषकथनम् ... | अ० ७०, ७१ |
| कापुरुषः | मि·भे० २६, ३५० । अ० ३३, ७६ |
| कामिता ... | मि·भे० २२०, २२१ |
| कालः ... | का० १३० |
| कालाकरणे कार्य्यहानिः | का० २१९, २२० |
| कीर्त्तिः ... | मि·भे० ३१० |
| कृतकर्म्मफलम् ... | का० १५५ |
| कृतघ्ननिन्दा ... | मि·भे० ४५३ । ल० ११ |
| कृपणता ... | मि·सं० ७६, ७७, ७८ |
| क्रोधः ... | मि·भे० ३३० |
| क्षमता | मि·भे० १, १६१, ३२८, ४१९ । मि·सं० १२० । अ० ५५ |
| खेदः | मि·सं० १९९ । का० १४४—१४६, १७५, १७६ । ल० ३१ |
| गानलक्षणम् ... | अ० ५३—५५ |
| गार्हस्थ्य-सुखाभाव-कथनम् ... | ल० ५० |
| गीतम् ... | अ० ५२, ५६ |
| गुणः ... | मि·भे० १०३—१०६ |
| गृहमेधि-धर्म्मः ... | मि·भे० ३७५ |
| गोपनीयविषयाः ... | मि·भे० १०९ |
| चरः (तल्लक्षणञ्च) ... | का० ६५—६९ |
| चिन्ता ... | अ० २७ |
| जन्मसाफल्यम् | मि·भे० १९०, ४२५—४२७ । मि·सं० १८१ । ल० १७ |
| जीवनस्य नश्वरता ... | मि·भे० २० |
| जीवितम् ... | मि·भे० २४ |
| तारुण्यम् ... | मि·भे० १[illegible] |
| तृष्णा ... | अ० १५, १६, ७७—७९ |
| तेजः ... | मि·भे० ३२, ३५४—३५७ । का० ७८ |
| दक्षः ... | मि·भे० ४०७, ४०८ |
| दया ... | मि·भे० २५ |
| दरिद्रता | मि·सं० ९५—९९, १०२—११०, १६८ । अ० २—७, २३—२६ |
| दरिद्रतायां दोषः | मि·भे० ४४२, ४४३ । मि·सं० ९१ |
| दातृता ... | मि·सं० ७३—७५, ७९ |
| दानम् ... | मि·सं० ५३—५५, १६७ |
| दासत्वम् ... | मि·भे० ८७—१०२ |
| दीर्घसूत्रता ... | का० २१९, २२० |
| दुःखम् ... | मि·सं० १८७ |
| दुर्हृदम् | मि·सं० २१—२३, ८८ । का० १५४ । अ० ८५ |

विषयाः — श्लोकाङ्काः

दुर्गः ( तल्लक्षणम् )...मि·भे० २५०—२५४। मि·स० १४—१६। का० १२१, १२५
दुर्जनता ...मि भे० २९६। का० ८१
दूतः ( तल्लक्षण·कार्ये ) का० ८६—८८
दृढ़ता मि·भे० ११६
दैवहतः का० २१८
द्वैधीभावः का० ६०—६४
धन धनसञ्चयौ मि भे० ४३१, ४३२। मि·स० १२१, १४२, १४३, १५५—१५९, १६६
धननिन्दा ... मि·स० १२२, १२३
धनवत्ता ... च० ८—१०
धन्यानां प्रशंसा ... मि भे० २८४। मि·स० ५७—५९। च० ७४
धर्मः मि·भे० ४३७। का० ९५—१०४। ल० ४१
धार्मिकता ... का० १००—१०२
धीरता ... मि भे० ११२, ११३, २१६
धीरस्य मनस्विनः कर्म मि·स० १२६। च० २८
धूर्तता ... का० ७४। च० १२—१४
धैर्यरक्षणे उपायप्राप्तिः ... मि·भे० ३४४
नरकम् मि·स० २६। का० १०५—१०७। च० ८२
निक्षेपरक्षता मि·भे० ११५, ३५२, ३५३
नीचता ... मि·भे० ३९३
नीतिः ( साधारणी ) मि·भे० १०७, १५७, १५८, १६६—१७०, १७५, १८०, २६८, ३००, ३७१, ४००—४०२, ४१३, ४३४, ४४४, ४५०, ४५५, ४५९। मि·स० ६१, १२७, १४४, १७०, १८८। का० ८५, ११०, ११९, १२७, १९२, २२१, २३९, २४१। शु० ६, १८, १९, ३०, ६४, ६५, ६७। च० ५७, ७३, ९१, ९५।
नीतिभेदः ... मि·स० ४७
पाण्डितत्वम् मि·भे० ३९९, ४६०। मि·स० ८६। च० ४१
पराभवाप्तिः मि·भे० ३३६, ३७०, ४१८
परोपकारः का० १५६—१५८, १६१, १६२, १६५—१६७
पातकाभावः ... मि·भे० ४५६
पापम् ... का० १६८, १६९
पिशुनता ... मि·भे० ३२७
पुत्रः ( तल्लक्षणञ्च ) मि·भे० कथामु० ४—८, २०—२१, ११४, १४२। च० १९—२१
पुरुषकारः ... मि·भे० २१७, ३५९। मि स० १३५—१४०। च० २९, ३२
पृच्छा ... च० ८७, ८८
प्रजापालनफलम् ... मि·भे० ३०६—३०९
प्रजापीडनफलम् ... मि·भे० ३६५
प्रज्ञाप्रशंसा ... का० २४२, २४३
प्रधानपुरुषरक्षणम् मि·भे० ३१३
प्रभुभक्तिः ... मि·भे० १२०
प्रमाणम् ... का० ९३, ९४
प्राणत्यागप्रशंसा ... मि·स० ११०, १११
प्रियता ... मि स० ५६
प्रियताहेतुः ... मि·भे० ४४४
प्रीतिलक्षणम् मि·स० ५१, ५२। का० १३
वाणिज्यम् ... मि भे० ११—१८
बान्धवः ... च० ४०

विषयाः — श्लोकाङ्काः

बुद्धिः मि-भे० १३५, २१५, २१९, ३९९। मि-स० ६। का० १२६। अ० ४६
बुद्धिनाशः ... मि-स० ५, १८३
बुद्धिमत्कर्त्तव्यम् ... मि-भे० ३४५
बुद्धिमत्ता ...मि-भे० १९, ४४, ४५, ६५, ४११। ल० २७। अ० ४७
ब्रह्मघाती ... मि-स० ११४, ११५
भक्ष्ययोग्यत्वनिर्णयः ... क्षु० २३
भयम् ...मि-स० १७२। का० २१४
भवितव्यता मि-स० १०, ११, ८२, ८३, १३०—१३४। का० २५३—२५६। ल० ३७, ६२, ६३
भृत्यत्वम् मि-भे० ७९, ८०, १६३—१६५, ३१७, ३८१, ३८४, ४५४
भृत्यस्य दोषगुणौ ... मि-भे० १२१, ३१४, ३१५, ३८२
भेदः ... ल० ७३, ७४
भोग्यस्थाननिर्णयः ... का० ९२
मद्यम् ... मि-भे० १८९, १९०
मन्त्रणा मि-भे० १०८, १११। मि-स० १९७। का० ७५। अ० ६०, ६४
मन्त्रणास्थाननिर्णयः ... का० ६
मन्त्रिदोषः मि-भे० २९४, २९५। का० १९८
मन्त्रिलक्षणम् मि-भे० १३७, १३८, १७१, १७२, ४०६
महत्त्वम् ( तल्लक्षणम् ) मि-स० ७, ८। का० २२९, २४०। अ० ३५, ३८
मायाबलेन शत्रूणां वशसाधनम् का० २९

मित्रता मि-भे० ३६८। मि-स० १२, २८, ३१, ३७—४०, ४९, ११७, ११९, १०८, १८२। का० २०९। ल० २०, ६६
मित्रताकरणफलम् ... मि-स० १८१
मित्रतालक्षणम् ... मि-स० ४९, ११९
मित्रदूषणम् ... ल० १३
मित्रद्रोहः ... मि-भे० २९७, ४५३
मित्रप्रशंसा मि-स० ६१, ६२, ६४, १७९, १८५, १८६, १८९, १९४, २००
मिथ्याकथन-फलम् ... मि-भे० १३०
मृत्युः मि-भे० ४००, ४५१, ४५२। मि-स० १८०
यानम् ... का० ३४, ३५
युद्धप्रतिषेधः ... २४०
युद्धम् ... का० १२—२२
योग्यायोग्यता-विचारः मि-भे० ७८, ८१, ८६, १०९। का० ११४। अ० ८०
राजदोषः मि-भे० ३२३, ४१५। का० ७९, ७७, ८९, २५०
राजधर्मः मि-भे० २३७, २३९, २४२, २४४, २४५
राजनिन्दा ... का० ६०
राजनियमः मि-भे० १३७, १४०, ३१९, ३७३, ३७४। का० १२२, १२३। ल० ४३
राजरोषफलम् ... मि-भे० ७१, ७२, १३९
राजलक्षणम् ... मि-भे० १३१, २४६, २४७, २७०, ३७६। मि-स० २४, २७। का० २१६, २५१। अ० ५९
राजवद्व्यवहारः ... मि-भे० ५१

| विषया: | श्लोकाङ्का: |
|---|---|
| राजसंश्रय: | मि-भे० २२, ३५—४२, ५४—६२, ६८—७०, ७३, १५८, १६० |
| राजसंश्रयाकरणम् | मि-भे० ४१४ |
| राज्ञां नीतिभेदोक्ति: | मि-भे० ४५८ |
| राज्ञामकर्त्तव्यम् | मि-भे० २४१, २४३ |
| कर्त्तव्यम् | अ० ६५—६७ |
| राज्यरक्षणोपाय: | मि-भे० २३८, २४० |
| लक्ष्मी: ... | मि-स० १२८, १४१ । का० ७२ । अ० ३७ |
| लोकसमाचार: ... | मि-भे० ३७२ । मि स० ६७—६९ |
| लोभ: ... | मि स० ३ |
| वमताऽऽनयनम् | मि-भे० ७४—७६ । का० १२४ |
| वाक्यम् ... | मि-भे० ६६, ६७ । का० १११—११३ । ल० ४८ |
| विदुषामनादर: | मि-स० २६ |
| विनाश: | का० २, ३ |
| विपदां विपदनुगमनम् | मि-स० १९३ |
| विरक्तानुरक्तलक्षणम् | ल० ७ |
| विरुद्धधर्मता | मि-भे० १४२ |
| विवाद: | मि भे० ४३५ । मि-स० ९ |
| विश्वास: तत्पात्रापात्रनिर्णयश्च | मि-स० १९० । का० १ |
| विश्वासे दोषोक्ति: ... | मि-भे० १२३—१२६, २९६ । मि-स० ४५, ४६, ४८ । ल० १४ |
| वृथा | मि-भे० ४२९, ४३० । मि-स० १०१ । का० ३१, ३३ । ल० ९ |
| वृद्धत्वम् | का० १८६, १८७ |
| व्यसनम् | मि-स० १९५ । ल० २५ |
| व्यसनोद्धरणोपाय: | मि-स० १९६ |
| शठता | मि-स० ४१—४३ |
| शत्रु: (लक्षणम्) | मि-भे० ३९५ । मि-स० ३४, ४४, ५० । का० ५, २६, २७, १९७ |
| शत्रुसैन्यजयोपाय: | मि-भे० २९८, २९९ |
| शत्रो: नाशकालनिर्णय: ... | मि भे० २५५ । मि-स० [illegible] । का० २५, २८—३०, १२९ |
| शत्रो: पुनगर्वाख्याति: ... | मि-भे० ३४७, ३९४ |
| शत्रौ: समीपे प्रणतिस्वीकार: | ल० २२, २६ । का० १२८ |
| शरणम् | मि-स० ६५, ६६ । का० १४०, १४१ |
| शरणागतरक्षणे विपत्पात: ... | मि-भे० २२७ |
| शास्त्रम् | मि-भे० कथामु० ९ |
| शुभाशुभावेदकभाव: | मि स० ८७ |
| शोक: | मि भे० ३९२ |
| श्लाघा ... | मि-भे० ४०३, ४०४ । मि-स० २ |
| संचय: ... | का० ५५—५९ |
| संसर्ग: ... | मि-भे० २७१—२७३ । ल० ४२ |
| संसर्गकरणोपदेश: ... | मि-भे० ४१७—४२०, ४५७ । मि-स० ६१ । का० ७१, ७२ |
| सङ्ग्रामप्रतिपक्षनिर्णय: ... | मि-भे० ३३५ |
| सचिवाश्रयकाल: ... | मि-भे० १२७—१२९ |
| सज्जनप्रकृति: ... | मि-भे० १६२ |
| सतीषु स्त्रीषु उपदेश: ... | का० १४८, १५० |
| सत्पात्रादिदानप्रशंसा ... | मि-स० ८० |
| सत्यस्य गौरवम् ... | का० १०८, १०९ |
| सदाचारदोषलक्षणम् ... | मि-भे० २१०—२१२ |
| सन्ताप: | मि-भे० ११८ |

| विषयाः | श्लोकाङ्काः |
|---|---|
| सन्तोषः | मि·स० १६०—१६२ |
| सन्धिः सन्धेयश्च | मि स० ३२, ३४ । का० ८, ११, २३, २४ |
| सफलता ... | मि·स० १५२ |
| सम्मानम् ... | मि·स० २४ |
| सर्वसुखसाधनद्रव्यनिर्णयः | ल० २५ |
| साद्यम् .. | मि भे० १९३, ४३६, ४३७ |
| साधुलक्षणम् ... | मि·भे० १७६, १७७, २६९ । ल० ६८ |
| साम | मि·भे० ४०९, ४१० । का० ७, २६, २७ |
| सारल्यम् ... | का० २४४ |
| साहसिकता ... | अ० ३१, ३४ |
| सिद्ध्युपायः ... | का० २३३ । |
| सुख-दुःखिनौ ... | मि·स० १७४ |
| सुभाषितम् ... | मि·स० १७५, १७६ |
| सुहृद्गुणः ... | मि·भे० ३६६, ३६७ । मि·स० १७—१९, १७१ |
| सेवकलक्षणम् | मि भे० २८५—२९३, ३०८, ३२१, ३२२, ३२४, ३८३ । |
| सेवा | मि·भे० ४६—५२, ३०६, ३०७, ३८० । मि स० ७५ |
| स्त्रीकौशलम् (तत्र यथायोग्य-व्यवहारोपदेशः) | मि भे० १९४—२०९ |
| स्त्रीचरित्रम् | मि·भे० १४६—१५६ । का० १९४ । ल० ३४—३६ । अ० ९४ |
| स्त्रीणां परिणयकालनिर्णयः | का० २००—२०८ |
| स्त्रीनिन्दा | ल० ५१—५३, ५५—५८ । अ० ६३ |
| स्त्रीवश्यता-फलम् | मि·स० १५०, १५१ । ल० ५४ । अ० ६१, ६२ |
| स्वदेशविदेशौ | का० ९१ । ल० ७८ । अ० ४८ |
| स्वप्नः ... | मि·भे० १४४, १४५ । अ० ११ |
| स्वभावः ... | मि भे० १३३, १३४, २७०, २८०, २८२ । ल० ७१, ७२ |
| स्वर्गगामिता ... | मि·भे० ३३१—३३४ । मि·स० १११ |
| स्वस्थानभ्रष्टता ... | मि·भे० १२२ |
| स्वास्थ्यम् ... | मि·स० १९४ |
| हित-हितैषिणौ ... | का० १५१, १५२ |

# पञ्चतन्त्रम् ।

ग्रन्थकारकृतमङ्गलाचरणम् ।—

ब्रह्मा रुद्रः कुमारो हरि-वरुण-यमा वह्निरिन्द्रः कुबेर-
श्चन्द्रादित्यौ सरस्वत्युदधियुगनगा वायुरुर्वी भुजङ्गाः ।
सिद्धा नद्योऽश्विनौ श्रीर्दितिरदितिसुता मातरश्चण्डिकाद्याः
वेदास्तीर्थानि यज्ञा गणवसुमुनयः पान्तु नित्यं ग्रहाश्च ॥१॥

मनवे वाचस्पतये शुक्राय पराशराय ससुताय ।
चाणक्याय च विदुषे नमोऽस्तु नयशास्त्रकर्तृभ्यः ॥२॥

प्रणम्य परमात्मानं श्रीजीवानन्दशर्मणा ।
क्रियते बालबोधाय टीकैषा बालबोधिनी ॥

ग्रन्थारम्भे प्रारिप्सितग्रन्थसमाप्तिकामो ग्रन्थकृत् दुरदृष्टप्रशमनाय देवादीन् सङ्कीर्त्त्य आशीर्वादं कामयते, ब्रह्मेति ।—ब्रह्मा हिरण्यगर्भः, रुद्रः शिवः, कुमारः कार्त्तिकेयः, हरिर्विष्णुः, वरुणः जलदेवः, यमः शमनः, वह्निः अग्निः, इन्द्रः देवराजः, कुबेरः धनपतिः, चन्द्रः सोमः, आदित्यः सूर्य्यः, सरस्वती वाग्देवी, उदधिः समुद्रः, युगानि सत्यादीनि, नगाः पर्वताः, ("शैलवृक्षौ नगावगौ" इत्यमरः) वायुः पवनः, उर्व्वी पृथिवी, भुजङ्गाः पन्नगाः, सिद्धाः देवयोनिविशेषाः, नद्यः सरितः, गङ्गाप्रभृतय इत्यर्थः, अश्विनौ अश्विनीकुमारौ, श्रीः लक्ष्मीः, दितिः कश्यपपत्नी, दैत्यजननी इत्यर्थः, अदितिसुता देवा इत्यर्थः, चण्डिकाद्याः चण्डीप्रभृतयः, मातरः मातृवर्गाः, वेदाः ऋक्सामयजुरथर्वरूपाश्चत्वारः, तीर्थानि पुण्यक्षेत्राणि काश्यादीनि, यज्ञाः दर्शपौर्णमासादयः, गणाः प्रमथाः शिवानुचरविशेषाः इत्यर्थः, वसवः अष्टसङ्ख्याकाः गणदेवताः, मुनयः व्यासादयः, ग्रहाश्च नवसङ्ख्याकाः रव्यादयश्च, नित्यं सततं, पान्तु रक्षन्तु, अस्मानिति शेषः । स्रग्धरा वृत्तं,—"म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्" इति लक्षणात् ॥१॥

साम्प्रतं नीतिशास्त्रकारान् प्रणमति, मनवे इति ।—मनवे स्वायम्भुवाय, वाचस्पतये बृहस्पतये, शुक्राय दैत्याचार्य्याय, ससुताय सपुत्राय, व्याससहिताश्चेत्यर्थः, पराशराय, विदुषे चाणक्याय च एतेभ्यः, तथा नयशास्त्रकर्तृभ्यः नीतिशास्त्ररचयितृभ्यः, पूर्वोक्तेभ्यो ऽन्येभ्य इति भावः, नमः प्रणतिरस्तु । आर्य्या वृत्तं,—"यस्याः प्रथमे पादे द्वादश मात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये पञ्चदश चतुर्थके साऽऽर्य्या ॥" इति लक्षणात् ॥२॥

सकलार्थशास्त्रसारं जगति समालोक्य विष्णुशर्मा सः ।
तन्त्रैः पञ्चभिरेतच्चकार सुमनोहरं शास्त्रम् ॥ ३ ॥

## कथामुखम् ।

तद्यथा अनुश्रूयते,—अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम् । तत्र (क) सकलार्थिकल्पद्रुमः प्रवरनृपतिमुकुट-मणिमरीचिमञ्जरीचर्च्चितचरणयुगलः (ख) सकलकलापार-ङ्गतोऽमरशक्तिर्नाम राजा बभूव । तस्य त्रयः पुत्राः (ग) परम-दुर्मेधसो बहुशक्तिरुग्रशक्तिरनन्तशक्तिश्चेति नामानो बभूवुः ।

अथ राजा तान् शास्त्रविमुखान् आलोक्य सचिवान् आहूय प्रोवाच,—"भोः ! ज्ञातम् एतत् भवद्भिः यत्, ममैते पुत्राः शास्त्रविमुखा विवेकरहिताश्च । तत् एतान् पश्यतो मे महदपि राज्यं न सौख्यम् आवहति ; अथवा साधु इदम् उच्यते,—

अजातमृतमूर्खेभ्यो मृताजातौ सुतौ वरम् ।
यतस्तौ स्वल्पदुःखाय यावज्जीवं जडो दहेत् ॥ ४ ॥

---

सकलेति ।—सः प्रसिद्धः, विष्णुशर्मा जगति सकलानाम् अर्थशास्त्राणां नीति-शास्त्राणां, सारं समालोक्य समालोच्येत्यर्थः, पञ्चभिः तन्त्रैः भागविशेषैः, एतत् सुमनो-हरं शास्त्रं नीतिशास्त्रमित्यर्थः, चकार । आर्या वृत्तमिदम् ॥ ३ ॥

(क) सकलेति ।—सकलानां—समस्तानाम्, अर्थिनां—याचकानां, कल्पद्रुमः इव—कल्पपादप इव, [ उपमितसमासः ] कामप्रद इति भावः । प्रवरेति ।—प्रवराणां—महतां, नृपतीनां—राज्ञां, पराजिततया प्रणतानामिति भावः, मुकुट-मणीनां—किरीटरत्नानां, या मरीचिमञ्जर्यः,—मयूखावल्यः, ताभिः चर्च्चितं—रञ्जितं, चरणयुगलं यस्य तथोक्तः ।

(ख) सकलेति ।—सकलाः,—समस्ताः, याः कलाः,—चतुःषष्टिप्रकारा विद्याः, तासां पारः,—अन्तः तं, गतः,—प्राप्तः, सकलकलापारदर्शी इत्यर्थः । अमरेति ।—अमरस्य शक्तिरिव शक्तिः यस्य सः तथोक्तः ।

(ग) परमेति ।—परमा दुष्टा मेधा येषां ते, अतिदुर्बुद्धय इत्यर्थः ।

अजातेति ।—अजातमृतमूर्खेभ्यः, पुत्रेभ्य इति शेषः, [ अपेक्षार्थे पञ्चमी ] मृता-

वरं गर्भस्रावो वरमृतुषु नैवाभिगमनं
वरं जातः प्रेतो वरमपि च कन्यैव जनिता ।
वरं वन्ध्या भार्य्या वरमपि च गर्भेषु वसतिः
न चाविद्वान् रूपद्रविणगुणयुक्तोऽपि तनयः ॥ ५ ॥
कोऽर्थः पुत्रेण जातेन यो न विद्वान् न भक्तिमान् ? ।
किं तया क्रियते धेन्वा या न सूते न दुग्धदा ? ॥ ६ ॥
वरमिह वा सुतमरणं मा मूर्खत्वं कुलप्रसूतस्य ।
येन विबुधजनमध्ये जारज इव लज्जते मनुजः ॥ ७ ॥

जातो मृतश्च अजातश्च तौ, सुतौ, वरं मनाक्प्रियौ, ( "देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबे मनाक्प्रिये" इत्यमरः ) यतः यस्मात्, तौ मृताजातौ, स्वल्पदुःखाय, भवत इति शेषः ; जडः मूर्खः पुत्रः; यावज्जीवम् आजीवनं, दहेत् सन्तापयेत् ; मूर्खः पुत्रः यावज्जीवं क्लेशप्रद इति भावः। पथ्यावक्त्रं वृत्तं,—"युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्त्तितम्" इति लक्षणात् ॥ ४ ॥

वरमिति।—गर्भस्रावः अकाले गर्भनिःसरणं, वरं मनाक्प्रियः, ऋतुषु रजो-निर्गमादारभ्य षोडशसु निशासु इत्यर्थः, अभिगमनं स्त्रीसङ्गमः, नैव वरम्, ऋतौ पत्न्यपेक्षाजनितपापमपि स्वीकार्य्यमित्यर्थः, जातः उत्पन्नः पुत्रः, प्रेतः मृतः, वरं, कन्या तनया, एव जनिता उत्पन्ना, वरं, वन्ध्या अप्रसवा, भार्य्याऽपि वरं, गर्भेषु वसतिः स्थितिः, गर्भादनिःसरणमित्यर्थः, अपि वरं, रूपद्रविणगुणयुक्तः रूपवान् धनवान्, अपि तनयः अविद्वान् मूर्खः, चेदिति शेषः, न च, वरमिति शेषः। शिखरिणी वृत्तं,—"रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति लक्षणात् ॥ ५ ॥

क इति।—यः पुत्रः, न विद्वान् न पण्डितः, न भक्तिमान् श्रद्धया सानुरागवान्, पित्रादिष्विति शेषः, [ "न धार्मिकः" इति पाठान्तरम् ] तेन पुत्रेण सुतेन, जातेन उत्पन्नेन, कोऽर्थः ? किं प्रयोजनम् ? या धेनुः, न सूते न सन्तानप्रसवं करोति, न दुग्धदा न पयस्विनी, तया धेन्वा गवा, किं क्रियते ? दुग्धदानासमर्थया अप्रसविन्या धेन्वा इव भक्तिहीनमूर्खपुत्रेण नास्ति प्रयोजनमित्यर्थः। "या न दोग्ध्री न गुर्विणी" इति द्वयपाठकल्पितपाठः। दृष्टान्तालङ्कारः ॥ ६ ॥

वरमिति।—इह जगति, सुतमरणं पुत्रनिधनं, वरं वा, कुलप्रसूतस्य सत्कुलोद्भवस्य, मूर्खत्वम्—अविद्वत्त्वं, मा न, भवतु इति शेषः। येन मूर्खत्वेन, मनुजः मानवः, विबुध-

गुणिगणगणनाऽऽरम्भे न पतति कठिनी ससम्भ्रमं यस्य।
तेनाम्बा यदि सुतिनी, वद बन्ध्या कीदृशी भवति ? ॥८॥

तदेतेषां यथा (घ) बुद्धिप्रकाशो भवति, तथा कोऽपि उपायोऽनुष्ठीयताम्। अत्र च मद्दत्तां वृत्तिं भुञ्जानानां पण्डितानां पञ्चशती तिष्ठति। (ङ) ततो यथा मम मनोरथाः सिद्धिं यान्ति, तथा अनुष्ठीयताम्" इति। तत्रैकः प्रोवाच,—"देव! द्वादशभिर्वर्षैर्व्याकरणं (च) श्रूयते, ततो धर्मशास्त्राणि मन्वादीनि, अर्थशास्त्राणि चाणक्यादीनि, कामशास्त्राणि वात्स्यायनादीनि; एवञ्च ततो धर्मार्थकामशास्त्राणि ज्ञायन्ते। ततः (छ) प्रतिबोधनं भवति"। अथ तन्मध्यतो सुमतिर्नाम सचिवः प्राह,—(ज) "अशाश्वतोऽयं (झ) जीवितव्यविषयः, प्रभूतकालज्ञेयानि शब्दशास्त्राणि; तत् सङ्क्षेपमात्रं शास्त्रं किञ्चिदेतेषां प्रबोधनार्थं चिन्त्यतामिति। उक्तञ्च, यतः,—

जनमध्ये पण्डितसमितौ. जारात् जायते इति जारजः स इव उपपतिज इव, ("जार-स्तूपपतिः समौ" "अमृते जारजः कुण्डः" इति चामरः) लज्जते जिह्रेति, प्रकाशितजन्मवृत्तान्तः जारजो यथा सभामध्ये लज्जया अवनतमूर्धा तिष्ठति, तथा पण्डितसमाजे मूर्खोऽपीति भावः। उपमाऽलङ्कारः। आर्य्या वृत्तम् ॥ ७ ॥

गुणीति।—गुणिगणानां विद्वद्वृन्दानां, गणनाऽऽरम्भे सङ्ख्याप्रसङ्गे, यस्य, नामेति शेषः, कठिनी खड्डीति यस्याः प्रसिद्धिः, ससम्भ्रमं सगौरवं, न पतति गौरवपूर्वकं यन्नाम न लिख्यते इति भावः, तेन पुत्रेण, अम्बा माता, यदि सुतिनी पुत्रवती, भवेदिति शेषः, तदा बन्ध्या अपुत्रा, कीदृशी भवति वद कथय; बन्ध्या तादृशपुत्र-जननी च तुल्येति भावः। आर्य्या वृत्तम् ॥ ८ ॥

(घ) बुद्धिप्रकाशः,—ज्ञानोदयः। वृत्तिं—जीवनोपायभूतां भूसम्पत्तिमित्यर्थः।

(ङ) ततः,—तस्मात्, पण्डितानां पञ्चशत्या इत्यर्थः। मनोरथाः,—कामाः।

(च) श्रूयते—पठ्यते इत्यर्थः।

(छ) प्रतिबोधनं—ज्ञानं, पाण्डित्यमित्यर्थः।

(ज) अशाश्वतः,—अनित्यः, क्षणभङ्गुर इत्यर्थः।

अनन्तपारं किल शब्दशास्त्रं स्वल्पं तथाऽऽयुर्बहवश्च विघ्नाः।
सारं ततो ग्राह्यमपास्य फल्गु हंसैर्यथा क्षीरमिवाम्बुमध्यात् ॥९॥

तदत्रास्ति विष्णुशर्मा नाम ब्राह्मणः सकलशास्त्रपारङ्गमः (ञ) छात्रसंसदि लब्धकीर्त्तिः, तस्मै समर्पयतु एतान्, स नूनं द्राक् प्रबुद्धान् करिष्यति" इति। स राजा तदाकर्ण्य विष्णुशर्माणमाहूय प्रोवाच,—"भो भगवन्! मदनुग्रहार्थमेतान् अर्थशास्त्रं प्रति द्राग् यथा (ट) अनन्यसदृशान् विदधासि, तथा कुरु। तदा अहं त्वां (ठ) शासनशतेन योजयिष्यामि"। अथ विष्णुशर्मा तं राजानमूचे,—"देव! श्रूयतां मे तथ्यवचनम्। नाहं विद्याविक्रयं शासनशतेनापि करोमि। पुनरेतांस्तव पुत्रान् मासषट्केन यदि नीतिशास्त्रज्ञान् न करोमि, ततः स्वनामत्यागं करोमि। किं बहुना?—श्रूयतां ममैषः (ड) सिंहनादः,—(ढ) नाहमर्थलिप्सुरेवं ब्रवीमि, ममाशीतिवर्षस्य व्यावृत्तसर्वेन्द्रियार्थस्य न किञ्चिदर्थेन प्रयोजनं, किन्तु त्वत्-

(झ) जीवितव्यविषयः,—जीवनकाम इत्यर्थः। प्रभूतकालज्ञेयानि—बहुकालवेद्यानि। शब्दशास्त्राणि—व्याकरणशास्त्राणि।

अनन्तेति।—शब्दशास्त्रं व्याकरणम्, अनन्तपारम् अशेषं, किल निश्चितम्; तथा आयुः जीवनकालः, स्वल्पं क्षणस्थायि, तथापि बहवः अनेके, विघ्नाः व्याघाताः, शास्त्रालोचने इति शेषः, ततः तस्मात्, यथा हंसैः अम्बुमध्यात् सलिलाभ्यन्तरात्, क्षीरमिश्रितजलादिति भावः, सारमिव क्षीरं, गृह्यते इति शेषः, तथा अनेनापीति भावः, फल्गु असारम्, अपास्य त्यक्त्वा, क्षीरमिव दुग्धमिव, सारम् उत्कृष्टं वस्तु, ग्राह्यं ग्रहीतव्यमिति तात्पर्य्यम्। उपमाऽलङ्कारः। उपजातिः वृत्तम् ॥ ९ ॥

(ञ) छात्रसंसदि—छात्रसमाजे। द्राक्—झटिति। प्रबुद्धान्—ज्ञानसम्पन्नान्।

(ट) अनन्यसदृशान्—असाधारणान्।

(ठ) शासनशतेन—शतसङ्ख्यकग्रामसम्प्रदानपत्रेणेत्यर्थः।

(ड) सिंहनादः,—सिंहवद्गर्जनम्; सदर्पोक्तिरिति भावः।

(ढ) अर्थलिप्सुः,—धनलालसः। अशीतिवर्षस्य—अशीतिवर्षवयस्कस्य। व्यावृत्तसर्वेन्द्रियार्थस्य—इन्द्रियभोग्यवस्तुषु निःस्पृहस्येत्यर्थः।

प्रार्थनासिद्ध्यर्थं (ग) सरस्वतीविनोदं करिष्यामि। तल्लिख्यताम् अद्यतनो दिवसः, यदि अहं षण्मासाभ्यन्तरे तव पुत्रान् नयशास्त्रं प्रति अनन्यसदृशान् न करिष्यामि, ततो (त) नार्हति देवो देवमार्गं सन्दर्शयितुम्"। अथासौ राजा तां ब्राह्मणस्य असम्भाव्यां प्रतिज्ञां श्रुत्वा ससचिवः प्रहृष्टो विस्मयान्वितः तस्मै सादरं तान् कुमारान् समर्प्य परां (थ) निर्वृतिमाजगाम। विष्णुशर्मणाऽपि तानादाय (द) तदर्थं मित्रभेद मित्रप्राप्ति-काकोलूकीय-लब्धप्रणाश-अपरीक्षितकारकाणि चेति पञ्च तन्त्राणि रचयित्वा पाठितास्ते राजपुत्राः। तेऽपि तानि अधीत्य मासषट्केन (ध) यथोक्ताः संवृत्ताः। ततः प्रभृति एतत् पञ्चतन्त्रकं नाम नीतिशास्त्रं बालावबोधनार्थं भूतले प्रवृत्तम्। किं बहुना ?—

अधीते य इदं नित्यं नीतिशास्त्रं शृणोति च।
न पराभवमाप्नोति शक्रादपि कदाचन ॥ १० ॥

[इति कथामुखम्]।

---

(ग) सरस्वतीविनोदं—सरस्वत्या वाग्देव्या, शास्त्रचर्चया इत्यर्थः, विनोदं—मनोरञ्जनं, भवत्पुत्राणामिति भावः। अनन्यसदृशान्—असाधारणान्।

(त) देवः,—जगदीश्वरः, देवमार्गं—स्वर्गपथं, परलोकमित्यर्थः, सन्दर्शयितुम्—अवलोकयितुं, माम् इति शेषः; न अर्हति—न युज्यते, परलोके मम सद्गतिं न विदधातु इति भावः।

(थ) निर्वृतिं—सन्तोषम्।

(द) तदर्थं—तेषां राजपुत्राणां कृते इत्यर्थः।

(ध) यथोक्ताः,—यथाकथिताः, पण्डिता इत्यर्थः। प्रवृत्तं—प्रचारितमित्यर्थः।

एतत्पठनप्रयोजनमाह, अधीते इति।—यो हि जनः इदं पञ्चतन्त्रं नाम नीतिशास्त्रं प्रत्यहं पठति आकर्णयति च, स कदाऽपि वासवसमबलात् रिपोरपि पराभवं नाधिगच्छति इति समुदितार्थः ॥ १० ॥

# अथ मित्रभेदो नाम प्रथमं तन्त्रम् ।

अथातः प्रारभ्यते मित्रभेदो नाम प्रथमं तन्त्रम् । यस्यायमादिमः श्लोकः,—

> वर्द्धमानो महान् स्नेहः सिंहगोवृषयोर्वने ।
> पिशुनेनातिलुब्धेन जम्बुकेन विनाशितः ॥ १ ॥

तद्यथा अनुश्रूयते,—अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम् । तत्र (क) धर्म्मोपार्ज्जितभूरिविभवो वर्द्धमानको नाम वणिक्पुत्रो बभूव । तस्य कदाचिद्रात्रौ शय्याऽऽरूढस्य चिन्ता समुत्पन्ना यत्, प्रभूतेऽपि वित्ते अर्थोपायाश्चिन्तनीयाः कर्त्तव्याश्चेति । यत उक्तञ्च,—

> न हि तद्विद्यते किञ्चित् यदर्थेन न सिध्यति ।
> यत्नेन मतिमांस्तस्मादर्थमेकं प्रसाधयेत् ॥ २ ॥
> यस्यार्थास्तस्य मित्राणि, यस्यार्थास्तस्य बान्धवाः ।
> यस्यार्थाः स पुमान् लोके, यस्यार्थाः स च पण्डितः ॥३॥
> न सा विद्या न तद्दानं न तच्छिल्पं न सा कला ।
> न तत् स्थैर्य्यं हि धनिनां याचकैर्यन्न गीयते ॥ ४ ॥

---

वर्द्धमान इति ।—वने सिंहगोवृषयोः सिंह-श्रेष्ठवृषभयोः, ("गोवृषं श्रेष्ठवृषभम्" इति रत्नाकरः) वर्द्धमानः वृद्धिं गच्छन्, महान् स्नेहः वक्ष्यमाणरूपः प्रणयः, अतिलुब्धेन अतिलोलुपेन, पिशुनेन खलेन, जम्बुकेन शृगालेन, विनाशितः विध्वंसितः ॥ १ ॥

(क) धर्मेति ।—धर्मेण—धर्मशास्त्रोक्तवृत्त्या, उपार्ज्जितः,—सञ्चितः, भूरिः—महान्, विभवः,—सम्पद् येन तथाभूतः ।

न हीति ।—यत् अर्थेन न सिध्यति, तत् किञ्चिदपि वस्तु न हि विद्यते ; सर्वमेव अर्थसाध्यमिति भावः । तस्मात् मतिमान् प्राज्ञो जनः, यत्नेन एकं केवलम्, अर्थं प्रसाधयेत् अर्ज्जयेत् ॥ २ ॥

यस्येति ।—लोके—जगति । अन्यत सुगमम् ॥ ३ ॥

नेति ।—याचकैः अर्थार्थिभिः, धनिनां समीपे इति शेषः, यत् विद्यादिकं, न गीयते न कीर्त्यते, तत्किमपि नेति शेषः । तथा हि, सा विद्या न, तद्दा-

इह लोके हि धनिनां परोऽपि स्वजनायते ।
स्वजनोऽपि दरिद्राणां सर्वदा दुर्जनायते ॥ ५ ॥
अर्थेभ्योऽपि हि वृद्धेभ्यः संवृत्तेभ्यस्ततस्ततः ।
प्रवर्त्तन्ते क्रियाः सर्वाः पर्वतेभ्य इवापगाः ॥ ६ ॥
पूज्यते यदपूज्योऽपि यदगम्योऽपि गम्यते ।
वन्द्यते यदवन्द्योऽपि स प्रभावो धनस्य च ॥ ७ ॥
अशनादिन्द्रियाणीव स्युः कार्य्याण्यखिलान्यपि ।
एतस्मात् कारणाद्वित्तं सर्वसाधनमुच्यते ॥ ८ ॥
अर्थार्थी जीवलोकोऽयं श्मशानमपि सेवते ।
त्यक्त्वा जनयितारं स्वं निःस्वं गच्छति दूरतः ॥ ९ ॥

---

न, तत् शिल्पं न, सा कला न, तत् स्थैर्य्यं मर्य्यादाशालित्वं, हि न। अयं भावः,—धनिसमीपे तदुपासनार्थिना याचकेन धनलाभार्थं तस्य धनिनः सर्वा विद्या, सर्वं दानं, सर्वं शिल्पज्ञानं, सर्वा च चतुःषष्टिप्रकारा नृत्यादिविद्या, सर्वप्रकारा मर्य्यादाशालिता च अस्तीति कृत्वा प्रशस्यते इति ॥ ४ ॥

इहेति।—इह अस्मिन्, लोके संसारे, परोऽपि जनः, धनिनां स्वजनायते स्वजन इवाचरति। दरिद्राणान्तु स्वजनोऽपि सर्वदा दुर्जनायते दुर्जन इव आचरति ॥ ५ ॥

अर्थेभ्य इति।—पर्वतेभ्यः आपगा इव नद्य इव, वृद्धेभ्यः वृद्धिं गतेभ्यः, उपायैरिति भावः, संवृत्तेभ्यः सम्भृतेभ्यः, रक्षितेभ्य इत्यर्थः, ततस्ततः तेभ्यस्तेभ्यः, अर्थेभ्यः, सर्वाः क्रियाः संसारयात्रोपयोगिनो व्यापाराः, प्रवर्त्तन्ते। उपमाऽलङ्कारः ॥ ६ ॥

पूज्यते इति।—अपूज्यः पूजानर्होऽपि, यत् पूज्यते, अगम्यः अलभ्योऽपि, यत् गम्यते लभ्यते, अवन्द्योऽपि अनभिवाद्योऽपि, यत् वन्द्यते प्रणम्यते, स च धनस्य प्रभावः; धनेनैव सर्वे पूज्या गम्या वन्द्याश्च भवन्तीति भावः ॥ ७ ॥

अशनादिति।—अशनात् भोजनात्, विषयोपभोगाद्वा, इन्द्रियाणीव अखिलानि सर्वाणि, अपि कार्य्याणि स्युः, परिपोषं भजन्ते इत्यर्थः; वित्तादेवेति भावः; एतस्मात् कारणात् वित्तं धनं, सर्वसाधनं सर्वकार्य्यनिष्पादकम्, उच्यते कथ्यते, बुधैरिति शेषः ॥ ८ ॥

अर्थार्थीति।—अर्थार्थी धनलुब्धः, अयं जीवलोकः श्मशानमपि सेवते आश्रयति; तथा निःस्वं निर्धनं, स्वम् आत्मीयं, जनयितारं पितरमपि, त्यक्त्वा दूरतः गच्छति ॥ ९ ॥

गतवयसामपि पुंसां येषामर्था भवन्ति ते तरुणाः ।
अर्थेन तु ये हीना वृद्धास्ते यौवनेऽपि स्युः ॥ १० ॥

स चार्थः पुरुषाणां षड्भिरुपायैर्भवति,—भिक्षया, नृपसेवया, कृषिकर्म्मणा, विद्योपार्ज्जनेन, (ख) व्यवहारेण, वणिक्कर्म्मणा वा । सर्वेषामपि तेषां वाणिज्येन (ग) अतिरस्कृतोऽर्थलाभः स्यात् । उक्तञ्च यतः,—

कृता भिक्षाऽनेकैर्वितरति नृपो नोचितमहो !
कृषिः क्लिष्टा विद्या गुरुविनयवृत्त्यातिविषमा ।
कुसीदाद्दारिद्र्यं परकरगतग्रन्थिशमनात्
न मन्ये वाणिज्यात् किमपि परमं वर्त्तनमिह ॥ ११ ॥

---

गतेति ।—गतं वयो येषां, वृद्धानामित्यर्थः, अपि येषां पुंसाम् अर्था भवन्ति, ते प्राप्तधना वृद्धा अपि, तरुणाः युवानः, तरुणवत् उत्साहसम्पन्नाः इत्यर्थः ; ये तु अर्थेन हीनाः, ते यौवनेऽपि वृद्धाः स्युः, निरुत्साहा भवन्तीत्यर्थः । आर्य्या वृत्तम् ॥ १० ॥

(ख) व्यवहारेण—कुसीदविधिना इत्यर्थः ।

(ग) अतिरस्कृतः,—अनाच्छादितः, अनिन्दितत्वात् सर्व्वसम्मत इत्यर्थः ।

कृतेति ।—अनेकैः, जनैरिति शेषः, भिक्षा कृता, किन्तु तेषां भिक्षायां न उन्नतिर्जातेति भावः । नृपः प्रभुः, उचितं न वितरति ददाति, तस्मात् राजसेवायां न विशेषलाभ इति भावः ; अहो इति खेदे । कृषिः क्लिष्टा क्लेशदायिनी, तस्मात् कृषिकर्म्मणः बहुक्लेशसाध्यतया अस्मदशक्यतया च न विशिष्टलाभहेतुरिति भावः । विद्या गुरुषु विनयवृत्त्या शिष्टाचारसाध्यत्वेन, अतिविषमा अतिदुर्लभेति भावः । परेषां करगतस्य, धनस्य इति भावः, यः ग्रन्थिः बाधाविशेषः इति यावत्, तस्य शमनात् शान्तिविधानात् हेतोः कुसीदात् धनव्यवहारात्, अधमर्णे धननियोगादित्यर्थः, अपीति शेषः, दारिद्र्यं सम्भवतीति शेषः ; कुसीदजीविभिः परहस्तगतस्य धनस्य आदानसमये प्रायशोऽशेषा बाधा प्राप्यते, किमधिकं, धर्माधिकरणसाहाय्यमपि गृह्यते, तथात्वेऽपि फलसिद्धिर्बहुायाससाध्यकरीति तस्मात् दारिद्र्यसम्भव इति निष्कर्षः । तस्मात् इह संसारे, वाणिज्यात् परमम् उत्कृष्टं, किमपि वर्त्तनं जीवनोपायः, न, वर्त्तते इति शेषः, इत्यहं मन्ये । शिखरिणी वृत्तं,—"रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति लक्षणात् ॥ ११ ॥

उपायानाञ्च सर्वेषामुपायः पण्यसङ्ग्रहः ।
धनार्थं शस्यते ह्येकस्तदन्यः संशयात्मकः ॥ १२ ॥

तच्च वाणिज्यं (घ) सप्तविधमर्थागमाय स्यात्, तद्यथा—गान्धिक-व्यवहारः, निक्षेपप्रवेशः, गोष्ठिककर्म, परिचितग्राहकागमः, मिथ्याक्रयकथनं, कूटतुलामानं, देशान्तराद्भाण्डानयनञ्चेति ।

उक्तञ्च,—पण्यानां गान्धिकं पण्यं किमन्यैः काञ्चनादिभिः ।
यत्रैकेन च यत् क्रीतं तच्छतेन प्रदीयते ॥ १३ ॥
निक्षेपे पतिते हर्म्ये श्रेष्ठी स्तौति स्वदेवताम् ।

उपायानामिति ।—सर्वेषाम् उपायानाम् उपार्जनविधीनां मध्ये, एकः केवलः, पण्यसङ्ग्रहः पण्यानां विक्रेयद्रव्याणां, सङ्ग्रहरूपः, उपायः, धनार्थं शस्यते प्रशस्ततमः कीर्त्त्यते, तत् तस्मात्, पण्यसङ्ग्रहरूपवाणिज्यादित्यर्थः, अन्यः पूर्वोक्तभिक्षादिरूपः उपायः, संशयात्मकः सन्देहसङ्कुलः, फलसिद्धाविति शेषः ॥ १२ ॥

(घ) अर्थागमाय—धनोपार्ज्जनाय । गान्धिकव्यवहारः,—गन्धद्रव्यव्यवसायः । निक्षेपप्रवेशः,—मह्यं प्रत्यहम् एतावत् वस्तु देयं, त्वयि प्रभूतमेतत् द्रव्यं निक्षिपामि, इत्यभिधाय निक्षेपिणा व्यवसायिहस्ते यत् बहुकालिकमूल्यस्वरूपं वस्तु निक्षिप्यते, स निक्षेपः, तस्य प्रवेशः,—स्वायत्तीकरणमित्यर्थः । गोष्ठिककर्म—गवां स्थानं गोष्ठं, तत्सम्बन्धि कर्म, एकस्थानस्थितानां बहूनां गवां भक्षणीययवसादीनां भारग्रहण-पूर्वकं तत्समाधानम् ; यद्वा,—गोष्ठिककर्म—समाजकर्म, समाजे बहूनां लोकानां समावेशवशात् तेषां सर्वांनुष्ठानभारग्रहणेन तत्समाधानम् । परिचितग्राहकागमः,—परिचितो हि ग्राहकः क्रेयद्रव्याणां मूल्यं प्रति विचारं न करोति, तस्मात् तत्सकाशे प्रचुरलाभसम्भव इति भावः । मिथ्याक्रयकथनम्—अल्पेन मूल्येन क्रीतं वस्तु मया इदं बहुना मूल्येन क्रीतमिति ग्राहकसमीपे मृषाकथनम् । कूटतुलामानं—कपटतोल-दण्डादिना द्रव्याणां तोलनम् । देशान्तरेति ।—देशान्तरात्—भिन्नदेशात्, भाण्डानां—द्रव्याणाम्, आनयनं, स्वल्पमूल्येनेति भावः ।

पण्यानामिति ।—पण्यानां विक्रेयाणां द्रव्याणां मध्ये, गान्धिकं पण्यं गन्धसम्बन्धि विक्रेयं वस्तु, श्रेष्ठमिति शेषः ; अन्यैः काञ्चनादिभिः, पण्यैरिति शेषः, किम् ? काञ्चनादिकं गान्धिकेन तुल्यं नेति भावः । यत्र यतः, एकेन, मूल्येन इति शेषः, यत् गन्धद्रव्यं, क्रीतं तत् शतेन, मूल्येनेति शेषः, प्रदीयते ॥ १३ ॥

निक्षेप इति ।—हर्म्ये स्वगृहे इति भावः, निक्षेपे पतिते केनचित् निहिते इति

निक्षेपो क्रियते तुभ्यं प्रदास्याम्युपयाचितम् ॥ १४ ॥
गोष्ठिककर्मनियुक्तः श्रेष्ठी चिन्तयति चेतसा हृष्टः ।
वसुधा वसुसम्पूर्णा मयाऽद्य लब्धा किमन्येन ? ॥ १५ ॥
परिचितमागच्छन्तं ग्राहकमुत्कण्ठया विलोक्यासौ ।
हृष्यति तद्धनलुब्धो यद्वत् पुत्रेण जातेन ॥ १६ ॥

अन्यच्च ।—पूर्णापूर्णे माने परिचितजनवञ्चनं तथा नित्यम् ।
मिथ्याक्रयस्य कथनं प्रकृतिरियं स्यात् किरातानाम् ॥ १७ ॥

अन्यच्च ।—द्विगुणं त्रिगुणं वित्तं भाण्डक्रयविचक्षणाः ।
प्राप्नुवन्त्युद्यमाल्लोका दूरदेशान्तरं गताः ॥ १८ ॥

इत्येवं सम्प्रधार्य्य मथुरागामीनि भाण्डानि आदाय शुभायां तिथौ गुरुजनानुज्ञातः सुरथाधिरूढः प्रस्थितः, तस्य च

---

यावत्, श्रेष्ठी वणिक्, स्वदेवतां स्वव्यवसायाधिष्ठात्रीं देवतां, स्तौति, निक्षेपो निक्षेपः क्रियते, चेदिति शेषः, तुभ्यम् उपयाचितं प्रदास्यामि ; अभिमतेन वस्तुना त्वां पूजयिष्यामीति भावः ॥ १४ ॥

गोष्ठिकेति ।—गोष्ठिककर्मणि पूर्वोक्ते, नियुक्तः श्रेष्ठी चेतसा हृष्टः सन् चिन्तयति, मया वसुसम्पूर्णा धनपूर्णा, वसुधा पृथ्वी, अद्य लब्धा, अन्येन किम् ? नान्येन मे प्रयोजनमित्यर्थः । गोष्ठिकव्यवहारे एव मया प्रभूतं लभ्यते, अन्यद् भवतु न वा इति भावः । आर्य्या वृत्तम ॥ १५ ॥

परिचितमिति ।—असौ श्रेष्ठी, परिचितं ग्राहकमागच्छन्तम् उत्कण्ठया औत्सुक्येन, विलोक्य तद्धनलुब्धः सन् पुत्रेण जातेन यद्वत् यथा, हृष्यति, तथा आनन्दमनुभवति । आर्य्या वृत्तम् ॥ १६ ॥

पूर्णेति ।—माने पूर्णापूर्णे कदाचित् पूर्णं कदाचिद् अपूर्णं, स्वयं द्रव्यक्रये पूर्णं विक्रये अपूर्णमिति भावः ; नित्यं सततं, परिचितानां जनानां वञ्चनं प्रतारणम् ; तथा मिथ्याक्रयस्य कथनम् इयं किरातानां व्याधानां, प्रकृतिः स्वभावः, स्यात् । आर्य्या वृत्तम् ॥ १७ ॥

द्विगुणमिति ।—भाण्डानां विक्रेयद्रव्याणां, क्रये विचक्षणाः निपुणाः, लोकाः वणिज इत्यर्थः, उद्यमात् उत्साहात्, दूरदेशान्तरं गताः सन्तः द्विगुणं त्रिगुणं, मूलधनादिति शेषः, वित्तं धनं, प्राप्नुवन्ति, लाभरूपेणेति भावः ॥ १८ ॥

(ङ) मङ्गलवृषभौ सञ्जीवकनन्दकनामानौ गृहोत्पन्नौ धूर्वोढारौ स्थितौ। तयोरेकः सञ्जीवकाभिधानो (च) यमुनाकच्छम् अवतीर्णः सन् (छ) पङ्कपूरम् आसाद्य कलितचरणो युगभङ्गं विधाय निषसाद। अथ तं तदवस्थम् आलोक्य वर्द्धमानः परं विषादम् अगमत्। तदर्थञ्च स्नेहार्द्रहृदयः त्रिरात्रं (ज) प्रयाणभङ्गम् अकरोत्। अथ तं विषण्णमालोक्य सार्थिकै-रभिहितं,—"भोः श्रेष्ठिन्! किमेकवृषभस्य (झ) कृते सिंह-व्याघ्रसमाकुले बह्वपायेऽस्मिन् वने समस्तसार्थः त्वया सन्देहे नियोजितः? उक्तञ्च,—

न स्वल्पस्य कृते भूरि नाशयेत् मतिमान् नरः।
एतदेवात्र पाण्डित्यं यत् स्वल्पाद्भूरिरक्षणम्॥ १८॥

अथासौ तदवधार्य्य सञ्जीवकस्य रक्षापुरुषान् निरूप्य अशेष-सार्थं नीत्वा प्रस्थितः। अथ रक्षापुरुषा अपि बह्वपायं तद्वनं विदित्वा सञ्जीवकं परित्यज्य पृष्ठतो गत्वा अन्येद्युस्तं सार्थ-

(ङ) मङ्गलवृषभौ—माङ्गलिकवृषौ। गृहोत्पन्नौ—गृहजातौ। धूर्वोढारौ—भारवाहकौ।

(च) यमुनाकच्छं—यमुनानद्याः समीपगतमनूपं, ("जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविधः" इत्यमरः)।

(छ) पङ्कपूरं—कर्द्दमनिकरम्। कलितचरणः,—प्रोथितपादः। युगभङ्गं—युगस्य शकटाग्रवर्त्तिकाष्ठस्य, भङ्गम।

(ज) प्रयाणभङ्गं—गमनस्थगनम। सार्थिकैः,—सहचरैः, वणिग्भिरित्यर्थः।

(झ) कृते—निमित्तम्। बह्वपाये—बहुविपदि। सन्देहे—प्राणसंशये इत्यर्थः। नियोजितः,—निपातितः।

नेति।—मतिमान् नरः स्वल्पस्य सामान्यस्य, वस्तुन इति शेषः, कृते निमित्तं, भूरि प्रभूतं, वस्तु इति शेषः, न नाशयेत्। अत्र स्वल्पं वस्तु एकः वृष इति बोध्यम्। स्वल्पात स्वल्पमपेक्ष्येत्यर्थः [ल्यब्लोपे पञ्चमी] यत् भूरिरक्षणं प्रभूतत्राणम्, अत्र संसारे, एतदेव पाण्डित्यं वैचक्षण्यम्॥ १८॥

वाहमित्याहु:,—"स्वामिन्! मृतोऽसौ सञ्जीवकोऽस्माभिस्तु सार्थवाहस्याभीष्ट इति मत्वा वह्निना संस्कृत:" इति। तच्छ्रुत्वा सार्थवाह: कृतज्ञतया स्नेहार्द्रहृदयस्तस्य चौर्द्ध्वदैहिकक्रिया: वृषोत्सर्गादिका: सर्वाश्चकार। सञ्जीवकोऽप्यायु:शेषतया यमुनासलिलमिश्रै: शिशिरतरवातै: आप्यायितशरीर: कथञ्चिदप्युत्थाय यमुनातटमुपपेदे। तत्र (ञ) मरकतसदृशानि बालतृणाग्राणि भक्षयन् कतिपयैः अहोभिर्हरवृषभ इव पीन: ककुद्मान् बलवांश्च संवृत्त:, प्रत्यहं वल्मीकशिखराग्राणि शृङ्गाभ्यां विदारयन् गर्ज्जमान आस्ते। साधु चेदमुच्यते,—

अरक्षितं तिष्ठति दैवरक्षितं
सुरक्षितं दैवहतं विनश्यति।
जीवत्यनाथोऽपि वने विसर्ज्जित:
कृतप्रयत्नोऽपि गृहे विनश्यति॥ २०॥

अथ कदाचित् पिङ्गलको नाम सिंह: सर्वमृगपरिवृत: पिपासाऽऽकुल उदकपानार्थं यमुनातटमवतीर्ण: सञ्जीवकस्य (ट) गम्भीरतररावं दूरादेव अशृणोत्। तच्छ्रुत्वा अतीवव्याकुलहृदय: (ठ) ससाध्वसमाकारं प्रच्छाद्य वटतले

(ञ) मरकतसदृशानि—हरिद्वर्णमणिविशेषतुल्यानि। पीन:,—स्थूल:। गर्ज्जमान:,—[ "ताच्छील्यवयोवचनशक्तिषु चानश्" ( ३।२।१२९ पा० ) इति सूत्रेण अन्वर्थविवक्षायां परस्मैपदिनोऽपि चानशि रूपं सिद्धम् ]।

अरक्षितमिति।—अरक्षितम् अप्रतिपालितं वस्तु, दैवरक्षितं दैवेन पालितं, चेत् तिष्ठति जीवतीत्यर्थ:; सुरक्षितं, वस्तु इति शेष:, दैवहतं दैवेन नाशितं सत्, विनश्यति। वने विसर्ज्जित: परित्यक्त:, अनाथोऽपि निराश्रयोऽपि, जीवति, दैवानुकूल्यादिति भाव:; गृहे कृतप्रयत्नोऽपि, रक्षणार्थमिति भाव:, विनश्यति, दैवप्रातिकूल्यादिति भाव:। वंशस्थविलं वृत्तम्॥ २०॥

(ट) गम्भीरतररावं—सुगभीरगर्ज्जनम्।

(ठ) ससाध्वसं—सभयम्। प्रच्छाद्य—गोपायित्वा, नि:शङ्कभावं प्रकाश्येति भाव:।

चतुर्मण्डलावस्थानेन अवस्थितः। (ङ) चतुर्मण्डलावस्थानं त्विदम्—सिंहः सिंहानुयायिनः काकरवाः किंवृत्ता इति। अथ तस्य करटकदमनकनामानौ द्वौ शृगालौ मन्त्रिपुत्रौ (ढ) भ्रष्टाधिकारौ सदानुयायिनौ आस्ताम्। तौ च परस्परं मन्त्रयतः। तत्र दमनकोऽब्रवीत्,—"भद्र करटक! अयं तावदस्मत्स्वामी पिङ्गलक उदकग्रहणार्थं यमुनाकच्छमवतीर्य्य स्थितः। स किं निमित्तं पिपासाऽऽकुलोऽपि निवृत्य (ण) व्यूहरचनां विधाय दौर्मनस्येन अभिभूतोऽत्र वटतले स्थितः?" करटक आह,—"भद्र! किमावयोः (त) अनेन व्यापारेण? उक्तञ्च यतः,—

अव्यापारेषु व्यापारं यो नरः कर्त्तुमिच्छति।
स एव निधनं याति कीलोत्पाटीव वानरः" ॥ २१ ॥

दमनक आह,—"कथमेतत्?" सोऽब्रवीत्,—

## कथा १।

"कस्मिंश्चित् (थ) नगराभ्यासे केनापि वणिक्पुत्रेण तरुषण्डमध्ये देवतायतनं कर्त्तुमारब्धम्। तत्र च ये कर्मकराः

---

चतुर्मण्डलावस्थानेन—चतसृषु दिक्षु सहचरैर्मृगैर्वेष्टितः सन् वक्ष्यमाणरूपेण यदवस्थानं तेनेत्यर्थः।

(ङ) सिंहः सिंहानुयायिनः,—सिंहसहचराः, किंवृत्ताः इति—किमिदमुपस्थितमिति ह्यान्तानुशीलिनः सन्तः इत्यर्थः, काकरवाः,—काकवत् रवं कुर्वाणाः, तिष्ठन्तीति शेषः, इदं चतुर्मण्डलावस्थानम्।

(ढ) भ्रष्टाधिकारौ—स्वाधिकाराच्च्युतौ।

(ण) व्यूहरचनां—स्वसैन्येन मण्डलावस्थानं, ("व्यूहस्तु बलविन्यासः" इत्यमरः)। दौर्मनस्येन—उद्वेगेनेत्यर्थः।

(त) अनेन व्यापारेण—स्वामिनः व्यूहरचनादिकार्य्यचिन्तया इत्यर्थः, अनधिकारचर्च्चयेति यावत्।

अव्यापारेष्विति।—यो नरः, अव्यापारेषु अनधिकारेषु प्रसङ्गेषु, व्यापारं प्रसङ्गं, कर्त्तुम् इच्छति, स कीलोत्पाटी शङ्कूत्पाटनकारी, वानरः इव, निधनम् एव याति गच्छति ॥ २१ ॥

(थ) नगराभ्यासे—नगरान्तिके। तरुषण्डमध्ये—वृक्षमण्डलीमध्ये।

( द ) स्थपत्यादयः, ते मध्याह्नवेलायाम् आहारार्थं नगरमध्ये गच्छन्ति। अथ कदाचित् तत्र ( ध ) आनुषङ्गिकं वानरयूथमितश्चेतश्च परिभ्रमत् आगतम्। तत्र एकस्य कस्यचित् शिल्पिनः ( न ) अर्द्धस्फाटितोऽञ्जनवृक्षदारुमयः स्तम्भः खदिरकीलकेन मध्यनिहितेन तिष्ठति। एतस्मिन् अन्तरे ते वानराः ( प ) तरुशिखरप्रासादशृङ्गदारुपर्य्यन्तेषु यथेच्छया क्रीडितुमारब्धाः। एकश्च तेषां ( फ ) प्रत्यासन्नमृत्युः चापल्यात् तस्मिन्नर्द्धस्फाटितस्तम्भे उपविश्य पाणिभ्यां कीलकं संगृह्य यावत् उत्पाटयितुमारेभे, तावत् तस्य ( ब ) स्तम्भमध्यगतवृषणस्य ( भ ) स्वस्थानात् चलितकीलकेन यद्वृत्तं तत् प्रागेव निवेदितम्। अतोऽहं ब्रवीमि,—"अव्यापारेषु" इति। आवयोः भक्षितशेष आहारोऽस्त्येव, तत् किमनेन व्यापारेण?" दमनक आह,—"तत् किं भवान् आहारार्थी केवलमेव? तन्न युक्तम्; उक्तञ्च,—

सुहृदामुपकारकारणाद् द्विषतामप्यपकारकारणात्।
नृपसंश्रय इष्यते बुधैर्जठरं को न बिभर्त्ति केवलम्॥ २२॥

---

( द ) स्थपत्यादयः,—शिल्पिप्रभृतयः, सूत्रधारादय इत्यर्थः।

( ध ) आनुषङ्गिकम्—अनुषङ्गेण स्वजातीयव्यापारक्रमेण आयातम्।

( न ) अर्द्धस्फाटितः,—अर्द्धविदारितः। अञ्जनवृक्षदारुमयः,—पीतशालवृक्षस्य काष्ठमयः। खदिरकीलकेन—खदिरतरुकाष्ठनिर्मितशङ्कुना। मध्यनिहितेन—अन्तःप्रोतेन।

( प ) तरुशिखरेति।—तरूणां—वृक्षाणां, शिखराणि—अग्राणि, तथा प्रासादानां—हर्म्याणां, शृङ्गाणि—चूडाः, दारूणां—काष्ठानां, पर्य्यन्ताः,—प्रान्ताश्च तेषु।

( फ ) प्रत्यासन्नमृत्युः,—आसन्नमरणः। चापल्यात्—चाञ्चल्यात्।

( ब ) स्तम्भेति।—स्तम्भस्य—तरुणकाष्ठरूपस्य, दारितस्येति भावः, मध्ये गतौ वृषणौ—अण्डकोषौ यस्य तथाभूतस्य।

( भ ) स्वस्थानात्—दारितभागादित्यर्थः। वृत्तं—समुत्पन्नं, घटितम् इति यावत्। सुहृदामिति।—बुधैः विद्वद्भिः, सुहृदां बन्धूनाम्, उपकारकारणात् उपकार-

किञ्च,—यस्मिन् जीवति जीवन्ति बहवः सोऽत्र जीवतु ।

वयांसि किं न कुर्वन्ति चञ्च्वा स्वोदरपूरणम् ? ॥ २३ ॥

तथा च,—यज्जीव्यते क्षणमपि प्रथितं मनुष्यै-

र्विज्ञानशौर्यविभवार्यगुणैः समेतम् ।

तन्नाम जीवितमिह प्रवदन्ति तज्ज्ञाः

काकोऽपि जीवति चिरञ्च बलिञ्च भुङ्क्ते ॥ २४ ॥

यो नात्मना न च परेण च बन्धुवर्गे

दीने दयां न कुरुते न च मर्त्यवर्गे ।

किं तस्य जीवितफलं हि मनुष्यलोके

काकोऽपि जीवति चिरञ्च बलिञ्च भुङ्क्ते ॥ २५ ॥

---

विधानार्थमित्यर्थः, द्विषतां शत्रूणाम्, अपकारकारणात् अपकारविधानार्थमपि, नृपसंश्रयः राजसेवा, इष्यते अभिलष्यते ; राजसाहाय्येन हि लोका मित्राणामुपकारममित्राणामपकारञ्च कुर्वन्तीति भावः । को जनः, केवलं जठरम् उदरं, न बिभर्त्ति ? न पुष्यति ? सर्व एव स्वोदरं बिभर्त्तीत्यर्थः । सुन्दरी वृत्तम्,—"अयुजोर्यदि सौ जगौ युजोः सभरा लौ यदि सुन्दरी तदा" इति लक्षणात् ॥ २२ ॥

यस्मिन्निति ।—यस्मिन् एकस्मिन् वदान्ये जने इति भावः, जीवति सति बहवः, जना इति शेषः, जीवन्ति, अत्र जगति, सः जीवतु । वयांसि पक्षिणः, ("वयः पक्षिणि बाल्यादौ" इति मेदिनी) किं चञ्च्वा स्वोदरपूरणं न कुर्वन्ति ? ॥ २३ ॥

यदिति ।—मनुष्यैः इह संसारे, प्रथितं प्रख्यातं यथा तथा, क्षणमपि यत् जीव्यते, तज्ज्ञाः तद्वेदिनः जनाः, विज्ञानादिष्वभिज्ञा इत्यर्थः, विज्ञानशौर्यविभवार्यगुणैः विज्ञानादिभिः श्रेष्ठगुणैः, समेतं तत् एव जीवितं प्रवदन्ति नाम, नामेति प्रसिद्धौ । काकोऽपि चिरं दीर्घकालं, जीवति, बलिं पूजाद्रव्यविशेषञ्च, भुङ्क्ते । वसन्ततिलकं वृत्तं,—"ज्ञेयं वसन्ततिलकं तभजा जगौ गः" इति लक्षणात् ॥ २४ ॥

य इति ।—यः जनः, आत्मना स्वयं, तथा परेण अन्येन द्वारेण, दीने दुःस्थे, बन्धुवर्गे मर्त्यवर्गे च मनुष्यसमूहे च, सामान्ये दुःस्थे नरे इति यावत्, दयां न कुरुते, मनुष्यलोके तस्य जीवितफलं जीवनप्रयोजनं, किम् ? नैव किञ्चिदित्यर्थः । अन्यत् पूर्ववत् । वसन्ततिलकं वृत्तम् ॥ २५ ॥

एवं सम्प्रधार्य्य स्थानान्तरं गत्वा दमनकमार्गमवलोकयन् एकाकी तस्थौ। दमनकोऽपि सञ्जीवकसकाशं गत्वा वृषभोऽयमिति परिज्ञाय हृष्टमना व्यचिन्तयत्,—"अहो! शोभनमापतितम् अनेन, एतस्य सन्धिविग्रहद्वारेण मम पिङ्गलको वश्यो भविष्यति इति। उक्तञ्च,—

न कौलीन्यान्न सौहार्दात् नृपो वाक्ये प्रवर्त्तते।
मन्त्रिणां यावदभ्येति व्यसनं शोकमेव न ॥१२७॥
सदैवापद्गतो राजा भोग्यो भवति मन्त्रिणाम्।
अत एव हि वाञ्छन्ति मन्त्रिणः सापदं नृपम् ॥१२८॥
यथा नेच्छति नीरोगः कदाचित् सुचिकित्सकम्।
तथाऽऽपद्रहितो राजा सचिवं नाभिवाञ्छति" ॥१२९॥

एवं विचिन्तयन् पिङ्गलकाभिमुखः प्रतस्थे। पिङ्गलकोऽपि समायान्तं प्रेक्ष्य स्वाकारं रक्षन् यथापूर्वमवस्थितः। दमनकोऽपि पिङ्गलकसकाशं गत्वा प्रणम्य उपविष्टः। पिङ्गलक आह,—"किं दृष्टं भवता तत् सत्त्वम्?" दमनक आह,—दृष्टं स्वामिप्रसादात्"। पिङ्गलक आह,—"अपि सत्यम्?" दमनक आह,—"किं स्वामिपादानामग्रेऽसत्यं विज्ञाप्यते? उक्तञ्च,—

---

नेति।—नृपः राजा, यावत् व्यसनं विपदं, तथा शोकम् इष्टनाशदुःखं च, नैव अभ्येति प्राप्नोति, तावत् कौलीन्यात् सत्कुलजातत्वात् न, तथा सौहार्दात् सम्प्रीत्याऽपि न, मन्त्रिणां वाक्ये प्रवर्त्तते प्रवृत्तिमान् भवति, न वशीभूतो भवति इत्यर्थः ॥१२७॥

सदैवेति।—आपद्गतः विपत्प्राप्तः, राजा नृपतिः, सदैव मन्त्रिणां भोग्य उपभोगार्हः, भवति, अधीनतां प्राप्नोतीत्यर्थः, अत एव एतस्मात् कारणादेव, मन्त्रिणः नृपं सापदम् आपद्युक्तमेव, द्रष्टुमिति शेषः, वाञ्छन्ति हि ॥१२८॥

यथेति।—नीरोगः रोगरहितो जनः, यथा कदाचित् कस्मिन्नपि काले, सुचिकित्सकं प्रशस्तवैद्यं न इच्छति न आह्वयते इत्यर्थः, तथा आपद्रहितो राजा सचिवं मन्त्रिणं, न अभिवाञ्छति प्रयोजनाभावात् न आद्रियते इत्यर्थः ॥ १२९ ॥

अपि स्वल्पमसत्यं यः पुरो वदति भूभुजाम् ।
देवानाञ्च विनश्येत स द्रुतं सुमहानपि ॥१३०॥

तथा च,—सर्वदेवमयो राजा मनुना सम्प्रकीर्त्तितः ।
तस्मात्तं देववत् पश्येन्न व्यलीकेन कर्हिचित् ॥१३१॥

सर्वदेवमयस्यापि विशेषो नृपतेरयम् ।
शुभाशुभफलं सद्यो नृपात् देवात् भवान्तरे" ॥१३२॥

पिङ्गलक आह,—"सत्यं दृष्टं भविष्यति भवता। न (न) दीनोपरि महान्तः कुप्यन्ति, इति न त्वं तेन निपातितः ; यतः,—

तृणानि नोन्मूलयति प्रभञ्जनो
मृदूनि नीचैः प्रणतानि सर्वतः ।
स्वभाव एवोन्नतचेतसामयं
महान् महत्स्वेव करोति विक्रमम् ॥१३३॥

---

अपीति।—यः जनः भूभुजां राज्ञां, देवानाञ्च पुरः अग्रतः, स्वल्प कणकमपि, असत्यं मिथ्या, वदति, सः सुमहान् लोकपूज्योऽपि, द्रुतं शीघ्रं, विनश्येत। [ अत्र आत्मनेपदं चिन्त्यम् ] ॥१३०॥

सर्वेति।—राजा सर्वदेवमयः निखिलामरस्वरूपः, इति मनुना सम्प्रकीर्त्तितः कथितः ; तस्मात् कारणात्, तं राजानं, देववत् देवमिव, पश्येत्, कर्हिचित् कदाचन, व्यलीकेन वैपरीत्येन, अन्यथाभावेन इत्यर्थः, मनुष्यबुद्ध्या इति भावः; न पश्येत् ॥१३१॥

सर्वेति।—सर्वदेवमयस्य "अष्टानां लोकपालानां वपुर्धारयते नृपः" इति शास्त्रात् देवस्वरूपस्यापि, नृपतेः अयं वक्ष्यमाणः, विशेषः प्रभेदः, देवादिति शेषः, नृपात् सद्यः तत्क्षणमेव, प्रसादाप्रसादक्षणे एव इत्यर्थः, शुभाशुभफलं, भवतीति शेषः, देवात् भवान्तरे अन्यस्मिन् जन्मनि, शुभाशुभफलमित्यनुषङ्गः ; राजा सद्य एव लोकान् दण्डयति अनुगृह्णाति वा, देवता तु परत्र शुभाशुभकर्मणाः फलं विदधातीति राजदेवयोर्विशेष इति भावः ॥१३२॥

( न ) दीनेति।—दीनानां—दुःखिनां, दुर्बलानामित्यर्थः, उपरि महान्तः,—महासत्त्वाः, जनाः इति शेषः। तेन—सत्त्वेन।

तृणानीति।—प्रभञ्जनः महावायुः, तृणानि न उन्मूलयति न उत्पाटयति, यतः मृदूनि कोमलानि वस्तूनि, सर्वतः सर्वथा, नीचैः अतिशयेन नततया इत्यर्थः, प्रणतानि

अपि च—गण्डस्थलेषु मदवारिषु बद्धराग-

मत्तभ्रमद्भ्रमरपादतलाहतोऽपि ।

कोपं न गच्छति नितान्तबलोऽपि नाग-

स्तुल्ये बले तु बलवान् परिकोपमेति” ॥१२४॥

दमनक आह,—“अस्तु (प) एवं स महात्मा, वयं कृपणाः ; तथापि स्वामी यदि कथयति, ततो भृत्यत्वे नियोजयामि” । पिङ्गलक आह (फ) सोच्छ्वासं,—“किं भवान् शक्नोत्येवं कर्तुम् ?” दमनक आह,—“किमसाध्यं बुद्धेरस्ति ? । उक्तञ्च,—

न तच्छस्त्रैर्न नागेन्द्रैर्न हयैर्न पदातिभिः ।

कार्य्यं संसिद्धिमभ्येति यथा बुद्ध्या प्रसाधितम्” ॥१२५॥

पिङ्गलक आह,—“यदि एवं, तर्हि (ब) अमात्यपदे अध्यारोपितस्त्वम् । अद्य प्रभृति (भ) प्रसादनिग्रहादिकं त्वयैव

नितरां प्रहाणि,भवन्तीति शेषः ; अतस्तेषामुत्पाटनं न उचितमिति भावः। उन्नतचेतसां महात्मनाम्, अयमेव स्वभावः, यत महान् जनः, महत्सु एव जनेषु, विक्रमं करोति ; न दुर्बलेष्विति भावः । अर्थान्तरन्यासोऽलङ्कारः । वंशस्थविलं वृत्तम ॥१२३॥

गण्डस्थलेष्विति ।—नितान्तबलोऽपि अतिबलोऽपि, नागः गजः, गण्डस्थलेषु कपोलदेशेषु स्थितेषु, मदवारिषु मदजलेषु, बद्धरागैः जातानुरागैः, मदवारिपानासक्तैरित्यर्थः, अत एव मत्तैः भ्रमद्भिः भ्रमरैः पादतलाहतोऽपि चरणतलताडितोऽपि, कोपं न गच्छति न कुप्यति ; तथा हि,—बलवान् जनः, तुल्ये बले तु समानबलवति जने एव, परिकोपम् एति प्राप्नोति । अर्थान्तरन्यासः । वसन्ततिलकं वृत्तम् ॥ १२४ ॥

(प) एवं—बलवानित्यर्थः । सः,—सत्त्वः । कृपणाः,—दीनाः, दुर्बला इत्यर्थः ।

(फ) सोच्छ्वासं—सनिश्वासं साश्वासं वा, किञ्चिदाश्वस्तः सन्नित्यर्थः ।

नेति ।—बुद्ध्या प्रसाधितं निष्पादितं, कार्य्यं यथा संसिद्धिम् अभ्येति आगच्छति, तथा तत् कार्य्यं, शस्त्रैः न, नागेन्द्रैः गजेन्द्रैः, न, हयैः अश्वैः, न, पदातिभिः पादचारिभिः सैन्यैः, न, संसिद्धिम् अभ्येति इति अनुषङ्गः ; चतुरङ्गबलापेक्षयाऽपि बुद्धेरुत्कर्ष इति भावः ॥ १२५ ॥

(ब) अमात्यपदे—मन्त्रिपदे, त्वम् अध्यारोपितः,—अधिष्ठापितः, मयेति शेषः ।

(भ) प्रसादनिग्रहादिकं—पुरस्कारदण्डादिकम्, अनुजीविनां प्रजानाञ्चेति शेषः ।

कार्य्यम् इति निश्चयः"। अथ दमनकः सत्वरं गत्वा (म) साक्षेपं तम् इदमाह,—"एह्येहि दुष्टवृषभ! स्वामी पिङ्गलकः त्वाम् (य) आकारयति। किं निःशङ्को भूत्वा मुहुर्मुहुर्नदसि वृथा?" इति। तच्छ्रुत्वा सञ्जीवकोऽब्रवीत्,—"भद्र! कोऽयं पिङ्गलकः?" दमनक आह,—"किं स्वामिनं पिङ्गलकमपि न जानासि? तत् क्षणं प्रतिपालय, फलेनैव ज्ञास्यसि। ननु अयं सर्वमृगपरिवृतो वटतले स्वामी पिङ्गलकनामा सिंहस्तिष्ठति"। तच्छ्रुत्वा (र) गतायुषमिवात्मानं मन्यमानः सञ्जीवकः परं विषादमगमत्, आह च,—(ल) "भद्र! भवान् साधुसमाचारो वचनपटुश्च दृश्यते। तत् यदि मामवश्यं तत्र नयसि, तदभयप्रदानेन स्वामिनः सकाशात् प्रसादः कारयितव्यः"। दमनक आह,—"भोः! सत्यमभिहितं भवता, नीतिरेषा। यतः,—

पर्य्यन्तो लभ्यते भूमेः समुद्रस्य गिरेरपि।
न कथञ्चिन्महीपस्य चित्तान्तः केनचित् क्वचित् ॥१३६॥

तत् त्वमत्रैव तिष्ठ, यावदहं तं (व) समये दृष्ट्वा ततः पश्चात् त्वामानयामि" इति; तथा अनुष्ठिते दमनकः पिङ्गलकसकाशं गत्वा इदमाह,—"स्वामिन्! न तत् प्राकृतं सत्त्वं, स हि भगवतो महेश्वरस्य वाहनभूतो वृषभ इति मया

(म) साक्षेपं—सतिरस्कारम्।

(य) आकारयति—आह्वयति, ("हूतिराकारणाह्वानम्" इत्यमरः)।

(र) गतायुषमिव—मृतमिव।

(ल) भद्र!—साधो। साधुसमाचारः,—सदाचारसम्पन्नः। वचनपटुः,—वाग्मी।

पर्य्यन्त इति।—भूमेः पृथिव्याः, समुद्रस्य, गिरेः पर्वतस्यापि, पर्य्यन्तः शेषसीमा, लभ्यते प्राप्यते, जनैरिति शेषः; किन्तु केनापि जनेन, क्वचित् कुत्रापि, महीपस्य राज्ञः, चित्तान्तः मनसो भावविशेष इत्यर्थः, कथञ्चित् न, लभ्यते इति अनुषङ्गः ॥१३६॥

(व) समये—नयनयोग्यकाले, स्वामिनः प्रसादकाले इत्यर्थः; यद्वा,—समये—शपथे, स्थितमिति शेषः। प्राकृत—नीचं, सामान्यमित्यर्थः, स्वल्पबलमिति यावत्।

पृष्ट इदमूचे,—'महेश्वरेण परितुष्टेन (ञ) कालिन्दीपरिसरे शष्पाग्राणि भक्षयितुं (ट) समादिष्टः । किं बहुना ? मम प्रदत्तं भगवता क्रीड़ार्थं वनमिदम्' इति" । पिङ्गलक आह सभयं,—"सत्यं ज्ञातं मया अधुना । न (ठ) देवताप्रसादं विना शष्पभोजिनो व्यालाकीर्णे एवंविधे वने निःशङ्का नदन्तो भ्रमन्ति । ततस्त्वया किमभिहितम् ?" दमनक आह,—"स्वामिन् ! एतदभिहितं मया यत्, 'एतद्वनं (ड) चण्डिकावाहनभूतस्य मत्स्वामिनः पिङ्गलकनाम्नः सिंहस्य (ढ) विषयीभूतं, भवान् अभ्यागतः प्रियोऽतिथिः ; तत् तस्य सकाशं गत्वा भ्रातृस्नेहेन एकत्र भक्षणपानविहरण-क्रियाभिः एकस्थानाश्रयेण कालो नेयः' इति। ततः (क) तेनापि सर्वमेतत् प्रतिपन्नम्, उक्तञ्च सहर्षं,—'स्वामिनः सकाशात् अभयदक्षिणा दापयितव्या' इति । तदत्र स्वामी प्रमाणम्" । तच्छ्रुत्वा पिङ्गलक आह,—"साधु सुमते ! साधु, (ख) मन्त्रि-श्रोत्रिय ! साधु । मम हृदयेन सह सम्मन्त्र्य भवता इदमभि-हितम् ; तद्दत्ता मया तस्य अभयदक्षिणा । परं सोऽपि मदर्थं अभयदक्षिणां याचयित्वा द्रुततरमानीयताम् इति । (ग) अथ साधु चेदमुच्यते,—

(ञ) कालिन्दीपरिसरे—यमुनातीरप्रान्तदेशे । शष्पाग्राणि—अभिनवतृणाग्राणि ।

(ट) समादिष्टः,—आज्ञप्तः ।

(ठ) देवताप्रसादं—देवताऽनुग्रहम् । व्यालाकीर्णे—श्वापदबहुले ।

(ड) चण्डिकेति ।—चण्डिकायाः,—गौर्याः, वाहनभूतस्य—यानस्वरूपस्य ।

(ढ) विषयीभूतम्—अधिकाररक्षितम् । नेयः,—यापनीयः ।

(क) तेन—वृषभेण । प्रतिपन्नं—स्वीकृतम् । अभयदक्षिणा—अभयदानमित्यर्थः ।

(ख) मन्त्रिश्रोत्रिय !—मन्त्रिपण्डित ! [छन्दोऽधीते इति कः, ततः कर्मधारयः]।

(ग) अथेति ।—अथ—पक्षान्तरे, इदं—वक्ष्यमाणं वचनं, साधु—सम्यक् यथा तथा, उच्यते—कथ्यते, लोकैरिति शेषः ।

अन्तःसारैरकुटिलैरच्छिद्रैः सुपरीक्षितैः ।
मन्त्रिभिर्धार्य्यते राज्यं सुस्तम्भैरिव मन्दिरम् ॥१२७॥

तथा च,—मन्त्रिणां भिन्नसन्धाने भिषजां सान्निपातिके ।
कर्म्मणि व्यज्यते प्रज्ञा स्वस्थे को वा न पण्डितः ?" ॥१२८॥

दमनकोऽपि तं प्रणम्य सञ्जीवकसकाशं प्रस्थितः सहर्षमचिन्तयत्,—"अहो ! प्रसादसम्मुखः (घ) नः स्वामी, वचनवशगश्च संवृत्तः, तन्नास्ति धन्यतरो मम । उक्तञ्च,—

अमृतं शिशिरे वह्निरमृतं प्रियदर्शनम् ।
अमृतं राजसम्मानममृतं क्षीरभोजनम्" ॥ १२९ ॥

अथ सञ्जीवकसकाशमासाद्य (ङ) सप्रश्रयमुवाच,—"भो मित्र ! प्रार्थितोऽसौ मया भवदर्थे स्वाम्यभयप्रदानम् । तत् (च) विस्रब्धं गम्यतामिति ; परं त्वया राजप्रसादमासाद्य मया सह (छ) समयधर्म्मेण वर्त्तितव्यम् ; न गर्वमासाद्य स्वप्रभु-

---

अन्तरिति ।—अन्तःसारैः सारवद्भिः, अकुटिलैः अधूर्त्तैः, अच्छिद्रैः निर्दोषैः, सुपरीक्षितैः साधुरसाधुर्वेति कृतपरीक्षणैः, सम्यक् विदितैरित्यर्थः, मन्त्रिभिः सुस्तम्भैः दृढस्थूणाभिः, मन्दिरमिव गृहमिव, राज्यं धार्य्यते पाल्यते । उपमाऽलङ्कारः ॥१२७॥

मन्त्रिणामिति ।—भिन्नसन्धाने भिन्नस्य पृथग्भूतस्य, सन्धानं मिलनं यत्र तादृशे, कर्म्मणि, कलहेन वियुक्तानां योजने इत्यर्थः, मन्त्रिणाम् ; सान्निपातिके त्रिदोषजे विकारे, कर्म्मणि चिकित्साव्यापारे, भिषजां वैद्यानां, प्रज्ञा बुद्धिः, व्यज्यते प्रकाश्यते इत्यर्थः, स्वस्थे जने, को वा जनः, न पण्डितः ? अपि तु सर्व्व एवेत्यर्थः ॥ १२८ ॥

(घ) नः,—अस्मान् प्रति । मम—मत्त इत्यर्थः, [सम्बन्धविवक्षया षष्ठी] ।

अमृतमिति ।—शिशिरे शीतकाले, वह्निः अग्निः, अमृतं सुधावत् सुखप्रदः, प्रियदर्शनं प्रियवस्तुनः साक्षात्कारलाभः, अमृतम् ; राजसम्मानं नृपादरः, अमृतम् ; क्षीरभोजनं दुग्धपानम्, अमृतम् । अत्र अमृतशब्देन सुखसाधनं वस्तु उच्यते इति बोध्यम् ॥ १२९ ॥

(ङ) सप्रश्रयं—सविनयम् । भो—हे ।

(च) विस्रब्धं—निःशङ्कम् । परं—किन्तु । राजप्रसादं—राजानुग्रहम् ।

(छ) समयधर्म्मेण—भवता विरुद्धं कदाऽपि नाचरिष्यामीत्येवंरूपनियमक्रमेण ।

तया विचरणीयम्। अहमपि तव सङ्केतेन सर्वां राज्यधुर-ममात्यपदवीमाश्रित्य उद्धरिष्यामि। एवं कृते द्वयोरपि आवयोः राजलक्ष्मीर्भोग्या भविष्यति। यतः,—

> आखेटकस्य धर्मेण विभवाः स्युर्वशे नृणाम्।
> नृप्रजाः प्रेरयत्येको हन्त्यन्योऽत्र मृगानिव॥ १४०॥

तथा च,—यो न पूजयते गर्वादुत्तमाधममध्यमान्।
> भूपसम्मानमान्योऽपि भ्रश्यते दन्तिलो यथा"॥ १४१॥

सञ्जीवक आह,—"कथमेतत्?" सोऽब्रवीत्,—

## कथा ३।

"अस्त्यत्र धरातले वर्द्धमानं नाम नगरम्। तत्र दन्तिलो नाम (ज) नानाभाण्डपतिः सकलपुरनायकः प्रतिवसति स्म। तेन पुरकार्य्यं नृपकार्य्यञ्च कुर्वता तुष्टिं नीताः तत्पुर-वासिनो लोका नृपतिश्च। किं बहुना? न कोऽपि तादृक् केनापि चतुरो दृष्टो नापि श्रुतो वेति। अथवा साधु चेदम् उच्यते,—

---

आखेटकस्येति।—आखेटकस्य मृगयायाः, धर्म्मेण न्यायेन, आचारेण वा, ("धर्म्माः पुण्ययमन्यायस्वभावाचारसोमपाः" इत्यमरः) विभवाः सम्पदः, नृणां नराणां, वशे स्युः, तथा च, अत्र संसारे, एकः मृगानिव नृप्रजाः नररूपाः प्रजाः, प्रेरयति प्रेषयति, अन्यः हन्ति नाशयति। यथा कश्चिन मृगयुर्वनं प्रविश्य आलोड्य च सर्वान् मृगानाकृष्य एकत्रानयति, अन्यश्च मृगयुः सुखेन तान् हन्ति, एवं त्वमपि पिङ्गलकेन सह सम्मन्त्र्य सर्वमेव राजकार्य्यं मदायत्तं कुरु, अहमपि तेन च सर्वाः प्रजाः शोषयित्वा विपुलमर्थ-मर्ज्जयिष्यामि, ततस्तेनैवार्थेनोभौ सुखं कालं नेष्याव इत्यभिसन्धिः॥ १४०॥

य इति।—यः जनः, गर्वात् दर्पात, उत्तमाधममध्यमान् त्रिविधान् जनान् न पूजयते यथोचितं न सत्करोति, स भूपसम्मानमान्योऽपि राजसम्मानितोऽपि, दन्तिलो यथा दन्तिल इव, भ्रश्यते स्वयमेव स्थानितो भ्रश्यते, स्वाधिकाराद्दिति शेषः॥ १४१॥

(ज) नानाभाण्डपतिः,—बहुविधधनपतिः, राज्ञः कोषरक्षक इत्यर्थः।

नरपतिहितकर्त्ता द्वेष्यतां याति लोके
जनपदहितकर्त्ता त्यज्यते पार्थिवेन्द्रैः ।
इति महति विरोधे वर्त्तमाने समाने
नृपतिजनपदानां दुर्लभः कार्य्यकर्त्ता ॥ १४२ ॥

अथ एवं गच्छति काले दन्तिलस्य कदाचिद्विवाहः सम्प्रवृत्तः। तत्र तेन सर्वे पुरनिवासिनो (झ) राजसन्निधिलोकाश्च सम्मानपुरःसरमामन्त्र्य भोजिता वस्त्रादिभिः सत्कृताश्च। ततो विवाहानन्तरं राजा (ञ) सान्तःपुरः स्वगृहमानीय अभ्यर्चितः। अथ तस्य नृपतेः गृहसम्मार्ज्जनकर्त्ता गोरम्भो नाम राजसेवको गृहायातोऽपि (ट) तेन अनुचितस्थाने उपविष्टोऽवज्ञया अर्द्धचन्द्रं दत्त्वा निःसारितः। सोऽपि ततःप्रभृति निःश्वसन् अपमानात् न रात्रौ अपि अधिशेते। 'कथं मया तस्य भाण्डपतेः राजप्रसादहानिः कर्त्तव्या' इति चिन्तयन् आस्ते। पुनश्चाचिन्तयत्,—'अथवा किमनेन वृथा शरीरशोषणेन ? न किञ्चित् मया तस्य अपकर्त्तुं शक्यमिति। अथवा साधु इदमुच्यते,—

नरेति।—लोके जगति, नरपतेः राज्ञः, हितकर्त्ता, नरः इति शेषः, द्वेष्यताम् अप्रियतां, प्रजानामिति शेषः, याति प्राप्नोति ; तथा जनपदानां तत्तद्देशवासिनां प्रजानामित्यर्थः, हितकर्त्ता जनः, पार्थिवेन्द्रैः नरपतिभिः, त्यज्यते अधिकारात् दूरीक्रियते इत्यर्थः ; राजहितचिन्तकैः प्रजाऽनिष्टकरणस्य अवश्यानुष्ठेयत्वात् तथा प्रजाहितचिन्तकैः राजाप्रीतिसम्पादनस्य च अवश्यविधेयत्वात् इति भावः ; इति एवं, महति प्रबले, समाने तुल्यरूपे, विरोधे वैपरीत्ये, वर्त्तमाने विद्यमाने सति, नृपतिजनपदानां राजप्रजानामित्यर्थः, कार्य्यकर्त्ता उभयहितकार इत्यर्थः, दुर्लभः दुष्प्राप इत्यर्थः ॥ १४२ ॥

(झ) राजसन्निधिलोकाः,—नृपतिपार्श्वचराः, अमात्यादयः इत्यर्थः।

(ञ) सान्तःपुरः,—अन्तःपुरैः,—अन्तःपुरिकाभिः नारीभिरित्यर्थः, सहितः।

(ट) तेन—दन्तिलेन। अनुचितस्थाने—भद्रजनोपवेशनार्हे आसने इत्यर्थः। अर्द्धचन्द्रं—गलहस्तं, ("तर्जन्यङ्गुष्ठ विस्तारे गलहस्तार्द्धचन्द्रकौ" इति कोषः)।

यो ह्यपकर्त्तुमशक्तः कुप्यति किमसौ नरोऽत्र निर्लज्जः ? ।
उत्पतितोऽपि हि चणकः शक्तः किं भ्राष्ट्रकं भङ्क्तुम् ?' ॥१४३॥

अथ कदाचित् प्रत्यूषे (ठ) योगनिद्रां गतस्य राज्ञः शय्यान्ते मार्ज्जनं कुर्वन् इदमाह,—'अहो ! दन्तिलस्य महत् (ड) दृप्तत्वं यत् राजमहिषीमालिङ्गति'। तच्छ्रुत्वा राजा ससम्भ्रममुत्थाय तमुवाच,—'भोः ! भोः ! गोरम्भ ! सत्यमेतत्, यत् त्वया जल्पितम् ? किं देवी दन्तिलेन समालिङ्गिता ?' इति। गोरम्भः प्राह,—'देव ! रात्रिजागरणेन (ढ) द्यूतासक्तस्य मे बलात् निद्रा समायाता, तत् न वेद्मि, किं मया अभिहितम्'। राजा सेर्ष्यं स्वगतमचिन्तयत्,—'एष तावदस्मद्गृहे (ण) अप्रतिहतगतिः, तथा दन्तिलोऽपि। तत् कदाचित् अनेन देवी समालिङ्ग्यमाना दृष्टा भविष्यति। तेन इदमभिहितम्। उक्तञ्च,—

यद्वाञ्छति दिवा मर्त्त्यो वीक्षते वा करोति वा ।
तत् स्वप्नेऽपि तदभ्यासात् ब्रूते वाऽथ करोति वा ॥१४४॥

---

य इति।—अत्र जगति, यो हि जनः, अपकर्त्तुम् अनिष्टमाचरितुम्, अशक्तः अक्षमः सन्, अपीति शेषः, कुप्यति क्रुध्यति, असौ निर्लज्जः किं नरः ? मनुष्यपदवाच्यः किम् ? न मनुष्यः, किन्तु गोमेषादिवज्जीवविशेष: इति भावः। हि तथाहि, उत्पतितोऽपि भर्जनसमये वह्निसन्तापात् ऊर्द्धमुत्थितोऽपि, चणकः "छोला" इति प्रसिद्धः शस्यविशेषः, भ्राष्ट्रकं भर्जनपात्रं "खोला" इति प्रसिद्धं, भङ्क्तुं भेत्तुं, शक्तः समर्थः, किम् ? यथा हि भ्राष्ट्रकार्पितश्चणकः वह्निसन्तापात् क्रुध्यन् उत्पतन्नपि पुनः तत्रैव पतति तद्भ्राष्ट्रकञ्च भङ्क्तुं न शक्नोति, अपि तु वह्नितापेन दन्दह्यते, तद्वत् ममाप्यवस्था जातेति भावार्थः। आर्य्या वृत्तम् ॥ १४३ ॥

(ठ) योगनिद्रां—योगेन—छलेन, निद्रां कपटनिद्राम् इत्यर्थः।

(ड) दृप्तत्वं—गर्व्वितत्वं, धृष्टता इति यावत्।

(ढ) द्यूतासक्तस्य—द्यूतक्रीड़ायां निरतस्य।

(ण) अप्रतिहतगतिः,—अनिवारितसञ्चारः।

यदिति।—मर्त्त्यः मनुष्यः, दिवा दिवसे, यत् वाञ्छति अभिलषति, वीक्षते

तथा च,—शुभं वा यदि वा पापं यन्नृणां हृदि संस्थितम् ।
सुगूढमपि तज्ज्ञेयं स्वप्नवाक्यात् तथा मदात् ॥१४५॥

अथवा स्त्रीणां विषये कोऽत्र सन्देहः ?

जल्पन्ति सार्द्धमन्येन पश्यन्त्यन्यं सविभ्रमाः ।
हृद्गतं चिन्तयन्त्यन्यं प्रियः को नाम योषिताम् ? ॥१४६॥

अन्यच्च,—एकेन स्मितपाटलाधररुचो जल्पन्त्यनल्पाक्षरं
वीक्षन्तेऽन्यमितः स्फुटत्कुमुदिनीफुल्लोल्लसल्लोचनाः ।
दूरोदारचरित्रचित्रविभवं ध्यायन्ति चान्यं धिया
केनेत्थं परमार्थतोऽर्थवदिव प्रेमास्ति वामभ्रुवाम् ? ॥१४७॥

पश्यति वा, करोति वा, स्वप्नेऽपि निद्राऽवस्थायामपि, तदभ्यासात् तेषामभिलापादीनाम्, अभ्यासात् पुनःपुनरालोचनवशात, तत ब्रूते वा अथ करोति वा ॥ १४४ ॥

शुभमिति।—नृणां मानवानां, शुभं हितं वा, यदि वा अथवा, पापम् अशुभं, यत् किञ्चित् हृदि संस्थितं वर्त्तमानं, स्यादिति शेषः, तत् तत् सर्वं, सुगूढमपि नितरां गुप्तमपि, अप्रकाश्यमपीत्यर्थः, स्वप्नवाक्यात् निद्राकालोच्चरितवाक्यात, तथा मदात् मद्यपानजनितात् विकारादित्यर्थः, ज्ञेयं वेद्यं, भवति लोकानामिति शेषः ॥ १४५ ॥

जल्पन्तीति।—स्त्रियः इति सर्व्वत्र अध्याहार्य्यम् ; अन्येन सार्द्धं जल्पन्ति आलपन्ति, सविभ्रमाः सविलासाः सत्यः, अन्यं पश्यन्ति तथा अन्यं पुरुषं, हृद्गतं हृदयस्थितं कृत्वा इत्यर्थः, चिन्तयन्ति, तस्मात् को जनः योषितां नारीणां, प्रियः ? नामेति सम्भावनायाम् ; न कोऽपि प्रियः इति सम्भावयामीति भावः ॥ १४६ ॥

एकेनेति।—स्मितेन ईषद्धास्येन, पाटला रक्ता, रञ्जिता इति यावत्, अधररुक् ओष्ठकान्तिः यासां तथोक्ताः सत्यः, एकेन केनापि पुरुषेण सहेत्यर्थः, अनल्पाक्षरं बहुशः इत्यर्थः, जल्पन्ति विविधाः कथाः कथयन्तीत्यर्थः, वामभ्रुव इति शेषः ; स्फुटन्ती विकसन्ती, या कुमुदिनी सेव फुल्ले विकसिते, उल्लसन्ती स्फुरन्ती, लोचने यासां तथाविधाः सत्यः, इतः अस्मात्, येन सह जल्पन्ति तस्मादित्यर्थः, अन्यं पुरुषं, वीक्षन्ते पश्यन्ति, तथा दूरम् अत्यन्तम्, उदारं महत्, चरित्रं यस्य तादृशञ्च तत् चित्रं विविधः, विभवः सम्पत् यस्य तथाभूतस्य, ( विशे-कर्मधा० ) अतुलार्थमित्यर्थः, अन्यं पुरुषञ्च, धिया बुद्ध्या, मनसा इत्यर्थः, ध्यायन्ति चिन्तयन्ति ; अतः वामभ्रुवां नारीणाम्, इत्थं केनेव केन वा पुरुषेण सह, परमार्थतः यथार्थतः, अर्थवत् साभिलाषं, सानुरागमित्यर्थः प्रेम प्रणयः, अस्ति ? न केनापि सहेत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ १४७ ॥

तथा च,—नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचना ॥ १४८ ॥
रहो नास्ति क्षणो नास्ति नास्ति प्रार्थयिता नरः ।
तेन नारद ! नारीणां सतीत्वमुपजायते ॥ १४९ ॥
यो मोहान्मन्यते मूढो रक्तेयं मम कामिनी ।
स तस्या वशगो नित्यं भवेत् क्रीडाशकुन्तवत् ॥ १५० ॥
तासां वाक्यानि कृत्यानि स्वल्पानि सुगुरूण्यपि ।
करोति यः कृती लोके लघुत्वं याति सर्वतः ॥ १५१ ॥
स्त्रियञ्च यः प्रार्थयते सन्निकर्षञ्च गच्छति ।
ईषच्च कुरुते सेवां तमेवेच्छन्ति योषितः ॥ १५२ ॥

---

नेति ।—अग्निः काष्ठानां काष्ठैः, बहुकाष्ठभक्षीकरणेनापीत्यर्थः, न तृप्यति न तुष्यति ; महोदधिः समुद्रः, आपगानां नदीनां, बहुनदीसमागमेनापीत्यर्थः, न ; अन्तकः यमः, सर्व्वभूतानां सर्व्वप्राणिकवलनेनापीत्यर्थः, न ; तथा वामलोचना कामिनी, पुंसां बहूनां पुरुषाणां संसर्गेणापीत्यर्थः, न, तृप्यतीति सर्व्वत्रानुषङ्गः । [काष्ठादीनां करणत्वेऽपि तृप्त्यर्थानां वेति नियमात् वैकल्पिकी षष्ठी, क्रियासम्बन्धमात्रे विवक्षया षष्ठीति पद्मनाभादयः ] ॥ १४८ ॥

रह इति ।—नारदं प्रति श्रीकृष्णस्योक्तिरियम् । हे नारद ! रहः विजनं, नास्ति न लभ्यते इत्यर्थः. [“स्थानम्” इति वा पाठः ] ; क्षणः समयः, कार्य्यव्यापृतत्वादिति भावः, नास्ति ; प्रार्थयिता सुरतार्थी इत्यर्थः, नरः नास्ति, तेन हेतुना, नारीणां सतीत्वं पातिव्रत्यम, उपजायते तिष्ठति इत्यर्थः ; एतेषां सद्भावश्चेत् तर्हि तासां सतीत्वं नैव तिष्ठेदिति भावः ॥ १४९ ॥

य इति ।—इयं कामिनी मम मयीत्यर्थः, रक्ता अनुरागिणी, इति यः मूढः अविवेकी, मोहात् अज्ञानात्, मन्यते बुध्यते, सः मूर्खः, क्रीडाशकुन्तवत क्रीडार्थे पोषितपक्षीव, नित्यं तस्याः कामिन्याः, वशगः तदायत्त इत्यर्थः, भवेत् ॥ १५० ॥

तासामिति ।—लोके जगति, यः कृती कुशलः पुरुषः, तासां नारीणां, स्वल्पानि अतितुच्छानि, सुगुरूणि महान्ति अपि वा, अर्थवन्तीत्यर्थः, वाक्यानि कृत्यानि कार्य्याणि वा, करोति पालयतीत्यर्थः, स सर्वतः सर्वप्रकारेण, लघुत्वं क्षुद्रत्वं, याति गच्छति ॥ १५१ ॥

स्त्रियमिति ।—यश्च स्त्रियं प्रार्थयते कामयते, सन्निकर्षं सदा सान्निध्यञ्च, गच्छति,

अनर्थित्वात् मनुष्याणां भयात् परिजनस्य च ।
मर्य्यादायाममर्य्यादाः स्त्रियस्तिष्ठन्ति सर्वदा ॥ १५३ ॥
नासां कश्चिदगम्योऽस्ति नासाञ्च वयसि स्थितिः ।
विरूपं रूपवन्तं वा पुमानित्येव भुञ्जते ॥ १५४ ॥
रक्तो हि जायते भोग्यो नारीणां शाटको यथा ।
घृष्यते यो दशालम्बो नितम्बे विनिवेशितः ॥ १५५ ॥
अलक्तको यथा रक्तो निष्पीड्य पुरुषस्तथा ।
अबलाभिर्बलाद्रक्तः पादमूले निपात्यते ॥ १५६ ॥

एवं स राजा बहुविधं विलप्य ( त ) तत्प्रभृति दन्तिलस्य

---

ईषत् अल्पं यथा तथा, सेवाञ्च कुरुते, योषितः नार्य्यः, तमेव इच्छन्ति कामयन्ते इत्यर्थः ॥ १५२ ॥

अनर्थित्वादिति ।—मनुष्याणां नराणां, सर्वदा अनर्थित्वात् याचकत्वाभावात्, परिजनस्य परिवारवर्गस्य, भयाच्च अमर्य्यादाः मर्य्यादाबोधरहिताः, विपथं गन्तुमुत्सुका इत्यर्थः, स्त्रियः मर्य्यादायां न्यायमार्गे, पातिव्रत्ये इति भावः, तिष्ठन्ति ॥१५३॥

नासामिति ।—आसां नारीणाम्, अगम्यः अप्रार्थनीयः, कश्चित् कोऽपि पुरुषः, नास्ति, आसां नारीणां, वयसि यौवने, स्थितिश्च आस्था च, नास्ति, तरुणातरुणविचारो नास्तीति भावः; पुमान् पुंस्त्ववान् अयम्, इति हेतोरेव, विरूपं कुरूपं, रूपवन्तं सुरूपं वा, सर्वमेव पुरुषमिति शेषः, भुञ्जते भजन्ति, इमा इति शेषः ॥१५४॥

रक्त इति ।—रक्तः अनुरक्तः पुरुषः, अन्यत्र,—वर्णान्वितः, शाटको यथा वसनमिव, नारीणां भोग्यः जायते भवति, हि इति अवधारणे । यः रक्तः, दशालम्बी दशया उत्कृष्टावस्थया, अन्यत्र,—वस्त्रप्रान्तभागेन, आलम्बते वर्त्तते, अन्यत्र,—लम्बमानो भवतीति तथोक्तः, सः नितम्बे विनिवेशितः अध्यारोपितः सन्, घृष्यते घर्षणमापद्यते इत्यर्थः । उपमाऽलङ्कारः ॥ १५५ ॥

अलक्तक इति ।—अबलाभिः नारीभिः, रक्तः रक्तवर्णः, अलक्तको यथा, बलात् निष्पीड्य पादमूले निपात्यते, तथा रक्तः अनुरक्तः, पुरुषः अपि निष्पीड्य आलिङ्ग्य, पादमूले चरणतले, निपात्यते निधाप्यते ; यथा रक्तम् अलक्तकं नार्य्यः पादमूलमारोपयन्ति,तथा अनुरागिणं कान्तं प्रणयापराधेन चरणागतं कुर्वन्तीति भावः ॥१५६॥

( त ) तत्प्रभृति—तदारभ्य ।

प्रसादपराङ्मुखः सञ्जातः । किं बहुना ? राजद्वारप्रवेशोऽपि तस्य निवारितः । दन्तिलोऽपि अकस्मादेव प्रसादपराङ्मुखमवनिपतिमवलोक्य चिन्तयामास,—'अहो ! साधु चेदम् उच्यते,—

कोऽर्थान् प्राप्य न गर्वितः ? विषयिणः कस्यापदोऽस्तङ्गताः ?
स्त्रीभिः कस्य न खण्डितं भुवि मनः ? को नाम राज्ञां प्रियः ? ।
कः कालस्य न गोचरान्तरगतः ? कोऽर्थी गतो गौरवम् ?
को वा दुर्ज्जनवागुरासु पतितः क्षेमेण यातः पुमान् ? ॥१५७॥

तथा च,—काके शौचं द्यूतकारे च सत्यं
सर्पे क्षान्तिः स्त्रीषु कामोपशान्तिः ।
क्लीबे धैर्य्यं मद्यपे तत्त्वचिन्ता
राजा मित्रं केन दृष्टम् ? श्रुतं वा ? ॥ १५८ ॥

अपरं, मया अस्य भूपतेः अथवा अन्यस्यापि कस्यचित् राजसम्बन्धिनः स्वप्नेऽपि न अनिष्टं कृतम् । तत् किमेवं

---

क इति ।—को जनः, अर्थान् प्राप्य न गर्वितः न अहङ्कृतः ? अपि तु सर्वोऽपीति शेषः ; कस्य विषयिणः धनिनः, आपदः अस्तं गताः ? के विषयिणः निरापदः सन्तीति भावः ; भुवि पृथिव्यां, स्त्रीभिः नारीभिः, कस्य जनस्य, मनः न खण्डितम् ? न विदारितम् ? न व्यथापीडितं कृतमिति भावः, अपि तु सर्वस्यैवेत्यर्थः ; को जनः, राज्ञां प्रियः ? नाम सम्भावनायां, कोऽपि राज्ञां प्रियो नेति सम्भावयामीत्यर्थः ; को जनः, कालस्य यमस्य, न गोचरान्तरगतः ? न कवलमध्यपतितः ? अपि तु सर्व एव कालायत्ता भवन्ति इति भावः ; कः अर्थी याचकः, गौरवं सम्मानं, गतः ? प्राप्तः ? न कोऽपीत्यर्थः ; याच्ञायां गौरवं नाप्नोति भावः ; को वा पुमान्, दुर्जनानां धूर्त्तानां, वागुरासु आपद्रूपजालेषु, पतितः संबद्धः सन्, क्षेमेण कुशलेन, निर्विघ्नमिति भावः ; यातः ? निष्कृतिमिति शेषः, न कोऽपीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥१५७॥

काके इति ।—केन जनेन, काके शौचं विशुद्धता, द्यूतकारे च सत्यं, सर्पे क्षान्तिः क्षमा, अपराधसहिष्णुतेत्यर्थः, स्त्रीषु कामोपशान्तिः कामदमनं, क्लीबे धैर्य्यम् अचापल्यं, मद्यपे सुरापायिनि जने, तत्त्वचिन्ता परमार्थानुध्यानं, तथा राजा मित्रं, भवत्यपीति शेषः, दृष्टं वा श्रुतम् ? न केनापीत्यर्थः ; एतत् सर्वमसम्भवमिति भावः । शालिनी वृत्तम् ॥ १५८ ॥

पराङ्मुखो मां प्रति भूपतिः ?' इति। एवं तं दन्तिलं कदाचित् राजद्वारे (थ) विष्कम्भितं विलोक्य सम्मार्ज्जनकर्त्ता गोरम्भः विहस्य द्वारपालान् इदमूचे,—'भो भो द्वारपालाः! राजप्रसादाधिष्ठितोऽयं दन्तिलः, स्वयं निग्रहानुग्रहकर्त्ता च। तदनेन (द) निवारितेन यथा अहं तथा यूयमपि अर्द्धचन्द्रभागिनो भविष्यथ'। तच्छ्रुत्वा दन्तिलश्चिन्तयामास,—'नूनमिदमस्य गोरम्भस्य (ध) चेष्टितम्। अथवा साधु इदमुच्यते,—

अकुलीनोऽपि मूर्खोऽपि भूपालं योऽत्र सेवते।
अपि सम्मानहीनोऽपि स सर्वत्र प्रपूज्यते ॥ १५९ ॥
अपि कापुरुषो भीरुः स्याच्चेन्नृपतिसेवकः।
तथाऽपि न पराभूतिं जनादाप्नोति मानवः' ॥ १६० ॥

एवं स बहुविधं (न) विलप्य विलक्षमनाः सोद्वेगो गतप्रभावः स्वगृहं गत्वा निशामुखे गोरम्भमाहूय वस्त्रयुगलेन सम्मान्य इदमुवाच,—'भद्र! मया न तदा त्वं (प) रागवशात्

(थ) विष्कम्भितं—प्राप्तप्रतिबन्धं, पुरप्रवेशे द्वारपालैर्निवारितमित्यर्थः, ("विष्कम्भो योगभेदे स्यात् विस्तारप्रतिबन्धयोः" इति मेदिनी)।

(द) निवारितेन—प्रतिरुद्धेन, राजभवनप्रवेशात् युष्माभिरिति शेषः। यथा अहमिति।—अहं यथा पूर्वमनेन राजगृहात् अर्द्धचन्द्रं दत्त्वा निःसारितः, तथा यूयमपि अनेन कदाचित् अर्द्धचन्द्रं दत्त्वा निःसारणीया इति भावः।

(ध) चेष्टितं—कार्य्यम्।

अकुलीन इति।—अत्र संसारे, यः भूपालं राजानं, सेवते, अपि सम्मानभाजो, सः अकुलीनः असत्कुलप्रसूतोऽपि, मूर्खोऽपि सम्मानहीनोऽपि, सर्वत्र प्रपूज्यते, राजाश्रितत्वादिति भावः ॥१५९॥

अपीति।—नृपतिसेवकः मानवः चेत् यदि, कापुरुषः भीरुः, तथा भीरुः कातरस्वभावोऽपि, स्यात्, तथाऽपि जनात् पराभूतिं पराभवं, नाप्नोति ॥ १६० ॥

(न) विलप्य—वितर्क्येत्यर्थः। विलक्षमनाः,—सलज्जः। गतप्रभावः,—सम्मानहीनः, साम्प्रतं राजानुग्रहाभावादिति भावः। निशामुखे—प्रदोषे।

(प) रागवशात्—मात्सर्य्यात्, क्रोधादित्यर्थः, ("रागस्तु मात्सर्य्ये" इति मेदिनी)।

निःसारितः। यतस्त्वं ब्राह्मणानामग्रतोऽनुचितस्थाने समुपविष्टो दृष्ट इति अपमानितः; तत् क्षम्यताम्'। सोऽपि स्वर्गराज्योपमं तद्वस्त्रयुगलमासाद्य परं परितोषं गत्वा तमुवाच,—'भोः श्रेष्ठिन्! क्षान्तं मया ते तत्। तदस्य सम्मानस्य कृते पश्य मे बुद्धिप्रभावं राजप्रसादञ्च' एवमुक्त्वा सपरितोषं निष्क्रान्तः। साधु चेदम् उच्यते,—

स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्।
अहो! सुसदृशी चेष्टा तुलायष्टेः खलस्य च॥ १६१॥

ततश्च अन्येद्युः स गोरम्भो राजकुले गत्वा योगनिद्रां गतस्य भूपतेः सम्मार्ज्जनक्रियां कुर्वन् इदमाह,—'अहो! (फ) अविवेकोऽस्मद्भूपतेः, यत् पुरीषोत्सर्गमाचरन् चिर्भटीभक्षणं करोति!!' तच्छ्रुत्वा राजा सविस्मयं तमुवाच,—'रे रे गोरम्भ! (ब) किमप्रस्तुतं लपसि? गृहकर्मकरं मत्वा त्वां न व्यापादयामि। किं त्वया कदाचिदहमेवंविधं कर्म समाचरन् दृष्टः?' सोऽब्रवीत्,—'देव! द्यूतासक्तस्य रात्रिजागरणेन सम्मार्ज्जनं कुर्वाणस्य मम बलात् निद्रा समायाता। तया अधिष्ठितेन मया किञ्चिज्जल्पितं, तन्न वेद्मि; तत् प्रसादं करोतु स्वामी निद्रापरवशस्य' इति। एवं श्रुत्वा राजा चिन्तितवान्,

स्तोकेनेति।—अहो! आश्चर्यम्। तुलायष्टेः तुलादण्डस्य, खलस्य च सुसदृशी प्रायेण अभिन्ना इत्यर्थः, चेष्टा क्रिया, ["वृत्तिः" इति पाठान्तरम्] तथा हि,—तुलादण्डः खलश्च स्तोकेन अल्पेनैव हेतुनेत्यर्थः, उन्नतिम् आयाति, स्तोकेन अल्पेनैव, अधोगतिम् अवनतिमित्यर्थः, आयाति च॥ १६१॥

(फ) अविवेकः,—विवेकशून्यत्वम्। अस्मद्भूपतेः,—अस्माकं नृपतेः। पुरीषोत्सर्गं—मलत्यागम्, आचरन्—कुर्वन्, चिर्भटी—फलविशेषः, ("काँकुड़" इति बङ्गभाषा) तस्याः भक्षणम्; शौचादिकमकृत्वैवेति भावः।

(ब) अप्रस्तुतम्—अप्रासङ्गिकम्, असङ्गतमित्यर्थः। लपसि—भाषसे।

—'यन्मया जन्मान्तरे पुरीषोत्सर्गं कुर्वता कदाऽपि चिर्भटिका न भक्षिता ; तत् यथा अयं (भ) व्यतिकरो असम्भाव्यो मम अनेन मूढेन व्याहृतः, तथा दन्तिलस्य अपि इति निश्चयः। तत् मया न युक्तं कृतं, यत् स वराकः सम्मानेन वियोजितः। न तादृक्पुरुषाणामेवंविधं चेष्टितं सम्भाव्यते। तदभावेन राजकृत्यानि पौरकृत्यानि च सर्वाणि शिथिलतां व्रजन्ति'। एवमनेकधा विमृश्य दन्तिलं समाहूय निजाङ्गवस्त्राभरणादिभिः संयोज्य स्वाधिकारे नियोजयामास। अतोऽहं ब्रवीमि,—'यो न पूजयते गर्वात्' इति"।

सञ्जीवक आह,—"भद्र! एवमेवैतत्। यद्भवता अभिहितं, तदेव मया कर्त्तव्यम्" इति। एवमभिहिते दमनकः तमादाय पिङ्गलकसकाशमगमत्, आह च,—"देव! एष मया आनीतः स सञ्जीवकः। अधुना देवः प्रमाणम्"। सञ्जीवकोऽपि तं सादरं प्रणम्य अग्रतः सविनयं स्थितः। पिङ्गलकोऽपि तस्य (म) पीनायतककुद्मतो नखकुलिशालङ्कृतं दक्षिणपाणिमुपरि दत्त्वा मानपुरःसरमुवाच,—"अपि शिवं भवतः? कुतः त्वमस्मिन् वने विजने समायातोऽसि?" तेनापि आत्मवृत्तान्तः कथितः। यथा वर्द्धमानेन सह वियोगः सञ्जातः, तथा सर्वं निवेदितम्। तच्छ्रुत्वा पिङ्गलकः सादरतरं तमुवाच,—"वयस्य! न भेतव्यम्; (य) मद्भुजपञ्जरपरिरक्षितेन यथेच्छं त्वया अधुना वर्त्तितव्यम्; अन्यच्च,—नित्यं मत्समीपवर्त्तिना भाव्यं

(भ) व्यतिकरः,—व्यसनं, मत्पक्षे च शौचाशौचविचारराहित्यरूप इति भावः।

(म) पीनेति।—पीना—स्थूला, आयता—दीर्घा, या ककुद—स्कन्धोपरिस्थकोमलमांसपिण्ड इत्यर्थः, सा अस्ति अस्येति तथाभूतस्य। अपि—प्रश्ने।

(य) मदिति।—मम भुजः,—बाहुरेव, पञ्जरः तेन तस्मिन् वा परिरक्षितः तेन।

यतः कारणात् (र) बह्वपायं रौद्रसत्त्वनिषेवितं वनं (ल) गुरूणामपि सत्त्वानामसेव्यं, कुतः शष्पभोजिनाम् ?" एवमुक्त्वा सकलमृगपरिवृतो यमुनाकच्छमवतीर्य उदकग्रहणं कृत्वा स्वेच्छया तदेव वनं प्रविष्टः। ततश्च करटकदमनकनिक्षिप्त-राज्यभारः सञ्जीवकेन सह (व) सुभाषितगोष्ठीसुखमनुभवन् आस्ते। अथवा साधु इदमुच्यते,—

यदृच्छयाऽप्युपनतं सकृत् सज्जनसङ्गतम्।
भवत्यजरमत्यन्तं नाभ्यासक्रममीक्षते" ॥ १६२ ॥

सञ्जीवकेनापि (श) अनेकशास्त्रावगाहनात् उत्पन्नबुद्धि-प्रागल्भ्येन स्तोकैरेवाहोभिर्मूढमतिः पिङ्गलको धीमान् तथा कृतः, यथाऽऽरण्यधर्माद्वियोज्य ग्राम्यधर्मेषु नियोजितः। किं बहुना,—प्रत्यहं पिङ्गलकसञ्जीवकौ एव केवलं रहसि मन्त्रयतः, शेषः सर्वोऽपि मृगजनो दूरीभूतस्तिष्ठति। करटकदमनकौ

(र) बह्वपायं—बहुविघ्नम्। रौद्रेति।—रौद्रैः,—भयङ्करैः, सत्त्वैः,—जन्तुभिः, श्वापदाद्यैरित्यर्थः, ("द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इत्यमरः) निषेवितम्—अध्युषितम्।

(ल) गुरूणां—महताम्। सत्त्वानां—प्राणिनाम्। असेव्यम—अनाश्रय-णीयम्। शष्पभोजिनां—नवतृणाशिनाम्। यमुनाकच्छं—यमुनातीरमित्यर्थः।

(व) सुभाषितेति।—सु—शोभनं, भाषितम्—आलापो यत्र, तादृशी या गोष्ठी—सभा, ("गोष्ठीसभासमितिसंसदः" इत्यमरः) तया सुखम्। अनुभवन्—भुञ्जानः।

यदृच्छयेति।—यदृच्छया दैवात्, अकस्मात् इत्यर्थः, उपनतम् उपस्थितं, सकृदपि एकवारमपि, सज्जनसङ्गतं साधुसङ्गः, अत्यन्तम् अजरम् अक्षयम्, अक्षयफलम् इत्यर्थः, भवति, अभ्यासक्रमं पुनरावृत्तिं, न ईक्षते नापेक्षते इत्यर्थः; सकृत्सङ्गः अपि बहूपकारक इति भावः ॥ १६२ ॥

(श) अनेकशास्त्रावगाहनात्—बहुशास्त्रपर्यालोचनात्। उत्पन्नेति।—उत्पन्नं—जातं, बुद्धेः,—धियाः, प्रागल्भ्यं—नैपुण्यं यस्य तादृशेन। स्तोकैः,—अल्पैः। तथा धीमान् कृतः इत्यन्वयः। आरण्यधर्मात्—पशुस्वभावात्। ग्राम्यधर्मेषु—ग्रामवासि-सुखभावेषु।

अपि प्रवेशं न लभेते। अन्यच्च, सिंहपराक्रमाभावात् सर्वोऽपि मृगजनः तौ च शृगालौ क्षुधाव्याधिबाधिताः एकां दिशमाश्रित्य स्थिताः। उक्तञ्च,—

फलहीनं नृपं भृत्याः कुलीनमपि चोन्नतम्।
सन्त्यज्यान्यत्र गच्छन्ति शुष्कं वृक्षमिवाण्डजाः॥१६३॥

तथा च,—अपि सम्मानसंयुक्ताः कुलीना भक्तितत्पराः।
वृत्तिभङ्गान्महीपालं त्यजन्त्येव हि सेवकाः॥ १६४॥

अन्यच्च,—कालातिक्रमणं वृत्तेर्यो न कुर्वीत भूपतिः।
कदाचित् तं न मुञ्चन्ति भर्त्सिता अपि सेवकाः॥१६५॥

तथा न केवलं सेवका इत्थम्भूताः, यावत् समस्तमपि एतज्जगत् परस्परं भक्षणार्थं (घ) सामादिभिः उपायैः तिष्ठति। तद्यथा,—

देशानामुपरि क्ष्माभृदातुराणां चिकित्सकाः।
वणिजो ग्राहकाणाञ्च मूर्खाणामपि पण्डिताः॥ १६६॥

फलहीनमिति।—अण्डजाः पक्षिणः, फलहीनं फलरहितं, शुष्कं [ शुष+क्त. तस्य कः ] वृक्षमिव भृत्याः कुलीनमपि सत्कुलजमपि, उन्नतञ्च उन्नतमपि, फलहीनं फलं सेवाविनिमयेन वृत्तिदानं, तेन हीनं च्युतं, नृपं, सन्त्यज्य अन्यत्र गच्छन्ति॥ १६३॥

अपीति।—सेवका भृत्याः, सम्मानसंयुक्ताः राजसम्मानभाजः, कुलीनाः सत्कुलप्रसूताः, तथा भक्तितत्पराः अनुरागवन्तोऽपि, वृत्तेः जीविकायाः, भङ्गादेव छेदादेव, अलाभादेव इत्यर्थः, महीपालं नृपं, त्यजन्ति हि परिहरन्त्येव॥ १६४॥

कालेति।—यः भूपतिः, वृत्तेः जीविकायाः, वेतनादेः इत्यर्थः, कालातिक्रमणं समयपातं, न कुर्वीत यथाकालं वृत्तिं विदध्यात् इत्यर्थः, सेवकाः भृत्याः, भर्त्सिताः तिरस्कृताः, अपमानिताः इत्यर्थः, अपि कदाचित् तं नृपं, न मुञ्चन्ति न त्यजन्ति॥१६५॥

(घ) सामादिभिः,—सामदानभेददण्डनामभिः चतुर्भिः, उपायैः,—फलसिद्धिसाधनभूतैः इत्यर्थः।

देशानामित्यादि।—क्ष्माभृत् नृपतिः, देशानां जनपदानां, चिकित्सकाः वैद्याः, आतुराणां रोगिणां, वणिजः पण्यविक्रेतारः, ग्राहकाणां तत्तत्पण्यग्राहिणां, पण्डिताः

प्रमादिनां तथा चौरा भिक्षुका गृहमेधिनाम्।
गणिकाः कामिनाञ्चैव सर्वलोकस्य शिल्पिनः ॥१६७॥
सामादिसज्जितैः पाशैः प्रतीक्षन्ते दिवानिशम्।
उपजीवन्ति शक्तान् हि जलजा जलदानिव ॥ १६८ ॥

अथवा साधु इदमुच्यते,—

सर्पाणाञ्च खलानाञ्च परद्रव्यापहारिणाम्।
अभिप्राया न सिध्यन्ति तेनेदं वर्त्तते जगत् ॥१६९॥

अत्तुं वाञ्छति शाम्भवो गणपतेराखुं क्षुधार्त्तः फणी
तञ्च क्रौञ्चरिपोः शिखी गिरिसुतासिंहोऽपि नागाशनम्।
इत्थं यत्र परिग्रहस्य घटना शम्भोरपि स्याद्गृहे
तत्रान्यस्य कथं न भावि? जगतो यस्मात् स्वरूपं हि तत् ॥१७०॥

मूर्खाणां, चौराः प्रमादिनाम् अनवधानपराणामित्यर्थः, भिक्षुकाः गृहमेधिनां गृहस्थानां, गणिकाः वेश्याः, कामिनां कामुकानां, शिल्पिनः कारवः, सर्वलोकस्य उपरि, एतान् लक्ष्यीकृत्य इत्यर्थः, सामादिसज्जितैः सामादिभिः सामदानभेददण्डैः उपायैः, सज्जितैः कल्पितैः, सामादिरूपैरित्यर्थः, पाशैः जालैः, चातुर्यैः इत्यर्थः, दिवानिशं रात्रिन्दिवं, प्रतीक्षन्ते केनोपायेन एतेभ्यः स्वार्थं साधयिष्याम इति चिन्तनपराः समयं प्रतिपालयन्ति। [ ईशानामित्यादिषु अतदर्थप्रत्ययप्रयोगे षष्ठी ] हि तथाहि, जलजाः जलजाताः, जलजीविनः मीनप्रभृतयः इत्यर्थः, जलदानिव मेघानिव, शक्तान् उपजीवनक्षमान् देशादीन्, उपजीवन्ति उपजीव्य तिष्ठन्ति इत्यर्थः, जीविकार्थिनो जना इति शेषः। विशेषकम् ॥ १६६—१६८ ॥

सर्पाणामिति।—सर्पाणां भुजङ्गानां, खलानां पिशुनानाञ्च, तथा परद्रव्यापहारिणां परस्वापहारिणाञ्च, अभिप्रायाः मनोरथाः, न सिध्यन्ति लोकानिष्टकरत्वान्न फलन्ति, तेन कारणेन, इदं जगत् वर्त्तते तिष्ठति, रक्षां प्राप्नोति इत्यर्थः ॥ १६९ ॥

अत्तुमिति।—शाम्भवः शैवः, फणी सर्पः, क्षुधार्त्तः सन् गणपतेः आश्रयदातुः पुत्रस्य गजाननस्य, आखुं मूषिकं, वाहनभूतमिति भावः; अत्तुं भक्षयितुं, वाञ्छति कामयते। क्रौञ्चरिपोः क्रौञ्चपर्व्वतदारिणः, कुमारस्येत्यर्थः, ("कुमारः क्रौञ्चदारणः" इत्यमरः) शिखी मयूरः, वाहनभूतः इति भावः; तं फणिनञ्च, अत्तुं वाञ्छतीत्यनेनानुषङ्गः। गिरिसुतासिंहोऽपि देवीवाहनमपि, नागाशनम् अग्रजन्मन इव गुहस्य मयूरम्, अत्तुं वाञ्छतीत्यनेनान्वयः। यत्र यस्मिन् हस्तिविषये, शम्भोरपि गृहे परिग्रहस्य परि-

ततः स्वामिप्रसादरहितौ क्षुत्क्षामकण्ठौ परस्परं करटक-दमनकौ मन्त्रयेते। तत्र दमनको ब्रूते,—"आर्य्य करटक! आवां तावदप्रधानतां गतौ। एष पिङ्गलकः सञ्जीवकानुरक्तः (ख) स्वव्यापारपराङ्मुखः सञ्जातः। सर्वोऽपि परिजनो गतः। तत् किं क्रियते?" करटक आह,—"यद्यपि त्वदीयवचनं न करोति, तथाऽपि स्वामी (ङ) स्वदोषनाशाय वाच्यः। उक्तञ्च,—

अशृण्वन्नपि बोद्धव्यः मन्त्रिभिः पृथिवीपतिः।
यथा स्वदोषनाशाय विदुरेणाम्बिकासुतः॥ १७१॥

तथा च,—मदोन्मत्तस्य भूपस्य कुञ्जरस्य च गच्छतः।
उन्मार्गं वाच्यतां यान्ति महामात्राः समीपगाः॥१७२॥

यत् त्वया एष शष्पभोजी स्वामिनः सकाशमानीतः, तत् स्वहस्तेन (च) अङ्गाराः कर्षिताः"। दमनक आह,—"सत्यमेतत्। मम अयं दोषः, न स्वामिनः। उक्तञ्च,—

---

अनल्प, इत्थम् एवं, घटना परस्पराक्रमणव्यापारः, स्यात्, तत्र तस्मिन् शक्तिविपर्य्ये, अन्यस्य, गृहे इति शेषः, कथं न भाति? न भविष्यति? सर्वस्यैव गृहे इत्थं घटना अवश्यम्भाविनीति भावः; यस्मात् जगतः स्वरूपं स्वभाव इत्यर्थः, तद्धि तादृशमेव; परस्परोपजीव्यजीवकरूपमिति भावः। शार्दूलविक्रीडितं वृत्तम्॥ १७०॥

(ख) स्वव्यापारपराङ्मुखः,—निजकार्य्यविमुखः।

(ङ) स्वदोषनाशाय—स्वदोषः,—स्वकर्त्तव्याकरणं, तच्च स्वामिने सदुपदेशादानरूपं, तस्य नाशाय—शोधनाय, क्षालनाय इत्यर्थः। वाच्यः, हितम् इति शेषः।

अशृण्वन् इति।—अशृण्वन् अपि हितवचनमनाकर्णयन् अपि, पृथिवीपतिः मन्त्रिभिः स्वदोषनाशाय विदुरेण अम्बिकासुतः धृतराष्ट्रः, यथा, तथा बोद्धव्यः विज्ञापयितव्यः, हितवचनं श्रावयितव्यः इत्यर्थः॥ १७१॥

मदोन्मत्तस्येति।—मदोन्मत्तस्य मदोद्धतस्य, अत एव उन्मार्गं विपथमित्यर्थः, गच्छतः भूपस्य नृपतेः, कुञ्जरस्य हस्तिनश्च, समीपगाः सन्निहिताः, महामात्राः अमात्याः, हस्तिपकाश्च, ("महामात्रः समृद्धे च आमात्ये हस्तिपकाधिपे" इति मेदिनी) वाच्यतां निन्द्यतां, हितानुशासनादिति भावः, यान्ति प्राप्नुवन्ति॥ १७२॥

(च) अङ्गाराः,—ज्वलदुल्मुका इत्यर्थः। कर्षिताः,—गृहीताः।

जम्बुको हुड़्युद्धेन द्विजश्चाषाढ़भूतिना ।
दूतिका परकार्य्येण त्रयो दोषाः स्वयङ्कृताः" ॥ १७३ ॥

करटक आह,—"कथमेतत् ?" सोऽब्रवीत्,—

## कथा ४ ।

"अस्ति कस्मिंश्चिद्विविक्तप्रदेशे (क) मठायतनम् ; तत्र देवशर्म्मा नाम (ख) परिव्राजकः प्रतिवसति स्म । तस्य (ग) अनेकसाधुजनदत्तसूक्ष्मवस्त्रविक्रयवशात् कालेन महती (घ) वित्तमात्रा सञ्जाता । ततः स न कस्यचित् विश्वसिति, (ङ) नक्तन्दिनं कक्षान्तरात् तां मात्रां न मुञ्चति । अथवा साधु चेदमुच्यते,—

अर्थानामर्ज्जने दुःखमर्ज्जितानाञ्च रक्षणे ।
आये दुःखं व्यये दुःखं धिगर्थाः कष्टसंश्रयाः ॥ १७४ ॥

---

जम्बुक इति ।—जम्बुकः कश्चित् शृगालः, हुड़्युद्धेन मेषविशेषसङ्ग्रामेण, हत इति शेषः, आषाढ़भूतिना तदाख्यप्रतारकेण, द्विजः कश्चित् परिव्राजकविप्रश्च, प्रतारित इति शेषः, तथा दूतिका परकार्य्येण, हतेति शेषः, त्रयो दोषाः येन येन दोषेणैव विपत्तिः, ते दोषाः, स्वयम् आत्मना कृताः, सोरिति शेषः ; न त्वन्यस्य दोषैरेवं भवतीति भावः ॥ १७३ ॥

(क) मठायतनं—मठः,—सन्न्यासिनामाश्रमः, स एव आयतनं—स्थानम् ।

(ख) परिव्राजकः,—पर्य्यटकः, सन्न्यासी इत्यर्थः ।

(ग) अनेकेति ।—अनेकैः साधुजनैः दत्तानां सूक्ष्मवस्त्राणां विक्रयवशात्—विक्रयात् इत्यर्थः ।

(घ) वित्तमात्रा—धनपरिमाणम् ।

(ङ) नक्तन्दिनं—रात्रिन्दिवम् । कक्षान्तरात्—कक्षस्य—बाहुनिम्नदेशस्य, अन्तरात्—मध्यात्, बाहुमूलात् इत्यर्थः । मात्रां—वित्तं, ("मात्रा···वित्ते माने···" इति मेदिनी) ।

अर्थानामिति ।—अर्थानां धनानाम्, अर्ज्जने उपार्ज्जने, दुःखम् ; अर्ज्जितानाञ्च अर्थानां रक्षणे दुःखम् ; आये कुतश्चित् प्रदेशात् आनयने, ( "नाशे" इति पाठान्तरं साधु ) ; दुःखं, पथि दस्युभयादिति भावः ; व्यये विनियोगे, दुःखं, तस्मात् अर्थाः कष्टसंश्रयाः क्लेशावहाः, अतः तान् धिक् ! [ "धिगर्थान् कष्टसंश्रयान्" इति वा पाठः, तथात्वे,—कष्टसंश्रयान् अर्थान् धिक् ! निन्दामीत्यर्थः, "धिक् निर्भर्त्सननिन्दयोः" इत्यमरः ] ॥ १७४ ॥

अथ आषाढ़भूतिर्नाम ( च ) परवित्तापहारी धूर्त्तः तामर्थमात्रां तस्य कक्षान्तरगतां लक्षयित्वा व्यचिन्तयत्,—'कथं मया अस्य इयमर्थमात्रा हर्त्तव्या इति। तदत्र मठे तावत् ( छ ) दृढ़शिलासञ्चयवशात् भित्तिभेदो न भवति, उच्चैस्तरत्वाच्च (ज) अद्वारे प्रवेशो न स्यात्, तदेनं मायावचनैः विश्वास्य अहं छात्रतां व्रजामि, येन सः विश्वस्तः कदाचित् विश्वासम् एति।

उक्तञ्च,—निःस्पृहो नाधिकारी स्यान्नाकामी मण्डनप्रियः।
नाविदग्धः प्रियं ब्रूयात् स्फुटवक्ता न वञ्चकः' ॥१७५॥

एवं निश्चित्य तस्यान्तिकम् उपगत्य 'ओम् नमः शिवाय" इति प्रोच्चार्य्य साष्टाङ्गं प्रणम्य च सप्रश्रयमुवाच,—'भगवन्! (झ) असारः संसारोऽयं,गिरिनदीवेगोपमं यौवनं,(ञ) तृणाग्निसमं जीवितं, ( ट ) शरदभ्रच्छायासदृशाः भोगाः, स्वप्नसदृशो

( च ) परवित्तापहारी—चौरः इत्यर्थः।

( छ ) दृढेति।—दृढः,—कठिनः, यः शिलासञ्चयः,—प्रस्तरराशिः, तस्मात्, दृढेन प्रस्तरसञ्चयेन निर्म्मितत्वादिति भावः। भित्तिभेदः,—सन्धिना कुड्यच्छेदः इत्यर्थः।

( ज ) अद्वारे—द्वारातिरिक्तपथे। मायावचनैः,—कपटवाक्यैः।

निःस्पृह इति।—निःस्पृहः अर्थादसमागमोपायचिन्तने निराकाङ्क्षः, पुमान् इति शेषः, अधिकारी अर्थादीनाम् इति शेषः, न स्यात् न भवेत्; अतः अर्थोपार्जनाकाङ्क्षया तदर्जनविषये स्पृहावता भवितव्यमिति भावः। अकामी अकामुकः, मण्डनप्रियः भूषणप्रियः, न स्यात्; भूषणप्रियश्च सर्व्वथा भोगाभिलाषीति भावः। तथा अविदग्धः मूढ़ः, प्रियं न ब्रूयात्; प्रियभाषी तु विदग्ध एव इति भावः। तथा स्फुटवक्ता स्पष्टभाषी, वञ्चकः प्रतारकः, न स्यात्। भूषणप्रियत्वादिहेतुभिः अकामुकत्वम् अविदग्धत्वम् अवञ्चकत्वञ्च अनुमेयं, तानि च यथा आषाढ़भूतौ सन्ति, तथा तत्र मायावचनैः प्रतिपादनीयानि इत्यभिप्रायः एतेन समर्थितः ॥१७५॥

( झ ) असारः,—नास्ति सारः,—उत्कर्षः यत्र तथोक्तः, तुच्छ इत्यर्थः।

( ञ ) तृणाग्निसमं—तृणाग्निः यथा क्षणेनैव निर्वाणत्वमेति तद्वदित्यर्थः।

( ट ) शरदिति।—शरदि—शरत्काले, याः अभ्रच्छायाः,—मेघच्छायाः, तत्सदृशाः, क्षणविध्वंसिनः इति भावः। भोगाः,—सुखानि।

मित्रपुत्रकलत्रभृत्यवर्गसम्बन्धः, एवं मया सम्यक् परिज्ञातम् ; तत् किं कुर्वतो मे संसारसमुद्रोत्तरणं भविष्यति ?' तच्छ्रुत्वा देवशर्मा सादरमाह,—'वत्स ! धन्योऽसि, यत् प्रथमे वयसि एवं (ठ) विरक्तिभावः । उक्तञ्च,—

पूर्वे वयसि यः शान्तः स शान्त इति मे मतिः ।
धातुषु क्षीयमाणेषु शमः कस्य न जायते ? ॥१७६॥

आदौ चित्ते ततः काये सतां सम्पद्यते जरा ।
असतान्तु पुनः काये नैव चित्ते कदाचन ॥१७७॥

यच्च मां संसारसागरोत्तरणोपायं पृच्छसि, तत् श्रूयताम् ;—

शूद्रो वा यदि वाऽन्योऽपि चण्डालोऽपि जटाधरः ।
दीक्षितः शिवमन्त्रेण स भस्माङ्गी शिवो भवेत् ॥१७८॥

षडक्षरेण मन्त्रेण पुष्पमेकमपि स्वयम् ।
लिङ्गस्य मूर्ध्नि यो दद्यात् न स भूयोऽभिजायते' ॥१७९॥

---

(ठ) विरक्तिभावः,—संसारे वीतरागत्वम् ।

पूर्वे इति ।—यः पूर्वे प्रथमे, वयसि यौवने इत्यर्थः, शान्तः शमपरः, स एव शान्त इति मे मम, मतिः ज्ञानं, विश्वास इत्यर्थः ; धातुषु रसरक्तादिषु, क्षीयमाणेषु क्रमेण वयोबाहुल्यात् स्वयं क्षीणतां व्रजत्सु इत्यर्थः, [ कर्मकर्त्तरि शानच्] कस्य जनस्य, शमः संसारवैराग्यं, न जायते ? अपि तु सर्वस्यैव जायते इत्यर्थः ॥ १७६ ॥

आदाविति ।—सतां साधूनाम्, आदौ प्रथमं, चित्ते मनसि, ततः अनन्तरं, काये शरीरे, जरा वार्द्धक्यजनितचर्मलोलतादिरूप।वस्थाविशेषः, सम्पद्यते जायते ; असतान्तु दुर्जनानान्तु, पुनः काये जरा सम्पद्यते, आदाविति भावः, कदाचन चित्ते मनसि, नैव जायते ॥१७७॥

शूद्र इति ।—शूद्रः वा, अन्योऽपि शूद्रभिन्नो निकृष्टजातिरपि वा, चण्डालो-ऽन्त्यजोऽपि वा, यदि शिवमन्त्रेण दीक्षितः संस्कृतः सन्, जटाधरः तथा भस्माङ्गी भूतिभूषिताङ्गः इत्यर्थः, भवेदिति शेषः, तदा स शिवः शिवेनाभिन्नः, भवेत् ॥ १७८ ॥

षडक्षरेणेति ।—यः जनः, स्वयम् आत्मना, षडक्षरेण "ओं नमः शिवाय" इत्यनेन, मन्त्रेण, एकमपि पुष्पं लिङ्गस्य लिङ्गमूर्त्तिधरस्य शिवस्य, मूर्द्ध्नि शिरसि, दद्यात्, सः भूयः पुनः, न अभिजायते नास्य पुनर्जन्म स्यात् इत्यर्थः ॥ १७९ ॥

तत् श्रुत्वा आषाढभूतिः तत्पादौ गृहीत्वा सप्रश्रयमिदमाह,—'भगवन्! तर्हि दीक्षया मे अनुग्रहं कुरु'। देवशर्मा आह,—'वत्स! अनुग्रहं ते करिष्यामि, परन्तु रात्रौ त्वया मठमध्ये न प्रवेष्टव्यं, (ड) यत्कारणं निःसङ्गता यतीनां प्रशस्यते, तव ममापि च। उक्तञ्च,—

दुर्मन्त्रात् नृपतिर्विनश्यति यतिः सङ्गात् सुतो लालनात्
विप्रोऽनध्ययनात् कुलं कुतनयात् शीलं खलोपासनात्।
मैत्री चाप्रणयात् समृद्धिरनयात् स्नेहः प्रवासाश्रयात्
श्रीर्गर्वात् अनवेक्षणादपि कृषिः त्यागात् प्रमादाद्धनम् ॥१८०॥

तत् त्वया व्रतग्रहणानन्तरं मठद्वारे (ढ) तृणकुटीरके शयितव्यम्' इति। स आह,—'भगवन्! भवदादेशः प्रमाणम्। (ण) परत्र हितेन मे प्रयोजनम्'। अथ (त) कृतशयनसमयं

---

(ड) यत्कारणं—यतः इत्यर्थः; यद्वा,—यत्—यस्य अप्रवेशस्य कारणम्। निःसङ्गता—सङ्गराहित्यम्। यतीनां—सन्न्यासिनाम्। तवेति।—तव ममापि च उभयोरपि, सन्न्यासित्वादिति भावः; सन्न्यासिनः विजने प्रदेशे एव तिष्ठन्तीति निष्कर्षः।

दुर्मन्त्रादिति।—नृपतिः दुर्मन्त्रात् दुष्टमन्त्रणाकरणादित्यर्थः, विनश्यति, [ एवं सर्वत्र विनश्यतीत्यनेनान्वयः ] यतिः तापसः, सङ्गात् अपरसंसर्गात्, सुतः पुत्रः, लालनात् केवलम् आदरातिशयेन प्रतिपालनात्, विप्रः अनध्ययनात् अध्ययनवर्जनात्, वेदपाठाकरणादित्यर्थः, कुलं कुतनयात् कुपुत्रात्, शीलं चरित्रं, खलानां दुर्जनानाम्, उपासनात् सेवनात्, मैत्री सौहृद्यम्, अप्रणयात् प्रीतिविरहात्, समृद्धिः सम्पत्, अनयात् दुर्नीतिवशात्, स्नेहः प्रणयः, प्रवासाश्रयात् भिन्नदेशावस्थानात्, श्रीः लक्ष्मीः, गर्वात् अहङ्कारात्, कृषिः कृषिकार्य्यम्, अनवेक्षणात् स्वयम् अदर्शनात्, धनं त्यागात् अपात्रेऽर्पणात्, व्ययाद्वा, तथा प्रमादात् अनवधानतावशात्, विनश्यति। शार्दूलविक्रीडितं वृत्तम् ॥ १८० ॥

(ढ) तृणकुटीरके—तृणनिर्मिते क्षुद्रकुटीरे इत्यर्थः, [ अल्पार्थे कन् ]।

(ण) परत्र—परस्मिन् लोके, हितेन—मङ्गलेन, केवलं परलोकमङ्गलमात्रकामी, नान्यदिति भावः।

(त) कृतशयनसमयं—विहितशयननियमम्; मठबहिः शयनरूपमिति भावः।

देवशर्मा अनुग्रहं कृत्वा शास्त्रोक्तविधिना शिष्यताम् अनयत्। सोऽपि (थ) हस्तपादावमर्द्दनादिपरिचर्य्यया तं परितोषमनयत्। तथाऽपि स मुनिः कक्षान्तरात् मात्रां न मुञ्चति। अथ एवं गच्छति काले आषाढ़भूतिः चिन्तयामास,—'अहो! न कथञ्चिदेष मे विश्वासमागच्छति' तत् किं दिवाऽपि शस्त्रेण मारयामि? किं वा विषं प्रयच्छामि? किं वा (द) पशुधर्म्मेण व्यापादयामि?' इत्येवं चिन्तयति तस्मिन् देवशर्मणः शिष्यपुत्रः कश्चित् ग्रामात् (ध) आमन्त्रणार्थं समायातः, प्राह च,—'भगवन्! (न) पवित्रारोपणकृते मम गृहम् आगम्यताम्' इति। तत् श्रुत्वा देवशर्मा आषाढ़भूतिना सह प्रहृष्टमनाः प्रस्थितः।

अथ एवं तस्य गच्छतोऽग्रे काचित् नदी समायाता। तां दृष्ट्वा मात्रां कक्षान्तरात् अवतार्य्य, कन्थामध्ये सुगुप्तां निधाय, स्नात्वा देवार्चनं विधाय, तदनन्तरम् आषाढ़भूतिम् इदमाह,—'भो आषाढ़भूते! यावदहं पुरीषोत्सर्गं कृत्वा समागच्छामि, तावदेषा कन्था (प) योगेश्वरस्य सावधानतया रक्षणीया' इत्युक्त्वा गतः; आषाढ़भूतिरपि तस्मिन् अदर्शनीभूते मात्रामादाय सत्वरं प्रस्थितः। देवशर्माऽपि (फ) छात्रगुणानुरञ्जितमनाः सुविश्वस्तो यावदुपविष्टः तिष्ठति, तावत्

(थ) हस्तेति।—हस्तपादस्य अवमर्द्दनादिपरिचर्य्यया—संवाहनादिशुश्रूषया।

(द) पशुधर्म्मेण—गलहननादिप्रकारेणेति भावः।

(ध) आमन्त्रणार्थं—कस्मैचित् कार्य्याय आह्वानविशेषः आमन्त्रणं, तदर्थम्।

(न) पवित्रारोपणकृते—उपनयनसंस्कारसम्पादनार्थं, यज्ञोपवीतदानार्थम् इत्यर्थः।

(प) योगेश्वरस्य—सिद्धयोगस्य। तस्मिन्—देवशर्म्मणि।

(फ) छात्रेति।—छात्रस्य—आषाढ़भूतेः, गुणेन—परिचर्य्यादिना इत्यर्थः, अनुरञ्जितम्—आप्यायितं, मनो यस्य तथाभूतः। उपविष्टः, पुरीषत्यागार्थमिति शेषः।

(ब) सुवर्णरोमदेहयूथमध्ये हुडयुद्धमपश्यत्। अथ रोषवशात् हुडयुगस्य (भ) दूरमपसरणं कृत्वा भूयोऽपि समुपेत्य ललाटपट्टाभ्यां प्रहरतो भूरि रुधिरं पतति। (म) तच्च कश्चित् जम्बुको जिह्वालौल्येन रङ्गभूमिं प्रविश्य आस्वादयति। देवशर्माऽपि तदालोक्य व्यचिन्तयत्,—'अहो! मन्दमतिः अयं जम्बुको यदि कथमपि अनयोः (य) सङ्घट्टे पतिष्यति, तन्नूनं मृत्युमवाप्स्यतीति वितर्कयामि'। क्षणान्तरे च तथैव (र) रक्तास्वादनलौल्यात् मध्ये प्रविशन् तयोः शिरःसम्पाते पतितो मृतश्च शृगालः। देवशर्माऽपि (ल) तमनुशोचन् मात्राम् उद्दिश्य शनैः शनैः प्रस्थितः तत्र आषाढभूतिं न पश्यति, ततश्च औत्सुक्येन शौचं विधाय यावत् कन्थामालोकयति, तावत् मात्रां न पश्यति। ततश्च 'हा! हा! मुषितोऽस्मि' इति जल्पन् पृथिवीतले मूर्च्छया निपपात। ततः क्षणात् चेतनां लब्ध्वा भूयोऽपि समुत्थाय (व) फूत्कर्त्तुम् आरब्धः,—'भो आषाढभूते! क्व मां वञ्चयित्वा गतोऽसि? तत् देहि मे प्रतिवचनम्'। एवं बहु विलप्य तस्य (श) पदपद्धतिम् अन्वेषयन् शनैः शनैः प्रस्थितः।

अथ एवं गच्छन् सायं समये कञ्चित् ग्रामम् आससाद।

---

(ब) सुवर्णेति।—सुवर्णरोमयुक्तः देहो येषां तादृशानां, अजानामित्यर्थः, यत् यूथं—वर्गः, तन्मध्ये। हुडयुद्धं—मेषद्वयोः युद्धम्।

(भ) दूरेति।—दूरं—विप्रकृष्टम्, अपसरणं—गमनम्।

(म) तत्—रुधिरमित्यर्थः। जिह्वालौल्येन—रसनाचापल्येन, रुधिरलालसया इति भावः। रङ्गभूमिं—युद्धस्थानम्। आस्वादयति—लेढि, पिबतीत्यर्थः।

(य) सङ्घट्टे—सम्मर्दे।

(र) रक्तेति।—रक्तस्य आस्वादने यत् लौल्यं—चापल्यं तस्मात्।

(ल) तमनुशोचन्—तमुद्दिश्य शोकं कुर्वन्। मात्रां—वित्तम्, कन्थाधारम् इत्यर्थः।

(व) फूत्कर्त्तुं—चीत्कर्तुम्, आह्वातुम् इति वा।

(श) पदपद्धतिं—पदचिह्नम्।

'अथ तस्मात् ग्रामात् कश्चित् (ष) कौलिकः सभार्य्यो मद्यपानकृते समीपवर्त्तिनि नगरे प्रस्थितः । देवशर्म्माऽपि तमालोक्य प्रोवाच,—'भो भद्र ! वयं (स) सूर्य्योढ़ाः अतिथयः तवान्तिकं प्राप्ताः, न कमपि अत्र ग्रामे जानीमः । तत् गृह्यताम् (ह) अतिथिधर्मः । उक्तञ्च,—

सम्प्राप्तो योऽतिथिः सायं सूर्य्योढ़ो गृहमेधिनाम् ।
पूजया तस्य देवत्वं प्रयान्ति गृहमेधिनः ॥१८१॥

तथा च,—तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता ।
सतामेतानि हर्म्येषु नोच्छिद्यन्ते कदाचन ॥१८२॥
स्वागतेनाग्नयस्तृप्ता आसनेन शतक्रतुः ।
पादशौचेन पितरः अर्घाच्छम्भुस्तथाऽतिथेः' ॥१८३॥

कौलिकोऽपि तच्छ्रुत्वा भार्य्यामाह,—'प्रिये ! गच्छ त्वम्

---

(ष) कौलिकः,—तन्तुवायः, अधमजातिविशेषो वा ।

(स) सूर्य्योढाः,—सूर्य्यास्तगमनकालोपगताः इत्यर्थः, तादृशस्यातिथेः परिचर्य्यया फलाधिक्यं श्रूयते इति भावः ।

(ह) अतिथिधर्मः,—अतिथिसत्कारपुण्यम् ।

सम्प्राप्त इति ।—यः सूर्य्योढ़ः अतिथिः, सायं गृहमेधिनां, गृहे इति शेषः, सम्प्राप्तः उपस्थितः, गृहमेधिनः गृहिणः, तस्य पूजया सत्कारेण, देवत्वं प्रयान्ति ॥१८१॥

दरिद्राणामपि अतिथिपरिचर्य्या सुलभायाससाध्या इत्याह, तृणानीति ।—तृणानि आसनोपयोगीनीति भावः, भूमिः तृणाभावेऽपि उपवेशनार्थं भूतलम्, उदकं जलं, अर्घ्याद्यभावेऽपि पादप्रक्षालनार्थं पानार्थञ्चेति भावः, चतुर्थी सूनृता सत्यमधुरा, वाक् च, सर्व्वाभावे इति भावः, एतानि सतां साधूनां, हर्म्येषु गेहेषु, कदाचन न उच्छिद्यन्ते न विलुप्यन्ते इत्यर्थः ; भक्ष्यद्रव्याद्यभावे एतैरपि अतिथिः पूजनीय इति भावः ॥१८२॥

स्वागतेनेति ।—अतिथेः स्वागतेन शुभागमनप्रश्नेन, अग्नयः गार्हपत्यादयः, तृप्ताः, भवन्तीति शेषः, आसनेन आसनदानेन इत्यर्थः, शतक्रतुरिन्द्रः, तृप्तः भवति, पादशौचेन पादप्रक्षालनेन, पितरः गृहस्थस्येति भावः, अग्निष्वात्तादयः पितृगणा वा, तृप्ताः भवन्ति, तथा अर्घात् पूजनात्, शम्भुः शिवः, तृप्तो भवति, सर्व्वत्रातिथेरिति सम्बध्यते ॥ १८३ ॥

अतिथिम् आदाय गृहं प्रति। पादशौचभोजनशयनादिभिः सत्कृत्य त्वं तत्रैव तिष्ठ, अहं तव कृते प्रभूतं मद्यमानेष्यामि' एवमुक्त्वा प्रस्थितः। साऽपि भार्या (च) पुंश्चली तमादाय प्रहसितवदना देवदत्तं मनसि ध्यायन्ती गृहं प्रति प्रतस्थे। अथवा साधु च इदमुच्यते,—

दुर्दिवसे घनतिमिरे दुःसञ्चारासु नगरवीथीषु।
पत्युर्विदेशगमने परमसुखं जघनचपलायाः ॥१८४॥

तथा च,—पर्यङ्केष्वास्तरणं पतिमनुकूलं मनोहरं शयनम्।
तृणमिव लघु मन्यन्ते कामिन्यश्चौर्यरतलुब्धाः ॥१८५॥

तथा च,—केलिं प्रदहति लज्जा शृङ्गारोऽस्थीनि चाटवः कटवः।
बन्धक्याः परितोषो न किञ्चिदिष्टं भवेत् पत्यौ ॥१८६॥

(च) पुंश्चली—कुलटा। प्रहसितवदना—हसन्मुखी, स्वाभिप्रायसिद्धेः सौकर्यादिति भावः। देवदत्तं—तदाख्यं जारम।

दुर्दिवसे इति।—दुर्दिवसे दुर्दिने, मेघाच्छन्नेऽह्नीत्यर्थः, ("मेघाच्छन्नेऽह्नि दुर्दिनम्" इत्यमरः) घनतिमिरे अन्धतमसे, निबिडान्धकारे इत्यर्थः, नगरस्य वीथीषु नगरमार्गेषु, दुःसञ्चारासु सञ्चरितुमशक्यासु, तथा पत्युः विदेशगमने विदेशप्रस्थाने, जघनचपलायाः सुरतोत्सुकायाः स्त्रिया इति भावः; परमसुखम अत्यन्तं सुखं, भवतीति शेषः; अविघ्नेन मनोरथसिद्धेरिति भावः। आर्या वृत्तम ॥ १८४ ॥

पर्यङ्केष्विति।—चौर्यरतलुब्धाः गुप्तसुरतार्थिन्यः इत्यर्थः, कामिन्यः, पर्यङ्केषु खट्वासु, आस्तरणम् आच्छादनवसनम्, अनुकूलं वशंवदं, पतिं, मनोहरं शयनं शय्यां च, तृणमिव लघु अकिञ्चित्करमित्यर्थः, मन्यन्ते; सर्वं सुखसाधनं गृहगतं वस्तु परित्यज्य अस्थानपतिताः जारं रमयन्तीति भावः। आर्या वृत्तम् ॥ १८५ ॥

केलिमिति।—बन्धक्याः कुलटायाः, पत्यौ पतिसमीपे, लज्जा, केलिं क्रीडां,सुरतसुखमित्यर्थः, प्रदहति नाशयति; पत्या सह सुरते समधिकां लज्जां प्रदर्शयति, तेन क्रीडादिकं न निःसङ्कोचं करोतीति भावः; शृङ्गारः पतिकर्तृकसुरतलीला इत्यर्थः, अस्थीनि प्रदहति, न तेन सा सन्तुष्यतीति भावः; चाटवः प्रियवचनानि, पत्युरिति भावः, कटवः कर्कशाः,भवन्तीति शेषः; तस्मात् पत्यौ बन्धक्याः परितोषः किञ्चिदिष्टञ्च नैव, भवेत्; पत्यावेव तासां लज्जा, न पुनरन्यत्र इति भावः। आर्या वृत्तम् ॥१८६॥

कुलपतनं जनगर्हां बन्धनमपि जीवितव्यसन्देहम् ।
अङ्गीकरोति कुलटा सततं परपुरुषसंसक्ता ॥ १८७ ॥

अथ कौलिकभार्या गृहं गत्वा देवशर्मणे (क) गताऽऽस्तरणां भग्नाञ्च खट्वां समर्प्य इदमाह,—'भो भगवन् ! यावदहं स्वसखीं (ख) ग्रामादभ्यागतां सम्भाष्य द्रुतमागच्छामि, तावत् त्वया मद्गृहे (ग) अप्रमत्तेन भाव्यम्' एवमभिधाय (घ) शृङ्गारविधिं विधाय यावद्देवदत्तमुद्दिश्य व्रजति, तावत् तद्भर्ता सम्मुखो मदविह्वलाङ्गो मुक्तकेशः पदे पदे प्रस्खलन् गृहीतमद्यभाण्डः समभ्येति। तञ्च दृष्ट्वा सा द्रुततरं (ङ) व्यावृत्य स्वगृहं प्रविश्य मुक्तशृङ्गारवेशा यथापूर्वम् अभवत्। कौलिकोऽपि तां पलायमानां (च) कृताद्भुतशृङ्गारां विलोक्य, प्रागेव कर्णपरम्परया तस्याः (छ) श्रुतापवादक्षुभितहृदयः (ज) स्वाकारं निगूहमानः सदैवास्ते। ततश्च तथाविधं चेष्टितम् अवलोक्य (झ) दृष्टप्रत्ययः क्रोधवशगो गृहं प्रविश्य ताम् उवाच,—

कुलपतनमिति।—परपुरुषसंसक्ता कुलटा बन्धकी, सततं कुलपतनं वंशकलङ्कमित्यर्थः, जनगर्हां लोकनिन्दां, बन्धनं स्वजनैः गृहे अवरोधनं, जीवितव्यसन्देहमपि जीवनसंशयञ्च, अङ्गीकरोति स्वीकरोति; पुंश्चल्यो हि कुलनाशादिकं किमपि न गणयन्तीति भावः। आर्य्या वृत्तम ॥ १८७ ॥

(क) गतास्तरणाम्—आच्छादनशून्यां, प्रच्छदपटविहीनामित्यर्थः।

(ख) ग्रामात्—तस्याः श्वशुरावासात् पितुरावासात वा। सम्भाष्य—अभिनन्द्य।

(ग) अप्रमत्तेन—सावधानेन। भाव्यं—स्थातव्यमित्यर्थः।

(घ) शृङ्गारविधिं—सुरतोचितमनुष्ठानम्। सम्मुखः,—अभिमुखवर्त्तीत्यर्थः।

(ङ) व्यावृत्य—प्रत्यावृत्य।

(च) कृताद्भुतशृङ्गाराम्—अनुष्ठितविचित्रशृङ्गारवेशामित्यर्थः।

(छ) श्रुतेति।—श्रुतेन अपवादेन—कलङ्केन, क्षुभितं—सन्दिग्धं, हृदयं यस्य तथाभूतः।

(ज) स्वाकारं—निजमाकारं, हृदयभावमिति भावः। निगूहमानः,—सङ्गोपयन्।

(झ) दृष्टप्रत्ययः,—अपसन्देहः इति भावः। ["दृढप्रत्ययः" इति पाठान्तरम्]।

'आः पापे ! पुंश्चलि ! क प्रस्थिताऽसि ?' सा प्रोवाच,—'अहं त्वत्सकाशात् आगता न कुत्रचिदपि निर्गता। तत् कथं मद्य-पानवशात् (ञ) अप्रस्तुतं वदसि ? अथवा साधु चेदमुच्यते,—

वैकल्यं धरणीपातमयथोचितजल्पनम् ।
सन्निपातस्य चिह्नानि मद्यं सर्वाणि दर्शयेत् ॥ १८८ ॥
करस्पन्दोऽम्बरत्यागस्तेजोहानिः सरागता ।
वारुणीसङ्गजावस्था भानुनाऽप्यनुभूयते' ॥ १८९ ॥

सोऽपि तच्छ्रुत्वा प्रतिकूलवचनं वेशविपर्य्ययञ्च अवलोक्य तामाह,—'पुंश्चलि ! चिरकालं श्रुतो मया तव अपवादः ; तदद्य स्वयं सञ्जातप्रत्ययः तव यथोचितं निग्रहं करोमि' इति अभिधाय लगुडप्रहारैः तां जर्जरितदेहां विधाय, (ट) स्थूणया सह दृढबन्धनेन बद्ध्वा, सोऽपि मदविह्वलो निद्रावशम् अगमत्। अत्रान्तरे तस्याः सखी नापिती कौलिकं निद्रावश-गतं विज्ञाय तां गत्वा इदमाह,—'सखि ! स देवदत्तः तस्मिन् स्थाने त्वां प्रतीक्षते, तत् शीघ्रमागम्यताम्' इति। सा च आह,—'पश्य मम अवस्थाम् ; तत् कथं गच्छामि ? तत् गत्वा

(ञ) अप्रस्तुतम्—असङ्गतम्।

वैकल्यमिति।—मद्यं सुरा, वैकल्यम् अवशाङ्गत्वमित्यर्थः, धरणीपातं भूमौ पतनम्, अयथोचितजल्पनम् असङ्गतं प्रलपनमित्यर्थः, एतानि सर्वाणि सन्निपातस्य त्रिदोषजनितविकारस्य, चिह्नानि दर्शयेत् प्रकाशयेत्, पौरुषमद्ये जने इति शेषः ॥१८८॥

करस्पन्द इति।—करस्पन्दः हस्तकम्पनं, किरणकम्पनञ्चेत्यर्थः, अम्बरत्यागः वस्त्रत्यागः, आकाशात् पतनञ्च, तेजोहानिः प्रकाशह्रासः, दीप्तिह्रासश्च, तथा सरागता नेत्रवक्त्रादीनां रक्तवर्णता रक्तवर्णता च, वारुणी सुरा, वरुणपालिता पश्चिमा दिक् च, तत्सङ्गजा तत्पानजा, तदाश्रयजा च, पूर्वोक्ता अवस्था भानुनाऽपि सूर्य्येणापि, अन्येषां का कथेति भावः, अनुभूयते भुज्यते। अस्तगमनसमये सूर्य्यस्य यादृगवस्था भवति, मदिरामत्तस्यापि तथा इति भावः। श्लेषानुप्राणितेयमुपमा ॥१८९॥

(ट) स्थूणया—स्तम्भेन, गृहधारकदारुविशेषेण वा।

ब्रूहि तं कामिनं यत्, अस्यां रात्रौ न त्वया सह समागमः'। नापिती प्राह,—'सखि! मा मैवं वद। न अयं (ठ) कुलटाधर्मः। उक्तञ्च,—

विषमस्थस्वादुफलग्रहणव्यवसायनिश्चयो येषाम्।
उष्ट्राणामिव तेषां मन्येऽहं शंसितं जन्म॥ १९०॥

तथा च,—सन्दिग्धे परलोके जनापवादे च जगति बहुचित्रे।
स्वाधीने पररमणे धन्यास्तारुण्यफलभाजः॥ १९१॥

अन्यच्च,—यदि भवति दैवयोगात् पुमान् विरूपोऽपि बन्धकीरहसि।
न तु कृच्छ्रादपि भद्रं निजकान्तं सा भजत्येव' ॥१९२॥

---

(ठ) कुलटाधर्मः,—कुलटायाः रीतिः।

विषमस्थेति।—उष्ट्राणामिव यथा विषमस्थं दुरधिरोहस्थानस्थं यत् स्वादुफलं तस्य ग्रहणे यः व्यवसायः उद्यमः, तत्र निश्चयः अवश्यमेव तादृशं फलं लभे इति दृढता इत्यर्थः, वर्त्तते इति शेषः, तेषां जन्म शंसितं धन्यम्, इति अहं मन्ये; दुर्लभलाभार्थी जनः प्रशस्यः, त्वमपि तथेति तव प्रशंसेति भावः। आर्य्या वृत्तम् ॥१९०॥

सन्दिग्धे इति।—जगति लोके, परलोके लोकान्तरे, सन्दिग्धे संशययुक्ते, स्वर्गनरकादि अस्ति न वा इति सन्देहयुक्ते इत्यर्थः, जनापवादे लोकनिन्दायाञ्च, बहुचित्रे विविधप्रकारे इत्यर्थः, नियतवर्त्तमाने इति शेषः, जनानामयं स्वभावो यत् प्रायशः ते परजनकार्य्यस्य किमपि छिद्रमाविष्कृत्य तदपवदन्तीति भावः; तथा पररमणे परच्छन्दानुवर्त्तने, परपुरुषे वा, स्वाधीने निजायत्ते सति, तारुण्यफलभाजः तारुण्यस्य यौवनस्य, फलं यदृच्छासम्भोगः, तत् भजन्ते इति तादृश्यः, युवतयः इति भावः, धन्याः सार्थकजन्मानः, भवन्ति इति शेषः; याः शरीरान्तरे अनिश्चितं नरकभोगभयम्, इहलोके च सर्वदा सुलभं विविधलोकनिन्दाभयञ्चापहाय परपुरुषैर्यथेच्छं विहरन्ति, ताः नितरां सुखिन्यः इति भावः। आर्य्या वृत्तम् ॥ १९१ ॥

यदीति।—बन्धकीरहसि बन्धक्याः कुलटायाः, रहसि विश्रामयोग्ये देशे, यदि विरूपः कुत्सितोऽपि, पुमान् पुरुषः, दैवयोगात् विधिवशात्, भवति आगच्छतीत्यर्थः, अथवा—बन्धकी इति छेदः; तत्र—बन्धकी पुमानिति च कर्त्तृपदम्; दैवात् उभयमपि रहसि उपतिष्ठते यदि इत्यर्थः, तदा सा कृच्छ्रादपि कथञ्चिदपि, अत्यन्तमनिच्छयाऽपीति भावः, भद्रं सुन्दरमपि, निजकान्तं स्वपतिं, न तु भजत्येव। आर्य्या वृत्तम् ॥ १९२ ॥

सा अब्रवीत्,—'यदि एवं, तर्हि कथय, कथं दृढबन्धनबद्धा सती तत्र गच्छामि ? सन्निहितश्च अयं पापात्मा मत्पतिः'। नापिती आह,—'सखि ! मदविह्वलोऽयं (ड) सूर्य्यकरस्पृष्टः प्रबोधं यास्यति ; तदहं त्वाम् उन्मोचयामि ; माम् आत्मस्थाने बद्ध्वा द्रुततरं देवदत्तं सम्भाव्य आगच्छ'। सा अब्रवीत्,—'एवमस्तु' इति। तदनु सा नापिती तां स्वसखीं बन्धनाद्विमोच्य तस्याः स्थाने यथापूर्वमात्मानं बद्ध्वा तां देवदत्तसकाशे (ढ) सङ्केतस्थानं प्रेषितवती। तथाऽनुष्ठिते कौलिकः कस्मिंश्चित् क्षणे समुत्थाय किञ्चिद्गतकोपः (ण) विमदस्तामाह,—'हे परुषवादिनि ! यदि अद्य प्रभृति गृहात् निष्क्रमणं न करोषि, न च परुषं वदसि, ततः त्वाम् उन्मोचयामि'। नापिती अपि (त) स्वरभेदभयात् यावन्न किञ्चित् ऊचे, तावत् सोऽपि भूयोभूयस्तां तदेव आह। अथ सा यावत् प्रत्युत्तरं किमपि न ददौ तावत्, सः प्रकुपितः तीक्ष्णशस्त्रमादाय तस्याः नासिकाम् अच्छिनत्, आह च,—'रे (थ) पुंश्चलि ! तिष्ठ इदानीं, न त्वां भूयस्तोषयिष्यामि' इति जल्पन् पुनरपि निद्रावशमगमत्। देवशर्मा अपि वित्तनाशात् (द) क्षुत्क्षामकण्ठो नष्टनिद्रस्तत् सर्वं स्त्रीचरित्रमपश्यत्। साऽपि कौलिकभार्य्या यथेच्छया देवदत्तेन सह सुरतसुखमनुभूय कस्मिंश्चित् क्षणे स्वगृहमागत्य तां नापितीमिद-

(ड) सूर्य्यकरेत्यादि।—सूर्य्यकिरणस्पर्शेनायं जागरिष्यति। सम्भाव्य—सन्तोष्य।

(ढ) सङ्केतस्थानम्—व्यभिचारोचितगुप्तप्रदेशम्।

(ण) विमदः,—मत्ताशून्यः। परुषवादिनि !—निष्ठुरभाषिणि !

(त) स्वरभेदभयात्—स्वरस्य कण्ठध्वनेः, भेदः विभिन्नता, तस्मात् भयं तस्मात्; कुलटायाः तस्याः स्वस्य च स्वरो भिन्नः, तेन स्वरो ज्ञास्यतीति भयादिति भावः।

(थ) पुंश्चलि—पुंसः भर्त्तुः सकाशात्, चलति पुरुषान्तरं गच्छतीति [ अच्, गौरादित्वात् ङीष् ] तत्सम्बोधने। जल्पन्—कथयन्।

(द) क्षुत्क्षामकण्ठः,—क्षुधया शुष्कगलः। नष्टनिद्रः,—नष्टा—विगता, निद्रा—स्वप्नः यस्य सः।

माह,—'अयि ! (ध) शिवं भवत्याः ? नायं पापात्मा मम गतायाः उत्थितः ?' नापिती प्राह,—'शिवं नासिकया विना शेषस्य शरीरस्य ; तत् द्रुतं मां मोचय बन्धनात्, यावन्नायं मां पश्यति, (न) येन स्वगृहं गच्छामि'। तथा अनुष्ठिते भूयोऽपि कौलिकः उत्थाय तामाह,—'पुंश्चलि ! किमद्यापि न वदसि ? किं भूयोऽप्यतो दुष्टतरं निग्रहं कर्णच्छेदेन करोमि ?' अथ सा सकोपं (प) साधिक्षेपमिदमाह,—'धिक् धिक् महामूढ़ ! को मां महासतीं धर्षयितुं व्यङ्गयितुं वा समर्थः ? तत् शृण्वन्तु सर्वेऽपि लोकपालाः,—

आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये
धर्मश्च जानाति नरस्य वृत्तम् ॥१९२॥

तत् यदि मम सतीत्वमस्ति, मनसाऽपि परपुरुषो न अभिलषितः, ततो देवाः भूयोऽपि मे नासिकां तादृग्रूपामक्षतां कुर्वन्तु ; अथवा यदि मम चित्ते परपुरुषस्य भ्रान्तिरपि भवति, मां भस्मसात् नयन्तु'। एवमुक्त्वा भूयोऽपि तमाह,— 'भो दुरात्मन् ! पश्य मे सतीत्वप्रभावेण तादृशी एव नासिका

(ध) शिवं—मङ्गलम् । नायं—नागत इत्यर्थः । गतायाः,—इतः प्रस्थितायाः ।

(न) येन—बन्धनमोचनेनेत्यर्थः ।

(प) साधिक्षेपं—सतिरस्कारम् । धर्षयितुम्—अवमन्तुम् । व्यङ्गयितुम्—अङ्गविहीनां कर्तुमित्यर्थः ; [विगतमङ्गं यस्याः सा व्यङ्गा, तां करोतीति णिजन्तात् तुमुन्]।

आदित्येति ।—आदित्यचन्द्रौ सूर्याचन्द्रमसौ, अनिलो वायुः, अनलः अग्निः, द्यौः आकाशं, भूमिः क्षितिः, आपो जलानि, हृदयम् अन्तःकरणं, यमः धर्मराजः, अहः दिवसः, रात्रिः रजनी, उभे द्वे, प्रातःसायंरूपे इत्यर्थः, सन्ध्ये सन्धिवेले च, तथा धर्मश्च, नरस्य वृत्तं चरितं, जानाति अवगच्छति, प्रत्यक्षीकरोतीत्यर्थः, आदित्यादय एव मां जानन्ति, तव का शक्तिर्माम् अवगन्तुमिति भावः । उपजातिः वृत्तम् ॥ १९२ ॥

संवृत्ता'। अथ असौ (फ) उल्मुकमादाय यावत् पश्यति, तावत् तद्रूपां नासिकाञ्च भूतले रक्तप्रवाहञ्च महान्तमपश्यत्। अथ स विस्मितमनास्तां बन्धनाद्विमुच्य शय्यायामारोप्य च (ब) चाटुशतैः पर्य्यतोषयत्। देवशर्मा अपि तं सर्ववृत्तान्तमालोक्य विस्मितमना: इदमाह,—

'शम्बरस्य च या माया या माया नमुचेरपि।
बलेः कुम्भीनसेश्चैव सर्वास्ता योषितो विदुः ॥१९४॥
हसन्तं प्रहसन्त्येता रुदन्तं प्ररुदन्त्यपि।
अप्रियं प्रियवाक्यैश्च गृह्णन्ति कालयोगतः ॥१९५॥
उशना वेद यच्छास्त्रं यच्च वेद बृहस्पतिः।
स्त्रीबुद्ध्या न विशिष्येत तस्माद्रक्ष्याः कथं हि ताः ॥१९६॥

(फ) उल्मुकम्—अर्द्धदग्धकाष्ठखण्डम्, आलोकविशेषम् इत्यर्थः। तद्रूपां—पूर्ववत् स्वस्थानस्थाम्।

(ब) चाटुशतैः,—प्रियवचनसमूहैः।

शम्बरस्येति।—शम्बरस्य असुरभेदस्य, या मायाः चातुर्य्याणि, नमुचेरपि तदाख्यस्य असुरविशेषस्य च, या मायाः, बलेः बलिराजस्य, कुम्भीनस्याः कुम्भीनस्याः, तदाख्याया राक्षस्या इत्यर्थः, [भारतादिपर्य्यायेऽस्मिन् श्लोके कुम्भीनसीति दीर्घान्तस्यापि नुमः आर्षः] यद्वा,—कुम्भीनसीपुत्रस्य लवणस्य च, या मायाः, ताः सर्वाः एव योषितः नार्य्यः, विदुः जानन्ति; स्त्रियः सर्वा एव कपटिन्य इति भावः ॥ १९४ ॥

हसन्तमिति।—एताः नार्य्यः, कालयोगतः समयवशात्, उपयुक्तसमये इत्यर्थः, हसन्तं पुरुषं, प्रहसन्ति, रुदन्तं प्ररुदन्त्यपि अनुरुदन्ति च, अपि समुच्चये। अप्रियं विरागभाजनं जनं, प्रियवाक्यैः मोहनवचनैः, गृह्णन्ति वशीकुर्वन्ति च; न कोऽपि पुरुषः मायया स्त्रियो वशीकर्त्तुं शक्नुयात्, अपि तु तासामेव माययाऽसौ वशीभूतो भवतीति भावः ॥१९५॥

उशना इति।—उशनाः शुक्राचार्य्यः, यत् शास्त्रं, वेद जानाति, बृहस्पतिः सुरगुरुश्च, यत् शास्त्रं, वेद, तत् शास्त्रं, स्त्रीबुद्ध्या नारीबुद्धिमपेक्ष्य, न विशिष्येत न अतिशय्येत; स्त्रीबुद्धिशास्त्रमतिक्रम्य वर्त्तते इति भावः; तस्मात् ताः स्त्रियः, कथं हि रक्ष्याः, केनोपायेन रक्षणीयाः? नैव निरोद्धुं शक्या इति भावः ॥ १९६ ॥

अनृते सत्यमित्याहुः सत्यं चापि तथाऽनृतम् ।
इति यास्ताः कथं धीरैः संरक्ष्याः पुरुषैरिह ? ॥१९७॥

अन्यत्रापि उक्तम् ;—

नातिप्रसङ्गः प्रमदासु कार्य्यो नेच्छेत् बलं स्त्रीषु विवर्द्धमानम् ।
अतिप्रसक्तैः पुरुषैर्यतस्ताः क्रीड़न्ति काकैरिव लूनपक्षैः ॥१९८॥

सुमुखेन वदन्ति वल्गुना प्रहरन्त्येव शितेन चेतसा ।
मधु तिष्ठति वाचि योषितां हृदये हालहलं महद्विषम् ॥१९९॥

अत एव निपीयतेऽधरो हृदयं मुष्टिभिरेव ताड्यते ।
पुरुषैः सुखलेशवञ्चितैर्मधुलुब्धैः कमलं यथाऽलिभिः ॥२००॥

अनृतमिति ।—याः रमण्यः, अनृतम् असत्यं, सत्यमिति, तथा सत्यञ्चापि अनृतमिति, आहुः, इह अत्र संसारे, धीरैः प्रवीणैः, पुरुषैः ताः नार्य्यः, कथं संरक्ष्याः ? वशे एव स्थापयितुं शक्याः ? नैव रक्षितुं शक्या इति भावः ॥ १९७ ॥

नेति ।—यतः ताः प्रमदाः, लूनपक्षैः छिन्नपक्षैः, उड्डयनासमर्थैः इत्यर्थः, काकैरिव अतिप्रसक्तैः अत्यनुरक्तैः, पुरुषैः [ करणे तृतीया ] क्रीडन्ति यथाऽभिलषितं व्यवहरन्तीत्यर्थः ; ततः प्रमदासु नारीषु, अतिप्रसङ्गः अत्यासक्तिः, न कार्य्यः, विशेषाऽऽसक्तिश्च न कुर्य्यादित्यर्थः, तथा स्त्रीषु विवर्द्धमानं विशेषेण वृद्धिं गच्छत्, बलं तेजः इत्यर्थः, प्रभावमिति यावत्, न इच्छेत्, धीर इति शेषः । उपजातिः वृत्तम् ॥ १९८ ॥

सुमुखेनेति ।—एताः वल्गुना मनोहरेण, सुमुखेन सुप्रसन्नेन मुखेन, वदन्ति आलपन्ति, किन्तु शितेन तीक्ष्णेन, चेतसा मनसा, प्रहरन्त्येव, पुमांसमिति शेषः ; मधुरालापिन्योऽपि रमण्यः हृदयकाठिन्येन नितरामन्तर्म्मर्माणि प[ीड]यन्तीति भावः । यतः योषितां स्त्रीणां, वाचि आलापे, मधु मधुवत् सुमधुरं वाक्यजालं, हृदये मनसि तु, महत् तीव्रं, हालहलं कालकूटं, विषं विषवद्दुःखदं वस्त्वित्यर्थः, तिष्ठति विद्यते । सुन्दरी वृत्तम् ,— "अयुजोर्यदि सौ जगौ युजोः सभरा ल्गौ यदि सुन्दरी तदा" इति लक्षणात् ॥१९९॥

अत इति ।—अत एव अस्मादेव कारणात्, मुखे मधुसद्भावात् हृदये च विषसद्भावादिति भावः, सुखलेशेन यत्किञ्चित्सुखलाभेनापीति भावः, वञ्चितैः विप्रलब्धैः, नारीणां नियतकपटव्यवहारेण नितरामुद्वेजितैरिति भावः, मधुलुब्धैः मधुरास्वादलालसैः, पुरुषैः, मधुलुब्धैः मधुपिपासुभिः, अलिभिः भ्रमरैः, कमलं यथा पद्ममिव, अधरः, तासामिति शेषः, निपीयते निःशेषेण आस्वाद्यते, चुम्ब्यते इति यावत्, हृदयन्तु मुष्टिभिरेव ताड्यते कुचमर्दनेन मर्द्यते । अत्रापि सुन्दरी वृत्तम् ॥ २०० ॥

अपि च,—

आवर्त्तः संशयानामविनयभवनं पत्तनं साहसानां
दोषाणां सन्निधानं कपटशतगृहं क्षेत्रमप्रत्ययानाम्।
दुर्ग्राह्यं यन्महद्भिर्नरवरवृषभैः सर्वमायाकरण्डं
स्त्रीयन्त्रं केन लोके विषममृतयुतं धर्मनाशाय सृष्टम्? ॥२०१॥

कार्कश्यं स्तनयोर्दृशोस्तरलताऽलीकं मुखे दृश्यते
कौटिल्यं कचसञ्चये प्रवचने मान्द्यं त्रिके स्थूलता।
भीरुत्वं हृदये सदैव कथितं मायाप्रयोगः प्रिये
यासां दोषगणो गुणा मृगदृशां ताः किं नराणां प्रियाः? ॥२०२॥

एता हसन्ति च रुदन्ति च कार्य्यहेतोः
विश्वासयन्ति च परं न च विश्वसन्ति।

आवर्त्त इति।—लोके जगति, केन विधात्रा, धर्मनाशाय सर्वासां मायानां कपटव्यवहाराणां करण्डं पात्रविशेषः, तथा अमृतयुतं सुधामिश्रितं, विषं तत्स्वरूपमित्यर्थः, स्त्रीयन्त्रं नारीरूपं यन्त्रं, सृष्टं, तत्तु न जाने इति शेषः, यत् यन्त्रं, संशयानां सन्देहानाम्, आवर्त्तः भ्रमिस्थानं, ("स्यादावर्त्तोऽम्भसां भ्रमः" इत्यमरः) अविनयस्य दुर्नयस्य, भवनम् आश्रयः, साहसानां पत्तनं नगरस्वरूपं, दोषाणां सन्निधानं निकेतनं, कपटशतानां चातुरीसमूहानां, गृहम् आश्रयस्वरूपम्, अप्रत्ययानाम् अविश्वासानां, क्षेत्रं स्थानं, महद्भिः नरवरवृषभैः मानवश्रेष्ठैः इत्यर्थः, (अपिरत्राध्याहार्यः) दुर्ग्राह्यं ग्रहीतुमशक्यं, वशीकर्त्तुमशक्यमित्यर्थः। रूपकालङ्कारः। स्रग्धरा वृत्तम् ॥२०१॥

कार्कश्यमिति।—यासां मृगदृशां, स्तनयोः कुचयोः, कार्कश्यं काठिन्यं, दृशोः नेत्रयोः, तरलता चञ्चलता, मुखे अलीकं सदा असत्यवाक्यं, कचसञ्चये केशनिचये, कौटिल्यं वक्रता, भङ्गिमत्त्वा इत्यर्थः, प्रवचने आलापे, मान्द्यम् अल्पता, त्रिके नितम्बे इति यावत् ("पृष्ठवंशाधरे त्रिकम्" इत्यमरः) स्थूलता विशालता, हृदये सदैव भीरुत्वं भयशीलता, तथा प्रिये स्वामिनि, कथितं वचनं, मायाप्रयोगः चापल्ययुक्तमित्यर्थः; इत्थं दोषगणः दोषसमूहः, अपीति शेषः, यासां गुणाः, भवन्तीति शेषः, गुणत्वेन गृह्यन्ते लोकैरिति भावः, ताः तादृश्यः स्त्रियः, किं कथं, केन प्रकारेणेत्यर्थः, नराणां प्रियाः? प्रीतिजनन्यः, भवितुमर्हन्ति इति शेषः; नैव प्रियतामर्हन्ति, सर्वदोषाकरत्वादिति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ २०२ ॥

तस्मात् नरेण कुलशीलवता सदैव
नार्य्यः श्मशानवटिका इव वर्जनीयाः ॥ २०३ ॥
व्याकीर्णकेसरकरालमुखा मृगेन्द्रा
नागाश्च भूरिमदराजिविराजमानाः ।
मेधाविनश्च पुरुषाः समरेषु शूराः
स्त्रीसन्निधौ परमकापुरुषा भवन्ति ॥ २०४ ॥
कुर्वन्ति तावत् प्रथमं प्रियाणि यावन्न जानन्ति नरं प्रसक्तम् ।
ज्ञात्वा च तं मन्मथपाशबद्धं ग्रस्तामिषं मीनमिवोद्धरन्ति ॥२०५॥

---

एता इति ।—एताः नार्य्यः, कार्य्यहेतोः स्वकार्य्यसाधनार्थं, [ "वित्तहेतोः" इति मृच्छकटिके पाठः ] कदाचित् हसन्ति च, कदाचित् रुदन्ति च, परम् अपरजनं, [ "पुरुषम्" इति वा पाठः ] विश्वासयन्ति विश्वासं नयन्ति च ; किन्तु न च विश्वसन्ति, स्वयमिति शेषः ; तस्मात् कुलशीलवता कौलीन्यचारित्रयुक्तेन, [ "कुलशीलसमन्वितेन" इति वा पाठः ] नरेण, नार्य्यः श्मशानवटिका इव श्मशानस्था वटतरव इव, भूतावासत्वेन भयप्रदत्वादिति भावः ; [ "वेश्याः श्मशानसुमनाः" इति पाठोऽपि दृश्यते ] सदैव वर्जनीयाः परिहरणीयाः इत्यर्थः । वसन्ततिलकं वृत्तम् ॥ २०३ ॥

व्याकीर्णेति ।—व्याकीर्णैः विशेषेण इतस्ततो विलुलितैः, केसरैः जटाभिः, ("जटा सटाकेसरयोः" इत्यमरः ) करालानि भीषणानि, मुखानि येषां ते तथोक्ताः, मृगेन्द्राः सिंहाः, भूरिभिः बह्वीभिः, मदराजिभिः दानधाराभिरित्यर्थः, विराजमानाः विशेषेण शोभमानाः, मदस्राविणः इत्यर्थः, नागाः हस्तिनश्च, तथा मेधाविनो बुद्धिमन्तः, समरेषु सङ्ग्रामेषु, शूराः महावीराः, पुरुषाश्च, स्त्रीसन्निधौ नारीसमीपे, परमकापुरुषाः पौरुषविहीनाः, अत्यर्थं सङ्कुचिता इत्यर्थः, भवन्ति ; दुर्दान्तेभ्यो येभ्यः सर्वेऽपि बिभ्यति, ते पुनः रमणीसन्निधिम् आसाद्य विभूता विचिता इव जायन्ते इति भावः । वसन्ततिलकं वृत्तम् ॥२०४॥

कुर्वन्तीति ।—रमण्यः इति कर्तृपदमध्याहार्य्यम् । प्रथमं, यावत् नरं पुरुषं, प्रसक्तं प्रकृष्टानुरागिणं, न जानन्ति न बुध्यन्ते, तावत् प्रियाणि कुर्वन्ति प्रियकार्य्यैः पुरुषं रञ्जयन्तीति भावः ; ततः तं पुरुषं, मन्मथपाशेन कामवागुरया, बद्धं नियन्त्रितम्, अत एव ग्रस्तं गृहीतं, गिलितम् इति यावत्, आमिषं बडिशाग्रबद्धमांसखण्डं येन तथाभूतं, मीनमिव मत्स्यमिव, ज्ञात्वा उद्धरन्ति प्रियव्यवहारं त्यजन्ति इत्यर्थः ; गृहीतामिषेण मत्स्येन यथा यथेच्छं क्रीडन्ति, तद्वत् तेनापीति भावः । इन्द्रवज्रा वृत्तम् ॥२०५॥

समुद्रवीचीव चलस्वभावाः सन्ध्याभ्ररेखेव मुहूर्त्तरागाः ।
स्त्रियः कृतार्थाः पुरुषं निरर्थं निष्पीडितालक्तकवत्त्यजन्ति ॥ २०६ ॥

अनृतं साहसं माया मूर्खत्वमतिलोभता ।
अशौचं निर्दयत्वञ्च स्त्रीणां दोषाः स्वभावजाः ॥ २०७ ॥

सम्मोहयन्ति मदयन्ति विडम्बयन्ति
निर्भर्त्सयन्ति रमयन्ति विषादयन्ति ।
एताः प्रविश्य सरलं हृदयं नराणां
किं वा नु वामनयना न समाचरन्ति ? ॥ २०८ ॥

---

समुद्रेति।—समुद्रस्य वीचीव तरङ्ग इव, चलश्चञ्चलः, स्वभावो यासां ताः, समुद्रतरङ्गवत् अस्थिरप्रकृतयः, [ समुद्रपदेन सर्वथा चञ्चलत्वं ध्वन्यते। अत्र गमकत्वात् समासः ] सन्ध्याभ्ररेखेव सायङ्कालिकगगनमेघखण्ड इव, [ इवेन नित्यसमासः ] मुहूर्त्तरागाः क्षणमात्ररक्ताः, [अत्र सन्ध्यापदेन क्षणादेव रागहानिः ध्वन्यते] स्त्रियः, कृतार्थाः सिद्धकामाः सत्यः, स्वाभिलाषपूर्त्त्यनन्तरमेवेत्यर्थः, निरर्थं निर्धनं, पुरुषं, निष्पीडितं निःशेषेण निर्गलितरसं, यत् अलक्तकं तद्वत् त्यजन्ति; नार्य्यः यथा अलक्तकस्य अक्तरसं निःशेषेण गृहीत्वा छिन्नांशं त्यजन्ति, तथा धनिभ्यः कामुकेभ्यः अशेषमेव धनं गृहीत्वा तान् गृहान्निःसारयन्तीति भावः। उपजातिः वृत्तम् ॥२०६॥

अनृतमिति।—अनृतम् असत्यभाषणं, साहसम् अविमृष्यकारित्वं, माया कपटता, मोहनव्यवहारविशेष इत्यर्थः, मूर्खत्वं जाड्यम्, अज्ञानतेत्यर्थः, अतिलोभता अतिलोलुपत्वम्, अशौचम् अपवित्रता, समलत्वमित्यर्थः, मनस इति भावः; निर्दयत्वं निष्ठुरत्वञ्च; एते स्त्रीणां स्वभावजाः स्वाभाविकाः, दोषाः, भवन्तीति शेषः ॥२०७॥

सम्मोहयन्तीति।—एताः वामनयनाः वामः कामः, नयने दर्शने यासां ताः कटाक्षेण पुरुषान् काममुग्धान् कुर्वत्य इत्यर्थः, यद्वा,—वामे प्रतीपे, प्रतिकूले इत्यर्थः, वामे वल्गुनी, मनोज्ञे इत्यर्थः वा, ("वामौ वल्गुप्रतीपौ द्वौ" इत्यमरः) नयने यासां ताः, प्रतीपदर्शिन्यः सुलोचना वा, नार्य्यः, नराणां सरलम् अकपटं, सुकोमलमित्यर्थः, हृदयं प्रविश्य, नु इति प्रश्ने, किं वा न समाचरन्ति ? न कुर्वन्ति ? तथा हि, सम्मोहयन्ति सम्यक् मुग्धं कुर्वन्ति, पुरुषमिति शेषः, मदयन्ति उन्मत्ततां नयन्ति, विडम्बयन्ति प्रतारयन्ति, कौशलेन सर्वं हरन्तीत्यर्थः, निर्भर्त्सयन्ति तिरस्कुर्वन्ति, रमयन्ति सुरतादिना प्रीणयन्ति, तथा विषादयन्ति विषण्णं कुर्वन्ति, अप्रियाचरणेन दीनं नयन्तीति भावः; यदा यत् कर्तुमिच्छन्ति, तदा तदेव कुर्वन्तीति निष्कर्षः। वसन्ततिलकं वृत्तम् ॥२०८॥

अन्तर्विषमया ह्येता बहिश्चैव मनोरमाः।
गुञ्जाफलसमाकारा योषितः केन निर्मिताः?' ॥२०९॥

एवं चिन्तयतः तस्य परिव्राजकस्य सा निशा महता कष्टेन अतिचक्राम। सा च दूतिका छिन्ननासिका स्वगृहं गत्वा चिन्तयामास,—'किमिदानीं कर्त्तव्यम्?' कथमेतत् (भ) महच्छिद्रं स्थगयितव्यम्?' अथ तस्याः एवं विचिन्तयन्त्या भर्त्ता कार्य्यवशात् राजकुले (म) पर्य्युषितः प्रत्यूषे च स्वगृह-मभ्युपेत्य द्वारदेशस्थः (य) विविधपौरकृत्योत्सुकतया तामाह,—'भद्रे! शीघ्रमानीयतां क्षुरभाण्डं, येन क्षौरकर्मकरणाय गच्छामि'। साऽपि छिन्ननासिका गृहमध्यस्थितेव कार्य्य-करणापेक्षया क्षुरभाण्डात् क्षुरमेकं समाकृष्य, तस्य अभिमुखं प्रेषयामास। नापितोऽपि (र) उत्सुकतया तमेकं क्षुरमव-लोक्य कोपाविष्टः सन् तदभिमुखमेव तं क्षुरं प्राहिणोत्। एतस्मिन् अन्तरे सा दुष्टा ऊर्द्ध्वबाहु (ल) विधाय फूत्कर्त्तुमना गृहात् निश्चक्राम; आह च,—'अहो! पापेन अनेन मम सदा-

अन्तरिति।—अन्तर्विषमयाः अन्तः अभ्यन्तरे, हृदयावच्छेदे इति भावः, विषमयाः गरलप्रचुराः, विषमयहृदयाः इत्यर्थः, बहिरेव शरीरबहिःप्रदेशे, मनोरमाः लावण्य-युक्ताः, वचसा मनोहारिण्य इत्यर्थः, विषकुम्भं पयोमुखमिवेति भावः; अत एव गुञ्जाफलैः "कुँच" इति प्रसिद्धैः फलविशेषैः, समाः आकारा यासां तथाविधाः, एताः योषितः केन जनेन, निर्मिताः सृष्टाः? गुञ्जाफलं बहिरतिरम्यं दृश्यते, परन्तु अन्तर्विषमयं यतस्तद्भक्षितं विषवत् पीडयन्तीति बोद्धव्यम् ॥२०९॥

(भ) छिद्रं—नासारन्ध्रं, कलङ्को वा। स्थगयितव्यं—गोपायितव्यम्।

(म) पर्य्युषितः,—निशायां स्थितः, रात्रिं यापित इत्यर्थः।

(य) विविधपौरकृत्योत्सुकतया—बहुनागरिकक्षौरकार्य्यव्याकुलतया।

(र) उत्सुकतया—शीघ्रगमनोत्कण्ठया। प्राहिणोत्—अक्षिपत्।

(ल) विधाय—भूत्वा इत्यर्थः। फूत्कर्त्तुमनाः,—चीत्कारेण लोकानाक्रष्टु-कामा इत्यर्थः।

ब्रह्मचारिण्याः पश्यत नासिकाच्छेदो विहितः, तत् परित्रायध्वं परित्रायध्वम्'। अत्रान्तरे राजपुरुषाः समभ्येत्य तं नापितं लगुडप्रहारैः जर्जरीकृत्य दृढबन्धनैर्बद्ध्वा तया छिन्ननासिकया सह धर्माधिकरणस्थानं नीत्वा सभ्यान् ऊचुः,—'शृण्वन्तु भवन्तः सभासदः! अनेन नापितेन अपराधं विना स्त्रीरत्नमेतत् (व) व्यङ्गितम्; तदस्य यत् युज्यते तत् क्रियताम्' इति अभिहिते सभ्या ऊचुः,—'रे नापित! किमर्थं त्वया भार्य्या व्यङ्गिता? किमनया परपुरुषोऽभिलषितः? (श) उताहित् प्राणद्रोहः कृतः? किंवा चौर्य्यकर्म आचरितम्? तत् कथ्यताम् अस्याः अपराधः'। नापितोऽपि प्रहारपीड़िततनुर्वक्तुं न शशाक। अथ तं तूष्णीम्भूतं दृष्ट्वा पुनः सभ्याः ऊचुः,—'अहो! सत्यमेतत् राजपुरुषाणां वचः, पापात्मा अयम्। अनेन इयं निर्दोषा (ष) वराकी दूषिता। उक्तञ्च,—

भिन्नस्वरमुखवर्णः शङ्कितदृष्टिः समुत्पतिततेजाः ।
भवति हि पापं कृत्वा स्वकर्मसन्त्रासितः पुरुषः ॥२१०॥

तथा च,—आयाति स्खलितैः पादैर्मुखवैवर्ण्यसंयुतः ।
ललाटस्वेदभाक् भूरि गद्गदं भाषते वचः ॥ २११ ॥

---

(व) व्यङ्गितम्—अङ्गविहीनं कृतमित्यर्थः। यत्—यादृशं दण्डमित्यर्थः।

(श) उताहित्—अथवा। प्राणद्रोहः,—जीवननाशचेष्टा।

(ष) वराकी—कातरा, दीना इत्यर्थः।

भिन्नेति।—पापं कृत्वा, स्वकर्मणा स्वेन पापकर्मणा, सन्त्रासितः सम्यक् त्रासं नीतः, पुरुषः, भिन्नः पृथग्भूतः, विकृतिं गत इत्यर्थः, स्वरः कण्ठध्वनिः, मुखवर्णश्च मुखस्य गौरश्यामादिरूपः स्वाभाविकवर्णश्च यस्य तथाभूतः, शङ्किता चकिता, दृष्टिर्यस्य तादृशः, तथा समुत्पतितं विनष्टमित्यर्थः, तेजो यस्य तथाभूतः, निष्प्रभ इत्यर्थः, भवति हि, हिशब्दोऽवधारणार्थः। आर्य्या वृत्तम् ॥२१०॥

आयातीति।—पापी नर इति अध्याहार्य्यं, स्खलितैः पदे पदे च्योतद्भिः, पादैः उपलक्षितः, आयाति आगच्छति, तथा मुखवैवर्ण्यसंयुतः विवर्णमुखकान्तिः, ललाट-

अधोदृष्टिर्भवेत् ज्ञात्वा पापं प्राप्तः सभां नरः ।
तस्मात् यत्नात् परिज्ञेयश्चिह्नैरेतैर्विचक्षणैः ॥ २१२ ॥

अपरञ्च—प्रसन्नवदनो हृष्टः स्पष्टवाक्यः सरोषदृक् ।
सभायां वक्ति सामर्षं सावष्टम्भो नरः शुचिः ॥ २१३ ॥

तदेषः ( स ) दुष्टचरित्रलक्षणो दृश्यते, स्त्रीधर्षणात् वध्यः इति ; तत् शूलेऽयमारोप्यताम्' इति ।

अथ वध्यस्थाने नीयमानं तम् अवलोक्य देवशर्मा तान् (ह) धर्माधिकृतान् गत्वा प्रोवाच,—'भो भोः ! अन्यायेन एषः वराको वध्यते, नापितः साधुसमाचार एषः । तत् श्रूयतां मे वाक्यं,—जम्बुको हुडयुद्धेन' इति । अथ ते सभ्याः ऊचुः,—'भो भगवन् ! कथमेतत् ?' ततो देवशर्मा तेषां त्रयाणामपि वृत्तान्तं विस्तरेण अकथयत् । तदाकर्ण्य सुविस्मितमनसस्ते नापितं विमोच्य मिथः प्रोचुः,—'अहो !—

अवध्यो ब्राह्मणो बालः स्त्री तपस्वी च रोगभाक् ।
विहिता व्यङ्गिता तेषामपराधे महत्यपि ॥ २१४ ॥

स्वेदभाक् खिन्नललाटस्य सन्, भूरि बहु, गद्गदम् अस्पष्टं, वचः भाषते ॥२११॥

अधोदृष्टिरिति ।—पापं ज्ञात्वा सभां धर्माधिकरणं, प्राप्तो नरः, अधोदृष्टिः अधोमुख इत्यर्थः, भवेत् ; तस्मात् विचक्षणैः निपुणैः, पुरुषैरिति शेषः, एतैः पूर्वोक्तैः, चिह्नैः लक्षणैः, यत्नात् अवधानात्, परिज्ञेयः बोद्धव्यः, पापीति शेषः ॥२१२॥

प्रसन्नवदन इति ।—शुचिः निर्दोषः, नरः प्रसन्नवदनः स्मेराननः, हृष्टः पुलकितः, स्पष्टवाक्यः अस्खलिताक्षरः, सरोषदृक् क्रोधपूर्णदृष्टिः, मिथ्याऽभियोगजापमानादिति भावः, सावष्टम्भः सगर्वः, भवतीति शेषः, अत एव सभायां धर्माधिकरणे इत्यर्थः, सामर्षं सकोपं, वक्ति कथयति, निर्भीकः सर्वं निवेदयतीति फलितार्थः ॥२१३॥

(स) दुष्टेति ।—दुष्टचरित्रस्य लक्षणं—चिह्नं यत्र तथोक्तः । स्त्रीधर्षणात्—स्त्रियाः अपमाननात्, नासाच्छेदकरणादिति यावत् ।

(ह) धर्माधिकृतान्—विचारकान् । वराकः,—निर्दोषः ।

अवध्य इति ।—महति अपराधेऽपि ब्राह्मणः, बालः शिशुः, स्त्री, तपस्वी,

तदस्या नासिकाच्छेदः (च) स्वकर्मणा हि संवृत्तः; ततो राजनिग्रहस्तु कर्णच्छेदः कार्य्यः'। तथाऽनुष्ठिते देवशर्माऽपि वित्तनाशसमुद्भूतशोकरहितः पुनरपि स्वकीयं मठायतनं जगाम। अतोऽहं ब्रवीमि,—'जम्बुको हुडुयुद्धेन' इति"।

करटक आह,—"एवंविधे (क) व्यतिकरे किं कर्त्तव्यमावयोः?" दमनकोऽब्रवीत्,—"एवंविधेऽपि समये बुद्धिस्फुरणं भविष्यति, येन सञ्जीवकं (ख) प्रभोः विश्लेषयिष्यामि। उक्तञ्च—

एकं हन्यात् न वा हन्यादिषुर्मुक्तो धनुष्मता।
बुद्धिर्बुद्धिमता सृष्टा हन्ति राष्ट्रं सनायकम्॥ २१५॥

तदहं (ग) मायाप्रपञ्चेन गुप्तमाश्रित्य तं स्फोटयिष्यामि"।

करटक आह,—"भद्र! यदि कथमपि तव (घ) मायाप्रवेशं पिङ्गलकः ज्ञास्यति, सञ्जीवको वा, तदा नूनं विघातः एव"। सोऽब्रवीत्,—"तात! नैवं वद, (ङ) गूढबुद्धिभिः आपत्काले विधुरेऽपि दैवे बुद्धिः प्रयोक्तव्या, नोद्यमस्त्याज्यः, कदाचित्

रोगभाक् रोगी च, अवध्यः न हन्तव्यः। तेषां व्यङ्गिता विकृताङ्गता, विहिता, येन केनचिदङ्गेन एतेषां वियोगः कार्य्यः इति शास्त्रनियमः इत्यर्थः॥२१४॥

(च) स्वकर्मणा—निजकृतपापेनेत्यर्थः। राजनिग्रहः,—राजदण्डः।

(क) व्यतिकरे—व्यसने,("अथ व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोः" इति मेदिनी)।

(ख) प्रभोः,—पिङ्गलकात्। विश्लेषयिष्यामि—वियोजयिष्यामि।

एकमिति।—धनुष्मता धानुष्केण, मुक्तः निक्षिप्तः, इषुः शरः, एकं लक्ष्यमित्यर्थः, हन्यात् हन्तुं शक्नुयात, न वा हन्यात् हन्तुं न शक्नुयाद्वा, किन्तु बुद्धिमता सृष्टा प्रयुक्ता, बुद्धिः विमृश्यकारित्वमित्यर्थः, सनायकं स्वामिसहितं, राष्ट्रं राज्यं, हन्ति। अत्र इषोरपि बुद्धेरुत्कर्षात् व्यतिरेकालङ्कारः। तदुक्तं दर्पणे,—"आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा। व्यतिरेक एक उक्ते हेतौ नोक्ते स च त्रिधा॥" इति॥२१५॥

(ग) मायाप्रपञ्चेन—चातुरीविस्तारेण। स्फोटयिष्यामि—वियोजयिष्यामि।

(घ) मायाप्रवेशं—कपटाचरणमित्यर्थः। विघातः,—व्याघातः, विपदित्यर्थः।

(ङ) गूढबुद्धिभिः,—कूटबुद्धिभिरित्यर्थः। विधुरे—प्रतिकूले। उद्यमः,—

घुणाचरन्यायेन बुद्धेः साम्राज्यं भवति। उक्तञ्च,—

त्याज्यं न धैर्यं विधुरेऽपि दैवे
धैर्यात् कदाचित् स्थितिमाप्नुयात् सः।
जाते समुद्रेऽपि हि पोतभङ्गे
सांयात्रिको वाञ्छति कर्म एव॥ २१६॥

तथा च,—उद्योगिनं सततमत्र समेति लक्ष्मीः
दैवं हि दैवमिति कापुरुषा वदन्ति।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः॥ २१७॥

उद्योगः, पुरुषकार इत्यर्थः। घुणाचरन्यायेनेति।—घुणो नाम काष्ठभक्षकः कीट-विशेषः, तेन कृतमक्षरं, तस्य न्यायः, तेन, स यदा काष्ठं प्रविशति, तदा क्रमेण काष्ठं कृन्तन् कृन्तन् यत खननवर्त्म करोति, तदेव कदाचिदक्षरवत् प्रतीयते चेत् तदा लोकैर्घुणकृतमेतदक्षरमिति मन्यते; इत्यनेन प्रकारेणैव: न्यायः घुणाक्षरः इति प्रसिद्धः। बुद्धेः,—बुद्धिवशात्। साम्राज्यं भवति—साम्राज्यलाभो भवति इत्यर्थः।

त्याज्यमिति।—दैवे विधुरे विपरीतेऽपि, धैर्यं न त्याज्यं न हातव्यम्; यतः सः प्रतिकूलदैवो जनः इत्यर्थः,धैर्यात् कदाचित् कस्मिन्नपि काले, स्थितिं स्थानं, यथाऽभि-मतमिति भावः,आप्नुयात् लभेत। तथा हि,समुद्रे जलधौ,पोतभङ्गे नौकाभग्ने,वाणिज्य-द्रव्यपूर्णयानभङ्गे इत्यर्थः, जाते सम्पन्नेऽपि, सांयात्रिकः पोतवणिक्, ("सांयात्रिकः पोतवणिक्" इत्यमरः) कर्म स्वं वाणिज्यमेव, वाञ्छति धैर्यमाश्रित्य पुनरपि कर्तु-मिच्छति, न पुनः व्यवसायात विचलतीति भावः। "कर्म एव" इत्यत्र सन्धिराहित्यं दोषः। अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः। तदुक्तं दर्पणे,— "सामान्यं वा विशेषेण विशेषस्तेन वा यदि। कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते। साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः॥" इति। इन्द्रवज्रा वृत्तम्॥२१६॥

उद्योगिनमिति।—अत्र संसारे, लक्ष्मीः श्रीः, सततम् उद्योगिनं सोद्यमं जनं, समेति प्राप्नोति,कापुरुषाः पौरुषविहीनाः अधमाः पुरुषाः,हि दैवं दैवं "दैवमेव शरणं नान्यत्" इति वदन्ति; अत एव दैवं निहत्य निरस्य, आत्मशक्त्या स्वसामर्थ्येन, पौरुषं पुरुषकारं, कुरु अवलम्बस्वेत्यर्थः, यत्ने पुरुषकारे इत्यर्थः, कृते सति यदि न सिध्यति, कार्य्यम् इति शेषः, तदा अत्र यत्ने, कः कोऽपि, दोषः अप्रयोगकर्तुस्त्रुटिर्विद्यते

तदेवं ज्ञात्वा सुगूढबुद्धिप्रभावेण यथा तौ द्वौ अपि न ज्ञास्यतः, तथा मिथो वियोजयिष्यामि। उक्तञ्च,—

सुगुप्तस्यापि दम्भस्य ब्रह्माऽप्यन्तं न गच्छति।
कौलिको विष्णुरूपेण राजकन्यां निषेवते" ॥ २१८ ॥

करटक आह,—"कथमेतत् ?" । सोऽब्रवीत्,—

## कथा ५ ।

"कस्मिंश्चिदधिष्ठाने कौलिकरथकारौ मित्रे प्रतिवसतः स्म। तत्र च तौ बाल्यात् प्रभृति सहचारिणौ परस्परमतीव स्नेहपरौ सदा एकस्थानविहारिणौ कालं नयतः। अथ कदाचित् तत्राधिष्ठाने कस्मिंश्चिद्देवायतने यात्रामहोत्सवः संवृत्तः। तत्र च (च) नटनर्त्तकचारणसङ्कुले नानादेशागतजनावृते तौ सहचरौ भ्रमन्तौ काञ्चिद्राजकन्यां (छ) करेणुकारूढां सर्वलक्षणसनाथां कञ्चुकिवर्षवरपरिवारितां देवतादर्शनार्थं समायातां दृष्टवन्तौ। अथासौ कौलिकस्तां दृष्ट्वा विषार्दित

---

इति बोद्धव्यम्, अन्यथा कथं कार्य्यसिद्धिर्न भवेत् ? सम्यक् यत्नेन कर्मं क्रियते तर्हि नूनमेव कार्य्यसिद्धिरिति निष्कर्षः। ["उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीर्दैवेन देयमिति कापुरुषा वदन्ति" इति प्रथमार्द्धे पाठान्तरम्]। वसन्ततिलकं वृत्तम् ॥२१७॥

सुगुप्तस्येति।—ब्रह्मा स्वयं विधाताऽपि, अन्येषां का कथेति अप्यर्थः; सुगुप्तस्य गूढं प्रयुक्तस्य, दम्भस्य कपटस्य, अन्तं पारं, न गच्छति अपि नावबुध्यते इति सम्भावयामि इत्यर्थः। अपिरत्र सम्भावनायाम्। तथा हि, कौलिकः कश्चित् तन्तुवायः, विष्णुरूपेण कपटविष्णुरूपं धृत्वा, राजकन्यां निषेवते भुङ्क्ते ॥२१८॥

(च) नटेति।—नटाश्च नर्त्तकाश्च चारणाः,—कुशीलवाश्च तैः सङ्कुले—व्याप्ते।

(छ) करेणुकारूढां—हस्तिनीमारुह्य आगताम्। सर्वेति।—सर्वैः लक्षणैः,—शुभचिह्नैः, सनाथा—युक्ता तां, सर्वसुलक्षणसम्पन्नाम्। कञ्चुकीति।—कञ्चुकिभिः,—अन्तःपुरचरवृद्धब्राह्मणैः, "अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः। सर्वकार्य्यार्थकुशलः कञ्चुकीत्यभिधीयते॥" इति लक्षणान्वितैरित्यर्थः, वर्षवरैश्च—नपुंसकजातीयैश्च, परिवारितां—परिवेष्टितां, वेष्टितामित्यर्थः।

इव दुष्टग्रहगृहीत इव कामशरैः हन्यमानः सहसा भूतले निपपात। अथ तं तदवस्थम् अवलोक्य रथकारः तद्दुःखदुःखितः (ज) आप्तपुरुषैस्तं समुत्क्षिप्य स्वगृहमानाययत्। तत्र च विविधैः (झ) शीतोपचारैः चिकित्सकोपदिष्टैः मन्त्रवादिभिरुपचर्य्यमाणः चिरात् कथञ्चित् सचेतनो बभूव। ततो रथकारेण पृष्टः,—'भो मित्र! किमेवं त्वम् अकस्मात् विचेतनः सञ्जातः? तत् कथ्यताम् आत्मस्वरूपम्'। सः आह,—'वयस्य! यदि एवं, तत् शृणु मे रहस्यं, येन सर्वाम् आत्मवेदनां ते वदामि। यदि त्वं मां सुहृदं मन्यसे, तदा (ञ) काष्ठप्रदानेन प्रसादः क्रियताम्; क्षम्यतां यद्या किञ्चित् प्रणयातिरेकात् अयुक्तं तव मया अनुष्ठितम्'। सोऽपि तदाकर्ण्य (ट) वाष्पपिहितनयनः सगद्गदमुवाच,—'वयस्य! यत् किञ्चित् दुःखकारणं तद्वद, येन प्रतीकारः क्रियते, यदि शक्यते कर्त्तुम्। उक्तञ्च,—

> औषधार्थसुमन्त्राणां बुद्धेश्चैव महात्मनाम्।
> असाध्यं नास्ति लोकेऽत्र यद्ब्रह्माण्डस्य मध्यगम्॥ २१९॥

तदेषां चतुर्णां यदि साध्यं भविष्यति, तदा अहं साधयि-

---

(ज) आप्तपुरुषैः,—आत्मीयजनैः। समुत्क्षिप्य—समुत्तोल्य।

(झ) शीतोपचारैः,—शीतलप्रक्रियाभिः। मन्त्रवादिभिः,—भूतविद्याऽभिज्ञैरित्यर्थः। उपचर्य्यमाणः,—सेव्यमानः।

(ञ) काष्ठप्रदानेन—चितारचनेन इत्यर्थः। प्रणयातिरेकात्—प्रीतिबाहुल्यात्।

(ट) वाष्पेति।—वाष्पेण—नेत्रजलेन, पिहिते—आच्छादिते, नयने यस्य तादृशः। सगद्गदं—गद्गदः,—अव्यक्तास्फुटशब्दः, तेन सह वर्त्तमानं तद्यथा तथा।

औषधेति।—अत्र अस्मिन्, लोके संसारे, यत् वस्तु, ब्रह्माण्डस्य जगतः, मध्यगम् अन्तर्गतं, जगति लभ्यमित्यर्थः, तत् वस्तु औषधं भेषजम्, अर्थः धनं, सुमन्त्रः सुमन्त्रणा तेषां, तथा महात्मनां बुद्धेश्च असाध्यं न अस्त्येव न विद्यते एव; सर्वमेव औषधेन अर्थेन सुमन्त्रेण बुद्धिबलेन च साधयितुं शक्यते इति फलितार्थः॥२१९॥

ष्यामि'। कौलिक आह,—'वयस्य! एतेषाम् अन्येषाम् अपि सहस्राणाम् उपायानाम् असाध्यं तत् मे दुःखम्। तस्मात् मम मरणे मा कालक्षेपं कुरु'। रथकार आह,—'भो मित्र! यद्यपि असाध्यं, तथाऽपि निवेदय, येन अहमपि तत् असाध्यं मत्वा त्वया सह वह्नौ प्रविशामि, न क्षणमपि त्वद्वियोगं सहिष्ये, एष मे निश्चयः'। कौलिक आह,—'वयस्य! या असौ राजकन्या करेणुकारूढ़ा तत्र उत्सवे दृष्टा, तस्या दर्शनानन्तरं मकरध्वजेन मम इयम् अवस्था विहिता। तत् न शक्नोमि तद्वेदनां सोढ़ुम्।

तथा चोक्तं,—मत्तेभकुम्भपरिणाहिनि कुङ्कुमार्द्रे
तस्याः पयोधरयुगे रतखेदखिन्नः।
वक्षो निधाय भुजपञ्जरमध्यवर्त्ती
स्वप्स्ये कदा क्षणमवाप्य तदीयसङ्गम्॥ २२०॥

तथा च,—

रागी विम्बाधरोऽसौ स्तनकलसयुगं यौवनारूढ़गर्वं
नीचा नाभिः प्रकृत्या कुटिलकमलकं स्वल्पकञ्चापि मध्यम्।

---

मत्तेभेति।—कदा तदीयसङ्गं तस्याः सङ्गमम्, अवाप्य लब्ध्वा, रतखेदेन सुरतश्रमेण, खिन्नः क्लान्तः सन्, मत्तेभस्य मत्तगजस्य, यौ कुम्भौ तयोः परिणाहः विशालता इव परिणाहो यस्य तादृशे, ("परिणाहो विशालता" इत्यमरः) कुङ्कुमा[illegible]कुमेन गन्धद्रव्यभेदेन, तद्विलेपनेनेत्यर्थः, आर्द्रे शीतले, तस्याः कन्यायाः, पयोधरयुगे कुचयुगले, वक्षो निधाय स्थापयित्वा, भुजपञ्जरमध्यवर्त्ती गाढ़ालिङ्गनबद्धः सन्नित्यर्थः, क्षणं स्वप्स्ये निद्रां यास्यामि। [आत्मनेपदं विवक्षितम्]। वसन्ततिलकं वृत्तम्॥२२०॥

रागीति।—तस्याः असौ विम्बाधरः, रागी रागवान्, रक्तः इत्यर्थः, [मात्सर्य्यवान् इति ध्वन्यते] स्तनकलसयुगं कुचकुम्भद्वयं, यौवनेन आरूढ़ः जातः, गर्वः औद्धत्यम्, औन्नत्यमिति यावत्, यत्र तथोक्तं, तारुण्येन हेतुना प्राप्तौन्नत्यमित्यर्थः, [एतेन दर्पवत्त्वं ध्वन्यते] नाभिः नीचा निम्ना, गुभत्वलक्षणयुक्ता इति भावः, [नीचस्वभावत्वञ्च व्यज्यते] अलकं चूर्णकुन्तलः, प्रकृत्या स्वभावेन, कुटिलकं वक्रं, भङ्गिमत्त्वादतीव सौन्दर्य्यवर्द्धकमिति भावः;

कुर्वन्त्वेतानि नाम प्रसभमिह मनश्चिन्तितान्याशु खेदं
यन्मां तस्याः कपोलौ दहत इति मुहुः स्वच्छकौ तन्न युक्तम्'॥२२१॥

रथकारोऽपि एवं सकामं तद्वचनम् आकर्ण्य सस्मितम् इदमाह,—'वयस्य! यदि एवं, तर्हि दिष्ट्या सिद्धं नः प्रयोजनम्। तत् अद्यैव तया सह समागमः क्रियताम्' इति। कौलिक आह,—'वयस्य! यत्र कन्याऽन्तःपुरे वायुं मुक्त्वा न अन्यस्य प्रवेशोऽस्ति, तत्र (ठ) रक्षापुरुषाधिष्ठिते कथं मम तया सह समागमः? तत् किं माम् असत्यवचनेन विडम्बयसि?' रथकार आह,—'मित्र! पश्य मे बुद्धिबलम्'। एवम् अभिधाय तत्क्षणात् (ड) कीलसञ्चारिणं वैनतेयं बाहुयुगलं वायुजवृक्षदारुणा शङ्खचक्रगदापद्मान्वितं सकिरीटकौस्तुभम् अघटयत्। ततः तस्मिन् कौलिकं समारोप्य (ढ) विष्णुचिह्नितं कृत्वा कीलसञ्चरणविज्ञानञ्च दर्शयित्वा प्रोवाच,—'वयस्य! अनेन विष्णुरूपेण गत्वा कन्याऽन्तःपुरे

---

[कुटिलप्रकृतित्वञ्च व्यज्यते] मध्यमपि च, कटिदेशश्चापि, स्वल्पकं क्षीणमित्यर्थः; [अल्पमतित्वमपि व्यज्यते] एतानि मनश्चिन्तितानि मया मनसाऽऽलोचितानि सन्ति, आशु शीघ्रं, प्रसभं बलात्, इह अस्मिन्, मयीत्यर्थः, खेदं कुर्वन्तु जनयन्तु, नाम सम्भावनायाम; एतेषां रागवत्त्वादिदोषयोगात् लोकस्य मनःखेदनं सम्भाव्यते इति भावः; किन्तु स्वच्छकौ शुभ्रौ इत्यर्थः, [निर्मलाशयौ इति व्यज्यते] कपोलौ गण्डौ, मुहुः पुनः पुनः, मां दहतः सन्तापयतः, चिन्तने इति भावः, इति यत् तत् न युक्तम् उचितं, तयोर्निर्मलत्वात् परखेदनस्य अयुक्तत्वादिति भावः। स्रग्धरा वृत्तम्॥ २२१॥

(ठ) रक्षापुरुषाधिष्ठिते—रक्षिवर्गपरिवृते। विडम्बयसि—प्रतारयसि।

(ड) कीलेति।—कीलेन—शङ्कुना, कीलघूर्णनकौशलेनेत्यर्थः, सञ्चरति—चलतीति तथाविधम्। वैनतेयं—गरुड़म्। वायुजेति।—वायुजो नाम वृक्षभेदः, तस्य दारुणा—काष्ठेन, तस्य वृक्षस्य अतीव लघुभारत्वात् सञ्चरणशक्तिरस्तीति भावः।

(ढ) विष्णुचिह्नितं—शङ्खादियुक्तबाहुद्वयस्य किरीटकौस्तुभयोश्च परिधापनेन विष्णुचिह्नधारिणम्। कीलसञ्चरणविज्ञानं—कीलसञ्चालनकौशलम्।

(ण) निशीथे तां राजकन्याम् एकाकिनीं (त) सप्तभूमिकप्रासादप्रान्तगतां मुग्धस्वभावां त्वां (थ) वासुदेवं मन्यमानां स्वकीयमिथ्यावक्रोक्तिभिः रञ्जयित्वा (द) वात्स्यायनोक्तविधिना भज'। कौलिकोऽपि तत् आकर्ण्य, (ध) तथारूपः तत्र गत्वा ताम् आह,—'राजपुत्रि ! सुप्ता ? किं वा जागर्षि ? अहं तव कृते समुद्रात् सानुरागो लक्ष्मीं विहाय एव आगतः। तत् क्रियतां मया सह समागमः' इति। साऽपि गरुड़ारूढ़ं चतुर्भुजं सायुधं कौस्तुभोपेतम् अवलोक्य सविस्मया शयनात् उत्थाय प्रोवाच,—'भगवन् ! अहं मानुषी (न) कीटिका अशुचिः, भवान् त्रैलोक्यपावनो वन्दनीयश्च ; तत् कथमेतत् युज्यते ?' कौलिकः आह,—'सुभगे ! सत्यम् अभिहितं भवत्या, किन्तु राधा नाम मे भार्य्या गोपकुलप्रसूता प्रथमम् आसीत्, सा त्वम् अत्र अवतीर्णा, तेन अहमत्र आयातः'। इति उक्ता सा प्राह,—'भगवन् ! यदि एवं, तत् मे (प) तातं प्रार्थय, सोऽपि अविकल्पं मां तुभ्यं प्रयच्छति'। कौलिक आह,—'सुभगे ! न अहं दर्शनपथं मानुषाणां गच्छामि, किं पुनरालापकरणम् ?

(ण) निशीथे—अर्द्धरात्रे।

(त) सप्तेति।—सप्तसङ्ख्या भूमयः,—उपर्य्युपरिभावेन स्थिता आलयविशेषा यत्र तादृशः, यः प्रासादः,—सप्ततलं राजभवनमित्यर्थः, तस्य प्रान्ते—सर्वोपरिगृहे, गतां—स्थिताम्। मुग्धस्वभावां—सरलप्रकृतिम्।

(थ) वासुदेवं—श्रीकृष्णम्। स्वकीयमिथ्यावक्रोक्तिभिः,—निजासत्यवचनैः कपटवाक्यैश्च।

(द) वात्स्यायनोक्तविधिना—वात्स्यायनेन मुनिना, उक्तः यो विधिः, स्वरचितकामशास्त्रे इति भावः, तेन। भज—सेवस्व, रमस्वेत्यर्थः।

(ध) तथारूपः,—विष्णुचिह्नधरः सन्।

(न) कीटिका—तुच्छकीटस्वरूपा, अतिक्षुद्रेति भावः। अशुचिः,—अपवित्रा। त्रैलोक्यपावनः,—त्रिभुवनपवित्रतासम्पादकः। युज्यते—सम्भवति।

(प) तातं—पितरम्। अविकल्पं—निःसंशयम्।

त्वं (फ) गान्धर्वेण विवाहेन आत्मानं प्रयच्छ, नो चेत् शापं दत्त्वा (ब) सान्वयं ते पितरं भस्मसात् करिष्यामि' इति । एवम् अभिधाय गरुडात् अवतीर्य (भ) सव्ये पाणौ गृहीत्वा, तां सभयां सलज्जां वेपमानां शय्यायामनयत् । ततश्च रात्रिशेषं यावत् वात्स्यायनोक्तविधिना निषेव्य प्रत्यूषे स्वगृहम् अलक्षितो जगाम । एवं तस्य तां नित्यं सेवमानस्य कालो याति ।

अथ कदाचित् कञ्चुकिनः तस्याः (म) अधरोष्ठप्रवाल-खण्डनं दृष्ट्वा मिथः प्रोचुः,—'अहो ! पश्यत, अस्या राज-कन्यायाः पुरुषोपभुक्ताया इव शरीरावयवाः विभाव्यन्ते । तत् कथं सुरक्षितेऽपि अस्मिन् गृहे एवंविधो व्यवहारः ? तत् राज्ञे निवेदयामः' एवं निश्चित्य सर्वे समेत्य राजानं प्रोचुः, —'देव ! वयं न विद्मः, परं सुरक्षितेऽपि कन्याऽन्तःपुरे कश्चित् प्रविशति, तद्देवः (य) प्रमाणम्' इति । तत् श्रुत्वा राजा अतीव व्याकुलितचित्तो व्यचिन्तयत्,—

'पुत्रीति जाता महतीह चिन्ता
कस्मै प्रदेयेति महान् वितर्कः ।
दत्त्वा सुखं प्राप्स्यति वा न वेति ।
कन्यापितृत्वं खलु नाम कष्टम् ! ॥ २२२ ॥

(फ) गान्धर्वेण—अन्योऽन्यानुरागनिबन्धनविवाहविशेषेण, "गान्धर्वः समया-न्मिथः" इति स्मरणात् । आत्मानं प्रयच्छ—आत्मसमर्पणं कुरु, मां भजस्वेत्यर्थः ।

(ब) सान्वयं—सवंशम् ।

(भ) सव्ये—वामे । वेपमानां—कम्पमानाम् ।

(म) अधरोष्ठप्रवालखण्डनम—अधरोष्ठबिम्बक्षतयुक्तं, ("प्रवालोऽस्त्री किसलये वीणादण्डे च विद्रुमे" इति मेदिनी ) । मिथः,—परस्परम् । विभाव्यन्ते—लक्ष्यन्ते ।

(य) प्रमाणं—प्रमाता, यथोचितकारीत्यर्थः ।

पुत्रीति ।—इह संसारे, पुत्री कन्या, जाता उत्पन्ना, इति एतदेव प्रत्ययं:, महती प्रबला, चिन्ता भावनाविषयः, कथं चिन्ता इत्याह—कस्मै प्रदेया इति एवं,

नद्यश्च नार्यश्च सदृक्प्रभावा-
स्तुल्यानि कूलानि कुलानि तासाम् ।
तोयैश्च दोषैश्च निपातयन्ति
नद्यो हि कूलानि कुलानि नार्यः ॥२२३॥

तथा च,—जननीमनो हरति जातवती
परिवर्द्धते सह शुचा सुहृदाम् ।
परसात्कृताऽपि कुरुते मलिनं
दुरतिक्रमा दुहितरो विपदः' ॥२२४॥

एवं बहुविधं विचिन्त्य देवीं (१) रहःस्थां प्रोवाच,—'देवि! ज्ञायतां किमेते कञ्चुकिनो वदन्ति, तस्य कृतान्तः कुपितः, येन एतदेवं क्रियते'। देवी अपि तदाकर्ण्य व्याकुलीभूता सत्वरं कन्याऽन्तःपुरे गत्वा तां खण्डिताधरां नखविलिखित-

तथा दत्ता अर्पिता सती, कस्मैचिदिति शेषः, सुखं प्राप्स्यति लप्स्यति वा, न वा, प्राप्स्यति इति शेषः, इति च महान् वितर्कः संशयः, तज्जनितभावना इत्यर्थः ; तस्मात् कन्यापितृत्वं कन्योत्पादनमित्यर्थः, कष्टं खलु, नाम सम्भावनायाम् ; कन्यापिता तच्चिन्तया सततमेव क्लेशं प्राप्नोतीति सम्भावयामि इति भावः। इन्द्रवज्रा वृत्तम् ॥२२२॥

नद्य इति।—नद्यश्च नार्यश्च सदृक्प्रभावाः तुल्यप्रभाववत्यः, यतः तासां नदीनां नारीणाञ्च, कूलानि तीराणि, कुलानि वंशाः च, तुल्यानि समानानि। कुतः ?—नद्यः तोयैः जलप्रवाहैः, कूलानि तटानि, नार्यश्च दोषैः कलङ्कैः, कुलानि वंशान्, निपातयन्ति मज्जनेन कलङ्केन च अधः पातयन्ति, हि अवधारणे। इन्द्रवज्रा वृत्तम् ॥२२३॥

जननीति।—कन्या जातवती जाता सती, जनन्या मनः हरति सत्पात्रे पतिष्यति न वा इति चिन्तया वैमनस्यमापादयतीत्यर्थः। ततः सुहृदां बन्धूनां, शुचा शोकेन, सह परिवर्द्धते वृद्धिं गच्छति, कन्यायाः वृद्धिदर्शने विवाहे प्रभूतार्थनाशसम्भावनया बन्धूनां शोकवृद्धिरिति भावः। परसात्कृताऽपि परस्मै वरायेति भावः, प्रदत्ताऽपि, मलिनं कुरुते, बन्धुवर्गमिति शेषः ; पश्चात् सुखं भवति न वेति भावनावशादिति भावः। अतः दुहितरः विपदः कन्यारूपा आपदः, दुरतिक्रमाः दुस्तराः ; अन्या विपत् कथञ्चित् अतिक्रम्यते, कन्या तु नैवेति भावः। प्रमिताक्षरा वृत्तम् ॥२२४॥

(१) रहःस्थाम्—एकान्तस्थिताम्। येन—पुरुषेणेत्यर्थः।

शरीरावयवां दुहितरमपश्यत्, आह च,—'आः पापे! कुलकलङ्ककारिणि! किमेवं (ल) शीलखण्डनं कृतम्? कोऽयं कृतान्तावलोकितः त्वत्सकाशमभ्येति? तत् कथ्यतां ममाग्रे सत्यम्' इति (व) कोपाटोपविसङ्कटं वदन्त्यां मातरि राजपुत्री भयलज्जाऽऽनताऽऽननं प्रोवाच,—'अम्ब! साक्षात् नारायणः प्रत्यहं गरुड़ारूढ़ो निशि समायाति। चेत् असत्यं मम वाक्यं, तत् स्वचक्षुषा विलोकयतु (श) निगूढ़तरा निशीथे भगवन्तं रमाकान्तम्'। तत् श्रुत्वा सा अपि प्रहसितवदना पुलकाङ्कित-सर्वाङ्गी सत्वरं गत्वा राजानम् ऊचे,—'देव! (ष) दिष्ट्या वर्द्धसे, नित्यम् एव निशीथे भगवान् नारायणः कन्यकापार्श्वे-ऽभ्येति, तेन गान्धर्वविवाहेन सा विवाहिता। तत् अद्य त्वया मया च रात्रौ वातायनगताभ्यां निशीथे द्रष्टव्यः, यतो न स मानुषैः सह आलापं करोति'। तत् श्रुत्वा हर्षितस्य राज्ञः तद्दिनं (स) वर्षशतप्रायमिव कथञ्चित् जगाम। ततस्तु रात्रौ (ह) निभृतो भूत्वा राज्ञीसहितो राजा वातायनस्थो गगनासक्त-दृष्टिः यावत् तिष्ठति, तावत् गरुड़ारूढं तं शङ्खचक्रगदापद्महस्तं यथोक्तचिह्नाङ्कितं व्योम्नोऽवतरन्तं नारायणम् अपश्यत्।

---

(ल) शीलखण्डनं—सदाचारलङ्घनम्। कृतान्तावलोकितः,—यमेन दृष्टः, तस्य मृत्युरवश्यम्भावीति भावः।

(व) कोपेति।—कोपस्य आटोपः,—वेगः, तेन विसङ्कटं—निष्ठुरं, क्रोधकर्कश-मित्यर्थः। भयलज्जाऽऽनताऽऽननं—भयेन—त्रासेन, लज्जया—व्रीड़या च, आनतम्—अवनतम्, आननं यस्मिन् तद्यथा तथा, [ इति क्रियाविशेषणम् ]।

(श) निगूढ़तरा—अतिशयेन प्रच्छन्ना। रमाकान्तं—लक्ष्मीपतिम्।

(ष) दिष्ट्या—भाग्येन, [ हर्षभाग्यादिसूचकमव्ययम् ]। वर्द्धसे—अभ्युदयं प्राप्नोषि।

(स) वर्षशतप्रायं—शतवत्सरोपमम्, औत्सुक्यातिशयादिति भावः।

(ह) निभृतः,—प्रच्छन्नः। वातायनस्थः,—गवाक्षवर्ती। व्योम्नः,—आकाशात्।

ततः (अ) सुधापूरप्लावितम् इव आत्मानं मन्यमानः तामुवाच,—'प्रिये ! नास्ति धन्यो धन्यतरो लोके मत्तः त्वत्तश्च, यत् प्रसूतिं नारायणो भजते ; तत् सिद्धाः सर्वेऽस्माकं मनोरथाः, अधुना जामातृप्रभावेण सकलामपि वसुमतीं वश्यां करिष्यामि'। एवं निश्चित्य सर्वैः (क) सीमाऽधिपैः सह मर्य्यादाव्यतिक्रमम् अकरोत्। ते च तं मर्य्यादाव्यतिक्रमेण वर्त्तमानम् आलोक्य सर्वे समेत्य तेन सह (ख) विग्रहं चक्रुः। अत्रान्तरे स राजा (ग) देवीमुखेन तां दुहितरमुवाच,—'पुत्रि ! त्वयि दुहितरि वर्त्तमानायां, भगवति नारायणे च जामातरि स्थिते, किमेतत् युज्यते, यत् सर्वे पार्थिवा मया सह विग्रहं कुर्वन्ति ? तत् (घ) सम्बोध्योऽद्य त्वया निजभर्त्ता,यथा मम शत्रून् व्यापादयति'। ततः तया स कौलिको रात्रौ सविनयम् अभिहितः,—'भगवन्! त्वयि जामातरि स्थिते मम तातो यच्छत्रुभिः (ङ) परिभूयते, तत् न युक्तम् ; तत् प्रसादं कृत्वा सर्वान् तान् शत्रून् व्यापादय'। कौलिक आह,—'सुभगे ! (च) कियन्मात्रास्तु एते तव पितुः शत्रवः। तद्विश्वस्ता भव, क्षणेनापि सुदर्शनचक्रेण सर्वान् तिलशः खण्डयिष्यामि'। अथ गच्छता कालेन सर्वदेशं शत्रुभिः (छ) उद्वास्य, स राजा प्राकार-शेषः कृतः। तथाऽपि वासुदेवरूपधरं कौलिकमजानन् राजा नित्य-

(अ) सुधेति।—सुधायाः,—अमृतस्य, पूरेण—प्रवाहेण, प्लावितमिव—सिक्तमिव। प्रसूतिं—तनयां, ("प्रसूतिस्तनयेऽपि स्यात् तनये दुहितर्य्यपि" इति मेदिनी)।

(क) सीमाऽधिपैः,—निजाधिकारसीमान्तस्थितराजभिः। मर्य्यादाव्यतिक्रमं—मर्य्यादायाः,—सीमायाः, व्यतिक्रमं—लङ्घनं, बलपूर्वकं तेषां सीमाक्रमणमित्यर्थः।

(ख) विग्रहं—युद्धम्।

(ग) देवीमुखेन—राज्ञ्या। पार्थिवाः,—राजानः।

(घ) सम्बोध्यः,—सम्यक् ज्ञापनीयः।

(ङ) परिभूयते—तिरस्क्रियते, अवमन्यते इत्यर्थः। प्रसादम्—अनुग्रहम्।

(च) कियन्मात्राः,—कियत्परिमाणाः, सामान्याः इत्यर्थः।

(छ) उद्वास्य—उच्छिद्येत्यर्थः। प्राकारशेषः,—प्राचीरमात्रावशिष्टः।

मेव विधिवत: कर्पूरागुरुकस्तूरिकादिपरिमलविशेषान् नाना-प्रकारवस्त्रपुष्पभक्ष्यपेयांश्च प्रेषयन् दुहितृमुखेन तमूचे,—'भग-वन्! प्रभाते नूनं (ज) स्थानभङ्गो भविष्यति, यतो यवसेन्धन-क्षय: सञ्जात:, तथा सर्वोऽपि जन: प्रहारै: जर्जरितदेह: संवृत्तो योद्धुमक्षम: प्रचुरो हतश्च। तदेवं ज्ञात्वा अत्र काले यदुचितं भवति, तद्विधेयम्' इति। तच्छ्रुत्वा कौलिकोऽपि अचिन्तयत् —'यत् स्थानभङ्गे जाते मम अनया सह वियोगो भविष्यति, तस्मात् गरुडमारुह्य सायुधमात्मानमाकाशे दर्शयामि। कदा-चित् मां वासुदेवं मन्यमाना: ते साशङ्का: राज्ञो योद्धृभि: हन्यन्ते। उक्तञ्च—निर्विषेणापि सर्पेण कर्त्तव्या महती फणा।

विषं भवतु मा भूयात् फणाऽऽटोपो भयङ्कर: ॥२२५॥

(झ) अथ यदि मम स्थानार्थम् उद्यतस्य मृत्यु: भविष्यति, तदपि (ञ) सुन्दरतरम्। उक्तञ्च,—

गवामर्थे ब्राह्मणार्थे स्वाम्यर्थे स्त्रीकृतेऽथवा।
स्थानार्थे यस्त्यजेत् प्राणांस्तस्य लोका: सनातना: ॥२२६॥

---

(ज) स्थानभङ्ग:,—वासस्थानच्युति:। यवसेति।—यवसानां—घासानाम्, इन्ध-नानां—काष्ठानाञ्च, क्षय:,—अभाव:, तृणकाष्ठादीनामपि अर्गलबन्धकृतत्वात् दुर्लभ-त्वम्, अतो घासादीनां सैन्यानामश्वानाञ्चाभावात् वासस्थानत्याग एवावश्यक इति भाव:।

निर्विषेणापीति।—निर्विषेणापि सर्पेण महती फणा फणविस्तार: इत्यर्थ:, कर्त्तव्या, विषं भवतु अस्तु, मा भूयात् न भवतु वा, फणाऽऽटोप: फणाविस्ताररूपाडम्बर:, भयङ्कर:; सर्पफणविस्तारदर्शनादेव लोका: सभया: पलायन्ते इति भाव: ॥ २२५ ॥

(झ) अथ—पक्षान्तरे। स्थानार्थं—राज्ञ: वासस्थानरक्षार्थम्। उद्यतस्य—चेष्टमानस्य।

(ञ) सुन्दरतरं—भद्रतरम्; युद्धहतस्य सदाकालस्वर्गलोकवासप्राप्तिरिति भाव:।

गवामिति।—य: नर:, गवामर्थे गोरक्षार्थं, ब्राह्मणार्थे ब्राह्मणरक्षार्थं, स्वाम्यर्थे प्रभुरक्षार्थम्, अथवा स्त्रीकृते स्त्रीणामर्थं, स्त्रीरक्षार्थमित्यर्थ:, तथा स्थानार्थे ईशरक्षार्थं, प्राणान् त्यजेत्, तस्य सनातना: अक्षया:, लोका: स्वर्गादिभुवनानीत्यर्थ:, भवन्तीति शेष:; चिरं स्वर्गवासी भवतीति भाव: ॥२२६॥

चन्द्रे मण्डलसंस्थे विगृह्यते राहुणा दिनाधीशः ।
शरणागतेन सार्द्धं विपदपि तेजस्विनां श्लाघ्या' ॥२२७॥

एवं निश्चित्य प्रत्यूषे दन्तधावनं कृत्वा तां प्रोवाच,—'सुभगे ! समस्तैः शत्रुभिः हतैः एव अन्नं पानञ्च आस्वादयिष्यामि ; किं बहुना, त्वयाऽपि सह सङ्गमं ततः परमेव करिष्यामि ; परं वाच्यस्त्वया आत्मपिता यत्, प्रभाते प्रभूतेन सैन्येन सह नगरात् निष्क्रम्य योद्धव्यम्, अहञ्च आकाशस्थित एव सर्वान् तान् निस्तेजसः करिष्यामि, पश्चात् सुखेन भवता हन्तव्याः । यदि पुनरहं तान् स्वयमेव (ट) सूदयामि, तदा तेषां पापात्मनां वैकुण्ठीया गतिः स्यात् ; तस्मात् ते तथा कर्त्तव्याः यथा पलायन्ते हन्यमानाः, स्वर्गं न गच्छन्ति' । साऽपि तदाकर्ण्य पितुः समीपं गत्वा सर्वं वृत्तान्तं न्यवेदयत् । राजाऽपि तस्याः वाक्यं श्रद्दधानः प्रत्यूषे समुत्थाय (ठ) सुसन्नद्धसैन्यो युद्धार्थं निश्चक्राम ; कौलिकोऽपि मरणे कृतनिश्चयः चापपाणिः गगनगतिः गरुडारूढो युद्धाय प्रस्थितः । (ड) अत्रान्तरे भगवता नारायणेन अतीतानागतवर्त्तमानवेदिना स्मृतमात्रो वैनतेयः सम्प्राप्तो विहस्य प्रोक्तः,—'भो गरुत्मन् ! जानासि त्वं यत्, मम

---

चन्द्रे इति ।—चन्द्रे मण्डलसंस्थे सूर्य्यमण्डलवर्त्तिनि सति, सूर्य्याचन्द्रमसोरेकमण्डलावस्थितिरूपायाम् अमावस्यायामिति भावः ; दिनाधीशः दिनकरः, राहुणा विगृह्यते विशेषेण धार्य्यते, ग्रस्यते इत्यर्थः, सूर्य्यग्रहणं भवतीति भावः ; [ग्रह आदाने, इत्यस्य कर्मणि रूपम्] इति तु प्रस्तुतार्थः । आरोपितार्थस्तु—राहुभयात् चन्द्रे आश्रयलाभार्थं सूर्य्यमण्डलं प्रविष्टे शरणागतं तं रक्षितुं सूर्य्यः राहुणा सह युध्यते इति ; अत एव शरणागतेन सार्द्धं तेजस्विना महतां, विपदपि श्लाघ्या प्रशंस्या, शरणागतरक्षणम् अवश्यमेव कर्त्तव्यमिति भावः । आर्य्या वृत्तम् ॥२२७॥

(ट) सूदयामि—नाशयामि । वैकुण्ठीया गतिः,—वैकुण्ठलोकप्राप्तिः ।

(ठ) सुसन्नद्धसैन्यः,—सुसज्जितबलः । गगनगतिः,—आकाशगामी ।

(ड) अत्रान्तरे—अस्मिन्नवसरे । अतीतेत्यादि ।—त्रिकालज्ञेन इत्यर्थः ।

रूपेण कौलिको दारुमयगरुड़े समारूढ़ो राजकन्यां कामयते ?' सोऽब्रवीत्,—'देव ! सर्वं ज्ञायते तच्चेष्टितम् । तत् किं कुर्मः साम्प्रतम् ?' श्रीभगवान् आह,—'अद्य कौलिको मरणे कृतनिश्चयो विहितनियमो युद्धार्थं विनिर्गतः । स नूनं प्रधान-क्षत्रियवराहतो निधनमेष्यति ; तस्मिन् हते सर्वो जनो वदि-ष्यति यत्, प्रभूतक्षत्रियैर्मिलित्वा वासुदेवो गरुड़श्च निपातितः, ततः परं लोकोऽयमावयोः पूजां न करिष्यति । ततस्त्वं द्रुततरं तत्र दारुमयगरुड़े (ढ) सङ्क्रमणं कुरु, अहमपि कौलिकशरीरे प्रवेशं करिष्यामि, येन स शत्रून् व्यापादयति ; ततश्च शत्रुवधात् आवयोः माहात्म्यवृद्धिः स्यात्' ।

अथ गरुड़े 'तथा' इति प्रतिपन्ने श्रीभगवान् नारायणः तच्छरीरे सङ्क्रमणम् अकरोत् । ततो भगवन्माहात्म्येन गगनस्थः सः कौलिकः शङ्खचक्रगदाचापचिह्नितः क्षणादेव लीलयैव समस्तान् अपि प्रधानक्षत्रियान् निस्तेजसश्चकार । ततस्तेन राज्ञा स्वसैन्यपरिवृतेन सङ्ग्रामे जिताः, निहताश्च ते सर्वेऽपि शत्रवः । जातश्च लोकमध्ये प्रवादो यथा,—'अनेन विष्णु-जामातृप्रभावेण सर्वे शत्रवो निहताः' इति । कौलिकोऽपि तान् हतान् दृष्ट्वा प्रमुदितमनाः गगनात् अवतीर्णः यावत्, तावद्राजा-मात्यपौरलोकास्तं (ण) नगरवास्तव्यं कौलिकं पश्यन्ति । ततः (त) पृष्टः,—'किमेतत् ?' इति । ततः सोऽपि मूलादारभ्य सर्वं प्राग्वृत्तान्तं न्यवेदयत् । ततश्च कौलिकसाहसानुरञ्जितमनसा शत्रुवधात् (थ) अवाप्ततेजसा राज्ञा सा राजकन्या सकलजनप्रत्यक्षं विवाहविधिना तस्मै समर्पिता, देशश्च प्रदत्तः । कौलिकोऽपि

(ढ) सङ्क्रमणम—अधिष्ठानम् । माहात्म्यवृद्धिः,—महिमप्रचारः ।

(ण) नगरवास्तव्यं—नगरवासिनम ; पूर्वदृष्टमिति भावः ; [पश्यन्ति: लभ्यत] ।

(त) पृष्टः,—जिज्ञासितः, लोकैः कौलिक इति भावः ।

(थ) अवाप्ततेजसा—प्राप्तप्रभावेण । देशः,—राज्यम् ।

तया सार्द्धं (द) पञ्चप्रकारं जीवलोकसारं विषयसुखमनुभवन् कालं निनाय। अतस्तु उच्यते,—'सुप्रयुक्तस्य दम्भस्य' इति"।

तच्छ्रुत्वा करटक आह,—"भद्र! अस्ति एवम्; परं तथाऽपि महत् मे भयं, यतो बुद्धिमान् सञ्जीवकः, रौद्रश्च सिंहः। यद्यपि ते बुद्धिप्रागल्भ्यं, तथाऽपि त्वं पिङ्गलकात् तं वियोजयितुम् असमर्थः एव"। दमनक आह,—"भ्रातः! असमर्थोऽपि समर्थः एव। उक्तञ्च,—

उपायेन हि यत् कुर्य्यात् तन्न शक्यं पराक्रमैः।
काक्या कनकसूत्रेण कृष्णसर्पो निपातितः" ॥ २२८ ॥

करटक आह,—"कथमेतत्?" सोऽब्रवीत्,—

## कथा ६।

"अस्ति कस्मिंश्चित् प्रदेशे महान् (ध) न्यग्रोधपादपः; तत्र वायसदम्पती प्रतिवसतः स्म। अथ तयोः प्रसवकाले वृक्षविवरात् निष्क्रम्य कृष्णसर्पः सदैव तदपत्यानि भक्षयति। ततस्तौ (न) निर्वेदात् अन्यवृक्षमूलनिवासिनं प्रियसुहृदं शृगालं गत्वा ऊचतुः,—'भद्र! किम् एवंविधे सञ्जाते आवयोः कर्त्तव्यं भवति? एवं तावत् दुष्टात्मा कृष्णसर्पो वृक्षविवरात् निर्गत्य आवयोर्बालकान् भक्षयति; तत् कथ्यतां तद्रक्षार्थं कश्चिदुपायः।

(द) पञ्चप्रकारं—पञ्चविधं, पञ्चेन्द्रियग्राह्यमित्यर्थः। विषयेति।—विषयाणां स्रक्चन्दनवनितादीनां, सुखं सम्भोगसुखं, तच्च पञ्चेन्द्रियसाध्यत्वादिति भावः।

उपायेनेति।—उपायेन बुद्धिकौशलेन, यत् कुर्य्यात्; ["कुर्य्यात्" इत्यत्र "शक्यम्" इति पाठान्तरम्] जनः इति शेषः, तत् पराक्रमैः न हि शक्यं, कर्त्तुमिति शेषः; तथा हि, काक्या वायस्या, कनकसूत्रेण सुवर्णसूत्रमयकण्ठभूषणेन, उपायभूतेनेति भावः; कृष्णसर्पः निपातितः ॥२२८॥

(ध) न्यग्रोधपादपः,—वटतरुः।

(न) निर्वेदात्—वैराग्यात्। वृक्षविवरात्—तरुकोटरात्।

यतः,—यस्य क्षेत्रं नदीतीरे भार्य्या च परसङ्गता।
सर्पे च गृहे वासः कथं स्यात् तस्य निर्वृतिः? ॥२२९॥

अस्माकमपि तत्र स्थितानां प्रतिदिनं प्राणसंशयः'। सः आह,—'न अत्र विषये स्वल्पोऽपि विषादः कार्य्यः। (प) नूनं सः लुब्धो न उपायम् अन्तरेण बध्यः स्यात्। यतः,—

उपायेन जयो यादृक् रिपोस्तादृक् न हेतिभिः।
उपायज्ञोऽल्पकायोऽपि न शूरैः परिभूयते ॥ २३० ॥

तथा च,—भक्षयित्वा बहून् मत्स्यानुत्तमाधममध्यमान्।
अतिलौल्याद्बकः कश्चित् मृतः कर्कटकग्रहात्'॥ २३१ ॥

तौ ऊचतुः,—'कथमेतत्?' सोऽब्रवीत्,—

## कथा ७।

'अस्ति कस्मिंश्चित् वनप्रदेशे (फ) नानाजलचरसनाथं महत् सरः। तत्र च कृताश्रयो बक एको वृद्धभावमुपागतो मत्स्यान्

---

यस्येति।—यस्य नदीतीरे क्षेत्रं कृषिभूमिः, भार्य्या च परसङ्गता परपुरुषगामिनी, तथा ससर्पे सर्पयुक्ते, गृहे वासश्च, तस्य निर्वृतिः सुखं, ("निर्वृतिः…सुखे स्त्रियाम्" इति मेदिनी) कथं स्यात्? न कथमपि इत्यर्थः; सर्वदा[illegible]वादिति भावः ॥२२९॥

(प) नूनं—निश्चितम्। [ उपायमित्यत्र "अन्तरान्तरेण युक्ते" (२।३।४ पा०) इति द्वितीया ] अन्तरेण—विना।

उपायेनेति।—उपायेन कौशलेन, यादृक् यथा, रिपोः शत्रोः, जयः वशीकरणं, हेतिभिः अस्त्रैः, तादृक् जयः, न, स्यादिति शेषः; उपायज्ञो ज[illegible] अल्पकायः क्षुद्र-शरीरोऽपि, दुर्बलोऽपीत्यर्थः, शूरैः बलवद्भिः, न परिभूयते न तिरस्क्रियते इत्यर्थः ॥२३०॥

भक्षयित्वेति।—कश्चित् बकः बलाका, मत्स्यघाती पक्षिविशेष इत्यर्थः, बहून् अनेकान्, उत्तमाधममध्यमान् अक्षुद्रक्षुद्रमध्यमान्, मत्स्यान् मीनान्, भक्षयित्वा अतिलौल्यात् अतिचापल्यात्, बहुमीनभक्षणेन तस्य बकस्य प्राणान्तभक्षणाय अतिलोभ-वशादित्यर्थः, कर्कटकग्रहात् कुलीरग्रहणं कृत्वा, भक्षणायेति भावः; [ ल्यब्लोपे पञ्चमी ] मृतः विनष्टः, तेनैवाकान्तयेति भावः ॥२३१॥

(फ) नानेति;—विविधजलजन्तुपूर्णम्।

व्यापादयितुम् असमर्थः। ततश्च (ब) क्षुत्क्षामकण्ठः सरस्तीरे उपविष्टो मुक्ताफलप्रकरसदृशैः अश्रुप्रवाहैः धरातलमभिषिञ्चन् रुरोद। एकः कुलीरको नानाजलचरसमेतः समेत्य तस्य दुःखेन दुःखितः सादरम् इदमूचे,—(भ) 'माम! किमद्य त्वया न आहारवृत्तिः अनुष्ठीयते? केवलम् अश्रुपूर्णनेत्राभ्यां सनिश्वासेन स्थीयते?' स आह,—'वत्स! सत्यमुपलक्षितं भवता, मया हि (म) मत्स्यादनं प्रति परमवैराग्यतया साम्प्रतं प्रायोपवेशनं कृतं, तेनाहं समीपगतान् अपि मत्स्यान् न भक्षयामि'। कुलीरकः तच्छ्रुत्वा प्राह,—'माम! किं तत् वैराग्यकारणम्?' सः प्राह,—'वत्स! अहम् अस्मिन् सरसि जातः, वृद्धिं गतश्च; तत् मया एतत् श्रुतं यत्, (य) द्वादशवार्षिकी अनावृष्टिः सम्पत्स्यते लग्ना'। कुलीरक आह,—'कस्मात् तत् श्रुतम्?' बक आह,—'दैवज्ञमुखात्। यतः (र) शनैश्चरो हि रोहिणी-शकटं भित्त्वा भौमं शुक्रञ्च प्रयास्यति। उक्तञ्च वराह-मिहिरेण,—

(ब) क्षुदिति।—क्षुधा क्षीणकण्ठस्वरः, बद्धकण्ठ इत्यर्थः। [क्षामः,—क्षै+क्तः]। मुक्तेति।—मौक्तिकसमूहतुल्यैः। अभिषिञ्चन्—आर्द्रीकुर्वन्।

(भ) माम।—मातुल! आहारवृत्तिः,—भोजनव्यापारः।

(म) मत्स्यादनं—मीनभोजनम्। प्रायोपवेशनम्—अनशनव्रतम्, अनाहारेण जीवनं त्यक्ष्यामीति सङ्कल्पः कृत इत्यर्थः।

(य) द्वादशवार्षिकी—द्वादशवर्षव्यापिनी, [द्वादशवर्षाणि व्याप्य भाविनीति ठञ्]। सम्पत्स्यते—भविष्यति। लग्ना—निरवच्छिन्ना।

(र) शनैश्चरः,—शनिग्रहः। रोहिणीशकटं—रोहिणी नाम नक्षत्रभेदः, तस्याः शकटं शकटाकारचतुस्तारात्मकं स्थानम्; तच्च वृषराशेः सप्तदशांशे याम्यविक्षेप-द्वयात् परं तिष्ठति; भित्त्वा—तन्मध्यं गत्वेत्यर्थः। "वृषराशौ सप्तदशांशे स्फुटे तद्विक्षेपे च अंशद्वयाधिके सति ग्रहः रोहिणीशकटं भिनत्ति" इति (सूर्यसिद्धान्तः० ८ अध्या० १२ श्लोकः) द्रष्टव्यम्। भौमं—भूमिसुतं मङ्गलम्। शुक्रं—तदाख्यग्रहम्। प्रयास्यति—

'यदि भिन्ते सूर्य्यपुत्रो रोहिण्याः शकटमिह लोके ।
द्वादशवर्षाणि तदा न हि वर्षति वासवो भूमौ ॥२३२॥

यथा च,—प्राजापत्ये शकटे भिन्ने कृत्वेव पातकं वसुधा ।
भस्मास्थिशकलकीर्णा कापालिकमिव व्रतं धत्ते ॥२३३॥

यथा च,—रोहिणीशकटमर्कनन्दन-
श्चेद्भिनत्ति रुधिरौघभाक् मही ।
किं वदामि ? तदनिष्टसागरे
सर्वलोकमुपयाति सङ्क्षयः ॥२३४॥
रोहिणीशकटमध्यसंस्थिते
चन्द्रमस्यशरणीकृता जनाः ।

संयोगं करिष्यति । रोहिणीनक्षत्रात मङ्गले शुक्रे च शनैश्चरस्य गमने अनावृष्टिर्भवतीति रामायणे पद्मपुराणे च जटायुर्दशरथसंवादे विवृतम् ।

यदीति ।—सूर्य्यपुत्रः शनैश्चरः, यदि रोहिण्याः शकटं प्रागुल्लिखितं रोहिणीशकटाख्यं स्थानमित्यर्थः, भिन्ते भित्त्वा गच्छति इत्यर्थः, तदा वासव इन्द्रः, इह लोके जगति, भूमौ पृथिव्यां, द्वादशवर्षाणि व्याप्य न हि वर्षति । आर्य्या वृत्तम् ॥२३२॥

प्राजापत्ये इति ।—प्राजापत्ये प्रजापतिदेवताके, शकटे रोहिणीशकटे इत्यर्थः, तस्याः प्रजापतिदेवताकत्वादिति भावः, भिन्ने, शनैश्चरेणेति शेषः, वसुधा पृथिवी, भस्मास्थिशकलकीर्णा भस्मभिः पांशुभिः, प्राणिदाहोत्थैरिति भावः ; अस्थिशकलैश्च कङ्कालखण्डैश्च, मृतानामदाह्यानामिति भावः ; कीर्णा व्याप्ता, अत एव पातकं कृत्वेव कापालिकं कापालिकैराचरितं, व्रतं नियमं, धत्ते इव धारयतीव । कापालिका हि भस्मास्थिशकलरूपं व्रतं धारयन्तीति प्रसिद्धिः । अनावृष्ट्या शस्यविघातेन प्राणिनः अनाहारेणैव मरिष्यन्तीति भावः । (बृ० सं० ९म अध्या० २५ श्लोकः) । आर्य्या वृत्तम् ॥२३३॥

रोहिणीति ।—अर्कनन्दनः शनिः, चेत् यदि, रोहिणीशकटं भिनत्ति रोहिणीनक्षत्रस्य शकटाकृतिस्थानं गच्छतीत्यर्थः, तदा मही पृथिवी, रुधिरौघभाक् रक्तप्रवाहवती, भवतीति शेषः, किं वदामि ? किमधिकं कथयामीत्यर्थः, तदनिष्टसागरे तस्मिन् अमङ्गलाम्बुधौ, सङ्क्षयः प्रलयः, सर्वलोकमुपयाति प्राप्नोति, सर्वप्राणिनो म्रियन्ते इत्यर्थः । रथोद्धता वृत्तं,—"रान् परैर्नरलगै रथोद्धता" इति लक्षणात् ॥२३४॥

रोहिणीति ।—चन्द्रमसि चन्द्रे, रोहिणीशकटमध्यसंस्थिते रोहिणीशकटं गते इत्यर्थः,

क्वापि यान्ति शिशुपाचिताशना:
सूर्य्यतप्तभिदुराम्बुपायिन:' ॥२३५॥

तदेतत् सर: स्वल्पतोयं वर्त्तते, शीघ्रं शोषं यास्यति ; अस्मिन् शुष्के यै: सह अहं वृद्धिं गत: सदैव क्रीडितश्च, ते सर्वे तोयाभावात् नाशं यास्यन्ति ; तत् तेषां वियोगं द्रष्टुमहम् असमर्थ:, तेनैतत् प्रायोपवेशनं कृतम्। साम्प्रतं सर्वेषां स्वल्प-जलाशयानां जलचरा गुरुजलाशयेषु स्वस्वजनैर्नीयन्ते, केचिच्च (ख) मकरगोधाशिशुमारजलहस्तिप्रभृतय: स्वयमेव गच्छन्ति। अत्र पुन: सरसि ये जलचरा:, ते निश्चिन्ता: सन्ति, तेनाहं विशेषात् रोदिमि, यत् बीजशेषमात्रमप्यत्र न उद्धरिष्यति'।

तत: स तदाकर्ण्य अन्येषामपि जलचराणां तत् तस्य वचनं निवेदयामास। अथ ते सर्वे भयत्रस्तमनसो मत्स्यकच्छप-प्रभृतय: तमभ्युपेत्य पप्रच्छु:,—'माम! अस्ति कश्चिदुपाय:, येन अस्माकं रक्षा भवति ?' बक आह,—'अस्ति अस्य जलाशयस्य नातिदूरे प्रभूतजलसनाथं सर: (ग) पद्मिनीषण्डमण्डितं,

अशरणीकृता: निरवलम्बनीकृता:, दुर्दैवेनेति भाव:, जना:, शिशुपाचिताशना: शिशून् स्वबालकान्, पाचितान् अश्नन्तीति तथोक्ता:, स्वान् स्वान् शिशून् पाचयित्वा खादन्ति इत्यर्थ:,तथा सूर्य्येण तप्तानि, अत एव भिदुराणि भेदं गतानि विनष्टप्रायाणीत्यर्थ:,प्रखर-सूर्य्यकिरणादिति भाव:, अम्बूनि जलानि, पिबन्तीति तथाभूता: सन्त:, क्वापि यान्ति म्रियन्ते इति भाव:। ( वृ० स० २४ अध्या० ३० श्लोक: )। ["पाचिताशना:" इत्यत्र "याचिताशना:"इति हस्तलिखिताधृतपाठे,—शिशुनिमित्तं याचितम् अशनं यैरित्यर्थ:। तथा "भिदुराम्बु" इत्यत्र "पिठराम्बु" इति पाठे—सूर्य्येण तप्तानि शोषं गतानीत्यर्थ:, पिठराम्बुणि पात्रविशेषस्थजलानीत्यर्थ: ]। रथोद्धता वृत्तम् ॥२३५॥

(ख) मकरेति।—मकराश्च गोधाश्च शिशुमाराश्च जलहस्तिनश्च प्रभृतयो येषां तथोक्ता:, स्वयं अगमनक्षमा महाकायजलचरा इति भाव:। शिशुमार:,—"शुशुक्" इति वङ्गभाषया प्रसिद्ध:। उद्धरिष्यति—स्थास्यति इत्यर्थ:।

(ग) पद्मिनीति।—पद्मिनीनां षण्डै: समूहै:, मण्डितं शोभितम्।

यच्चतुर्विंशत्यापि वर्षाणामवृष्ट्या न शोषमेष्यति । तद्यदि मम पृष्ठं कश्चिदारोहति, तदहं तं तत्र नयामि' । अथ ते (श) तत्र विश्वासमापन्नाः 'तात' ! 'मातुल' ! 'भ्रातः' ! इति ब्रुवाणाः 'अहं पूर्वम्' 'अहं पूर्वम्' इति समन्तात् परितस्थुः । सोऽपि दुष्टाशयः क्रमेण तान् पृष्ठे आरोप्य जलाशयस्य नातिदूरे शिलां समासाद्य तस्यामाक्षिप्य स्वेच्छया भक्षयित्वा भूयोऽपि जलाशयं समासाद्य जलचराणां (ष) मिथ्यावार्त्तासन्देशकैः मनांसि रञ्जयन् नित्यमेवाहारवृत्तिमकरोत् ।

अन्यस्मिन् दिने च कुलीरकेणोक्तः,—'माम ! मया सह ते प्रथमः (स) स्नेहसम्भाषः सञ्जातः, तत् किं मां परित्यज्य अन्यान् नयसि ? तस्मात् अद्य मे प्राणत्राणं कुरु' । तदाकर्ण्य सोऽपि दुष्टाशयश्चिन्तितवान्,—(ह) 'निर्विण्णोऽहं मत्स्यमांसादनेन, तदद्य एनं कुलीरकं व्यञ्जनस्थाने करोमि' इति विचिन्त्य तं पृष्ठे समारोप्य तां वध्यशिलामुद्दिश्य प्रस्थितः । कुलीरकोऽपि दूरादेवास्थिपर्वतं (क्ष) शिलाश्रयमवलोक्य मत्स्यास्थीनि परिज्ञाय तमपृच्छत्,—'माम ! कियद्दूरे स जलाशयः ? मदीयभारेण अतिश्रान्तस्त्वं, तत् कथय' । सोऽपि (क) मन्दधीः जलचरोऽयं स्थले न प्रभवतीति मत्वा सस्मितमिदमाह,—'कुलीरक ! कुतोऽन्यो जलाशयः ? मम

---

(श) तत्र—वके इत्यर्थः । समन्तात्—चतुर्दिक्षु । परितस्थुः,—अवस्थितवन्तः ।

(ष) मिथ्येति ।—मिथ्या—अनृताः, वार्त्ताः,—वृत्तान्ताः, तान् आपयित्वा आगच्छामीत्येवंरूपा इत्यर्थः, एव सन्देशाः,—वाचिकानि तैः । रञ्जयन्—प्रीणयन् ।

(स) स्नेहसम्भाषः,—प्रणयालापः ।

(ह) निर्विण्णः,—विरक्तः, अनवरतभक्षणेन सञ्जातारुचित्वादिति भावः । व्यञ्जनस्थाने इति—कुलीरकमांसेन व्यञ्जनं करोमि इत्यर्थः ।

(क्ष) शिलाश्रयं—शिलोपरि स्थितम् इत्यर्थः ।

(क) मन्दधीः,—दुष्टबुद्धिः । प्रभवति—वीर्य्यवान् भवति ।

प्राणयात्रेयम् ; तस्मात् त्वमप्येतामात्मनोऽभीष्टदेवता । त्वामपि अस्यां शिलायां निक्षिप्य भक्षयिष्यामि'। इत्युक्तवति तस्मिन् तेन (ख) स्ववदनदंशद्वयेन मृणालनालधवलायां मृदुग्रीवायां स गृहीतो मृतश्च । अथ स तां बकग्रीवां समादाय शनैः शनैः तज्जलाशयमाससाद । ततः सर्वैरेव जलचरैः पृष्टः,—'भोः कुलीरक ! किं निवृत्तः त्वम् ? स ते मातुलोऽपि न आयातः ? तत् किं (ग) चिरयति ? वयं सर्वे सोत्सुकाः कृतक्षणास्तिष्ठामः'। एवं तैः अभिहिते कुलीरकोऽपि विहस्योवाच,—'मूर्खाः सर्वे जलचरास्तेन मिथ्यावादिना वञ्चयित्वा नातिदूरे शिलातले प्रक्षिप्य भक्षिताः ; तन्मया आयुःशेषतया तस्य विश्वासघातकस्य अभिप्रायं ज्ञात्वा ग्रीवेयमानीता ; (घ) तदलं सम्भ्रमेण, अधुना सर्वजलचराणां क्षेमं भविष्यति'। अतोऽहं ब्रवीमि,—'भक्षयित्वा बहून् मत्स्यान्' इति'।

वायस आह,—'भद्र ! तत् कथय, कथं स दुष्टसर्पो वधमुपैष्यति ?' शृगाल आह,—'गच्छतु भवान् कञ्चिन्नगरं (ङ) राजाधिष्ठानं, तत्र कस्यापि धनिनो राजामात्यादेः (च) प्रमादिनः कनकसूत्रं हारं वा गृहीत्वा तत्कोटरे प्रक्षिप, येन सर्पस्तद्ग्रहणेन वध्यते'। अथ तत्क्षणात् काकः काकी च

---

(ख) स्वेति ।—स्ववदनस्य दंशः,—दंष्ट्रा इति भावः, तद्द्वयेन । मृणालेति ।—मृणालनालं—बिसनालो, ("नालो नालञ्च" इत्यमरः) बिसतन्तु इत्यर्थः, पद्मदण्डात् आतमतिशुभ्रं सुकोमलं नाडीवत् प्रसरणशीलं वस्तु इत्यर्थः, तद्वत् धवला तस्याम् ।

(ग) चिरयति—विलम्बते । सोत्सुकाः,—गमनाय कृतोद्योगाः, ("इष्टार्थोद्युक्त उत्सुकः" इत्यमरः) । कृतक्षणाः,—प्रतिपालयन्तः, प्रतीक्षमाणा इत्यर्थः ।

(घ) अलं—निषेधे, सम्भ्रमेण—भयेन, भयं मा कुरु इत्यर्थः । क्षेमं—कुशलम् ।

(ङ) राजाधिष्ठानं—राज्ञः अधिष्ठानम् अवस्थानं यत्र तादृशम् ।

(च) प्रमादिनः,—अनवहितस्य । कनकसूत्रं—सूत्राकारस्वर्णरचितकण्ठभूषणविशेषम् । तत्कोटरे—तस्य सर्पस्य कोटरे विवरे, सर्पाश्रये इत्यर्थः । वध्यते—निहन्यते ।

तदाकर्ण्य श्लोकेन्द्रयोत्पातितौ। ततश्च काकी किञ्चित् सरः प्राप्य यावत् पश्यति, तावत् तन्मध्ये कस्यचिद्राज्ञः (छ) अन्तः-पुरं जलासन्नं न्यस्तकनकसूत्रं मुक्तमुक्ताहारवस्त्राभरणं जल-क्रीड़ां कुरुते। अथ सा वायसी कनकसूत्रमेकमादाय स्वगृहाभिमुखं प्रतस्थे। ततश्च कञ्चुकिनो वर्षवराश्च तं नीय-मानमुपलक्ष्य (ज) गृहीतलगुड़ाः सत्वरमनुययुः। काकी अपि सर्पकोटरे तत् कनकसूत्रं प्रक्षिप्य सुदूरमवस्थिता। अथ यावत् राजपुरुषास्तं वृक्षमारुह्य तत्कोटरमवलोकयन्ति, तावत् कृष्णसर्पः (झ) प्रसारितभोगस्तिष्ठति। ततस्तं लगुड़प्रहारेण हत्वा कनकसूत्रमादाय यथाऽभिलषितं स्थानं गताः। वायस-दम्पती अपि ततःपरं सुखेन वसतः। अतोऽहं ब्रवीमि,— 'उपायेन हि यत् कुर्य्यात्' इति। तन्न किञ्चिदिह बुद्धिमताम् असाध्यमस्ति। उक्तञ्च,—

यस्य बुद्धिर्बलं तस्य निर्बुद्धेस्तु कुतो बलम् ?।
वने सिंहो मदोन्मत्तः शशकेन निपातितः" ॥ २२६ ॥

करटक आह,—"कथमेतत् ?" स आह,—

---

(छ) अन्तःपुरम्—अन्तःपुरमहिला इत्यर्थः। जलासन्नं—जलम् आसन्नं—समीपस्थं यस्मिन् तद् यथा तथा, [क्रियाविशेषणमेतत्]। न्यस्तेति।—न्यस्तं—स्थापितं, कनकसूत्रं येन तथाभूतम्, [अन्तःपुरामत्यस्य विशेषणमिदम्]। मुक्तेति।—मुक्तानि—अङ्गात् उन्मुच्य रक्षितानि, मुक्ताहारवस्त्राभरणानि येन तथोक्तं सत्।

(ज) गृहीतलगुडाः,—दण्डहस्ता इत्यर्थः।

(झ) प्रसारितभोगः,—विस्तारितदेहः, विस्तारितफणो वा, ("भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः" इत्यमरः)।

यस्येति।—यस्य जनस्य, बुद्धिः, अस्तीति शेषः, तस्य बलम्, अप्यस्त्येवेति बोद्धव्यम् इति भावः; निर्बुद्धेः बुद्धिहीनस्य जनस्य तु, बलं कुतः ? नास्त्येव इत्यर्थः; तथा हि, वने मदोन्मत्तः बलदृप्त इत्यर्थः, सिंहः शशकेन निपातितः निहतः, बुद्ध्येति शेषः; अबोधः सर्वत्र पराभूयते, सुधीस्तु सर्वोत्कर्षेण वर्त्तते इति भावः ॥२२६॥

## कथा ८।

"कस्मिंश्चिद्वने भासुरको नाम सिंहः प्रतिवसति स्म। अथासौ (अ) वीर्य्यातिरेकात् नित्यमेव अनेकान् मृगशशकादीन् व्यापादयन् न उपरराम। अथ (ट) अन्येद्युस्तद्वनजाः सर्वे सारङ्गवराहमहिषशशकादयो मिलित्वा तमभ्युपेत्य प्रोचुः,—'स्वामिन्! (ठ) किमनेन सकलमृगवधेन नित्यमेव? यतः तव एकेनापि मृगेण तृप्तिर्भवति, तत् क्रियतामस्माभिः सह समयधर्मः; अद्य प्रभृति तव अत्र उपविष्टस्य जातिक्रमेण प्रतिदिनमेको मृगो भक्षणार्थं समेष्यति। एवं कृते तव तावत् (ड) प्राणयात्रा क्लेशं विना अपि भविष्यति, अस्माकञ्च पुनः सर्वोच्छेदनं न स्यात्। तदेष राजधर्मोऽनुष्ठीयताम्। उक्तञ्च,—शनैः शनैश्च यो राज्यमुपभुङ्क्ते यथाबलम्।

रसायनमिव प्राज्ञः स पुष्टिं परमां व्रजेत्॥ २३७॥
विधिना मन्त्रयुक्तेन रूक्षाऽपि मथिताऽपि च।
प्रयच्छति फलं भूमिररणीव हुताशनम्॥ २३८॥

---

(अ) वीर्य्यातिरेकात्—पराक्रमातिशय्यात्। व्यापादयन्—विनाशयन्, अपीति शेषः।

(ट) अन्येद्युः,—अन्यस्मिन् दिवसे। सारङ्गेत्यादौ।—सारङ्गः,—हरिणः।

(ठ) किं—निषेधे। समयधर्मः,—नियमक्रमः, व्यवस्थितनियम इत्यर्थः।

(ड) प्राणयात्रा—जीवनयापनम्। विना अपि—विनैव।

शनैरिति।—यः प्राज्ञः बुद्धिमान्, नृपः यथाबलं बलं सामर्थ्यमनुसृत्य, राज्यं रसायनमिव औषधविशेषमिव, शनैः शनैः क्रमेण, उपभुङ्क्ते सेवते, स परमां महतीं, पुष्टिं व्रजेत् प्राप्नुयात्। अग्निबलादिकं विविच्य क्रमशो मात्रां वर्द्धयित्वा रसायनौषधस्य सेवनं यथा शरीरपुष्टिं साधयति, बलप्रयोगं विहाय क्रमशः अल्पाल्पकरग्रहणपूर्वक-राज्यभोगोऽपि तथा सर्वं क्लेशमपास्य मनसः अर्थस्य च पुष्टिं जनयति; अतो भवानपि अस्मान् क्रमशो हत्वा भक्षयतु, तेन ते कुशलं भविष्यतीत्यभिप्रायः॥२३७॥

विधिनेति।—रूक्षाऽपि कठिनाऽपि, भूमिः मन्त्रयुक्तेन सुयुक्तिसहितेन, विधिना

प्रजानां पालनं शस्यं स्वर्गकोषस्य वर्द्धनम्।
पीडनं धर्मनाशाय पापायायशसे स्थितम् ॥२३९॥
गोपालेन प्रजाधेनोर्वित्तदुग्धं शनैः शनैः।
पालनात् पोषणाद्ग्राह्यं न्याय्यां वृत्तिं समाचरेत् ॥२४०॥
अजामिव प्रजां मोहात् यो हन्यात् पृथिवीपतिः।
तस्यैका जायते तृप्तिर्न द्वितीया कथञ्चन ॥ २४१ ॥
फलार्थी नृपतिर्लोकान् पालयेत् यत्नमास्थितः।
दानमानादि-तोयेन मालाकारोऽङ्कुरानिव ॥ २४२ ॥

उपायेन, अनुष्ठानेनेति यावत्, मथिता विलोडिता, घृष्टेति भावः, ततो अरणिः अग्नि-प्रज्वलनदारुविशेषः, हुताशनमिव अग्निमिव, फलं प्रयच्छति ददाति ॥ २३८ ॥

प्रजानामिति।—प्रजानां पालनं, राज्ञ इति शेषः, शस्यं प्रशंसनीयम्, इह लोके इति शेषः; स्वर्गकोषस्य स्वर्गरूपस्य धनभाण्डस्य, वर्द्धनं वृद्धिकारकञ्च, परलोके इति शेषः; प्रजापालने इह लोके प्रशंसा, अन्ते च स्वर्गप्राप्तिरिति भावः। पीडनं, प्रजाना-मित्यनुषङ्गः, धर्मनाशाय पुण्यक्षयाय, पापाय अयशसे अपकीर्त्तये च, स्थितं नियतम्; अतस्त्वमप्यस्मात् पालयन्निह परत्र च सुखं लभस्वेत्याशयः ॥ २३९ ॥

गोपालेनेति।—गोपालेन गां पृथिवीं, धेनुञ्च, पालयति रक्षति यः तेन भूपेन, गोपेन च, प्रजाधेनोः प्रजा धेनुः गौरिव, प्रजा इव धेनुश्च तस्याः, पालनात् भयादिभ्यः रक्षणात्, पोषणात् अन्नादिना प्रतिपालनाच्च, शनैः शनैः वित्तदुग्धं वित्तं धनं, दुग्धमिव, वित्तमिव दुग्धञ्च, ग्राह्यं ग्रहणीयम्; तस्मात् न्याय्यां न्यायात् अनपेतां, युक्तियुक्तामित्यर्थः, वृत्तिं व्यवहारं, समाचरेत् विदध्यात्, नृप इति शेषः ॥ २४० ॥

अजामिति।—यः पृथिवीपतिः राजा, मोहात् अज्ञानात्, प्रजाम् अजामिव छागीमिव, हन्यात् नाशयेत्, अपराधं विना इति भावः; तस्य हिंसाकारकस्य राज्ञः, एका एकविधा, तृप्तिः हिंसाजनिता तात्कालिकीति भावः, जायते, कथञ्चन कथमपि, द्वितीया अपरा, धनादिलाभजन्या तृप्तिरिति भावः, न, जायते इति शेषः ॥ २४१ ॥

फलार्थीति।—फलार्थी फललिप्सुः, नृपतिः राजा, यत्नमास्थितः यत्नवान् सन्, मालाकारः मालो, अङ्कुरानिव नूतनप्ररोहानिव, वृक्षादीनामिति शेषः, लोकान् प्रजाः, दानमानादितोयेन दानमानादिरूपेण जलेन, पालयेत् पोषयेत्; मालाकारो जलादि-दानेन यथा तरून् वर्द्धयति, त्वमपि दानादिभिस्तथा प्रजाः तोषयेत्याशयः ॥ २४२ ॥

नृपदीपो धनस्नेहं प्रजाभ्यः संहरन्नपि ।
अन्तरस्थैर्गुणैः शुभ्रैर्लक्ष्यते नैव केनचित् ॥ २४३ ॥
यथा गौर्दुह्यते काले पाल्यते च तथा प्रजाः ।
सिच्यते चीयते चैव लता पुष्पफलप्रदा ॥ २४४ ॥
यथा बीजाङ्कुरः सूक्ष्मः प्रयत्नेनाभिरक्षितः ।
फलप्रदो भवेत् काले तद्वल्लोकः सुरक्षितः ॥ २४५ ॥
हिरण्यधान्यरत्नानि यानानि विविधानि च ।
तथाऽन्यदपि यत्किंचित् प्रजाभ्यः स्यान्महीपतेः ॥२४६॥
लोकानुग्रहकर्त्तारः प्रवर्द्धन्ते नरेश्वराः ।
लोकानां सङ्क्षयाच्चैव क्षयं यान्ति न संशयः' ॥ २४७ ॥

नृपदीप इति।—नृपो दीप इव, [इति उपमितसमासः] दीपसदृशो नृपः, अन्तरस्थैः आत्मन्यवस्थितैः, दीपगर्भस्थैश्च. शुभ्रैः शुक्लैः, विशुद्धैरित्यर्थः, निर्मलैश्च, गुणैः दयादिभिः, वर्तिभिश्चेत्यर्थः, प्रजाभ्यः धनं स्नेह इव तं, तैलोपमं धनम् इत्यर्थः, संहरन्नपि शोषयन्नपि, केनचित् जनेन, नैव लक्ष्यते धनं गृह्णातीति नानुमीयते ; प्रदीपो यथा दशया क्रमेण तैलमाकर्षन् केनापि न विभाव्यते. तथा नृपतिः स्वगुणेन प्रजाभ्यः करमाददानः न केनापि लक्ष्यते इति फलितार्थः ॥२४३॥

यथेति।—गौः धेनुः, यथा पाल्यते, अनन्तरं काले दुग्धदानोपयुक्तसमये, दुह्यते च, यथा वा, लता सिच्यते, अनेन प्रथमं जलैरिति शेषः, अनन्तरं यदा पुष्पफलप्रदा पुष्पाणि फलानि च प्रददातीति तथाभूता, तदा चीयते च, पुष्पफलादिकमिति शेषः, तथैव प्रजाः, पाल्यन्ते कालेन दुह्यन्ते सिच्यन्ते चीयन्ते चेति शेषः ॥२४४॥

यथेति।—यथा सूक्ष्मः अणुः, बीजाङ्कुरः बीजसहिताङ्कुर इत्यर्थः, प्रयत्नेन अभिरक्षितः पर्यवेक्षितः, जलादिना क्षालितः सन् इत्यर्थः. काले योग्यसमये, फलप्रदो भवेत्, सुरक्षितः सुप्रतिपालितः, लोकोऽपि तद्वत् काले फलप्रदः भवेदिति भावः ॥२४५॥

हिरण्येति।—महीपतेः राज्ञः, हिरण्यधान्यरत्नानि हिरण्यानि स्वर्णानि, धान्यानि व्रीह्यादीनि, रत्नानि मणयश्च तानि, विविधानि यानानि वाहनानि अश्वादीनि, तथा अन्यत् अपरमपि, यत्किञ्चित्, धनादिकमिति शेषः, तत सर्वं प्रजाभ्यः स्यात् ; प्रजाभ्य एव सर्वाणि धनानि राज्ञा लभ्यन्ते, अतः प्रजा रक्षणीया इति भावः ॥ २४६ ॥

लोकेति।—नरेश्वराः नृपतयः, लोकानां प्रजानाम्, अनुग्रहकर्त्तारः हितकारिणः सन्तः, प्रवर्द्धन्ते प्रकर्षेण वृद्धिं गच्छन्ति ; लोकानां प्रजानां, सङ्क्षयाच्च विनाशाच्च,

अथ तेषां तद्वचनमाकर्ण्य भासुरक आह,—'अहो ! सत्यमभिहितं भवद्भिः, परं यदि मम उपविष्टस्य अत्र नित्यमेव नैकः (ठ) श्वापदः समागमिष्यति, तन्नूनं सर्वानपि भक्षयिष्यामि'।

अथ ते तथैव प्रतिज्ञाय (ण) निर्वृतिभाजः तत्रैव वने निर्भयाः पर्यटन्ति। एकश्च प्रतिदिनं क्रमेण याति ; वृद्धो वा, वैराग्ययुक्तो वा, शोकग्रस्तो वा, पुत्रकलत्रनाशभीतो वा, तेषां मध्यात् तस्य भोजनार्थं मध्याह्नसमये उपतिष्ठते। अथ कदाचित् जातिक्रमाच्छशकस्य (त) अवसरः समायातः ; स समस्तमृगैः प्रेरितोऽनिच्छन्नपि मन्दं मन्दं गत्वा तस्य वधोपायं चिन्तयन् वेलाऽतिक्रमं कृत्वा व्याकुलितहृदयो यावत् गच्छति, तावत् मार्गे कूपमेकं दृष्टवान्। यावत् (थ) कूपोपरि याति, तावत् कूपमध्ये आत्मनः प्रतिबिम्बं ददर्श। दृष्ट्वा च तेन हृदये चिन्तितं यत्,—(द) 'भव्य उपायोऽस्ति, अहं भासुरकं प्रकोप्य स्वबुद्ध्या अस्मिन् कूपे पातयिष्यामि'। अथ असौ दिनशेषे भासुरकसमीपं प्राप्तः। सिंहोऽपि वेलाऽतिक्रमेण क्षुत्क्षामकण्ठः कोपाविष्टः (ध) सृक्किणी परिलेलिहत् व्यचिन्तयत्,—'अहो ! प्रातराहाराय निःसत्त्वं वनं मया कर्त्तव्यम्'। एवं चिन्तयतस्तस्य शशको मन्दं मन्दं गत्वा प्रणम्य अग्रे स्थितः। अथ तं प्रज्वलितात्मा भासुरको भर्त्सयन्नाह,—'रे शशकाधम ! एकतः तावत् त्वं लघुः प्राप्तः, अपरतः वेलाऽतिक्रमेण, तदस्मादपराधात् त्वां निपात्य प्रातः

---

पीडनादिना इति भावः, वयं नाशं, यान्ति गच्छन्ति, इत्यत्र संशयः सन्देहः, नैव नास्त्येव ; प्रजाभिरक्ष्या एव राज्ञोऽपि स्थितिरिति भावः ॥ २४७ ॥

(ठ) श्वापदः,—चतुष्पदप्राणीति यावत्।

(ण) निर्वृतिभाजः,—निरुद्वेगा इत्यर्थः।

(त) अवसरः,—समयः, वार इत्यर्थः।

(थ) कूपोपरि याति—कूपे दृष्टिं निक्षिपतीति भावः।

(द) भव्यः,—शुभः, उत्तमः इत्यर्थः।

(ध) सृक्किणी—ओष्ठप्रान्तौ। परिलेलिहत्—पुनः पुनर्लिहन् [परिलेलिह्यदिति अभ्यस्तत्वात् "नाभ्यस्ताच्छतुः" (७।१।७८ पा०) इति शतुर्नुमभावः ]। निःसत्त्वं—जीवशून्यम्।

सकलान्यपि मृगकुलानि उच्छेदयिष्यामि'। अथ शशकः सविनयं प्रोवाच,—'स्वामिन्! न अपराधो मम, न च सत्त्वानां, तत् श्रूयतां कारणम्'। सिंह आह,—'सत्वरं निवेदय, यावत् मम दंष्ट्रान्तर्गतो न भवान् भविष्यति' इति। शशक आह,—'स्वामिन्! समस्तमृगैरद्य जातिक्रमेण मम (न) लघुतरस्य प्रस्तावं विज्ञाय ततोऽहं पञ्चशशकैः समं प्रेषितः। ततश्च अहमागच्छन् अन्तराले महता केनचिदपरेण सिंहेन विवरान्निर्गत्य अभिहितः,—"रे! क्व प्रस्थिता यूयम्? अभीष्टदेवतां स्मरत"। ततो मयाऽभिहितं,—"वयं स्वामिनो भासुरकसिंहस्य सकाशे आहारार्थं समयधर्मेण गच्छामः"। ततः तेन अभिहितं—"यद्येवं, तर्हि मदीयमेतद्वनं, मया सह समयधर्मेण समस्तैरपि श्वापदैर्वर्त्तितव्यम्। चौररूपी स भासुरकः। अथ यदि सोऽत्र राजा, ततो (प) विश्वासस्थाने चतुरः शशकानत्र धृत्वा तमाहूय द्रुततरमागच्छ, येन यः कश्चिदावयोर्मध्यात् पराक्रमेण राजा भविष्यति, स सर्वानेतान् भक्षयिष्यति" इति। ततोऽहं तेनादिष्टः स्वामिसकाशमभ्यागतः, एतत् वेलाव्यतिक्रमकारणम्; तदत्र स्वामी (फ) प्रमाणम्' इति। तच्छ्रुत्वा भासुरक आह,—'भद्र! यदि एवं, तत् सत्वरं दर्शय मे तं चौरसिंहं, येन अहं मृगकोपं तस्य उपरि क्षिप्त्वा स्वस्थो भवामि। उक्तञ्च,—

> भूमिर्मित्रं हिरण्यञ्च विग्रहस्य फलत्रयम्।
> नास्त्येकमपि यद्येषां न तं कुर्यात् कथञ्चन ॥२४८॥

(न) लघुतरस्य—अतिक्षुद्रस्य। प्रस्तावं—भवदन्तिके आगमनप्रक्रमम् इत्यर्थः।

(प) विश्वासस्थाने—प्रतिभूस्वरूपम्। चतुरः,—चतुःसङ्ख्यकान्। धृत्वा—रक्षित्वा।

(फ) प्रमाणं—कर्त्तव्यनिर्द्देष्टा।

भूमिरिति:—भूमिः राज्यं, मित्रं सुहृत्, हिरण्यं स्वर्णादिधनम्, एतत्

यत्र न स्यात् फलं भूरि यत्र च स्यात् पराभवः।
न तत्र मतिमान् युद्धं समुत्पाद्य समाचरेत्' ॥२४९॥

प्रथम आह,—'स्वामिन्! सत्यमिदं, स्वभूमिहेतोः परिभवाच्च युध्यन्ते क्षत्रियाः। परं सः (ब) दुर्गाश्रयः, दुर्गाविष्कम्भ्य वयं तेन विष्कम्भिताः; ततो दुर्गस्थो दुःसाध्यो भवति रिपुः।

उक्तञ्च,—न गजानां सहस्रेण न च लक्षेण वाजिनाम्।
यत् कृत्यं साध्यते राज्ञां दुर्गेणैकेन सिध्यति ॥२५०॥
शतमेकोऽपि सन्धत्ते प्राकारस्थो धनुर्धरः।
तस्माद्दुर्गं प्रशंसन्ति नीतिशास्त्रविचक्षणाः ॥२५१॥
पुरा गुरोः समादेशात् हिरण्यकशिपोर्भयात्।
शक्रेण विहितं दुर्गं प्रभावाद्विश्वकर्मणः ॥ २५२ ॥
तेनापि च वरो दत्तो यस्य दुर्गं स भूपतिः।
विजयी स्यात्ततो भूमौ दुर्गाणि स्युः सहस्रशः ॥२५३॥

---

विग्रहस्य युद्धस्य, फलत्रयं, युद्धजयी सति एतत्त्रयं लभते इति भावः; यदि एषां त्रयाणां मध्ये, एकमपि न चक्ति न लभते इत्यर्थः, तदा कथञ्चन कथमपि, तं विग्रहं, न कुर्य्यात्, निष्फलत्वात् इति भावः ॥२४८॥

यत्रेति।—यत्र विग्रहे, भूरि महत्, फलं न स्यात् न लभेत इत्यर्थः, यत्र च विग्रहे, पराभवः पराजयः, स्यात् सम्भवेत्, मतिमान् जनः, तत्र समुत्पाद्य शत्रूणां परस्परभेदं प्रकृतिकोपं वा घटयित्वा, युद्धं न समाचरेत् न कुर्य्यात् ॥२४९॥

(ब) दुर्गाश्रयः,—दुर्गमध्यवर्त्ती। विष्कम्भिताः,—अवरुद्धाः। दुःसाध्यः,—दुर्जेयः।

नेति।—गजानां हस्तिनां, सहस्रेण यत् कृत्यं कार्य्यं, न,तथा वाजिनाम् अश्वानां, लक्षेण च यत् कृत्यं न साध्यते सिद्धमेति, राज्ञाम् एकेन दुर्गेण तत् सिध्यति ॥२५०॥

शतमिति।—एकोऽपि प्राकारस्थः दुर्गप्राचीराश्रितः, धनुर्धरः शतं शतसङ्ख्यकं, योधानिति शेषः, सन्धत्ते योधयति इत्यर्थः, ["शतमेको योधयति" इति क्वचित् पाठः] तस्मात् नीतिशास्त्रविचक्षणाः नीतिज्ञाः, दुर्गं प्रशंसन्ति ॥२५१॥

पुरेति।—पुरा पूर्वस्मिन् काले, हिरण्यकशिपोः तन्नाम्नदैत्यराजात्, भयात् भीतेः शक्रेण इन्द्रेण, गुरोः बृहस्पतेः, समादेशात् नियोगात्, विश्वकर्मणः देवशिल्पिनः, प्रभावात् सामर्थ्यात्, नैपुण्यादित्यर्थः, दुर्गं विहितं निर्मितम् ॥२५२॥

दंष्ट्राविरहितो नागो मदहीनो यथा गजः।
सर्वेषां जायते वश्यो दुर्गहीनस्तथा नृपः ॥' ॥ २५४ ॥

तत् श्रुत्वा भासुरक आह,—'भद्र! दुर्गस्थमपि दर्शय तं चौरसिंहं, येन व्यापादयामि। उक्तञ्च,—

जातमात्रं न यः शत्रुं रोगञ्च प्रशमं नयेत्।
महाबलोऽपि तेनैव वृद्धिं प्राप्य स हन्यते ॥२५५॥

तथा च,—उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता।
समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च ॥२५६॥

अपि च,—उपेक्षितः क्षीणबलोऽपि शत्रुः
प्रमाददोषात् पुरुषैर्मदान्धैः।
साध्योऽपि भूत्वा प्रथमं ततोऽसौ
असाध्यतां व्याधिरिव प्रयाति ॥२५७॥

तेनेति।—तेन इन्द्रेणापि, वरः दत्तः, राजभ्य इति शेषः, यस्य भूपतेः, दुर्गम्, अस्तीति शेषः, स भूपतिः राजा, विजयी स्यात्; दुर्गाश्रयेण युद्धकरणात् इति भावः; अतः प्रभृति, भूमौ पृथिव्यां, सहस्रशः बहुशः, दुर्गाणि स्युः सम्भवेयुः ॥ २५३ ॥

दंष्ट्रेति।—दंष्ट्राविरहितः विषदन्तहीनः, नागः पन्नगः, तथा मदहीनः गजश्च यथा सर्वेषां वश्यः जायते, दुर्गहीनो नृपोऽपि तथा, सर्वेषां वश्यो भवेदिति भावः ॥ २५४ ॥

जातमात्रमिति।—यः जातमात्रम् उत्पन्नमात्रं, शत्रुं, रोगञ्च प्रशमं शान्तिं, न नयेत् प्रापयेत्, न नाशयेदित्यर्थः, स महाबलोऽपि तेनैव शत्रुणा रोगेण च, वृद्धिं प्राप्य, स्थितेनेति शेषः, हन्यते विनाश्यते ॥२५५॥

उत्तिष्ठमान इति।—तु किन्तु, पथ्यं हितम्, आरोग्यञ्च, इच्छता अभिलषता, पुरुषेण इति शेषः, उत्तिष्ठमानः वर्द्धमानः, [“उदोऽनूर्द्ध्वकर्मणि” (१।३।२४ पा०) इत्यात्मनेपदत्वात् शानच्] परः शत्रुः, न उपेक्ष्यः न हेयत्वेन उपेक्षणीयः; हि यतः, शिष्टैः साधुभिः, नीतिज्ञैरित्यर्थः, वर्त्स्यन्तौ वृद्धिं गमिष्यन्तौ, आमयः रोगः, (“रोगव्याधिगदामयाः” इत्यमरः) स च शत्रुश्च, समौ तुल्यौ, आम्नातौ कथितौ। “अल्पीयसोऽप्यरिरोगांशकांशाऽनवाप्य रोगवत्। अततत्त्वानुपेक्ष्यत्वादुभयात्प्रशान्तिः कृतः ॥” इति भावः ॥२५६॥

उपेक्षित इति।—मदान्धैः गर्वान्धैः, पुरुषैः जनैः, प्रमाददोषात् अनवधानतारूपात्

तथा च,—'आत्मनः शक्तिमुद्वीक्ष्य मानोत्साहञ्च यो व्रजेत् ।
बहून् हन्ति स एकोऽपि क्षत्रियान् भार्गवो यथा' ॥२५८॥

शशक आह,—'सत्यमेतत्, तथाऽपि बलवान् स मया दृष्टः, तत् न युज्यते स्वामिनस्तस्य सामर्थ्यमविदित्वा गन्तुम् ।

उक्तञ्च,—अविदित्वाऽऽत्मनः शक्तिं परस्य च समुत्सुकः ।
गच्छन्नभिमुखो नाशं याति वह्नौ पतङ्गवत् ॥२५९॥
यो बलात् प्रोन्नतं याति निहन्तुं सबलोऽप्यरिम् ।
विमदः स निवर्त्तेत शीर्णदन्तो गजो यथा' ॥२६०॥

भासुरक आह,—'भोः ! किं तव अनेन व्यापारेण ? दर्शय मे तं दुर्गस्थमपि' । अथ शशक आह,—'यद्येवं, तर्हि आगच्छतु स्वामी' । एवमुक्त्वा अग्रे व्यवस्थितः । ततश्च तेन आगच्छता यः कूपो दृष्टोऽभूत्, तमेव कूपमासाद्य भासुरकमाह,—'स्वामिन् ! कस्ते प्रतापं सोढुं समर्थः ? त्वां दृष्ट्वा दूरतोऽपि चौरसिंहः प्रविष्टः स्वं दुर्गं, तदागच्छ, येन दर्शयामि' इति । भासुरकः आह,—'दर्शय मे दुर्गम्' । तदनु दर्शितस्तेन कूपः । ततः सोऽपि मूर्खः सिंहः कूपमध्ये आत्मप्रतिबिम्बं जलमध्यगतं दृष्ट्वा सिंह-

---

दोषात्, उपेक्षितः शत्रुः क्षीणबलोऽपि प्रथमं साध्यः प्रतीकार्योऽपि भूत्वा, ततः उपेक्षावशादिति भावः, व्याधिरिव असौ असाध्यताम् अप्रतिविधेयतां, प्रयाति गच्छति ॥२५७॥

आत्मन इति ।—यस्तु आत्मनः स्वस्य, शक्तिं सामर्थ्यम्, उद्वीक्ष्य पर्यालोच्य, मानोत्साहं मानरक्षार्थमुद्यमं, व्रजेत् गच्छेत्, कुर्यादिति भावः, सः एकोऽपि भार्गवः परशुरामः, यथा क्षत्रियान्, तथा बहून्, शत्रूनिति शेषः, हन्ति नाशयति । उपमाऽलङ्कारः ॥२५८॥

अविदित्वेति ।—आत्मनः परस्य शत्रोः च, शक्तिं सामर्थ्यम्, अविदित्वा अज्ञात्वा, असमालोच्येत्यर्थः, समुत्सुकः अधीरः सन्, अभिमुखः शत्रुमभिमुखीकृत्य च, गच्छन् जनः, वह्नौ अग्नौ, पतङ्गवत् शलभ इव, नाशं निपातं, याति प्राप्नोति ॥२५९॥

य इति ।—सबलोऽपि बलवानपि, यः बलात् बलमाश्रित्य, न तु युक्तिमिति भावः; प्रोन्नतं प्रबलम्, अरिं शत्रुं, निहन्तुं विनाशयितुं, याति, स शीर्णदन्तः भग्नदशनः, गजो यथा हस्तीव, विमदः हतगर्वः सन्, निवर्त्तेत पराजितो भवेदित्यर्थः ॥२६०॥

नादं मुमोच। ततः प्रतिशब्देन कूपमध्यात् द्विगुणतरो नादः समुत्थितः। अथ तेन तं शत्रुं मत्वा आत्मानं तस्य उपरि प्रक्षिप्य प्राणाः परित्यक्ताः। शशकोऽपि हृष्टमनाः सर्वमृगान् आनन्द्य तैः सह प्रशस्यमानो यथासुखं तत्र वने निवसति स्म। अतोऽहं ब्रवीमि,—'यस्य बुद्धिर्बलं तस्य' इति। तत् यदि भवान् कथयति, तर्हि तत्रैव गत्वा तयोः स्वबुद्धिप्रभावेण मैत्रीभेदं करोमि"। करटक आह,—"भद्र! यदि एवं, तर्हि गच्छ, (भ) शिवास्ते पन्थानः सन्तु, यथाऽभिप्रेतमनुष्ठीयताम्"।

अथ दमनकः (म) सञ्जीवकवियुक्तं पिङ्गलकमवलोक्य तत्रान्तरे प्रणम्याग्रे समुपविष्टः। पिङ्गलकोऽपि तमाह,—"भद्र! किं चिरात् दृष्टः?" दमनक आह,—"न किञ्चिद्देवपादानाम् अस्माभिः प्रयोजनं, तेन अहं न आगच्छामि; तथाऽपि(य) राजप्रयोजनविनाशमवलोक्य सन्दह्यमानहृदयो व्याकुलतया स्वयमेव अभ्यागतो वक्तुम्। उक्तञ्च,—

> प्रियं वा यदि वा द्वेष्यं शुभं वा यदि वाऽशुभम्।
> अपृष्टोऽपि हितं वच्येत् यस्य नेच्छेत् पराभवम्"॥२६१॥

अथ तस्य साभिप्रायं वचनमाकर्ण्य पिङ्गलक आह,—"किं वक्तुमना भवान्? तत् कथ्यतां, यत् कथनीयमस्ति"। स प्राह,—"देव! सञ्जीवको युष्मत्पादानामुपरि

(भ) शिवाः,—कल्याणदाः, ते—तव, पन्थानः,—मार्गाः, सन्तु—भवन्तु, पथि ते विघ्नं मा भूदित्यर्थः; तव यात्रा सफला भवतु इति भावः।

(म) सञ्जीवकवियुक्तं—सञ्जीवकेन रहितम्। तत्रान्तरे—तस्मिन्नवसरे।

(य) राजेति।—राजकार्य्यध्वंसं दृष्ट्वा। सन्दह्यमानहृदयः,—सन्तप्यमानचेताः।

प्रियमिति।—यो जनः, यस्य पराभवं पराजयं, नाशमित्यर्थः, न इच्छेत् द्रष्टुं नाभिलषेदित्यर्थः, सः अपृष्टोऽपि अजिज्ञासितोऽपि, वक्ष्यमाणेन तेनेति शेषः, तस्य प्रियं वा, यदि वा द्वेष्यम् अप्रियं, शुभं वा, यदि वा अशुभं, श्रोतुमिति भावः, भवतु इति शेषः, हितं वच्येत् ब्रूयात्। [वचधातोर्दैवादिकात् विधिलिङ्] ॥ २६१ ॥

(र) द्रोहबुद्धिः, स विश्वासगतस्य मम विजने इदमाह,—'भो दमनक! दृष्टा मया अस्य पिङ्गलकस्य सारासारता; तदहमेनं हत्वा सकलमृगाऽऽधिपत्यं त्वत्साचिव्यपदवीसमन्वितं करिष्यामि' इति"। पिङ्गलकोऽपि (ल) तद्वज्रसारप्रहारसदृशं दारुणं वचः समाकर्ण्य मोहमुपगतो न किञ्चिदपि उक्तवान्। दमनकोऽपि तस्य तमाकारमालोक्य चिन्तितवान्,—"अयं तावत् (व) सञ्जीवकनिबद्धरागः, तन्नूनमनेन मन्त्रिणा राजा विनाशमवाप्स्यति इति। उक्तञ्च,—

एकं भूमिपतिः करोति सचिवं राज्ये प्रमाणं यदा
तं मोहाच्छ्रयते मदः स च मदाद्दास्येन निर्विद्यते।
निर्विण्णस्य पदं करोति हृदये तस्य स्वतन्त्रस्पृहा
स्वातन्त्र्यस्पृहया ततः स नृपतेः प्राणेष्वभिद्रुह्यति ॥२६२॥

(र) द्रोहबुद्धिः,—द्रोहे—अनिष्टे, बुद्धिर्यस्य तथाभूतः, विद्रोहार्थीत्यर्थः। विश्वासगतस्य—विश्वस्तस्य। सारासारता—बलाबलत्वम्। त्वत्साचिव्येति।—तव या साचिव्यपदवी—मन्त्रिपदं, तत्सहितम्; मम मृगाधिराज्ये त्वया मन्त्रिणा भवितव्यमिति भावः।

(ल) वज्रेति।—वज्रेण—अशनिना, यः सारः,—कठिनः इत्यर्थः, प्रहारः,—आघातः, तत्सदृशं—तत्तुल्यम्।

(व) सञ्जीवकेति।—सञ्जीवके निबद्धः,—दृढसंसक्तः, रागो यस्य तादृशः, सञ्जीवके बद्धानुराग इत्यर्थः। अनेन मन्त्रिणा—सञ्जीवकेनेत्यर्थः।

एकमिति।—यदा भूमिपतिः एकं सचिवं मन्त्रिणं, राज्ये प्रमाणं कर्तव्याकर्तव्यावधारकं, करोति, एकस्मिन्नेव सचिवे सर्वराज्यभारं निक्षिपति इत्यर्थः, तदा मोहात् अज्ञानात्, मदः गर्वः, 'अहमेव सर्वेषां प्रभुः' इत्येवंरूपः इति भावः, तं सचिवं, श्रयते आश्रयति, स च सचिवः, मदात् तादृशात् गर्वात्, दास्येन निर्विद्यते निर्वेदं गच्छति, 'अहं सर्वस्य प्रभुरपि अस्य दासः' इति आत्मावमाननां मन्यते इति भावः; ततः निर्विण्णस्य निर्वेदं गतस्य, तस्य सचिवस्य, हृदये स्वतन्त्रस्पृहा स्वाधीनताऽऽकाङ्क्षा, पदं स्थानं, करोति, 'कथमहं स्वाधीनो भवामि?' इति आकाङ्क्षा जायते इति भावः; ततः सः स्वातन्त्र्यस्पृहया नृपतेः प्राणेषु [विषयया सप्तमी, प्राणान् इति भाष्यं, "क्रुधद्रुहोरुपसृष्टयोः कर्म" (१।४।३८ पा०) इति कर्मसंज्ञाविधानात्] अभिद्रुह्यति द्रोह-

तत् किमत्र युक्तम्?" इति। पिङ्गलकोऽपि चेतनां समासाद्य कथमपि तमाह,—"दमनक! सञ्जीवकस्तावत् प्राणसमो भृत्यः, स कथं ममोपरि द्रोहबुद्धिं करोति?" दमनक आह,—"देव! भृत्यो भृत्य इति (ङ) अनैकान्तिकमेतत्।

उक्तञ्च,—न सोऽस्ति पुरुषो राज्ञां यो न कामयते श्रियम्।
अशक्ता एव सर्वत्र नरेन्द्रं पर्य्युपासते" ॥२६३॥

पिङ्गलक आह,—"भद्र! तथाऽपि मम तस्य उपरि (च) चित्तवृत्तिर्न विकृतिं याति। अथवा साधु इदमुच्यते,—

अनेकदोषदुष्टोऽपि कायः कस्य न वल्लभः?।
कुर्वन्नपि व्यलीकानि यः प्रियः प्रिय एव सः" ॥२६४॥

दमनक आह,—"अत एव अयं दोषः। उक्तञ्च,—

यस्मिन्नेवाधिकं चक्षुरारोपयति पार्थिवः।
अकुलीनः कुलीनो वा स श्रियो भाजनं नरः ॥२६५॥

अपरं, केन गुणविशेषेण स्वामी सञ्जीवकं निर्गुणकमपि

---

आचरति, 'राजनि निहते ममैवाधिपत्यं भवेत्' इति अभिलाषेण नृपतिं नाश्रयतीति भावः। [अत्र आत्मनेपदं चिन्त्यम।] शार्दूलविक्रीडितं वृत्तम् ॥२६२॥

(ङ) अनैकान्तिकम्—अनियतमित्ति, यो भृत्यः स चिरमेव भृत्यभावेन स्थास्यति इति न कदाचिदपि सम्भवेत्, दास्यात् आत्मानं मोचयितुं सर्वे एव यतन्ते इति भावः।

नेति।—यः राज्ञां श्रियं न कामयते नाभिलषति, सः तादृशः, पुरुषो नास्ति, सर्व एव राजश्रियं कामयते इत्यर्थः; सर्वत्र सर्वस्मिन् प्रदेशे, अशक्ताः अक्षमा एव पुरुषाः, दुर्बला निर्धनाश्च इति भावः, नरेन्द्रं नृपं, पर्य्युपासते सेवन्ते ॥२६३॥

(च) चित्तवृत्तिः,—मनोभावः। विकृतिं—विकारम्, अन्यथाभावमित्यर्थः।

अनेकेति।—यः प्रियः, स व्यलीकानि अप्रियाणि, ("व्यलीकमप्रियाकार्य्यवैलक्ष्येष्वपि पीड़ने" इति मेदिनी) कुर्वन्नपि आचरन्नपि, प्रियः एव स्वाभाविकः प्रेमास्पद एवेत्यर्थः। तदेव दृष्टान्तेन द्रढ़यति,—अनेकदोषदुष्टोऽपि बहुभिर्दोषैराक्रान्तोऽपि, कायः देहः, कस्य जनस्य, वल्लभः प्रियः, न? अपि तु सर्वस्यैव प्रिय इत्यर्थः ॥२६४॥

यस्मिन् इति।—पार्थिवः पृथिव्या ईश्वरः, नृपतिः, यस्मिन् एव जने, अधिकं यथा

नकश्चित् (ग) धारयति ? अथ देव! यदि एवं चिन्तयसि,—'महाकायोऽयम्, अनेन रिपून् व्यापादयिष्यामि' तदप्यस्मात् न सिध्यति, यतोऽयं शष्पभोजी ; देवपादानां पुनः शत्रवो मांसाशिनः ; तत् रिपुसादनम् अस्य साहाय्येन न भवति, तस्मादेनं दूषयित्वा हन्यताम्" इति। पिङ्गलक आह,—

"उक्तो भवति यः पूर्वं गुणवानिति संसदि।
तस्य दोषो न वक्तव्यः प्रतिज्ञाभङ्गभीरुणा॥ २६६॥

अन्यच्च,—मया अस्य तव वचनेन (ङ) अभयप्रदानं दत्तम्। तत् कथं स्वयमेव व्यापादयामि ? सर्वथा सञ्जीवकोऽयं सुहृत् अस्माकं, न तं प्रति कश्चित् (च) मन्युरिति। उक्तञ्च,—

इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम्।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्॥२६७॥

तथा चक्षुः दृष्टिम्, आरोपयति ददाति, येन अधिकम् आद्रियते इत्यर्थः, स नरः अकुलीनः असद्वंशोद्भवः, कुलीनः तदितरः सद्वंशोद्भवो वा, श्रियः सम्पदः, भाजनं पात्रं, भवतीति शेषः। यः कश्चित् राजानुगृहीतो धनवान् बलवांश्च भवतीति निष्कर्षः॥२६५॥

(ग) धारयति—रक्षति। महाकायः,—वृहच्छरीरः। शष्पभोजी—तृणभक्षकः। रिपुसादनं—शत्रुविनाशः। दूषयित्वा—दूषितं कृत्वा, छलेन दोषोद्भावनादिभिरिति भावः।

उक्त इति।—यो जनः, पूर्वं प्रथमं, संसदि सभायां, गुणवान् अयं गुणी, इति उक्तः कथितः, गुणित्वेन स्वीकृतः इत्यर्थः, भवति, प्रतिज्ञाभङ्गभीरुणा प्रागुक्तस्वीकारान्यथाकरणशङ्किना जनेन, तस्य दोषो न वक्तव्यः स निर्गुण इति पुनर्न वाच्यः ; तथाकृते तद्वचसि कोऽपि न विश्वसिति इति भावः॥२६६॥

(ङ) अभयप्रदानं—न हनिष्यामि इति आश्वासवचनम्।

(च) मन्युः,—क्रोधः, क्रोधकारणमिति भावः।

इत इति।—तारकासुरपीडितान् तद्वधार्थिनो देवान् प्रति ब्रह्मण उक्तिरियम्। स दैत्यः तारकः, इतः मत्तः, मत्सकाशादित्यर्थः, प्राप्ता श्रीः त्रिलोकैश्वर्य्यं येन तथाभूतः, अतः इत एव मत्त एव, क्षयं ध्वंसं, न अर्हति; तथा हि—विषवृक्षः [साम्प्रतमित्यव्यययोगेन प्रथमा] अपि स्वयम् आत्मना, संवर्ध्य जलसेकादिना वर्धयित्वा इत्यर्थः, छेत्तुं कर्त्तितुम्, असाम्प्रतम् अयुक्तः। ("युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः) ॥२६७॥

आदौ न वा प्रणयिनां प्रणयो विधेयो
दत्तोऽथवा प्रतिदिनं परिपोषणीयः ।
उत्क्षिप्य यत् क्षिपति तत् प्रकरोति लज्जां
भूमौ स्थितस्य पतनात् भयमेव नास्ति ॥ २६८ ॥

उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ? ।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥ २६९ ॥

तद्द्रोहबुद्धेरपि मया अस्य न विरुद्धमाचरणीयम्"। दमनक आह,—"स्वामिन् ! नैष राजधर्मः, यद्द्रोहबुद्धिरपि क्षम्यते।
उक्तञ्च,—तुल्यार्थं तुल्यसामर्थ्यं मर्मज्ञं व्यवसायिनम् ।
अर्द्धराज्यहरं भृत्यं यो न हन्यात् स हन्यते ॥ २७० ॥

अपरं, त्वया अस्य सखित्वात् सर्वोऽपि राजधर्मः परित्यक्तः, राजधर्माभावात् सर्वोऽपि परिजनो विरक्तिं गतः ; यतः सञ्जीवकः शष्पभोजी, (क) भवान् मांसादः, तव प्रकृतयश्च । यत्तव

---

आदाविति ।—आदौ प्रथममेव, प्रणयिनां प्रेमलाभेच्छूनां सम्बन्धे, प्रणयः न विधेयः वा न कर्त्तव्यः वा, अथवा किंवा, दत्तः विहितश्चेत्, प्रणय इत्यनुषङ्गः, तर्हि प्रतिदिनं परिपोषणीयः सः वर्द्धनीयः ; प्रथमं तावत् प्रणयो न कर्त्तव्यः एव, कृतश्चेत् नाशो न्याय्य इति भावः ; तथा हि, उत्क्षिप्य ऊर्द्धमुत्तोल्य, क्षिपति, अधः इति शेषः, इति यत्, तत् लज्जां प्रकरोति जनयति, परन्तु भूमौ स्थितस्य जनस्य, पतनात् भयं नास्ति एव ; तस्यापि वर्द्धनं कृत्वा अधःपातनात् वर्द्धनाकरणमेव वरमिति भावः ॥२६८॥

उपकारिष्विति ।—यः उपकारिषु हितकारिजनेष्वित्यर्थः, साधुः सद्व्यवहारपरः, तस्य साधुत्वे तादृशव्यवहारे, कः गुणः ? न कोऽपीत्यर्थः ; यः अपकारिषु अहितकारिजनेष्वित्यर्थः, साधुः, स एव सद्भिः साधुः उच्यते ॥२६९॥

तुल्यार्थमिति ।—यः तुल्यार्थं तुल्यप्रयोजनं, राज्याकाङ्क्षिणमिति यावत्, तुल्यसामर्थ्यं समानबलं, मर्मज्ञम् आशयज्ञं, छिद्राभिज्ञमिति भावः, व्यवसायिनम् उद्योगिनम्, अत एव अर्द्धराज्यहरं तादृग्गुणयोगात् राज्यार्द्धहारित्वेन सम्भाव्यमानमिति भावः ; भृत्यं, न हन्यात्, स हन्यते स्वयमेव वध्यते ; तेनैव भृत्येनेति शेषः ॥२७०॥

(क) भवान् मांसादः,—मांसभोजी, तव प्रकृतयश्च मांसादः,—मांसभोजिनः, [एकवचनान्तपक्षे अण्प्रत्ययः, बहुवचनान्तपक्षे क्विप्प्रत्ययो बोध्यः] । मांसाशिशष्पाशिनोः

अवध्यव्यवसायबाह्यं कुतस्तासां मांसाशनम् ? (ख) यद्रहिताः ताः त्वां त्यक्त्वा यास्यन्ति । (ग) ततोऽपि त्वं विनष्ट एव, अस्य सङ्गत्या पुनस्ते न कदाचित् आखेटके मतिः भविष्यति ।

उक्तञ्च,—यादृशैः सेव्यते भृत्यैर्यादृशांश्चोपसेवते ।

कदाचिन्नात्र सन्देहस्तादृक् भवति पूरुषः ॥२७१॥

तथा च,—सन्तप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते
मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते ।
स्वातौ सागरशुक्तिकुक्षिपतितं तज्जायते मौक्तिकं
प्रायेणाधममध्यमोत्तमगुणः संवासतो जायते ॥२७२॥

तथा च,—असतां सङ्गदोषेण साधवो यान्ति विक्रियाम् ।
दुर्योधनप्रसङ्गेन भीष्मो गोहरणे गतः ॥२७३॥

---

प्रकृतिविरोधिनोः सखित्वं न युज्यते इति भावः । यदिति ।—यत—मांसाशनं तव अवध्यव्यवसायात्—अहिंसाऽऽचरणात्, बाह्यं—बहिर्भूतं, तत तासां—मांसादानां प्रकृतीनां, कुतः ? वधव्यवसायराहित्येन मांसस्य दुष्प्रापत्वादिति भावः ।

(ख) यद्रहिताः,—येन—मांसेन, रहिताः,—वञ्चिता इत्यर्थः, ताः,—प्रकृतयः; अमात्यादयः अनुचरवर्गाः इत्यर्थः ; वृत्त्यभावात् परिजनाः त्वां त्यक्ष्यन्ति इति भावः ।

(ग) ततः,—प्रकृतिभिः परित्यक्तत्वादित्यर्थः । अस्य—सञ्जीवकस्य, सङ्गत्या—संसर्गेण, ते—तव, आखेटके—मृगयायां, मतिर्न भविष्यतीति सम्बन्धः ।

यादृशैरिति ।—यादृशैः भृत्यैः सेव्यते, प्रभुरिति शेषः, यादृशांश्च, जनानिति शेषः, उपसेवते आश्रयति, पूरुषः प्रभुरिति भावः, तादृक् तादृशगुणसम्पन्नः, भवति, अत्र विषये, कदाचित सन्देहः न, अस्तीति शेषः ; "संसर्गजा दोषगुणा भवन्ति" इति भावः ॥२७१॥

सन्तप्तायसीति ।—सन्तप्ते, अयसि लौहे, संस्थितस्य, पयसः जलस्य, नामापि न ज्ञायते, सद्य एव शुष्यमाणत्वादिति भावः । तदेव पयः, नलिनीपत्रस्थितं पद्मिनीपलाशसंस्थितं सत्, मुक्ताकारतया अत्यच्छतया मौक्तिकवत् इत्यर्थः, राजते शोभते ; स्वातौ स्वातिनक्षत्रे स्थितमित्यर्थः, तत् पयः, सागरस्य शुक्तेः मुक्तास्फोटस्य, कुक्षिपतितम् अभ्यन्तरनिपतितं सत्, मौक्तिकं जायते ; तस्मात संवासतः एकत्र वासात्, संसर्गादित्यर्थः, प्रायेण अधमः मध्यमः उत्तमश्च गुणः जायते । शार्दूलविक्रीडितं वृत्तम् ॥२७२॥

असतामिति ।—असतां दुर्जनानां, सङ्गदोषेण साधवः विक्रियां विकारं, यान्ति ;

अत एव सन्तो नीचसङ्गं वर्जयन्ति। उक्तञ्च,—

न ह्यविज्ञातशीलस्य प्रदातव्यः प्रतिश्रयः।
मत्कुणस्य च दोषेण हता मन्दविसर्पिणी" ॥२७४॥

पिङ्गलक आह,—"कथमेतत् ?" सोऽब्रवीत्,—

## कथा ९।

"अस्ति कस्यचित् महीपतेः कस्मिंश्चित् स्थाने मनोरमं शयनस्थानम्; (घ) तत्र शुक्लतरपटयुगलमध्यसंस्थिता मन्दविसर्पिणी नाम श्वेता (ङ) यूका प्रतिवसति स्म। सा च तस्य महीपतेः रक्तमास्वादयन्ती सुखेन कालं नयमाना तिष्ठति। अन्येद्युश्च तत्र शयने क्वचित् भ्राम्यन् अग्निमुखो नाम मत्कुणः समायातः। अथ तं दृष्ट्वा सा विषण्णवदना प्रोवाच,—'भो अग्निमुख! कुतस्त्वमत्र अनुचितस्थाने समायातः? तद्यावत् न कश्चिद्वेत्ति, तावत् शीघ्रं गम्यताम्' इति। स आह,—'भगवति! गृहाऽऽगतस्य असाधोरपि नैतत् युज्यते वक्तुम्। उक्तञ्च,—

एह्यागच्छ समाश्वसासनमिदं कस्माच्चिराद्दृश्यसे?
का वार्त्ता? ह्यतिदुर्बलोऽसि कुशलं? प्रीतोऽस्मि ते दर्शनात्।

तथा हि, भीष्मः दुर्य्योधनप्रसङ्गेन दुर्य्योधनसंसर्गेण, गोहरणे, उत्तरगोग्रहे इति भावः, गतः प्रस्थितः, प्रहर्त्ता वा इत्यर्थः ॥२७३॥

न हीति।—अविज्ञातशीलस्य अज्ञातचरित्रस्य, जनस्य इति शेषः, प्रतिश्रयः आश्रयः, न हि प्रदातव्यः; तथा हि, मत्कुणस्य रक्तपायिनः शय्याकीटविशेषस्य, "छारपोका" इति वङ्गभाषायां प्रसिद्धस्य इत्यर्थः, दोषेण मन्दविसर्पिणी तदभिधाना काचित् यूका, हता विनाशिता ॥२७४॥

(घ) तत्र—शयनस्थाने। शुक्लेति।—शुक्लतरम्—अतिशुभ्रं, यत् पटयुगलम्—आवरणवस्त्रद्वयं, तन्मध्यसंस्थिता।

(ङ) यूका—क्रिमिविशेषः, केशकीटः (उकुण) इति यावत्।

एह्येति।—एहि, आगच्छ, समाश्वस समाश्वस्तो भव, [समाश्वसेति चिन्त्यं, "समाश्वसिहि" इति भाव्यम्] आसनमिदम्, अत्र उपविशेति भावः; कस्मात् चिरात्

एवं नीचजनेऽपि युज्यति गृहं प्राप्ते सतां सर्वदा
धर्मोऽयं गृहमेधिनां निगदितः स्मार्त्तैर्लघुस्वर्गदः ॥२७५॥

अपरं,—मया अनेकमानुषाणामनेकविधानि रुधिराणि आस्वादितानि आहारदोषात् कटुतिक्तकषायाम्लरसास्वादानि; न च मया कदाचिन्मधुररक्तं समास्वादितम्; तत् यदि त्वं प्रसादं करोषि, तदस्य नृपतेर्विविधव्यञ्जनान्नपानचोष्यलेह्यस्वाद्वाहार-वशात् शरीरे यत् मिष्टं रक्तं सञ्जातं, तदास्वादनेन सौख्यं सम्पादयामि जिह्वाया इति। उक्तञ्च,—

रङ्कस्य नृपतेर्वापि जिह्वासौख्यं समं स्मृतम्।
तन्मात्रञ्च स्मृतं सारं तदर्थं यतते जनः ॥२७६॥
यद्येव न भवेल्लोके कर्म जिह्वाप्रतुष्टिदम्।
तन्न भृत्यो भवेत् कश्चित् कस्यचिद्वशगोऽथवा ॥२७७॥
यदसत्यं वदेत् मर्त्त्यो यद्वाऽसेव्यञ्च सेवते।
यद्गच्छति विदेशञ्च तत् सर्वमुदरार्थतः ॥२७८॥

स्वस्ति? नु भोः! का वार्त्ता? कः संवादः? अतिदुर्बलोऽसि, कुशलम्? तवेति शेषः, ते तव, दर्शनात् प्रीतोऽस्मि। नीचजनेऽपि गृहं प्राप्ते सति, सतां साधूनां, सर्वदा एवम् उक्तप्रकारम्, आलपनमिति शेषः, युज्यति, [ परस्मैपदमत्र छन्दोऽनुरोधात् ] स्मार्त्तैः स्मृतिशास्त्रविशारदैः पण्डितैः इत्यर्थः, गृहमेधिनां गृहिणाम्, अयं धर्मः लघुस्वर्गदः आशुस्वर्गसाधनं, निगदितः कथितः। शार्दूलविक्रीडितं वृत्तम् ॥२७५॥

रङ्कस्येति।—रङ्कस्य कृपणस्य, मन्दस्य वा, नृपतेर्वापि राज्ञोऽपि, जिह्वासौख्यं रसनातृप्तिरित्यर्थः, समं तुल्यं, स्मृतम्; तदर्थं रसनासौख्यार्थे, जनः यतते चेष्टते, अतः, तन्मात्रं रसनासौख्यमेव, सारम् उत्कृष्टं, स्मृतम्; जनानां रुचिभिन्नत्वेऽपि सर्वेषामेव रसनातुष्टेः समतया तत उत्कृष्टं किमपि नास्तीति फलितार्थः ॥२७६॥

यद्येति।—यदि लोके जगति, जिह्वाप्रतुष्टिदं रसनासन्तोषप्रदं, कर्म नैव भवेत्, तत् तदा, कश्चित् कोऽपि जनः, कस्यचित् कस्यापि, भृत्यः किङ्करः, अथवा वशगः वश्यः, न भवेत्; सर्व एव जिह्वातुष्टये लोकस्य वशगो भवतीति भावः ॥२७७॥

यदिति।—मर्त्त्यः मानवः, यत् असत्यं वदेत्, यद्वा असेव्यं नीचजनमिति भावः,

तत् मया (च) स्टहागतेन बुभुक्षया पीड्यमानेन त्वत्सकाशात् भोजनम् अर्थनीयम्। तत्र त्वया एकाकिन्या अस्य भूपतेः रक्तपानं कर्त्तुं युज्यते'। तत् श्रुत्वा मन्दविसर्पिणी आह,—'भोः मत्कुण! अहमस्य नृपतेर्निद्रावशं गतस्य रक्तमास्वादयामि, त्वं पुनः अग्निमुखः चपलश्च; तत् यदि मया सह रक्तपानं करोषि, तत् तिष्ठ, अभीष्टतरं रक्तमास्वादय'। सोऽब्रवीत्,—'भगवति! एवं करिष्यामि, यावत् त्वं न आस्वादयसि प्रथमं नृपरक्तं, तावत् मम (छ) देवगुरुकृतः शपथः स्यात्, यदि तत् आस्वादयामि'। एवं तयोः परस्परं वदतोः स राजा तच्छयनमासाद्य प्रसुप्तः।

अथ असौ मत्कुणः (ज) जिह्वालौल्यप्रकृष्टौत्सुक्यात् जाग्रतमपि तं महीपतिम् अदशत्। अथवा साधु इदमुच्यते,—

स्वभावो नोपदेशेन शक्यते कर्त्तुमन्यथा।
सुतप्तमपि पानीयं पुनर्गच्छति शीतताम् ॥२७९॥
यदि स्याच्छीतलो वह्निः शीतांशुर्दहनात्मकः।
न स्वभावोऽत्र मर्त्यानां शक्यते कर्त्तुमन्यथा ॥२८०॥

सेवते, यच्च विदेशं गच्छति, तत् सर्वम् उदरार्थतः उदरपोषणार्थमेव; अन्यथा कथं मिथ्याभाषणं, नीचसेवनं, स्वजनं हित्वा दूरदेशगमनञ्च स्वीकुर्य्यात्? इत्यर्थः ॥२७८॥

(च) स्टहागतेन—अतिथिना, [द्वितीयासमासः]। बुभुक्षया—क्षुधया। अर्थनीयं—प्रार्थनीयम्।

(छ) देवगुरुकृतः,—देवान् गुरूंश्च उद्दिश्य यः क्रियते स इत्यर्थः।

(ज) जिह्वेति।—जिह्वायाः,—रसनायाः, लौल्यात्—चापल्यात्, अतिलोभादित्यर्थः, यत् प्रकृष्टं—महत्, औत्सुक्यम्—आग्रहः तस्मात्।

स्वभाव इति।—उपदेशेन स्वभावः प्रकृतिः, अन्यथा कर्त्तुं परावर्त्तयितुं, न शक्यते। तदेव दृष्टान्तेन द्रढ़यति, सुतप्तमिति।—तथा हि पानीयं जलं, सुतप्तमपि अत्युष्णमपि, पुनः शीततां शैत्यं, गच्छति प्राप्नोति, शीतप्रकृतिकत्वादिति भावः ॥२७९॥

यदीति।—यदि चेत्, वह्निः अग्निः, शीतलः शैत्यगुणाक्रान्तः, तथा शीतांशुश्चन्द्रः,

अथ असौ महीपतिः सूच्यग्रविद्ध इव तच्छयनं त्यक्त्वा तत्क्षणादेव उत्थितः प्रोवाच,—'अहो ! ज्ञायतामत्र (झ) प्रच्छादनपटे मत्कुणो यूका वा नूनं तिष्ठति, येन अहं दष्टः' इति। अथ ये कञ्चुकिनस्तत्र स्थिताः, ते सत्वरं प्रच्छादनपटं गृहीत्वा सूक्ष्मदृष्ट्या वीक्षाञ्चक्रुः। अत्रान्तरे स मत्कुणः चापल्यात् खट्वान्तः प्रविष्टः, सा मन्दविसर्पिणी अपि वस्त्रसन्ध्यन्तर्गता तैर्दृष्टा व्यापादिता च। अतोऽहं ब्रवीमि,—'न ह्यविज्ञातशीलस्य' इति। एवं ज्ञात्वा त्वया एषः बध्यः, नो चेत् त्वां व्यापादयिष्यति।

उक्तञ्च,—त्यक्ताश्चाभ्यन्तरा येन बाह्याश्चाभ्यन्तरीकृताः।

स एव मृत्युमाप्नोति यथा राजा ककुद्द्रुमः" ॥२८१॥

पिङ्गलक आह,—"कथमेतत् ?" सोऽब्रवीत्,—

## कथा १०।

"कस्मिंश्चित् वनप्रदेशे चण्डरवो नाम शृगालः प्रतिवसति स्म। स कदाचित् क्षुधाविष्टो जिह्वालौल्यात् नगरान्तरे प्रविष्टः। अथ तं नगरवासिनः (ञ) सारमेया अवलोक्य सर्वतः शब्दायमानाः परिधाव्य तीक्ष्णदंष्ट्राग्रैर्भक्षितुमारब्धाः। सोऽपि तैः भक्ष्यमाणः प्राणभयात् (ट) प्रत्यासन्नरजकगृहं प्रविष्टः। तत्र च नीलीरसपरिपूर्णं महाभाण्डं सज्जी-

---

दहनात्मकः उष्णगुणसम्पन्नः, स्यात्, तथाऽपि अत्र संसारे, मर्त्यानां स्वभावः अन्यथा कर्तुं न शक्यते। यथा "अङ्गारः शतधौतेन मलिनत्वं न मुञ्चति" तथेतिभावः ॥२८०॥

(झ) प्रच्छादनपटे—आस्तरणवस्त्रे।

त्यक्ता इति।—येन जनेन, आभ्यन्तरा आत्मीयाः, स्वजना इत्यर्थः, त्यक्ताः, तथा बाह्याः इतरे, अस्वजना इत्यर्थः, आभ्यन्तरीकृताः आत्मीयत्वेन परिगृहीता इत्यर्थः, स एव राजा ककुद्द्रुमः यथा ककुदद्रुमनामशृगालवत्, मृत्युमाप्नोति ॥२८१॥

(ञ) सारमेयाः,—कुक्कुराः। शब्दायमानाः,—शब्दं कुर्वाणाः, [क्यङन्तात् शब्दायधातोः शानचि रूपम्]। परिधाव्य—धावित्वा। भक्षितुं—दंष्टुम्।

(ट) प्रत्यासन्नेति।—प्रत्यासन्नं—समीपवर्त्ति, यत् रजकगृहं—वस्त्ररञ्जकभवनम्।

हतमासीत्; तत्र सारमेयैः आक्रान्तो भाण्डमध्ये पतितः। अथ यावत् निष्क्रान्तः, तावत् नीलीवर्णः सञ्जातः। तत्र अपरे सारमेयास्तं शृगालमजानन्तो यथाऽभीष्टदिशं जग्मुः; चण्डरवोऽपि दूरतरं प्रदेशमासाद्य काननाभिमुखं प्रतस्थे, न च नीलवर्णेन कदाचित् (ठ) निजरङ्गः त्यज्यते। उक्तञ्च,—

वज्रलेपस्य मूर्खस्य नारीणां कर्कटस्य च।
एको ग्रहस्तु मीनानां नीलीमद्यपयोर्यथा ॥२८२॥

अथ तं (ड) हरगलगरल-तमालसमप्रभमपूर्वं सत्त्वमवलोक्य सर्वे सिंहव्याघ्रद्वीपिवृकप्रभृतयोऽरण्यनिवासिनो भयव्याकुलितचित्ताः समन्तात् पलायनक्रियां कुर्वन्ति, कथयन्ति च,—'न ज्ञायतेऽस्य कीदृग्विचेष्टितं पौरुषञ्च, तद्दूरतरं गच्छामः। उक्तञ्च,—न यस्य चेष्टितं विद्यात् न कुलं न पराक्रमम्।
न तस्य विश्वसेत् प्राज्ञो यदीच्छेच्छ्रियमात्मनः' ॥२८३॥

---

(ठ) निजरङ्गः,—आत्मरागः, स्ववर्णः इत्यर्थः, ("—रङ्गो ना रागे नृत्ये—"इति मेदिनी)। बहुशो धावनेनापि नीलीरञ्जितं द्रव्यं न कदाऽपि स्ववर्णं प्राप्नोतीति भावः।

वज्रेति।—वज्रलेपस्य आमतिन्दुकफलादिना विरचितस्य प्रलेपविशेषस्य, मूर्खस्य मूढस्य, नारीणां स्त्रीणां, कर्कटस्य कुलीरकस्य, मीनानां मत्स्यानाञ्च, ग्रहः ग्रहणम्, आक्रान्तिरित्यर्थः, आग्रहश्च, सङ्कल्प इत्यर्थः, यथा एकस्तु एक एव, तुकारोऽवावधारणार्थः; कदाचिदपि नान्यथा भवेदित्यर्थः; तथा नीलीमद्यपयोः, अपीति शेषः; नीलवर्णस्य मद्यपस्य च ग्रहोऽपि तथैवेत्यर्थः; यथा वज्रलेपलिप्तस्य वस्तुनः, कर्कटमीनयोः दशनाग्रेण ग्रहणस्य च ततो विमुक्तिरतिदुष्करी, तथा नीलवर्णस्य सङ्गेऽपि ततो विमुक्तिरतिदुष्करी, यथा मूर्खनार्य्योः सङ्कल्पो न प्रबोधोपशमनीयः, तथा मद्यपस्य सङ्कल्पोऽपीति भावः ॥२८२॥

(ड) हरेति।—हरस्य—शम्भोः, गले—कण्ठे, यत् गरलं—कालकूटमित्यर्थः, तथा तमालः,—तदाख्यवृक्षश्च, तयोः समा प्रभा यस्य तथाभूतम्। द्वीपी—चित्रव्याघ्रः।

नेति।—प्राज्ञो बुद्धिमान् जनः, यदि आत्मनः श्रियं सम्पदं, कल्याणमित्यर्थः, इच्छेत् अभिलषेत्, तदा यस्य जनस्य, चेष्टितम् आचरणं, न, कुलं वंशं, न, तथा पराक्रमं शौर्यञ्च, न विद्यात् जानीयात्, तस्य अज्ञातचेष्टितकुलपराक्रमस्य जनस्य, [ शेषत्वविवक्षया षष्ठी ] न विश्वसेत् न तं विश्वास्यत्वेन प्रतीयादित्यर्थः ॥२८३॥

चण्डरवोऽपि तान् भयव्याकुलितान् विज्ञाय इदमाह,—'भो भोः श्वापदाः! किं यूयं मां दृष्ट्वैव (ढ) सन्त्रस्ता व्रजथ? तन्न भेतव्यम्; अहं ब्रह्मणा अद्य स्वयमेव सृष्ट्वाऽभिहितः,—'यत् श्वापदानां मध्ये कश्चिद्राजा नास्ति, तत् त्वं मया अद्य सर्व-श्वापदप्रभुत्वेऽभिषिक्तः ककुद्द्रुमाभिधः; ततो गत्वा क्षिति-तले तान् सर्वान् परिपालय' इति; ततोऽहमत्रागतः। तन्मम (ण) छत्रच्छायायां सर्वैरेव श्वापदैर्वर्त्तितव्यम्; अहं ककुद्द्रुमो नाम राजा त्रैलोक्येऽपि सञ्जातः'। तत् श्रुत्वा सिंहव्याघ्र-पुरःसराः श्वापदाः,—'स्वामिन्! प्रभो! समादिश' इति वदन्तस्तं परिवव्रुः।

अथ तेन सिंहस्य अमात्यपदवी प्रदत्ता, व्याघ्रस्य शय्यापालत्वं, द्वीपिनः ताम्बूलाधिकारः, वृकस्य द्वारपालक-त्वम्; ये च आत्मीयाः शृगालाः, तैः सह आलापमात्रमपि न करोति, ते सर्वेऽपि (त) अर्द्धचन्द्रं दत्त्वा निःसारिताः। एवं तस्य राजक्रियायां वर्त्तमानस्य ते सिंहादयो मृगान् व्यापाद्य तत्पुरतः प्रक्षिपन्ति। सोऽपि प्रभुधर्मेण सर्वेषां तान् प्रविभज्य प्रयच्छति। एवं गच्छति काले कदाचित् तेन सभागतेन दूरदेशे शब्दायमानस्य शृगालवृन्दस्य कोलाहलः अश्रावि। तं शब्दं श्रुत्वा (थ) पुलकिततनुः आनन्दाश्रुपरि-पूर्णनयनः उत्थाय तारस्वरेण विरोतुमारब्धवान्। अथ ते सिंहादयस्तं तारस्वरमाकर्ण्य शृगालोऽयमिति मत्वा सलज्ज-

---

(ढ) सन्त्रस्ताः,—अतिभीताः। ककुद्द्रुमाभिधः,—ककुद्द्रुमनामा।

(ण) छत्रच्छायायाम्—अधीनत्वे इति भावः, [छद+णिच्—त्रः, ह्रस्वः]।

(त) अर्द्धचन्द्रं—गलहस्तमिति भावः।

(थ) पुलकिततनुः,—रोमाञ्चितगात्रः। तारस्वरेण—उच्चरवेण। विरोतुं —शब्दायितुम्।

मधोमुखाः चणमेकं स्थित्वा मिथः प्रोचुः,—'भोः! (द) वाहिताः वयमनेन क्षुद्रशृगालेन, तत् बध्यताम्' इति। सोऽपि तदाकर्ण्य पलायितुमिच्छन् तत्र स्थाने एव सिंहादिभिः खण्डशः कृतो मृतश्च। अतोऽहं ब्रवीमि,—'त्यक्ताश्चाभ्यन्तरा येन' इति"।

तदाकर्ण्य पिङ्गलक आह,—"भो दमनक! कः प्रत्ययोऽत्र विषये, यत् स ममोपरि दुष्टबुद्धिः?" स आह,—"यदद्य ममाग्रे तेन निश्चयः कृतो यत्—'प्रभाते पिङ्गलकं वधिष्यामि'। तदत्रैव प्रत्ययः,—प्रभाते (ध) अवसरवेलायाम् आरक्तमुखनयनः स्फुरिताधरो दिशोऽवलोकयन् अनुचितस्थानोपविष्टस्त्वां क्रूरदृष्ट्या विलोकयिष्यति। एवं ज्ञात्वा यदुचितं, तत् कर्त्तव्यम्"इति कथयित्वा सञ्जीवकसकाशं गतः, तं प्रणम्य उपविष्टश्च। सञ्जीवकोऽपि सोद्वेगाकारं मन्दगत्या समायान्तं तमुद्वीक्ष्य सादरतरमुवाच,—"भो मित्र! स्वागतम्? चिराद्दृष्टोऽसि, अपि शिवं भवतः? तत् कथय,येनादेयमपि तुभ्यं गृहाऽऽगताय प्रयच्छामि। उक्तञ्च,—ते धन्यास्ते विवेकज्ञास्ते सभ्या इह भूतले।

आगच्छन्ति गृहे येषां कार्य्यार्थं सुहृदो जनाः" ॥२८४॥

दमनक आह,—"भोः! कथं शिवं सेवकजनस्य?—

सम्पत्तयः परायत्ताः सदा चित्तमनिर्वृतम्।

स्वजीवितेऽप्यविश्वासस्तेषां ये राजसेवकाः ॥२८५॥

---

(द) वाहिताः,—भृत्यभावेन कर्म कारिताः, प्रतारिता इति भावः।

(ध) अवसरवेलायां—भवत्सन्निधानागमनोचितसमये इत्यर्थः, राजकार्य्यविरतिसमये इत्यर्थो वा। क्रूरदृष्ट्या—कोपदृष्ट्या।

ते इति।—सुहृदो जनाः मित्राणीत्यर्थः, कार्य्यार्थं येषां गृहे आगच्छन्ति, इह अस्मिन्, भूतले ते जनाः धन्याः पुण्यवन्तः, ते जनाः, विवेकज्ञाः परमविज्ञाः इत्यर्थः, तथा ते जनाः, सभ्याः साधवः ॥२८४॥

सम्पत्तयः इति।—ये जनाः, राजसेवकाः नृपकिङ्कराः, तेषां सम्पत्तयः धनानि, परायत्ताः पराधीनाः, चित्तं मनः, सदा सर्वस्मिन् काले, अनिर्वृतम् असुखं, तथा

तथा च,—सेवया धनमिच्छद्भिः सेवकैः पश्य यत् कृतम् ।

स्वातन्त्र्यं यच्छरीरस्य मूढैस्तदपि हारितम् ॥२८६॥

तावज्जन्मातिदुःखाय ततो दुर्गतता सदा ।

तत्रापि सेवया वृत्तिरहो ! दुःखपरम्परा ॥२८७॥

जीवन्तोऽपि मृताः पञ्च श्रूयते किल भारते ।

दरिद्रो व्याधितो मूर्खः प्रवासी नित्यसेवकः ॥२८८॥

नाश्नाति स्वेच्छयौत्सुक्यात् विनिद्रो न प्रबुध्यते ।

न निःशङ्कं वचो ब्रूते सेवकोऽप्यत्र जीवति ? ॥२८९॥

स्वजीवितेऽपि निजजीवनेऽपि, अविश्वासः अप्रत्ययः ; कदा राजा किं कुर्य्यादिति चिन्तयैति भावः ; सेवकानां जीवनमतीव दुःखावहमिति तात्पर्य्यम् ॥ २८५ ॥

सेवयेति ।—सेवया प्रभुशुश्रूषया, दास्येन इत्यर्थः, धनमिच्छद्भिः सम्पदमभिलषद्भिः, सेवकैः दासैः, यत् कृतम् आचरितं, तदिति ऊहनीयं, पश्य अवलोकय ; किन्तत् ? इत्याह,—मूढैः मूर्खैः, सेवकैरिति पूर्वान्वयः, शरीरस्य यत् स्वातन्त्र्यं स्वाधीनत्वं, तदपि हारितं नाशितम् ; शरीरध्वंसे भवत्यपि प्रभोराज्ञा पालनीयैति भावः ॥२८६॥

तावदिति ।—जन्म तावत् देहधारणमेव, प्रथममिति भावः, अतिदुःखाय, भवतीति शेषः ; एवमुत्तरत्रापि ; ततः तत्र, अतिदुःखावहदेहधारणे इत्यर्थः, सदा आजीवनमित्यर्थः, दुर्गतता दारिद्र्यं, तत्रापि दारिद्र्येऽपि, सेवया दास्येन, वृत्तिर्जीवनम्, अहो इति खेदसूचकमव्ययं, दुःखपरम्परा दुःखधारा, एतत् सर्वं क्लेशसन्ततिः इति यावत् ॥२८७॥

जीवन्त इति ।—भारते महाभारतग्रन्थे इत्यर्थः, दरिद्रः दीनः, व्याधितः रुग्णः, मूर्खः मूढः, प्रवासी विदेशस्थः, तथा नित्यसेवकः चिरदासः, एते पञ्च पञ्चविधाः, लोका इति शेषः, जीवन्तः प्राणन्तोऽपि, मृताः किल मृता एव, ( किलशब्दोऽत्र अवधारणार्थः, ) इति श्रूयते एवं कीर्त्तितमस्ति इति आकर्ण्यते इत्यर्थः ॥ २८८ ॥

नेति ।—यः सेवकः औत्सुक्यात् उत्कण्ठावशात्, साम्प्रतमेव प्रभुसमीपे गन्तव्यमिति उद्वेगादिति भावः ; स्वेच्छया वाञ्छापूर्वकमित्यर्थः, न अश्नाति न भक्षयति ; विनिद्रः विगतनिद्रः सन्, न प्रबुध्यते न जागर्त्ति, सुनिद्रानन्तरं न जागर्त्ति, किन्तु यदा प्रभुः किमादिच्छति इत्युद्वेगात् निद्राऽऽवेशे सत्यपि कृत्स्नां रात्रिमेव जागर्त्तीत्यर्थः, तथा निःशङ्कं निर्भयं यथा तथा, वचः न ब्रूते न वक्तुं शक्नोतीति भावः ; अत्र संसारे, एवम्भूतोऽपि सेवकः जीवति ? ईदृशस्य स्वातन्त्र्यरहितस्य जीवनात् मरणमेव वरमिति भावः ॥२८९॥

सेवा श्ववृत्तिराख्याता यैस्तैर्मिथ्या प्रजल्पितम्।
स्वच्छन्दं चरति श्वाऽत्र सेवकः परशासनात्॥२९०॥
भूशय्या ब्रह्मचर्यं च कृशत्वं लघुभोजनम्।
सेवकस्य यतेर्यद्वद्विशेषः पापधर्मजः॥२९१॥
शीताऽऽतपादिकष्टानि सहते यानि सेवकः।
धनाय तानि चाल्पानि यदि धर्मान्न मुच्यते॥२९२॥
मृदुनाऽपि सुवृत्तेन सुमिष्टेनापि हारिणा।
मोदकेनापि किं तेन निष्पत्तिर्यस्य सेवया?"॥२९३॥

सेवेति।—यैः शास्त्रकारैरिति भावः, सेवा, श्ववृत्तिः कुक्कुरजीविका, आख्याता उक्ता, तैः एतत् मिथ्या अलीकं, प्रजल्पितम्; यतः श्वा कुक्कुरः, अत्र जगति, स्वच्छन्दं निर्बाधं, चरति भ्रमति, सेवकः परशासनात् प्रभोरादेशात्, चरतीति शेषः, श्वाऽपि स्वाधीनः, सेवकस्तु पराधीनः, अतः कुक्कुरोऽपि सेवकाद्वरमिति भावः॥ २९०॥

भूशय्येति।—यतेः सन्न्यासिनः, यद्वत् यथा, भूशय्या धरणिशायनं, ब्रह्मचर्यं स्रक्चन्दनवनिताद्युपभोगराहित्यमिति भावः; कृशत्वं क्षीणकायत्वं, तपोजनितक्लेशेन इति भावः, लघुभोजनञ्च यत्किञ्चनाशित्वमित्यर्थः, भवतीति शेषः; सेवकस्य दासजनस्यापि, तद्वदिति शेषः, तत् सर्वं भूशय्यादिकम् उभयोरेव तुल्यम् भवतीत्यर्थः; स्वामिकार्यसम्पादनत्वरया तज्जनितश्रमेण च इति भावः; विशेषः प्रभेदः तु, सेवकसन्न्यासिनोरिति शेषः; पापधर्मजः पापनिबन्धनः धर्मनिबन्धनश्च; सेवकः पापी, यतिस्तु पुण्यवानिति भावः॥ २९१॥

शीतेति।—सेवकः धनाय यानि शीतातपादिकष्टानि सहते, यदि सः धर्मात् न मुच्यते न हीयते, धर्मार्थं यतते चेदित्यर्थः, तदा तानि शीतातपादिकष्टानि, अल्पानि च तदपेक्षया न्यूनानि, सहते इति शेषः; धनार्थं बहुलानि कष्टान्यनुभूयन्ते सेवकेन, धर्मार्थं यतमानेन तेन ततोऽल्पक्लेशेनैव लभ्यते इति भावः॥ २९२॥

मृदुनेति।—सेवया दास्येन, यस्य मोदकस्य इत्यर्थः, निष्पत्तिः प्राप्तिरित्यर्थः, मृदुना कोमलेनापि, सुवृत्तेन सुवर्तुलेन, सुमिष्टेन अतिमधुरेणापि, हारिणा मनःप्रीतिकरेणापि, तेन मोदकेन मिष्टान्नविशेषेणेत्यर्थः, किम्? प्राक् दुःखमनुभूय तस्य लब्धत्वात् तेन न किमपि प्रयोजनमित्यर्थः; यथाकथञ्चित् प्राप्तेन शाकादिनाऽपि उदरपूरणं वरं, न तु सेवया मिष्टान्नभोजनमिति भावः॥ २९३॥

सञ्जीवक आह,—"अथ भवान् किं वक्तुमनाः ?" सोऽब्रवीत्,—"मित्र ! सचिवानां मन्त्रभेदं कर्तुं न युज्यते । उक्तञ्च,—यो मन्त्रं स्वामिनो भिन्द्यात् साचिव्यसन्नियोजितः ।

स हत्वा नृपकार्य्यं तत् स्वयञ्च नरकं व्रजेत् ॥२९४॥

येन यस्य कृतो भेदः सचिवेन महीपतेः ।

तेनाशस्त्रवधस्तस्य कृत इत्याह नारदः ॥२९५॥

तथाऽपि मया तव स्नेहपाशबद्धेन मन्त्रभेदः कृतः, यतस्त्वं मम वचनेनात्र राजकुले विश्वस्तः, प्रविष्टश्च । उक्तञ्च,—

विश्रम्भात् यस्य यो मृत्युमवाप्नोति कथञ्चन ।

तस्य हत्या तदुत्था सा प्राहेदं वचनं मनुः ॥२९६॥

तत् तवोपरि पिङ्गलकोऽयं दुष्टबुद्धिः। कथितञ्च अद्य अनेन मत्पुरतः (न) चतुष्कर्णतया यत्,—'प्रभाते सञ्जीवकं हत्वा समस्तमृगपरिवारं चिरात् तृप्तिं नेष्यामि'। ततः स मयोक्तः,— 'स्वामिन् ! न युक्तमिदं, यत् मित्रद्रोहेण (प) जीवनं क्रियते ।

---

य इति ।—साचिव्ये मन्त्रित्वे, सन्नियोजितः प्रतिष्ठितः, प्रभुणेति शेषः, यो जनः, स्वामिनः प्रभोः, मन्त्रं गूढ़ं परामर्शं, भिन्द्यात प्रकाशयेत्, स दुरात्मा इति भावः, तत् नृपकार्य्यं, हत्वा प्राक् विनाश्य, स्वयञ्च नरकं निरयं, व्रजेत् गच्छेत् ॥ २९४ ॥

येनेति ।—येन सचिवेन मन्त्रिणा, यस्य महीपतेः भेदः मन्त्रभेदः इत्यर्थः, कृतः, तेन मन्त्रिणा, तस्य महीपतेः, अशस्त्रवधः शस्त्रधारणं विना विनाशः, कृत इति नारदः आह ; मन्त्रभेदेन प्रभुवधः सुनिश्चित एवेति भावः ॥ २९५ ॥

विश्रम्भादिति ।—यः जनः, यस्य जनस्य, विश्रम्भात् विश्वासात्, यं जनं विश्वास्येत्यर्थः, कथञ्चन येन केनापि प्रकारेण, मृत्युमवाप्नोति, तस्य विश्वस्तस्य जनस्य इत्यर्थः, सा हत्या हननं, मृत्युरित्यर्थः, [ हन्तेः भावे क्यप् ] तदुत्था तत्कृता विश्वास्यजनकृता एव इत्यर्थः, इदं वचनं मनुः प्राह ॥ २९६ ॥

(न) चतुष्कर्णतया—"षट्कर्णो भिद्यते मन्त्रः" इति महाजनवाक्यात् केवलं द्वयोर्यत् मन्त्रणं तन्मन्त्रस्य चतुष्कर्णत्वमिति भावः ।

(प) जीवनं—जीविका, जीवनधारणमित्यर्थः, "आजीवो जीविका वार्त्ता वृत्तिर्वर्त्तनजीवने" इत्यमरः )।

उक्तञ्च,—अपि ब्रह्मवधं कृत्वा प्रायश्चित्तेन शुध्यति ।
तदर्हेण विचीर्णेन न कथञ्चित् सुहृद्द्रुहः ॥२९७॥

ततस्तेनाहं (फ) सामर्षेणोक्तः,—'भो दुष्टबुद्धे ! सञ्जीवकस्तावत् शष्पभोजी, वयं मांसाशिनः, तदस्माकं स्वाभाविकं वैरम् इति, कथं रिपुरुपेक्ष्यते ? तस्मात् सामादिभिरुपायैर्हन्यते, न च हते तस्मिन् दोषः स्यात् । उक्तञ्च,—

दत्त्वाऽपि कन्यकां वैरी निहन्तव्यो विपश्चिता ।
अन्योपायैरशक्यो यो हते दोषो न विद्यते ॥२९८॥
कृत्याकृत्यं न मन्येत क्षत्रियो युधि सङ्गतः ।
प्रसुप्तो द्रोणपुत्रेण धृष्टद्युम्नः पुरा हतः' ॥२९९॥

तदहं तस्य निश्चयं ज्ञात्वा त्वत्सकाशमिहागतः । साम्प्रतं मे नास्ति विश्वासघातकदोषः; मया सुगुप्तमन्त्रस्तव निवेदितः, अथ यत् ते प्रतिभाति, तत् कुरुष्व" इति । अथ सञ्जीवकस्तस्य तत् वज्रपातदारुणं वचनं श्रुत्वा मोहमुपागतः । अथ चेतनां लब्ध्वा सवैराग्यमिदमाह,—"भोः ! साधु इदमुच्यते,—

---

अपीति ।—ब्रह्मवधमपि कृत्वा, तदर्हेण ब्रह्मवधपापक्षालनयोग्येन, विचीर्णेन विशेषेणानुष्ठितेन, प्रायश्चित्तेन चतुर्विंशतिवार्षिक-द्वादशवार्षिकादिव्रतरूपेण इति भावः, शुध्यति पापात् विमुक्तो भवति, जन इति शेषः ; सुहृद्द्रुहः मित्रद्रोही मित्रद्रोहिणो वा, कथञ्चित् केनापि प्रकारेण, न, शुध्यति वा शुध्यन्तीति शेषः । [अत्र द्रुहधातोः क्वप्रत्यय-क्विप्प्रत्ययभेदेन एकवचन-बहुवचनान्तता बोध्या ] ॥ २९७ ॥

( फ ) सामर्षेण—सक्रोधेन । उपेक्ष्यते—औदासीन्येन त्यज्यते इत्यर्थः ।

दत्त्वेति ।—यः वैरी शत्रुः, अन्योपायैः साधनान्तरैः, अशक्यः असाध्यः, हन्तुमिति शेषः ; विपश्चिता विदुषा, कन्यकां दत्त्वाऽपि, स निहन्तव्यः, हते तस्मिन् वैरिणि विनष्टे सतीत्यर्थः, दोषो न विद्यते ; येन केनापि शत्रुवधो न दोषायेति भावः ॥२९८॥

कृत्येति ।—युधि युद्धे, सङ्गतः उपस्थितः, युयुत्सुरित्यर्थः, क्षत्रियः वीर इति भावः, कृत्याकृत्यं कर्त्तव्याकर्त्तव्यं, न्यायान्यायमित्यर्थः, न मन्येत न विचारयेत् ; तथा हि, पुरा पूर्वस्मिन् काले, द्रोणपुत्रेण अश्वत्थाम्ना, प्रसुप्तः निद्रितः, धृष्टद्युम्नः हतः ॥ २९९ ॥

दुर्जनगम्या नार्यः प्रायेणास्नेहवान् भवति राजा।
कृपणानुसारि च धनं मेघो गिरिदुर्गवर्षी च ॥ १०० ॥
अहं हि सम्मतो राज्ञो य एवं मन्यते कुधीः।
बलीवर्दः स विज्ञेयो विषाणपरिवर्जितः ॥ १०१ ॥
वरं वनं वरं भैक्ष्यं वरं भारोपजीवनम्।
वरं व्याधिर्मनुष्याणां नाधिकारेण सम्पदः ॥ १०२ ॥

तदयुक्तं मया कृतं, यदनेन सह मैत्री विहिता। उक्तञ्च,—

ययोरेव समं वित्तं ययोरेव समं कुलम्।
तयोर्मैत्री विवाहश्च न तु पुष्ट-विपुष्टयोः ॥ १०३ ॥

---

दुर्जनेति।—नार्य्यः प्रायेण दुर्जनगम्याः दुर्जनानां प्राप्याः, लम्पटभोग्याः इत्यर्थः; राजा प्रायेण अस्नेहवान् भवति न कुत्रापि स्निह्यतीत्यर्थः; धनञ्च कृपणानुसारि कृपणोऽदाता, व्ययकुण्ठः इत्यर्थः, तदनुसारि प्रायेण तदाश्रितं, भवतीति शेषः; मेघश्च प्रायेण गिरिदुर्गवर्षी गिरौ दुर्गे दुर्गमनीये स्थाने, कीकटादाविति शेषः, गहनादौ इत्यर्थः, वर्षतीति तथोक्तः; न तु उर्वरक्षेत्रादिषु मेघो बहु वर्षतीति भावः। आर्य्या वृत्तम् ॥१००॥

अहमिति।—यः कुधीः कुबुद्धिः पुमान्, अहं हि अहमेव, राज्ञः [वर्त्तमाने क्तप्रत्ययात् "क्तस्य च वर्त्तमाने" (२।३।६७ पा०) इति सूत्रेण कर्त्तरि षष्ठी] सम्मतः प्रियः इत्यर्थः, इत्येवं मन्यते, स विषाणपरिवर्जितः शृङ्गविहीनः, बलीवर्दः पुङ्गवः, वृषभ इत्यर्थः, विज्ञेयः ज्ञातव्यः; राज्ञामिह जगति न कोऽपि प्रिय इति भावः ॥१०१॥

वरमिति।—मनुष्याणां वनम् अरण्यवासः, वरं मनाक् प्रियं, भैक्ष्यं भिक्षाजीवनमपि, वरं मनाक् प्रियं, तथा भारोपजीवनं भारवहनेन जीवनधारणमपि, वरं मनाक् प्रियं, व्याधिः रोगोऽपि, वरं मनाक् प्रियः; सर्वे चेत् वरं तदा अप्रियं किम्? इत्याह, नाधिकारेणेति।—अधिकारेण नियोज्यव्यापारेण, सेवादिरूपेणेत्यर्थः, सम्पदः न, वरमिति योजना; तस्य एकैकोऽपि क्लेशबहुलत्वात् प्राणनाशकत्वाच्चेति भावः ॥१०२॥

ययोरिति।—ययोर्जनयोः, वित्तं धनं सममेव, ययोः कुलं सममेव, तयोः तादृशयोः तुल्यकुलैश्वर्ययोरेव, मैत्री सौहार्द्दं, विवाहः परिणयश्च, परस्परमिति भावः; शुभाय भवतीति शेषः, पुष्टविपुष्टयोः धनिनिर्धनयोः, कुलीनाकुलीनयोश्च, मैत्री विवाहो वेति शेषः, न तु नैव, शुभायेति भावः ॥१०३॥

तथा च,—मृगा मृगैः सङ्गमनुव्रजन्ति
गावश्च गोभिस्तुरगास्तुरङ्गैः।
मूर्खाश्च मूर्खैः सुधियः सुधीभिः
समानशीलव्यसनेषु सख्यम् ॥ २०४ ॥

तद्यदि गत्वा तं प्रसादयामि, तथाऽपि न प्रसादं यास्यति।

उक्तञ्च,—निमित्तमुद्दिश्य हि यः प्रकुप्यति
ध्रुवं स तस्यापगमे प्रशाम्यति।
अकारणद्वेषपरो हि यो भवेत्
कथं नरस्तं परितोषयिष्यति ? ॥ २०५ ॥

अहो! साधु चेदमुच्यते,—
भक्तानामुपकारिणां परहितव्यापारयुक्तात्मनां
सेवासंव्यवहारतत्त्वविदुषां द्रोहच्युतानामपि।
व्यापत्तिः स्खलितान्तरेषु नियता सिद्धिर्भवेद्वा न वा
तस्मादम्बुपतेरिवावनिपतेः सेवा सदा शङ्किनी ॥२०६॥

---

मृगा इति।—मृगाः कुरङ्गाः, मृगैः स्वजातीयैरिति भावः; गावः गोभिः, तुरगाः अश्वाः, तुरङ्गैः अश्वैः, मूर्खाः मूर्खैः, तथा सुधियः पण्डिताः, सुधीभिः, [सर्वत्र सहार्थे तृतीया] सङ्गं संसर्गम्, अनुव्रजन्ति कुर्वन्ति; यतः, समानशीलव्यसनेषु तुल्याचारेषु समदुःखेषु च जनेषु, सख्यं मैत्री, साधु भवतीति शेषः। उपजातिः वृत्तम् ॥२०४॥

निमित्तमिति।—यः निमित्तं कारणम्, उद्दिश्य अनुसृत्य, प्रकुप्यति कुपितो भवति, स जनः, तस्य कोपनिमित्तस्य, अपगमे नाशे सति, ध्रुवं निश्चितं, प्रशाम्यति शान्तिं गच्छति, वीतक्रोधो भवतीति भावः; यः हि अकारणद्वेषपरः अहेतुकुपितः, भवेत्, नरः लोकः, तं जनम्, अकारणद्वेषिणमित्यर्थः, कथं केन प्रकारेण, परितोष-यिष्यति ? परितुष्टं करिष्यति ? न केनापि इति भावः। वंशस्थविलं वृत्तम् ॥२०५॥

भक्तानामिति।—भक्तानाम् अनुरक्तानाम्, उपकारिणाम् उपकरणशीलानां, परहितव्यापारे परेषां हितानुष्ठाने युक्तः अभिनिविष्टः, आत्मा येषां तथाभूतानां, तथा सेवायाः दास्यस्य, यः संव्यवहारः सम्यगाचरणनियमः, तस्य तत्त्वविदुषां तत्त्वज्ञानां, द्रोहच्युतानां परानिष्टविरतानामपि, सेवकानामिति शेषः, स्खलितान्तरेषु च्युताव-

तथा च,—भावस्निग्धैरुपकृतमपि द्वेष्यतां याति लोके
साक्षादन्यैरपकृतमपि प्रीतये चोपयाति।
दुर्ग्राह्यत्वान्नृपतिमनसां नैकभावाश्रयाणां
सेवाधर्मः परमगहनो योगिनामप्यगम्यः॥ २०७॥

तत् परिज्ञातं मया यत्(ब) प्रसादम् असहमानैः समीपवर्त्तिभिः एष पिङ्गलकः प्रकोपितः। तेनायं मम अदोषस्यापि एवं वदति। उक्तञ्च—प्रभोः प्रसादमन्यस्य न सहन्तीह सेवकाः।
सपत्न्य इव सङ्क्रुद्धाः सपत्न्याः सुकृतैरपि॥ २०८॥

---

कारणहीनेषु, नष्टस्वभावेषु इत्यर्थः, अस्थिरस्वभावेषु च, प्रभुष्विति शेषः, सिद्धिः स्वप्रयोजन-स्येति भावः; भवेत् वा अथवा, न वा नैव, भवेदिति शेषः, सिद्धिविषये सन्देहोऽस्त्येवेत्यर्थः, व्यापत्तिः विपत्तिः आपत्तु, नियता निश्चिता, अवश्यम्भाविनीत्यर्थः, तस्मात् व्यापत्तिनैश्चित्यात् सिद्धेरनियतत्वात्, अम्बुपतेरिव समुद्रस्येव, अवनीपतेः सेवा सदा शङ्किनी भय-जननी, प्राणसंशयावहमित्यर्थः। यथा समुद्रसेवाया रत्नादिलाभः सन्दिग्धः, प्राणरक्षणन्तु प्रायेण न घटते, तद्वत् राजसेवायामपीति भावः। शार्दूलविक्रीडितं वृत्तम्॥२०६॥

भावस्निग्धैरिति।—भावेन भक्त्या, अनुरागेणेत्यर्थः, स्निग्धैः स्नेहान्वितैः जनैः, उपकृतमपि कृतः उपकारोऽपि, लोके संसारे, द्वेष्यताम् अप्रियताम्, अनिष्टभाव-मित्यर्थः, याति प्राप्नोति, अन्यैः अननुरक्तैरित्यर्थः, साक्षात् समक्षमकृतमित्यर्थः, अपकृत-मपि अनिष्टकरणमपि, प्रीतये उपयाति च प्रीतिं जनयति च इत्यर्थः। इत्थं नैक-भावाश्रयाणां विविधाशयवतां, नृपतिमनसां राजहृदयानां, प्रभुचित्तानामिति यावत्, दुर्ग्राह्यत्वात् दुर्बोधत्वात्, परमगहनः अतिदुष्प्रवेशः, सेवाधर्मः परिचर्य्यारूपो विधिः, योगिनामपि त्रैकालिकनिखिलज्ञानशालिनामपीत्यर्थः, अगम्यः दुर्बोधः; प्रभुचित्तं कदा कीदृगाशयं स्यात्, सेवकैः तत् बोद्धुं न शक्यते, अतः तस्य हितकर्मण्यपि अहितबुद्धिः, अहितकर्मण्यपि हितबुद्धिर्जायते; तस्मात् तत्सेवा अतीव दुष्करेति भावः। मन्दाक्रान्ता वृत्तम्॥२०७॥

(ब) प्रसादं—प्रसन्नताम्, अनुग्रहमिति यावत्, मयीति शेषः।

प्रभोरिति।—इह संसारे, सुकृतैः आचरितैरपि, सङ्क्रुद्धाः स्वभाववैरित्वादिति भावः, सपत्न्यः एकपतिकाः स्त्रियः, सपत्न्याः अन्यतरस्याः, प्रसादमिव, पत्युरिति भावः, सेवकाः भृत्याः, अन्यस्य स्वभिन्नस्य, स्वभिन्ने भृत्ये इति भावः; प्रभोः प्रसादं न सहन्ति

भवति चैवं यत्, गुणवत्सु समीपवर्तिषु गुणहीनानां न प्रसादो भवति। उक्तञ्च,—

गुणवत्तरपात्रेण छाद्यन्ते गुणिनां गुणाः।
रात्रौ दीपशिखाकान्तिर्न भानावुदिते सति"॥१०९॥

दमनक आह,—"भो मित्र! यद्येवं, तत् नास्ति ते भयम्। प्रकोपितोऽपि(भ) स दुर्जनैः तव वचनरचनया प्रसादं यास्यति।" स आह,—"भोः! न युक्तमुक्तं भवता, लघूनामपि दुर्जनानां मध्ये वस्तुं न शक्यते, उपायान्तरं विधाय ते नूनं घ्नन्ति।
उक्तञ्च,—बहवः पण्डिताः क्षुद्राः सर्वे मायोपजीविनः।
कुर्य्युः कृत्यमकृत्यं वा उष्ट्रे काकादयो यथा"॥११०॥

दमनक आह,—"कथमेतत्?" सोऽब्रवीत्,—

## कथा ११।

"कस्मिंश्चिद्वनोद्देशे मदोत्कटो नाम सिंहः प्रतिवसति स्म। तस्य च अनुचरा अन्ये (म) द्वीपि-वायस-गोमायवः

न क्षमन्ते। [ वदधातोरात्मनेपदित्वेऽपि अत्र परस्मैपदं चिन्तितं बोध्यम्.—"परस्मैपदिनोऽपि आत्मनेपदिनो क्वचित्" इति नियमादित्यभिप्रायः ॥ १०८ ॥

गुणवत्तरेति।—गुणवत्तरपात्रेण अतिगुणशालिना जनेन, गुणिनाम् अन्यगुणवतां, गुणाः छाद्यन्ते तिरस्क्रियन्ते; तथा हि, दीपशिखायाः कान्तिः शोभा, रात्रौ रजन्यामेव, भवतीति शेषः; भानौ सूर्ये, उदिते सति न, भातीति शेषः; यथा सूर्योदये दीपशिखा न शोभते, तथा गुणवत्तरसन्निधाने अल्पगुणवान् न आद्रियते इति भावः ॥१०९॥

(भ) सः,—पिङ्गलकः इत्यर्थः। वचनरचनया—वाक्कौशलेन।

बहव इति।—बहवः अनेके, पण्डिताः विद्वांसः, नीतिनिपुणा इत्यर्थः, क्षुद्राः नीचाः, मूर्खा वा इत्यर्थः, भवन्तु इति शेषः, ते सर्वे मायोपजीविनः कपटिनः, चेत् भवन्तीति शेषः, तदा उष्ट्रे यथा काकादयः उष्ट्रं प्रति निक्षिप्ताः काकादयः इव, अकृत्यं वा अकर्त्तव्यमपि, [illegible] ; कृत्यं कर्त्तव्यं, कुर्य्युः कुर्वन्तीत्यर्थः; धूर्त्तैः सर्वं कर्त्तुं शक्यते इति भावः ॥ ११० ॥

(म) द्वीपि-वायस-गोमायवः,—शार्दूल-काक-शृगालाः।

सन्ति। अथ कदाचित् तैः इतस्ततो भ्रमद्भिः (य) सार्थभ्रष्टः क्रथनको नाम उष्ट्रो दृष्टः। अथ सिंह आह,—'अहो! (र) अपूर्वमिदं सत्त्वं, तत् ज्ञायतां, किमेतदारण्यं ग्राम्यं वा' इति। तत् श्रुत्वा वायस आह,—'भोः स्वामिन्! ग्राम्योऽयमुष्ट्रनामा जीवविशेषस्तव भोज्यः, तत् व्यापाद्यताम्'। सिंह आह,—'नाहं गृहागतं हन्मि। उक्तञ्च,—

> गृहे शत्रुमपि प्राप्तं विश्वस्तमकुतोभयम्।
> यो हन्यात् तस्य पापं स्याच्छतब्राह्मणघातजम्॥१११॥

तदभयप्रदानं दत्त्वा मत्सकाशमानीयतां, येन अस्यागमनकारणं पृच्छामि'। अथ(ल)असौ सर्वैरपि विश्वास्य अभयप्रदानं दत्त्वा मदोत्कटसकाशमानीतः, प्रणम्योपविष्टश्च। ततस्तस्य (व) पृच्छतस्तेनात्मवृत्तान्तः सार्थभ्रंशसमुद्भवो निवेदितः।

ततः सिंहेनोक्तं,—'भोः क्रथनक! मा त्वं ग्रामं गत्वा भूयोऽपि भारोद्वहनकष्टभागी भूयाः। तदत्रैव अरण्ये निर्विशङ्को मरकतसदृशानि शष्पाग्राणि भक्षयन् मया सह सदैव वस'। सोऽपि 'तथा' इत्युक्त्वा तेषां मध्ये विचरन् न कुतोऽपि भयमिति सुखेन आस्ते।

अथान्येद्युः मदोत्कटस्य महागजेन अरण्यचारिणा सह युद्धमभवत्। ततस्तस्य दन्तमुषलप्रहारैर्व्यथा सञ्जाता;

---

(य) सार्थभ्रष्टः,—यूथच्युतः।

(र) अपूर्वं—न पूर्वं दृष्टमित्यर्थः, आश्चर्यमिति यावत्।

गृहे इति।—यः विश्वस्तम्, अत एव अकुतोभयं निःशङ्कं [नास्ति कुतोऽपि भयं यस्य, मयूरव्यंसकादित्वात् समासः, विभक्तेरलोपश्च]। गृहे प्राप्तं गृहागतं, शत्रुमपि हन्यात्, तस्य शतब्राह्मणघातजं शतब्रह्महत्याजनितं, पापं स्यात् ॥ १११ ॥

(ल) असौ—उष्ट्रः।

(व) पृच्छतः,—जिज्ञासमानस्य। सार्थेति।—सार्थभ्रंशात्—यूथच्युतेः, समुद्भवः,—समुत्पन्नः, यूथभ्रंशजनितावस्था इत्यर्थः।

व्यथितः कथमपि प्राणैर्न वियुक्तः। अथ शरीरासामर्थ्यात् न कुत्रचित् चलितुं शक्नोति। तेऽपि सर्वे काकादयः (अ) अप्रभुत्वेन क्षुधाविष्टाः परं दुःखं भेजुः। अथ तान् सिंहः प्राह,—'भोः! अन्विष्यतां कुत्रचित् किञ्चित् सत्त्वं, येन अहम् एतामपि दशां प्राप्तस्तत् हत्वा युष्मद्भोजनं सम्पादयामि'।

अथ ते चत्वारोऽपि भ्रमितुमारब्धा यावन्न किञ्चित् सत्त्वं पश्यन्ति, तावद्वायस-शृगालौ परस्परं मन्त्रयतः। शृगाल आह,—'भो वायस! किं (ब) प्रभूतभ्रान्तेन? अयमस्माकं प्रभोः क्रथनको विश्वस्तस्तिष्ठति; तदेनं हत्वा प्राणयात्रां कुर्मः'। वायस आह,—'युक्तमुक्तं भवता, परं स्वामिना तस्य अभयप्रदानं दत्तमास्ते, न वध्योऽयम्' इति। शृगाल आह,—'भो वायस! अहं स्वामिनं विज्ञाप्य तथा करिष्ये, यथा स्वामी अस्य वधं करिष्यति; तत्तिष्ठन्तु भवन्तोऽत्रैव, यावदहं गृहं गत्वा प्रभोराज्ञां गृहीत्वा च आगच्छामि'। एवमभिधाय सत्वरं सिंहमुद्दिश्य प्रस्थितः। अथ सिंहमासाद्य इदमाह,—'स्वामिन्! समस्तं वनं (स) भ्रान्त्वा वयमागताः, न किञ्चित् सत्त्वमासादितम्; तत् किं कुर्मो वयम्? सम्प्रति वयं बुभुक्षया पदमेकमपि प्रचलितुं न शक्नुमः, देवोऽपि पथ्याशी वर्त्तते; तत् यदि देवादेशो भवति, तदा क्रथनकपिशितेन अद्य पथ्यक्रिया क्रियते'।

---

(अ) अप्रभुत्वेन—असमर्थत्वेन, स्वयं भक्ष्याहरणे इति भावः।

(ब) प्रभूतभ्रान्तेन—अधिकेन भ्रमणेन, [भ्रमधातोः क्तप्रत्ययः]। प्राणयात्रां—जीवनयापनं, जीवनधारणमित्यर्थः, ("यात्रा तु यापनेऽपि स्यात् गमनोत्सवयोः स्त्रियाम्" इति मेदिनी)।

(स) भ्रान्त्वा—भ्रमित्वा। पथ्याशी—पथ्यं—हितं, ("पथ्या स्त्री हरीतक्यां हिते त्रिषु" इति मेदिनी) यत्किञ्चन हितकरं द्रव्यमिति यावत्, अश्नातीति तथोक्तः, पूर्वेद्युः मत्तदन्तिघातजनितपीडया यत्किञ्चित् हितभोजनार्थी सन् इत्यर्थः। क्रथनकपिशितेन—क्रथनकं हत्वा तन्मांसेनेत्यर्थः। पथ्यक्रिया—हितभोजनकार्य्यम्।

अथ सिंहस्तस्य तदाकर्ण्य वचनमाकर्ण्य सकोपम् इदमाह,—'धिक् पापाधम! यद्येवं भूयोऽपि वदसि, ततः त्वां तत्क्षणमेव वधिष्यामि, यतो मया तस्य अभयं प्रदत्तम्; तत् कथं व्यापादयामि? उक्तञ्च,—

न गोप्रदानं न महीप्रदानं
न चान्नदानं हि तथा प्रधानम्।
यथा वदन्तीह बुधाः प्रधानं
सर्वप्रदानेष्वभयप्रदानम्' ॥३१२॥

तत् श्रुत्वा शृगाल आह,—'स्वामिन्! यदि अभयप्रदानं दत्त्वा वधः क्रियते, तदा एष दोषो भवति. पुनर्यदि देवपादानां भक्त्या स आत्मनो जीवितं प्रयच्छति, तन्न दोषः; ततो यदि स स्वयमेव आत्मानं वधाय नियोजयति, (ङ) तत् वध्यः, अन्यथा अस्माकं मध्यादेकतमो वध्य इति; यतो देवपादाः पथ्याशिनः क्षुन्निरोधादन्त्यां दशां यास्यन्ति; तत् किमेतैः प्राणैः अस्माकं, ये स्वाम्यर्थे न यास्यन्ति? अपरं, पश्चादपि अस्माभिर्वह्निप्रवेशः कार्य्यः, यदि स्वामिपादानां किञ्चिदनिष्टं भविष्यति। उक्तञ्च,—

यस्मिन् कुले यः पुरुषः प्रधानः
स सर्वयत्नैः परिरक्षणीयः।

---

नेति।—इह संसारे, बुधाः विद्वांसः, सर्वप्रदानेषु सर्वप्रकारदानेषु मध्ये, अभयप्रदानम् आश्वासदानमित्यर्थः, यथा प्रधानं वदन्ति, गोप्रदानं गवां विनियोगः, तथा प्रधानं न तादृशं वरं न, तथा महीप्रदानं पृथिवीदानमपि, न तथा—प्रधानं नेत्यर्थः, अन्नदानञ्च तथा प्रधानं न हि नैव, वदन्तीति सर्वत्रानुषङ्गः। उपेन्द्रवज्रेन्द्रवज्रयोरुपजातिः वृत्तम् ॥३१२॥

(ङ) तत्—तदा। पथ्याशिनः,—हितभोजनार्थिन इत्यर्थः। क्षुन्निरोधात्—क्षुधाऽवरोधात्, क्षुधाकाले अभोजनादित्यर्थः। अन्त्यां—चरमाम्। दशाम्—अवस्थाम्।

यस्मिन्निति।—यस्मिन् कुले वंशे, यः पुरुषः प्रधानः सर्वश्रेष्ठः स्यादिति शेषः, स सर्वैः यत्नैः निखिलचेष्टया, परिरक्षणीयः पालनीयः, सर्वेषामेवेति शेषः,

तस्मिन् विनष्टे कुलसारभूते
न नाभिषङ्गे ह्यरयो वहन्ति' ॥ २१३ ॥

तदाकर्ण्य मदोत्कट आह,—'यद्येवं, तत् कुरुष्व यद्रोचते'। तत् श्रुत्वा स सत्वरं गत्वा तान् आह,—'भोः! स्वामिनो महती अवस्था वर्त्तते, तत् किं पर्य्यटितेन? तेन विना कोऽत्र अस्मान् रक्षिष्यति? तत् गत्वा तस्य (च) क्षुद्रोगात् परलोकं प्रस्थितस्य आत्मशरीरदानं कुर्मः, येन स्वामिप्रसादस्य अनृणतां गच्छामः। उक्तञ्च,—

आपदं प्राप्नुयात् स्वामी यस्य भृत्यस्य पश्यतः।
प्राणेषु विद्यमानेषु स भृत्यो नरकं व्रजेत्' ॥ २१४॥

तदनन्तरं ते सर्वे (क) वाष्पपूरितदृशो मदोत्कटं प्रणम्य उपविष्टाः। तान् दृष्ट्वा मदोत्कट आह,—'भोः! प्राप्तं दृष्टं वा किञ्चित् सत्त्वम्?' अथ तेषां मध्यात् काकः प्रोवाच,—'स्वामिन्! वयं तावत् सर्वत्र पर्य्यटिताः, परं न किञ्चित् सत्त्वमासादितं दृष्टं वा; तदद्य मां भक्षयित्वा प्राणान् धारयतु स्वामी, येन देवस्य (ख) आश्वासनं भवति, मम पुनः स्वर्गप्राप्तिरिति।

कुलसारभूते कुलस्य स्थिरांशस्वरूपे, वंशप्रधानतमे इति यावत्, ("सारो बले स्थिरांशे च" इति मेदिनी) तस्मिन् विनष्टे सति, अभिषङ्गे तादृशे पराभवे, ("अभिषङ्गः पराभवे" इत्यमरः) अरयः शत्रवः, न वहन्ति नाप्नुवन्ति, तं कुलमिति शेषः, इति न, अपि तु सर्वतः समाक्रामन्ति इत्यर्थः। उपेन्द्रवज्रेन्द्रवज्रयोरुपजातिः वृत्तम् ॥२१३॥

(च) क्षुद्रोगात्—क्षुत्—क्षुधा एव रोगः,—प्राणान्तकरत्वात् व्याधिस्वरूपत्वात्।

* आपदमिति।—पश्यतः अवलोकयतः, स्वामिप्राणनाशमिति शेषः, न तु दूरस्थितस्येति भावः, यस्य भृत्यस्य प्राणेषु विद्यमानेषु सत्सु, स्वामी आपदं प्राप्नुयात् विपद्येत इत्यर्थः, स भृत्यः नरकं व्रजेत्; प्राणत्यागेन अपि प्रभुरक्षा विधेया इति भावः ॥ २१४ ॥

(क) वाष्पपूरितदृशः,—अश्रुपूर्णनेत्राः।

(ख) आश्वासनं—जीवनधारणम्। स्वर्गप्राप्तिः,—प्रभुरक्षार्थं प्राणदानेनेति भावः।

उक्तञ्च—स्वाम्यर्थे यस्त्यजेत् प्राणान् भृत्यो भक्तिसमन्वितः।
परं स पदमाप्नोति जरामरणवर्जितम्' ॥ ११५ ॥

तत् श्रुत्वा शृगाल आह,—'भोः! (ग) स्वल्पकायो भवान्, तव भक्षणात् स्वामिनस्तावत् प्राणयात्रा न भवति; अपरः (घ) दोषश्च तावत् समुत्पद्यते। उक्तञ्च,—

काकमांसं शुनोच्छिष्टं स्वल्पं तदपि दुर्लभम्।
भक्षितेनापि किं तेन तृप्तिर्येन न जायते? ॥ ११६ ॥

तत् दर्शिता स्वामिभक्तिर्भवता, (ङ) गतञ्च आनृण्यं भर्त्तृपिण्डस्य, प्राप्तश्च (च) उभयलोके साधुवादः; तदपसर अग्रतः, अहं स्वामिनं विज्ञापयामि'। तथाऽनुष्ठिते शृगालः सादरं प्रणम्य उपविष्टः प्रोवाच,—'स्वामिन्! मां भक्षयित्वा अद्य प्राणयात्रां विधाय मम उभयलोकप्राप्तिं कुरु। उक्तञ्च,—

स्वाम्यायत्ताः सदा प्राणा भृत्यानामर्जिता धनैः।
यतस्ततो न दोषोऽस्ति तेषां ग्रहणसम्भवः' ॥ ११७ ॥

---

स्वाम्यर्थे इति।—यो भृत्यः भक्तिसमन्वितः प्रभौ अनुरक्तः सन्, स्वाम्यर्थे प्रभुकार्य्यार्थे, प्राणान् त्यजेत्, स जरामरणवर्जितं जरया वार्द्धक्येन, मरणेन मृत्युना च रहितम्, अपुनरावृत्तिरूपमित्यर्थः, परं पदं मोक्षमित्यर्थः, आप्नोति लभते ॥ ११५ ॥

(ग) स्वल्पकायः,—क्षुद्रदेहः।

(घ) दोषः,—अभक्ष्यभक्षणजनितं पापम् इत्यर्थः, काकमांसस्य अभक्ष्यत्वादिति भावः।

काकमांसमिति।—एतत् इति अध्याहार्य्यम्। एतत् काकमांसम्, अभक्ष्यमिति भावः; तदपि शुना कुक्कुरेण, उच्छिष्टं भुक्तावशेषितम्, तदपि स्वल्पं स्तोकं, तदपि दुर्लभं दुष्प्रापम्; अन्यच्च, येन तृप्तिः परितोषः, न जायते, तेन भक्षितेनापि किम्? फलम् इति शेषः, न किमपि इति भावः ॥ ११६ ॥

(ङ) गतं—प्राप्तम्। आनृण्यम्—ऋणशून्यत्वम्। भर्त्तृपिण्डस्य—स्वाम्यन्नस्य।

(च) उभयलोके—इह परत्र च। साधुवादः,—धन्यवादः, प्रशंसा इत्यर्थः।

स्वाम्येति।—यतः यस्मात्, धनैः अर्जिताः क्रीताः इत्यर्थः, भृत्यानां प्राणाः सदा स्वामिनः आयत्ताः, ततः, तेषां भृत्यप्राणानां, ग्रहणसम्भवः ग्रहणजन्यः, दोषः नास्ति ॥ ११७ ॥

अथ तत् श्रुत्वा द्वीपी प्राह—'भोः ! साधु उक्तं भवता, पुनः भवानपि स्वल्पकायः स्वजातिश्च (क)नखायुधत्वात् अभक्ष्य एव।

उक्तञ्च—नाभक्ष्यं भक्षयेत् प्राज्ञः प्राणैः कण्ठगतैरपि ।
विशेषात्तदपि स्तोकं लोकद्वयविनाशकम् ॥ ३१८ ॥

तत् दर्शितं त्वया आत्मनः ( ख ) कौलीन्यम्। अथवा साध्विदमुच्यते,—

एतदर्थं कुलीनानां नृपाः कुर्वन्ति सङ्ग्रहम् ।
आदिमध्यावसानेषु न ते गच्छन्ति विक्रियाम् ॥३१९॥

तदपसर अग्रतः, येनाहं स्वामिनं विज्ञापयामि'।

तथाऽनुष्ठिते द्वीपी प्रणम्य मदोत्कटमाह,—'स्वामिन् ! क्रियतामद्य मम प्राणैः प्राणयात्रा, दीयतामक्षयो वासः स्वर्गे मम, विस्तार्यतां क्षितितले प्रभूततरं यशः। तत् नात्र विकल्पः कार्यः।

( क ) नखायुधत्वात्—नखास्त्रत्वात्, स्वजातिः; श्वापदा हि नखैरेव अन्यान् पशून् हिंसन्तीति तेषां नखायुधत्वम्; अत एव अभक्ष्यः; जातिभक्षणं नैव दृश्यते कदाचिदिति भावः। पञ्चपञ्चनखातिरिक्तनखायुधपशुभक्षणञ्च शास्त्रनिषिद्धमिति द्रष्टव्यम्

नाभक्ष्यमिति।—प्राज्ञः पण्डितो जनः, प्राणैः कण्ठगतैरपि कण्ठागतप्राणोऽपीत्यर्थः, ["इत्थम्भूतलक्षणे" (२।३।२१ पा०) इति सूत्रेण विशेषणे तृतीया] आहाराभावेन इति भावः; अभक्ष्यं शास्त्रनिषिद्धं वस्तु, न भक्षयेत्; विशेषात् विशेषतस्तु, तदपि अभक्ष्यभक्षणमपीत्यर्थः, स्तोकम् अल्पम्, उदरपरिपोषणासमर्थमित्यर्थः, चेदिति शेषः, लोकद्वयविनाशकम् अकीर्त्तिकरत्वात् नेह लोके प्रशस्यम्, अभक्ष्यत्वात् परलोकव्याघातकञ्चेति भावः॥ ३१८॥

(ख) कौलीन्यम्—आभिजात्यं, सत्कुलप्रसूतत्वम् इत्यर्थः, स्वाम्यनुरागादिति भावः।

एतदर्थमिति।—नृपाः राजानः, एतदर्थम् एतन्निमित्तं, विपत्तौ साहाय्यलाभार्थमित्यर्थः, कुलीनानां महाकुलप्रसूतानां जनानां, सङ्ग्रहं कुर्वन्ति तान् पालयन्ति इत्यर्थः; यतः ते कुलीनाः, आदिमध्यावसानेषु कदापीत्यर्थः, विक्रियां भावान्तरं, न गच्छन्ति न प्राप्नुवन्ति; समभावेनैव तिष्ठन्तीति भावः॥ ३१९॥

उक्तञ्च,—'मृतानां स्वामिनः कार्य्ये भृत्यानामनुवर्त्तिनाम् ।
भवेत् स्वर्गेऽक्षयो वासः कीर्त्तिश्च धरणीतले' ॥ ३२० ॥

तत् श्रुत्वा क्रथनकश्चिन्तयामास,—'एतैः तावत् सर्वैरपि शोभनानि वाक्यानि प्रोक्तानि, न च एकोऽपि स्वामिना विनाशितः ; तदहमपि (भ) प्राप्तकालं विज्ञापयामि, येन मम वचनमेतत् त्रयोऽपि समर्थयन्ति' इति निश्चित्य प्रोवाच,—'भोः ! सत्यमुक्तं भवता, परं भवानपि नखायुधः, तत् कथं भवन्तं स्वामी भक्षयति ? उक्तञ्च,—

मनसाऽपि स्वजात्यानां योऽनिष्टानि प्रचिन्तयेत् ।
भवन्ति तस्य तान्येव इह लोके परत्र च ॥ ३२१ ॥

तदपसर अग्रतः, येन अहं स्वामिनं विज्ञापयामि' ।

तथाऽनुष्ठिते क्रथनकोऽग्रे स्थित्वा प्रणम्योवाच,—'स्वामिन् ! एते तावदभक्ष्या भवतां, तत् मम प्राणैः प्राणयात्रा विधीयतां, येन मम उभयलोकप्राप्तिर्भवति । उक्तञ्च,—

न यज्वानोऽपि गच्छन्ति तां गतिं नैव योगिनः ।
यां यान्ति प्रोज्झितप्राणाः स्वाम्यर्थे सेवकोत्तमाः' ॥३२२॥

---

मृतानामिति ।—स्वामिनः कार्य्ये कार्य्यार्थमित्यर्थः, मृतानां त्यक्तप्राणानाम्, अनुवर्त्तिनाम् अनुरक्तानां, भृत्यानां सेवकानां, स्वर्गे सुरलोके, अक्षयो वासः, धरणीतले च कीर्त्तिः यशः, अक्षया इति शेषः, दृष्टान्तरूपेति भावः, भवेत् जायेत ॥ ३२० ॥

(भ) प्राप्तकालं—समयोचितमित्यर्थः । समर्थयन्ति—अनुमन्यन्ते, सम्यक् स्पृहयन्ति वा, [ समर्थशब्दात् "तत् करोति" (ग०) इति णिचि रूपम् ] ।

मनसेति ।—यः मनसाऽपि, का कथा कार्य्येणेति भावः, स्वजात्यानाम् अनिष्टानि प्रचिन्तयेत, तस्य इह लोके, परत्र च परलोके च, तान्येव अनिष्टानि, भवन्ति ॥३२१॥

नेति ।—सेवकेषु भृत्येषु, उत्तमाः श्रेष्ठाः, स्वाम्यर्थे प्रोज्झिताः परित्यक्ताः, प्राणाः यैः तथाभूताः सन्तः, यां गतिं, यान्ति प्राप्नुवन्ति, यज्वानः विधिना इष्टवन्तोऽपि जनाः, ("यज्वा तु विधिनेष्टवान्" इत्यमरः) तां गतिं न गच्छन्ति, योगिनोऽपि नैव तां गतिं गच्छन्ति इत्यनुषङ्गः ; स्वाम्यर्थमुत्सृष्टप्राणस्य मोक्षप्राप्तिर्भवतीति भावः ॥३२२॥

एवमभिहिते ताभ्यां (ञ) शृगालचित्रकाभ्यां विदारितो-भयकुक्षिः क्रथनकः प्राणान् अत्याक्षीत्। ततश्च तैः (ट) क्षुद्र-पण्डितैः सर्वैर्भक्षितः। अतोऽहं ब्रवीमि,—'बहवः पण्डिताः क्षुद्राः' इति; तद् भद्र! (ठ) क्षुद्रपरिवारोऽयं ते राजा मया सम्यग्ज्ञातः सतामसेव्यश्च। उक्तञ्च,—

अशुद्धप्रकृतौ राज्ञि जनता नानुरज्यते।
यथा गृध्रसमासन्नः कलहंसः समाचरेत्॥ ३२३॥

तथा च,—गृध्राऽऽकारोऽपि सेव्यः स्यात् हंसाकारैः सभासदैः।
हंसाकारोऽपि संत्याज्यो गृध्राकारैः स तैर्नृपः॥३२४॥

तन्नूनं ममोपरि केनचित् दुर्जनेन अयं प्रकोपितः, तेनैवं वदति; अथवा भवति एतत्। उक्तञ्च,—

मृदुना सलिलेन खन्यमाना-
न्यवघृष्यन्ति गिरेरपि स्थलानि।

(ञ) शृगालचित्रकाभ्याम्—जम्बुकद्वीपिभ्याम्।

(ट) क्षुद्रपण्डितैः,—अधमोत्तमैः।

(ठ) क्षुद्रपरिवारः,—नीचाश्रयपरिजन इत्यर्थः।

अशुद्धेति।—अशुद्धा सदोषा, प्रकृतिर्यस्य तादृशे, राज्ञि जनता लोकसमूहः, न अनुरज्यते नानुरागं व्रजति; यथा गृध्रसमासन्नः गृध्रपरिवृतः, कलहंसः समाचरेत् आचरणं कुर्यादित्यर्थः; हिंस्रपक्षिपरिवृतत्वेन निर्मलोऽपि कलहंसः हिंस्राचरणात् जनैर्यथा न सेव्यते, तथा अयं ते राजा इति भावः॥ ३२३॥

गृध्रेति।—नृपः गृध्राकारः गृध्रः शवभोजी निकृष्टपक्षिविशेषः, तस्य आकार इव आकारो यस्य तादृशः, गृध्रवत् आचारवानपीति भावः; हंसाकारैः हंसानामाकार इव आकारो येषां तादृशैः, हंसवत् सुनिर्मलैरिति भावः, सभासदैः सभ्यैः, सचिवादिभिरित्यर्थः, (परिवृतश्चेदिति अध्याहार्य्यं) सेव्यः स्यात्; तत्सङ्गेन हिंस्रप्रकृतेरपि तस्य प्रकृतिपरिवर्त्तनसम्भवादिति भावः। हंसाकारोऽपि हंसवत् सुनिर्मलप्रकृतिरपि, स नृपः, गृध्राकारैः तैः सभ्यैः, परिवृतश्चेत् सन्त्याज्यः; तत्सङ्गेन निर्मलप्रकृतेरपि तस्य प्रकृतिविपर्य्ययसम्भवादिति भावः॥ ३२४॥

मृदुनेति।—गिरेः पर्वतस्यापि, स्थलानि प्रदेशाः, मृदुना कोमलेन, सलिलेन जलेन, खन्यमानानि सततमुपरिदेशात् पतता ताड्यमानानि सन्ति, अवघृष्यन्ति क्षयं गच्छन्ति,

उपजापविदाञ्च कर्णजापैः
किमु चेतांसि मृदूनि मानवानाम् ? ॥३२५॥

कर्णविषेण च भग्नः किं किं न करोति बालिशो लोकः ? ।
क्षपणकतामपि धत्ते पिबति सुरां नरकपालेन ॥ ३२६ ॥

अथवा साधु इदमुच्यते,—

पादाहतोऽपि दृढदण्डसमाहतोऽपि
यं दंष्ट्रया स्पृशति तं किल हन्ति सर्पः ।
कोऽप्येष एव पिशुनोग्रमनुष्यधर्मः
कर्णे परं स्पृशति हन्ति परं समूलम् ॥३२७॥

तथा च,—अहो ! खलभुजङ्गस्य विपरीतो वधक्रमः ।
कर्णे लगति चैकस्य प्राणैरन्यो वियुज्यते ॥ ३२८ ॥

उपजापविदां भेदकुशलानाञ्च, कर्णजापैः पैशुन्यव्यवहारैः, कर्णभञ्जनैः कुमन्त्रणैरित्यर्थः, खण्ड्यमानानि इति पूर्वानुषङ्गः, मानवानां मृदूनि चेतांसि किमु ? नूनमेव विकृतानि भवन्तीत्यर्थः, निरन्तरमतिकोमलजलप्रपातेन कठोरपर्वतस्यापि यतः पार्श्वो ह्रस्यते, अतः भेदपटूनां दारुणैः कुमन्त्रणैः कोमलानां चेतसां विकारस्तु अवश्यमेव सम्भवतीति भावः। मालभारिणी वृत्तम् ॥ ३२५ ॥

कर्णविषेणेति।—कर्णविषेण विषतुल्यकर्णजापेन, कर्णजापस्य अतीवानिष्टफलवात् तत्र विषवारोपः इति ज्ञेयम्, भग्नः भेदं गतः, विकृतचित्त इति भावः, बालिशः मूर्खो लोकः, विद्वांस्तु कर्णजापवचनं न शृणोतीति भावः, किं किं, दुष्कार्यमिति शेषः, न करोति ? सर्वमेव करोतीत्यर्थः। किं बहुना ? क्षपणकतां बौद्धसन्न्यासित्वमपि, धत्ते अवलम्बते, नरकपालेन नृकरोटिकया, सुरां पिबति च, कापालिकतामपि आश्रयतीत्यर्थः, विकृतचित्तत्वादिति भावः ॥३२६॥

पादाहत इति।—सर्पः पादाहतोऽपि चरणदलितोऽपि, दृढेन कठिनेन, अथवा दृढं यथा तथा, दण्डेन समाहतोऽपि प्रताडितोऽपि दंष्ट्रया यं स्पृशति दशतीत्यर्थः, तं हन्ति किल नाशयत्येव, किन्तु एष पिशुनानां खलस्वभावानां,("पिशुनो दुर्जनः खलः" इत्यमरः) उग्राणां दारुणानां, मनुष्याणां धर्मः व्यवसाय इत्यर्थः, कोऽपि आविदितगुण एव, दृष्टैव इत्यर्थः, यत् परं कर्णे स्पृशति एकस्य कर्णे प्रविशतीत्यर्थः, परम् अन्यं जनञ्च, समूलं हन्ति नाशयति, सर्पादपि क्रूरतरः खलः इति भावः। वसन्ततिलकं वृत्तम् ॥३२७॥

अहो इति।—अहो! आश्चर्यम् एतत्, यत् खल एव भुजङ्गः सर्पः तस्य, वध

तदेवंगतेऽपि किं कर्त्तव्यमिति अहं त्वां सुहृद्भावात् पृच्छामि"। दमनक आह,—"तत् देशान्तरगमनं युज्यते, न एवंविधस्य कुस्वामिनः सेवां विधातुम्। उक्तञ्च,—

गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते" ॥२२९॥

सञ्जीवक आह,—"अस्माकमुपरि स्वामिनि कुपिते गन्तुं न शक्यते, न च अन्यत्र गतानामपि (ङ) निर्वृतिः भवति। उक्तञ्च,—महतां योऽपराध्येत दूरस्थोऽस्मीति नाश्वसेत्।
दीर्घौ बुद्धिमतो बाहू ताभ्यां हिंसति हिंसकम् ॥२३०॥

तत् युद्धं मुक्त्वा मे नान्यदस्ति श्रेयस्करम्। उक्तञ्च,—

न तान् हि तीर्थैस्तपसा च लोकान्
स्वर्गैषिणो दानशतैः सुवृत्तैः।
क्षणेन यान् यान्ति रणेषु धीराः
प्राणान् समुज्झन्ति हि ये सुशीलाः ॥२३१॥

क्रमः इत्यानियमः, विपरीतः विभिन्नरूपः ; तथा हि, सः एकस्य कर्णे लगति जपति, अन्यश्च अपरो जनः, प्राणैः वियुज्यते विहीयते ; सर्पस्तु यं दंष्ट्रया स्पृशति तमेव हन्ति, खलः पुनः एकं कर्णे स्पृष्ट्वा तेनैवापरं नाशयतीति विचित्रमिति भावः ॥ २२८ ॥

गुरोरिति।—अवलिप्तस्य उद्धतस्य, कार्य्याकार्य्यं कर्त्तव्याकर्त्तव्यम्, अजानतः, उत्पथप्रतिपन्नस्य कुमार्गगामिनः, गुरोः पित्रादेरपि, परित्यागो विधीयते विहिततया क्रियते इत्यर्थः ; तादृशगुरुत्यागो न दोषायेति भावः ॥ २२९ ॥

(ङ) निर्वृतिः,—सुखम्, उद्वेगशून्यता वा।

महतामिति।—यः महतां बलवताम्, अपराध्येत अपराधं कुर्य्यात्, स दूरस्थोऽस्मि इति मत्वाऽपि न आश्वसेत् न सान्त्वनां प्राप्नुयात् ; यतः बुद्धिमतो जनस्य, बाहू भुजौ, दीर्घौ दूरस्थितवस्तुग्रहणसमर्थौ, ताभ्यां बाहुभ्यां, दूरदेशप्रसृताभ्यामिति भावः, हिंसकम् अपराधिनं, हिंसति नाशयति, स महान् इति शेषः ॥२३०॥

नेति।—ये रणेषु सङ्ग्रामेषु, प्राणान् समुज्झन्ति उत्सृजन्ति, ते क्षणेन प्राणत्यागमात्रेण, न तु विलम्बेनेति भावः, यान् लोकान्, यान्ति प्राप्नुवन्ति, सुशीलाः धीराश्च

मृतैः सम्प्राप्यते स्वर्गो जीवद्भिः कीर्त्तिरुत्तमा।
तदुभावपि शूराणां गुणावेतौ सुदुर्लभौ ॥२२२॥

एवञ्च।—ललाटदेशे रुधिरं स्रवत्तु
शूरस्य यस्य प्रविशेच्च वक्त्रे।
तत् सोमपानेन समं भवेच्च
सङ्ग्रामयज्ञे विधिवत् प्रदिष्टम् ॥ २२३॥

तथा च,—
होमार्थैर्विधिवत् प्रदानविधिना सद्विप्रवृन्दार्चनैः
यज्ञैर्भूरिसुदक्षिणैः सुविहितैः सम्प्राप्यते यत् फलम्।
सत्तीर्थाश्रमवासहोमनियमैश्चान्द्रायणाद्यैः कृतैः
पुम्भिस्तत् फलमाहवे विनिहतैः सम्प्राप्यते तत्क्षणात्" ॥२२४॥

हि निश्चितं, स्वर्गैषिणः स्वर्गकामाः सन्तः, तीर्थैः पुण्यक्षेत्रपर्य्यटनैरित्यर्थः, तपसा चान्द्रायणादिना, तथा सुहुतैः सुसम्पन्नैः, दानव्रतैश्च तान् लोकान्, न हि नैव, यान्तीत्यनुषज्यते; युद्धे मृतस्य सुनिश्चितः स्वर्गवासः इति भावः। उपजातिः वृत्तम् ॥२२१॥

मृतैरिति।—मृतैः, सङ्ग्रामे इति शेषः, स्वर्गः, जीवद्भिः, युद्धं जित्वेति शेषः, उत्तमा कीर्त्तिः सम्प्राप्यते लभ्यते; तत् तस्मात्, शूराणां वीराणाम्, एतौ उभौ अपि स्वर्गलाभयशोलाभरूपाविति भावः, गुणौ सुदुर्लभौ, शूरेतरैरिति भावः ॥ २२२ ॥

ललाटेति।—यस्य तु शूरस्य ललाटदेशे स्रवत् निर्गच्छत्, रुधिरं सङ्ग्रामप्रहारोत्थमिति भावः, वक्त्रे मुखे, प्रविशेच्च, तत् रुधिरं, सङ्ग्रामयज्ञे विधिवत् यथाविधि, सोमपानेन समं तुल्यं, प्रदिष्टं कीर्त्तितं, भवेच्च। उपजातिः वृत्तम् ॥ २२३ ॥

होमार्थैरिति।—पुम्भिः पुरुषैः, विधिवत् यथाविधि, कृतैः सङ्गृहीतैः, होमार्थैः यज्ञीयवस्तुभिः ("अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः) प्रदानविधिना प्रकृष्टेन दानरूपेण विधानेन, सतां विदुषां, विप्रवृन्दानां ब्राह्मणसमूहानाम्, अर्चनैः पूजनैः, तथा सुविहितैः सुनिष्पादितैः, भूरिसुदक्षिणैः बहुशोभनदक्षिणावद्भिः, यज्ञैः सत्सु श्रेष्ठेषु, तीर्थेषु आश्रमेषु च वासैः, होमैः अग्निहोत्रानुष्ठानैरित्यर्थः, नियमैः इन्द्रियसंयमादिभिः, तथा चान्द्रायणाद्यैः व्रतविशेषैः, [ सर्वत्र करणे तृतीया ] यत् फलं, सम्प्राप्यते लभ्यते, तत् फलम् आहवे सङ्ग्रामे, विनिहतैः तत्क्षणात्, न तु विलम्बेनेति भावः, सम्प्राप्यते। शार्दूलविक्रीडितं वृत्तम् ॥ २२४ ॥

तदाकर्ण्य दमनकश्चिन्तयामास,—"युद्धाय कृतनिश्चयोऽयं दृश्यते दुरात्मा, तत् यदि कदाचित् तीक्ष्णशृङ्गाभ्यां स्वामिनं प्रहरिष्यति, तदा महान् अनर्थः सम्पत्स्यते ; तदेनं भूयोऽपि स्वबुद्ध्या (ढ) प्रबोध्य तथा करोमि, यथा देशान्तरगमनं करोति" ; आह च,—"भो मित्र ! सम्यक् अभिहितं भवता, किन्तु कः स्वामिभृत्ययोः सङ्ग्रामः ? उक्तञ्च,—

बलवन्तं रिपुं दृष्ट्वा किलात्मानं प्रगोपयेत् ।
बलवद्भिश्च कर्त्तव्या शरच्चन्द्रप्रकाशता ॥३२५॥

अन्यच्च,—शत्रोर्विक्रममज्ञात्वा वैरमारभते हि यः ।
स पराभवमाप्नोति समुद्रष्टिट्टिभात् यथा" ॥३२६॥

सञ्जीवक आह,—"कथमेतत् ?" सोऽब्रवीत्,—

## कथा १२ ।

"कस्मिंश्चित् समुद्रतीरैकदेशे टिट्टिभदम्पती प्रतिवसतः स्म । ततो गच्छति काले ऋतुसमयमासाद्य टिट्टिभी गर्भमधत्त । अथ आसन्नप्रसवा सती सा टिट्टिभमूचे,—'भोः कान्त ! मम प्रसवसमयो वर्त्तते, तत् विचिन्त्यतां किमपि निरुपद्रवं स्थानं, येन तत्राहम् (ण) अण्डकविमोचनं करोमि' । टिट्टिभः प्राह,—

---

(ढ) प्रबोध्य—सान्त्वयित्वा । स्वामिभृत्ययोरिति ।—सङ्ग्रामः समावस्थयोरेव युज्यते, स्वामिभृत्ययोस्तु साम्याभावात् कथं सङ्ग्रामः ? इति भावः ।

बलवन्तमिति ।—बलवन्तं प्रबलं, रिपुं शत्रुं, दृष्ट्वा आत्मानं प्रगोपयेत् प्रकर्षेण गोपितं कुर्य्यात्, दुर्बल इति शेषः, किलेत्यवधारणे ; बलवद्भिश्च जनैः, शरच्चन्द्रप्रकाशता शरच्चन्द्रवत् आत्मप्रकाश इत्यर्थः, अगोपनमिति भावः, कर्त्तव्या ; बलिभिः सह सङ्ग्रामे बलिनः एव आत्मानं प्रकाशयन्ति, न तु दुर्बला इति भावः ॥३२५॥

शत्रोरिति ।—यः हि शत्रोः विक्रमम् अज्ञात्वा वैरं विरोधम्, आरभते, सः समुद्रः यथा टिट्टिभात् क्षुद्रपक्षिविशेषात्, तथा पराभवम् आप्नोति ॥३२६॥

(ण) अण्डकविमोचनम्—अण्डकानां क्षुद्रडिम्बानां, विमोचनं गर्भात् निःसारणम् ।

'भद्रे ! रम्योऽयं समुद्रप्रदेशः, तदत्रैव प्रसवः कार्य्यः' । सा आह,—'अत्र पूर्णिमादिने (त) समुद्रवेला चरति; सा मत्तगजेन्द्रानपि समाकर्षति, तद्दूरमन्यत्र किञ्चित् स्थानमन्विष्यताम्' । तत् श्रुत्वा विहस्य टिट्टिभः प्राह,—'भद्रे ! न युक्तमुक्तं भवत्या, (थ) का मात्रा समुद्रस्य, या मम दूषयिष्यति प्रसूतिम् ? किं न श्रुतं भवत्या ?—

बद्धाम्बरचरमार्गं व्यपगतधूमं सदा महाभयदम् ।
मन्दमतिः कः प्रविशति हुताशनं स्वेच्छया मनुजः ? ॥३३७॥

मत्तेभकुम्भविदलनकृतश्रमं सुप्तमन्तकप्रतिमम् ।
यमलोकदर्शनेच्छुः सिंहं बोधयति को नाम ? ॥ ३३८ ॥

को गत्वा यमसदनं स्वयमन्तकमादिशत्यजातभयः ।
प्राणानपहर मत्तो यदि शक्तिः काचिदस्ति तव ? ॥३३९॥

---

(त) समुद्रवेला—सागरजलस्य विकृतिः, जलोच्छ्वास इत्यर्थः. ("अब्ध्यम्बुविकृतौ वेला" इत्यमरः) । चरति भवतीत्यर्थः, चन्द्रोदयदर्शनात् वृद्धिं गच्छति इति भावः । सा—वेला । समाकर्षति—आयत्तीकरोति, समाकृष्य जलनिमग्नान् करोतीत्यर्थः ।

(थ) का मात्रा—किं वित्तं, का शक्तिसम्पदिति भावः । प्रसूतिम्—अपत्यं, ("प्रसूतिरुद्भवेऽपि स्यात् तनये दुहितर्य्यपि" इति मेदिनी) ।

बद्धेति ।—कः मन्दमतिः मूढचेताः, मनुजः मानवः, बद्धः रुद्ध इत्यर्थः, अम्बरचराणां खेचराणां, मार्गः पन्थाः येन तादृशं, गगनस्पर्शिशिखामित्यर्थः, व्यपगतधूमं धूमशून्यं, नियतं तीव्रं ज्वलन्तमिति भावः, अत एव सदा महाभयदम् अतिभयङ्करं, हुताशनम् अग्निं, स्वेच्छया प्रविशति ? न कोऽपीत्यर्थः ; मया सह विरोधः हुताशने प्रवेश इव भयङ्करः इति भावः । आर्य्या वृत्तम् ॥ ३३७ ॥

मत्तेति ।—को नाम यमलोकदर्शनेच्छुः सन्, मत्तानां मदस्राविणाम्, इभानां गजानां, कुम्भविदलने मस्तकस्थपिण्डाकारांशविशेषस्य विदारणे इत्यर्थः, कृतः श्रमो येन तादृशम्, अन्तकप्रतिमं यमसदृशं, सुप्तं निद्रितं, सिंहं बोधयति जागरयति ? न कोऽपीत्यर्थः ; कोऽपि मया सह न विवदिष्यतीति भावः । आर्य्या वृत्तम् ॥३३८॥

क इति ।—को जनः, यमसदनं गत्वा अजातभयः निर्भयः सन्, स्वयम् अन्तकं यमं, तव यदि काचित् शक्तिः अस्ति, तदा मत्तः मत्सकाशात्, मम वा, प्राणान्

प्रालेयमिश्रे मरुति प्राभातिके च वाति जड़े ।
गुणदोषज्ञः पुरुषो जलेन कः शीतमपनयति ? ॥२४०॥

तस्मात् ( ट ) विश्रब्धा अत्रैव गर्भं मुञ्च । उक्तञ्च,—

यः पराभवसन्त्रस्तः स्वस्थानं सन्त्यजेन्नरः ।
तेन चेत् पुत्रिणी माता तद्वन्ध्या केन कथ्यते ?' ॥२४१॥

तत् श्रुत्वा समुद्रश्चिन्तयामास,—'अहो ! गर्वः पक्षिकीटस्य अस्य । अथवा साधु च इदमुच्यते,—

उत्क्षिप्य टिट्टिभः पादावास्ते भङ्गभयाद्दिवः ।
स्वचित्तकल्पितो गर्वः कस्य नात्रापि विद्यते ? ॥२४२॥

तन्मया अस्य ( ध ) प्रमाणं कुतूहलादपि द्रष्टव्यं, किं मम एषः अण्डापहारे कृते करिष्यति ?' इति चिन्तयित्वा स्थितः । अथ प्रसवानन्तरं प्राणयात्रार्थं गतायाः टिट्टिभ्याः

---

अपहर, गृहाण, इति आदिशति ? न कोऽपि इत्थमादिशतीत्यर्थः; जीवतो यमपुरगमनमिव मदपत्यविनाशः अतिसाहस इति भावः । आर्या वृत्तम् ॥२३९॥

प्रालेयेति ।—प्रालेयमिश्रे तुषारसंवलिते, ("...तुषारस्तुहिनं हिमम् । प्रालेयं मिहिका च" इत्यमरः ) अत एव जडे अत्यन्तशीतले, प्राभातिके प्रातःकालिके, मरुति वायौ, शैत्योत्पादके इति भावः, वाति वहति सति, गुणदोषज्ञः कश्च को हि, पुरुषः जलेन शीतम् अपनयति निवारयति ? न कोऽपीत्यर्थः । आर्या वृत्तम् ॥२४०॥

( ट ) विश्रब्धा—निःशङ्केत्यर्थः ।

य इति ।—यः नरः पराभवसन्त्रस्तः पराजयाद्भीतः सन्, स्वस्थानं सन्त्यजेत्, माता तज्जननी, चेत् यदि, तेन नरेण, पुत्रिणी पुत्रवती, भवतीति शेषः, तत् तदा, केन कीदृशेन पुत्रेण, वन्ध्या कथ्यते ? कापुरुषमातैव वन्ध्या, न तु अप्रसवा इति भावः ॥२४१॥

उत्क्षिप्येति ।—टिट्टिभः दिवः आकाशस्य, भङ्गभयात् पतनाशङ्कयेत्यर्थः, पादौ उत्क्षिप्य ऊर्द्धीकृत्य, अवष्टम्भनार्थमिति भावः, आस्ते तिष्ठति, तथा हि, अपि प्रश्ने, अत्र जगति, कस्य जनस्य, स्वचित्तकल्पितः गर्वः अहङ्कारः, न विद्यते ? क्षुद्रस्य महतो वा सर्वस्यापि आत्मगर्वः स्वचित्तानुसारी वर्त्तते इत्यर्थः ॥ २४२ ॥

( ध ) प्रमाणं—निदर्शनमित्यर्थः । अण्डापहारे—अण्डानां—डिम्बानाम्, अपहारः,—हरणं, तस्मिन् ।

समुद्रः (न) वेलाव्याजेन अण्डानि अपजहार। अथ आयाता सा टिट्टिभी प्रसवस्थानं शून्यमवलोक्य प्रलपन्ती टिट्टिभमूचे,—'भो मूर्ख! कथितमासीत् मया ते, यत् समुद्रवेलया अण्डानां विनाशो भविष्यति, तद्दूरतरं व्रजावः; परं मूढतया अहङ्कार-माश्रित्य मम वचनं न करोषि। अथवा साधु इदमुच्यते,—

सुहृदां हितकामानां न करोतीह यो वचः।
स कूर्म इव दुर्बुद्धिः काष्ठात् भ्रष्टो विनश्यति' ॥२४२॥

टिट्टिभ आह,—'कथमेतत्?' सा अब्रवीत्,—

## कथा १३।

'अस्ति कस्मिंश्चित् जलाशये कम्बुग्रीवो नाम कच्छपः। तस्य च सङ्कटविकटनाम्नी मित्रे हंसजातीये (प) परमस्नेह-कोटिमाश्रिते नित्यमेव सरस्तीरमासाद्य तेन सह अनेक-देवर्षिमहर्षीणां कथाः कृत्वा अस्तमयवेलायां स्वनीड़संश्रयं कुरुतः। अथ गच्छता कालेन अवृष्टिवशात् सरः शनैः शनैः शोषमगमत्। ततस्तद्दुःखदुःखितौ तौ ऊचतुः,—'भो मित्र! (फ) जम्बालशेषम् एतत् सरः सञ्जातं, तत् कथं भवान् भविष्यति इति व्याकुलत्वं नो हृदि वर्त्तते'। तत् श्रुत्वा

(न) वेलाव्याजेन—स्रोतोऽम्बुविकृतिच्छलेन, जलोच्छ्रामच्छलेनेत्यर्थः, ("अब्ध्यम्बुविकृतौ वेला कालमर्य्यादयोरपि" इत्यमरः)।

सुहृदामिति।—इह जगति, यः हितकामानां हितार्थिनां, सुहृदां वचः न करोति न शृणोतीत्यर्थः, न प्रतिपालयतीति यावत्, स दुर्बुद्धिः काष्ठात् भ्रष्टः स्खलितः, कूर्मः इव विनश्यति ॥ २४२ ॥

(प) परमस्नेहकोटिं—प्रणयातिशय्यम्। अस्तमयवेलायां—सायङ्काले। स्वनीड़संश्रयं—निजवासाश्रयम्।

(फ) जम्बालशेषं—कर्दमावशिष्टं, ("निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शाद-कर्दमौ" इत्यमरः)।

कम्बुग्रीवः आह,—'भोः ! साम्प्रतं न अस्ति अस्माकं जीवितव्यं जलाभावात्। तथाऽपि उपायश्चिन्त्यतामिति। उक्तञ्च,—

त्याज्यं न धैर्यं विधुरेऽपि काले
धैर्यात् कदाचिद्गतिमाप्नुयात् सः।
यथा समुद्रेऽपि च पोतभङ्गे
सांयात्रिको वाञ्छति तर्त्तुमेव ॥ २४४ ॥

अपरञ्च,—मित्रार्थे बान्धवार्थे च बुद्धिमान् यतते सदा।
जातास्वापत्सु यत्नेन जगादेदं वचो मनुः ॥ २४५ ॥

तत् अन्विष्यतां (व) प्रभूतजलसनाथं सरः, आनीयताञ्च काचित् दृढरज्जुः लघुकाष्ठं वा, येन मया मध्यप्रदेशे दन्तैर्गृहीते सति युवां कोटिभागयोः तत् काष्ठं मया सहितं सङ्गृह्य तत् सरो नयथः'। तौ ऊचतुः,—'भो मित्र ! एवं करिष्यावः, परं (भ) भवता मौनव्रतेन स्थातव्यं, नो चेत् तव काष्ठात् पातो भविष्यति'। तथा अनुष्ठिते, गच्छता कम्बुग्रीवेण

त्याज्यमिति।—काले समये, विधुरे विकलेऽपि, शोकादजन्यवैकल्यसमयेऽपीत्यर्थः, धैर्यं धीरत्वं, न त्याज्यम् अवलम्बनीयमित्यर्थः, जनेनेति शेषः; सः तादृशसमयेऽपि धैर्यवान् पुरुष इत्यर्थः, धैर्यात् धीरतासंश्रयात, कदाचित् गतिम् उपायम, आप्नुयात्; यथा समुद्रे पोतभङ्गे यानध्वमनेऽपि, सांयात्रिकः पोतवणिक्, तर्त्तुमेव वाञ्छति, धैर्याश्रयेणेति भावः, अधीरतया न निश्चेष्टस्तिष्ठतीत्याशयः। उपजातिः वृत्तम् ॥ २४४ ॥

मित्रार्थे इति।—आपत्सु जातासु उपस्थितासु सतीषु, बुद्धिमान् जनः, मित्रार्थे सुहृन्निमित्ते, बान्धवार्थे पित्राद्यर्थे च, सदा यत्नेन आयासातिशयेन, यतते विपदुद्धरणार्थं चेष्टते, मनुः इदं वचो जगाद उक्तवान् ॥ २४५ ॥

(व) प्रभूतजलसनाथ—बहुजलपूर्णम् इत्यर्थः। लघुकाष्ठं—क्षुद्रकाष्ठम्। कोटिभागयोः,—प्रान्तभागयोः।

(भ) भवता—त्वया, मौनव्रतेन—मौनिना इत्यर्थः। नो चेत्—अन्यथा, मौनत्यागे सति इत्यर्थः।

(म) अधोभागव्यवस्थितं किञ्चित् पुरमालोकितम्। तत्र ये पौराः, ते तथा नीयमानं विलोक्य सविस्मयमिदमूचुः,—'अहो ! चक्राकारं किमपि पक्षिभ्यां नीयते, पश्यत पश्यत'। अथ तेषां कोलाहलमाकर्ण्य कम्बुग्रीवः,—'भोः ! किमेष कोलाहलः ?' इति वक्तुमना अर्द्धोक्ते पतितः, पौरैः खण्डशः कृतश्च। अतोऽहं ब्रवीमि,—'सुहृदां हितकामानाम्' इति। तथा च,—

अनागतविधाता च प्रत्युत्पन्नमतिस्तथा।
द्वावेतौ सुखमेधेते यद्भविष्यो विनश्यति' ॥२४६॥

टिट्टिभ आह,—'कथमेतत् ?' सा अब्रवीत्,—

## कथा १४।

कस्मिंश्चित् जलाशये अनागतविधाता प्रत्युत्पन्नमतिः यद्भविष्यश्चेति त्रयो मत्स्याः सन्ति। अथ कदाचित् तं जलाशयं दृष्ट्वा गच्छद्भिर्मत्स्यजीविभिरुक्तम्—'अहो! बहुमत्स्योऽयं ह्रदः कदाचिदपि न अस्माभिरन्वेषितः ; तदद्य तावत् (य) आहारवृत्तिः सञ्जाता, सन्ध्यासमयश्च संवृत्तः ; ततः प्रभातेऽत्र आगन्तव्यम इति निश्चयः'। ततस्तेषां तत् (र) कुलिशपातोपमं वचः समाकर्ण्य अनागतविधाता सर्वान् मत्स्यान् आहूय इदमूचे,—'अहो ! श्रुतं भवद्भिः यत् मत्स्यजीविभिरभिहितम् ? तत् रात्रावेव गम्यतां किञ्चित् निकटं सरः। उक्तञ्च,—

(म) अधोभागव्यवस्थितं—निम्नस्थितम।

अनागतेति।—अनागतस्य अनुपस्थितस्य, विषयस्येति भावः, विधाता प्रतिकर्त्ता, भविष्यद्विचिन्त्य कर्मकर्त्ता इत्यर्थः, तथा प्रत्युत्पन्ना तत्कालोचिता, विपत्प्रतीकारसमर्था इत्यर्थः, मतिः बुद्धिः यस्य तथोक्तः, विपदुपस्थितावेव सञ्जाततत्प्रतीकारबुद्धिरित्यर्थः, एतौ द्वौ सुखं यथा तथा एधेते वृद्धिं गच्छतः, यत् भविष्यं भाव्यं यस्य तथोक्तः, यत् भविष्यति तत् भविष्यत्येव इति भाग्यनिर्भरात् प्रतीकारपराङ्मुखः इत्यर्थः, विनश्यति ॥२४६॥

(य) आहारवृत्तिः,—भोजनव्यापारः, क्षुधोद्रेको वा। संवृत्तः,—उपस्थितः।

(र) कुलिशपातोपमं—वज्रपातसदृशम्। अभिहितम्—उक्तम्।

अशक्तैर्बलिनः शत्रोः कर्त्तव्यं प्रपलायनम् ।
संश्रितव्योऽथवा दुर्गो नान्या तेषां गतिर्भवेत् ॥१४७॥

तन्नूनं प्रभातसमये मत्स्यजीविनोऽत्र समागम्य मत्स्यसङ्क्षयं करिष्यन्ति, एतन्मम मनसि वर्त्तते ; तन्न युक्तं साम्प्रतं क्षणमपि अत्रावस्थातुम् । उक्तञ्च,—

विद्यमाना गतिर्येषामन्यत्रापि सुखावहा ।
ते न पश्यन्ति विद्वांसो देहभङ्गं कुलक्षयम्' ॥ १४८ ॥

तदाकर्ण्य प्रत्युत्पन्नमतिः प्राह,—'अहो ! सत्यमभिहितं भवता, ममापि अभीष्टमेतत्, तदन्यत्र गम्यतामिति । उक्तञ्च,—

परदेशभयाद्भीता बहुमाया नपुंसकाः ।
स्वदेशे निधनं यान्ति काकाः कापुरुषा मृगाः ॥ १४९ ॥

तथा च,—यस्यास्ति सर्वत्र गतिः स कस्मात्
स्वदेशरागेण हि याति नाशम् ? ।

---

अशक्तैरिति ।—अशक्तैः दुर्बलैः, जनैरिति शेषः, बलिनः बलवतः,शत्रोः सकाशा-दिति भावः, प्रपलायनं प्रकर्षेण पलायनं, कर्त्तव्यम ; अथवा दुर्गः कोट्टः, "गड़" "केल्ला" इति वा ख्यातं पर्वतप्राचीरादिवेष्टितं अगम्यस्थानमित्यर्थः, संश्रितव्यः आश्रयणीयः, [विवक्षया इडभावः, गुणाभावश्च छान्दसः । वस्तुतस्तु 'संश्रयितव्यः' इत्येव प्रयोगः साधुः ] ; तेषां दुर्बलानाम्, अन्या गतिः पलायनं विना अन्यः उपायः, न भवेत् नास्ति इत्यर्थः ॥ १४७ ॥

विद्यमानेति ।—येषां जनानाम, अन्यत्रापि स्थानान्तरेऽपि, सुखावहा सम्यक् सुखजनिका,गतिः उपायः, अनायासम् अवस्थानोपाय इत्यर्थः, विद्यमाना अस्तीत्यर्थः, ते विद्वांसः देहभङ्गं निजशरीरक्षयं, कुलक्षयं वंशनाशञ्च, न पश्यन्ति ॥१४८ ॥

परेति ।—काकाः वायसाः, कापुरुषाः भीरवः, मृगाः हरिणाश्च, एते त्रयः पर-देशभयात् भीताः परकीये देशे कथं वत्स्यामिति सन्त्रस्ताः, बहुमायाः स्वदेशं प्रति सातिशयममताशालिनः, अत एव नपुंसकाः क्लीबाः, अक्षमा इति भावः, सुतरां स्वदेशे निधनं नाशं, यान्ति प्राप्नुवन्ति ॥ १४९ ॥

यस्येति ।—यस्य जनस्य, सर्वत्र गतिः गमनोपायः, अस्ति, स जनः, स्वदेशरागेण

तातस्य कूपोऽयमिति ब्रुवाणाः
क्षारं जलं कापुरुषाः पिबन्ति' ॥ ३५० ॥

अथ तत् समाकर्ण्य प्रोच्चैर्विहस्य यद्भविष्यः प्रोवाच,—'अहो ! न भवद्भ्यां मन्त्रितं सम्यगेतत्, यतः, किं वाङ्मात्रेणापि (ल)तेषां पितृपैतामहकम् एतत् सरः त्यक्तुं युज्यते ? यदि आयुःक्षयोऽस्ति, तदन्यत्र गतानामपि मृत्युर्भविष्यति एव। उक्तञ्च,—

अरक्षितं तिष्ठति दैवरक्षितं
सुरक्षितं दैवहतं विनश्यति।
जीवत्यनाथोऽपि वने विसर्जितः
कृतप्रयत्नोऽपि गृहे विनश्यति ॥३५१॥

तदहं न यास्यामि, भवद्भ्याञ्च यत् प्रतिभाति तत् कर्त्तव्यम्'।

अथ तस्य तं निश्चयं ज्ञात्वा अनागतविधाता प्रत्युत्पन्नमतिश्च निष्क्रान्तौ सह परिजनेन। अथ प्रभाते तैर्मत्स्यजीविभिः जालैस्तं जलाशयमालोड्य यद्भविष्येण सह तत् सरो निर्मत्स्यतां नीतम्। अतोऽहं ब्रवीमि,—'अनागतविधाता च' इति'।

तत् श्रुत्वा टिट्टिभ आह,—'भद्रे ! किं मां यद्भविष्यसदृशं सम्भावयसि ? तत् पश्य मे बुद्धिप्रभावं, यावदेनं दुष्टसमुद्रं

---

निजदेशप्रियतया, कस्मात् कथं, नाशं याति प्राप्नोति ? कापुरुषाः जनाः, तातस्य पितुः, अयं कूप इति ब्रुवाणाः वदन्तः सन्तः, क्षारं लवणाक्तं, जलं पिबन्ति, पैत्रं स्वम् इति मायया बद्धाः तत्यक्त्वा न कुत्रापि गच्छन्तीति भावः। उपजातिः वृत्तम् ॥३५०॥

(ल) तेषां—मत्स्यजीविनाम्। पितृपैतामहकं—पितृपितामहक्रमेणाध्युषितम्।

अरक्षितमिति।—अरक्षितं यत्नेन अप्रतिपालितमपीत्यर्थः, वस्तु इति शेषः, दैवरक्षितं दैवेन भाग्येन, रक्षितं त्रातं सत्, तिष्ठति; सुरक्षितं यत्नपालितमपि वस्तु, दैवहतं दैवेन विडम्बितं, विनश्यति न तिष्ठतीत्यर्थः; वने विसर्जितः [ स्वार्थे णिजन्तात् कर्मणि क्तः ] परित्यक्तः, अनाथोऽपि अशरणोऽपि, जीवति; गृहे कृतप्रयत्नोऽपि जनः, विनश्यति नाशं गच्छति। वंशस्थविलं वृत्तम् ॥ ३५१ ॥

स्वचञ्च्वा शोषयामि'। टिट्टिभी आह,—'अहो ! कस्ते समुद्रेण सह विग्रहः ? तन्न युक्तमस्योपरि कोपं कर्त्तुम्।

उक्तञ्च,—पुंसामसमर्थानामुपद्रवायात्मनो भवेत् कोपः।

पिठरं ज्वलदतिमात्रं निजपार्श्वानेव दहतितराम्॥२५२॥

तथा च,—अविदित्वाऽऽत्मनः शक्तिं परस्य च समुत्सुकः।

गच्छन्नभिमुखो नाशं याति वह्नौ पतङ्गवत्' ॥२५३॥

टिट्टिभ आह,—'प्रिये ! मा मैवं वद, येषाम् (व) उत्साह-शक्तिः भवति, ते स्वल्पा अपि गुरून् विक्रमन्ते। उक्तञ्च,—

विशेषात् परिपूर्णस्य याति शत्रोरमर्षणः।

आभिमुख्यं शशाङ्कस्य यथाऽद्यापि विधुन्तुदः॥ २५४ ॥

तथा च,—प्रमाणादधिकस्यापि गण्डश्याममदच्युतः।

पदं मूर्ध्नि समाधत्ते केशरी मत्तदन्तिनः॥ २५५ ॥

---

पुंसामिति।—असमर्थानाम् अक्षमाणां, पुंसां कोपः आत्मनः स्वस्य, उपद्रवाय नाशाय इत्यर्थः, भवेत्; तथा हि, अतिमात्रं ज्वलत् पिठरं स्थाली,["पिठरः स्थाल्युखा कुण्डम्" इत्यमरः। अत्र क्लीवत्वं चिन्त्यम्] निजपार्श्वानेव दहतितराम् अतिशयेन दहति; तत्पात्रं नितरां दह्यमानं रक्तीभूतमपि स्वमेव दहतीति निष्कर्षः। आर्य्या वृत्तम॥ २५२॥

अविदित्वेति।—आत्मनः परस्य च शक्तिम् अविदित्वा अविविच्य, समुत्सुकः समुत्तेजितः सन्, अभिमुखो गच्छन् जनः, वह्नौ पतङ्गवत् नाशं याति॥ २५३॥

(व) उत्साहशक्तिः,—अध्यवसायः। स्वल्पाः,—क्षुद्राः। विक्रमन्ते—अतिक्रमन्ते इत्यर्थः, [तच्च चिन्त्यम्]।

विशेषादिति।—विधुन्तुदो राहुः, अद्यापि यथा परिपूर्णस्य शशाङ्कस्य आभिमुख्यं याति, तथा अमर्षणः कोपनः जनः, विशेषात् विशेषेण, परिपूर्णस्य शत्रोः आभिमुख्यं याति गच्छति; न हि शूराः दुर्बलान् बाधयन्तीति भावः॥ २५४॥

प्रमाणादिति।—केशरी सिंहः, प्रमाणात् स्वपरिमाणात्, अधिकस्य अतिविशालस्य, उन्नतस्येत्यर्थः, गण्डयोः श्यामस्य श्यामवर्णस्य, मदस्य च्युतिः क्षरणं यस्य तादृशस्य, मदस्राविण इत्यर्थः, मत्तदन्तिनः मत्तगजस्यापि, मूर्ध्नि शिरसि पदं समाधत्ते अर्पयति; क्षुद्राकारोऽपि उत्साही महाकायं शत्रुं पराजयते इति भावः॥ २५५॥

तथा च,—बालस्यापि रवेः पादाः पतन्त्युपरि भूभृताम्।
तेजसा सह जातानां वयः कुत्रोपयुज्यते ? ॥२५६॥

एवञ्च।—

हस्ती स्थूलतरः स चाङ्कुशवशः, किं हस्तिमात्रोऽङ्कुशः ?
दीपे प्रज्वलिते प्रणश्यति तमः, किं दीपमात्रं तमः ?।
वज्रेणापि हताः पतन्ति गिरयः, किं वज्रमात्रो गिरिः ?
तेजो यस्य विराजते स बलवान्, स्थूलेषु कः प्रत्ययः ? ॥२५७॥

तदनया चञ्च्वा अस्य सकलं तोयं शुष्कस्थलतां नयामि'।

टिट्टिभी आह,—'भोः कान्त ! यत्र जाह्नवी नदनदीशतानि गृहीत्वा नित्यमेव प्रविशति तथा (अ) सिन्धुश्च, तस्य कथं त्वम् अष्टादशनदीशतैः पूर्य्यमाणस्य तत् विप्रुषवाहिन्या चञ्च्वा शोषयिष्यसि ? तत् किमश्रद्धेयेन उक्तेन ?'। टिट्टिभ आह,—'प्रिये !—

बालस्येति।—बालस्य नवोदितस्य अपि, अल्पतेजस इति भावः, रवेः सूर्य्यस्य, प्रकृत्या चण्डांशोरिति भावः, पादाः किरणाः, भूभृतां पर्वतानाम् एव, दृढोन्नतानामिति भावः; उपरि, न त्वधः इति भावः, पतन्ति. तेजसा सह जातानाम् उत्पन्नानां, तेजस्विनामित्यर्थः, वयः तारुण्यप्रौढत्वादिकं, कुत्र उपयुज्यते उपयोगि भवति ? न कुत्रापीत्यर्थः। तेजीयस अल्पकायस्यापि जयः, न तु महाकायस्यापि निस्तेजस इति भावः॥ २५६॥

हस्तीति।—हस्ती स्थूलतरः अतिशयेन स्थूलकाय इत्यर्थः, स च हस्ती, अङ्कुशस्य वशः, हस्तिताडनदण्डस्य इत्यर्थः, वशः अधीनः; सः अङ्कुशः किं हस्तिमात्रः ? हस्तिप्रमाणः ? नैवेत्यर्थः, [ परिमाणार्थे मात्रच् प्रत्ययः ] दीपे प्रज्वलिते तमः तिमिरं, प्रणश्यति, तत् तमः किं दीपमात्रं दीपप्रमाणम् ? नैवेत्यर्थः। वज्रेण हतं हतसङ्काशाः, गिरयः पर्वताः, पतन्ति, गिरिः किं वज्रमात्रः वज्रपरिमाणः ? नैवेत्यर्थः; वज्रमतिक्षुद्रं, गिरिस्तु अतिमहानिति भावः; एवं पूर्वयोरपि बोध्यम्; अत एव यस्य तेजः विराजते विशेषेण भाति, स बलवान्, भवतीति शेषः. स्थूलेषु पृथुषु, महाकायेषु इत्यर्थः, प्रत्ययः विश्वासः कः ? नास्ति कोऽपि विश्वास इत्यर्थः; शक्तिरेव सर्वैरादृियते, न स्थूलत्वादिकमिति भावः। शार्दूलविक्रीडितं वृत्तम्॥ २५७॥

(अ) सिन्धुः,—नदविशेषः। तस्य—सागरस्य। तत्—तोयम्। विप्रुषवाहिन्या—जलादीनां कणवाहिन्या इत्यर्थः। अश्रद्धेयेन—विश्वासायोग्येन।

अनिर्वेद: श्रियो मूलं चञ्चुर्मे लोहसन्निभा।
अहोरात्राणि दीर्घाणि समुद्र: किं न शुष्यति ?॥ २५८ ॥

किञ्च।—दुरधिगम: परभागो यावत् पुरुषेण पौरुषं न कृतम्।
जयति तुलामधिरूढो भास्वानपि जलदपटलानि'॥ २५९॥

टिट्टिभी आह,—'यदि त्वया अवश्यं समुद्रेण सह विग्रहानुष्ठानं कार्य्यं, तदन्यानपि विहङ्गमानाहूय सुहृज्जनसहित: एवं समाचर। उक्तञ्च,—

बहूनामप्यसाराणां समवायो हि दुर्जय:।
तृणैरावेष्ट्यते रज्जुर्येन नागोऽपि बध्यते॥ २६० ॥

तथा च—चटका-काष्ठकूटेन मक्षिका-दर्दुरैस्तथा।
महाजनविरोधेन कुञ्जर: प्रलयं गत:॥ २६१ ॥

---

अनिर्वेद इति।—निर्वेद: स्वावमाननं, स्वावज्ञा इत्यर्थ:,तदन्य: अनिर्वेद: स्वोत्कर्षज्ञानमित्यर्थ:, उत्साहावलम्बनमिति भाव:, श्रिय: सम्पद:, मूलं निदानम्; मे मम, चञ्चु: लोहसन्निभा लोहवत् कठिना; दीर्घाणि महान्ति, अहोरात्राणि च, सन्तीति शेष:, [अहोरात्रान् इति साधु:, रात्रान्तशब्दस्य पुंलिङ्गत्वात] समुद्र: किं न शुष्यति ? न शोषं याति ? अपि तु शुष्यत्येवेत्यर्थ:; सोत्साहोऽहं कठिनया चञ्च्वा दीर्घैरहोरात्रै: समुद्रं शोषयिष्यामीति आशय:॥ २५८॥

दुरधिगम इति।—पुरुषेण यावत् पौरुषं न कृतं नानुष्ठितं, भवेदिति शेष:, तावत् परभाग उत्कर्ष:, दुरधिगम: दुर्लभ:; पराक्रमं विना महत्त्वं न प्रकाशते इति भाव:। भास्वान् सूर्य्योऽपि, का कथा अन्येषामिति भाव:, तुलां राशिविशेषम, अधिरूढ: सन्, जलदपटलानि मेघवृन्दानि, जयति; तुलायां रविर्मेघैराच्छाद्यते इति भाव:; यावत् पराक्रमो न प्रकाश्यते, तावत् महताऽपि वैरिनिर्य्यातनं कर्त्तुं न शक्यते इति निष्कर्ष:। आर्य्या वृत्तम्॥ २५९॥

बहूनामिति।—असाराणां सारहीनानामपि, बहूना बहूनां, समवाय: संहति:, दुर्जय: जेतुमशक्य:, हि तथा हि, तृणै: अतितुच्छैर्लताप्रतानादिभि:, रज्जु: पाश:, आवेष्ट्यते विरच्यते इति भाव:, येन संहतेन तृणेन, नागोऽपि गजोऽपि, बध्यते बद्ध: क्रियते; अतो बहूनामस्माकमपि समवाय: समुद्रं शोषयिष्यतीति भाव:॥ २६०॥

चटकेति।—चटकया सह काष्ठकूटेन "काठठोकरा" इति प्रसिद्धेन पक्षिणा,

टिट्टिभ आह,—'कथमेतत् ?' सा प्राह,—

## कथा १५ ।

'कस्मिंश्चित् वनोद्देशे चटकदम्पती तमालतरुकृतनिलयौ प्रतिवसतः स्म । अथ तयोर्गच्छता कालेन सन्ततिः अभवत् । अन्यस्मिन्नहनि कश्चित् प्रमत्तो वनगजः (च) घर्मार्त्तश्छायार्थी तं तमालवृक्षं समाश्रितः । ततः ( ख ) मदोत्कर्षात् तां तस्य शाखां चटकाश्रितां पुष्कराग्रेण आकृष्य बभञ्ज । तस्या भङ्गेन चटकाण्डानि सर्वाणि ( ज ) विशीर्णानि, आयुःशेषतया च चटकौ कथमपि प्राणैर्न वियुक्तौ । अथ चटका स्वाण्डभङ्गाभिभूता प्रलापान् कुर्वाणा न किञ्चित् सुखमाससाद । अत्रान्तरे तस्यास्तान् प्रलापान् श्रुत्वा काष्ठकूटो नाम पक्षी तस्याः परमसुहृत् तद्दुःखदुःखितोऽभ्येत्य ताम् उवाच,—'भगवति ! किं वृथा प्रलापेन ? उक्तञ्च,—

नष्टं मृतमतिक्रान्तं नानुशोचन्ति पण्डिताः ।
पण्डितानाञ्च मूर्खाणां विशेषोऽयं यतः स्मृतः ॥ २६२ ॥

तथा मक्षिकया सह मिलितैः दर्दुरैः भेकैः, एवं महाजनविरोधेन महतां बहूनामित्यर्थः, जनानां विरोधेन, कुञ्जरः गजः, प्रलयं नाशं, गतः ॥ २६१ ॥

( च ) घर्मार्त्तः,—आतपपीडितः ।

( ख ) मदोत्कर्षात्—मत्तताऽतिरेकात्, अहङ्काराऽऽधिक्याच्च इति शेषः । पुष्कराग्रेण—शुण्डाग्रेण ।

( ज ) विशीर्णानि—भग्नानि । आयुःशेषतया—आयुषः अवशिष्टतया ।

नष्टमिति ।—पण्डिताः विद्वांसः,नष्टम् अदर्शनं गतं, द्रव्यमिति शेषः, चौरादिभिरपहृततयेति भावः ; मृतं निधनं गतं, पुत्रकलत्रादिस्वजनमिति शेषः, अतिक्रान्तम् अतीतञ्च, व्यापारमिति शेषः, न अनुशोचन्ति एतत् त्रयमुद्दिश्य शोकं न प्रकाशयन्तीत्यर्थः ; यतः पण्डितानां मूर्खाणाञ्च अयं विशेषः प्रभेदः,स्मृतः उक्तः ; त्वमपि ज्ञानिजनाचरितमनुसृत्य नष्टानां सन्तानानां कृते मा शुचः इत्यभिप्रायः ॥ २६२ ॥

तथा च,—अशोच्यानीह भूतानि यो मूढस्तानि शोचति।
स दुःखे लभते दुःखं द्वावनर्थौ निषेवते ॥ २६३ ॥

अन्यच्च—श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः।
तस्मान्न रोदितव्यं हि क्रियाः कार्य्याश्च शक्तितः' ॥२६४॥

चटका प्राह,—'अस्त्वेतत्, परं दुष्टगजेन (च) मदात् मम सन्तानक्षयः कृतः, तत् यदि मम त्वं सुहृत् सत्यः, तदस्य गजापसदस्य कोऽपि वधोपायश्चिन्त्यताम्; तस्य अनुष्ठानेन मे सन्ततिनाशदुःखमपसरेदिति। उक्तञ्च,—

आपदि येनापकृतं येन च हसितं दशासु विषमासु।
अपकृत्य तयोरुभयोः पुनरपि जातं नरं मन्ये' ॥ २६५ ॥

काष्ठकूट आह,—'भगवति! सत्यमभिहितं भवत्या।

---

अशोच्यानीति।—इह जगति, भूतानि प्राणिनः, ("युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु" इत्यमरः) अशोच्यानि शोकानर्हाणि, यो मूढः तानि भूतानि, शोचति, स दुःखे नाशजन्ये एकस्मिन् सतीति भावः, दुःखं शोकजन्य-मपरं लभते; अतः द्वौ अनर्थौ नष्टादिजन्यमेकं तदनुशोचनेनानशनादिरूपद्वा-परमिति भावः, निषेवते अनुभवति ॥ २६३ ॥

श्लेष्मेति।—यतः प्रेतः मृतः, अवशः पराधीनः, अनिच्छन्नपीति भावः, बान्धवैः मुक्तं पातितं, श्लेष्माश्रु श्लेष्मा नासानिर्गत इति भावः, तद्युक्तं नेत्रजलं, भुङ्क्ते पिबति; तस्मात् न रोदितव्यं हि रोदनं न कर्त्तव्यमेव; शक्तितः शक्तिमनुसृत्य, साध्यानुरूपमित्यर्थः, क्रियाश्च और्द्धदैहिककार्य्याणि च, श्राद्धतर्पणादिकानि इत्यर्थः, कार्य्याः कर्त्तव्याः, जनैरिति शेषः; प्रेतस्य तृप्त्यर्थमिति भावः ॥ २६४ ॥ *

(च) मदात्—गर्वात्। गजापसदस्य—गजाधमस्य। तस्य अनुष्ठानेन—गजस्य निधनव्यापारेण।

आपदीति।—आपदि येन जनेन, अपकृतम् अनिष्टमाचरितं, येन च विषमासु दारुणासु, दशासु दुरवस्थासु इत्यर्थः, हसितं, तयोः उभयोः द्वयोः, अपकृत्य अनिष्टं विधाय, नरं मृतजनमिति भावः, पुनरपि जातम् उत्पन्नम्, इति मन्ये तर्कयामि। आर्य्या वृत्तम् ॥ २६५ ॥

अपरञ्च—स सुहृत् व्यसने यः स्यादन्यजात्युद्भवोऽपि सन्।
वृद्धौ सर्वोऽपि मित्रं स्यात् सर्वेषामेव देहिनाम्॥ २६६ ॥
स सुहृत् व्यसने यः स्यात् स पुत्रो यस्तु भक्तिमान्।
स भृत्यो यो विधेयज्ञः सा भार्य्या यत्र निर्वृतिः॥ २६७॥

तत् पश्य मे बुद्धिप्रभावम्; परं ममापि सुहृद्भूता वीणारवा नाम मक्षिका अस्ति, तत् तामाहूय आगच्छामि, येन स दुरात्मा दुष्टगजो बध्यते'।

अथासौ चटकया सह मक्षिकामासाद्य प्रोवाच,—'भद्रे! मम (क) इष्टा इयं चटका केनचित् दुष्टगजेन पराभूता अण्डस्फोटनेन, तत् तस्य बधोपायमनुतिष्ठतो मे साहाय्यं कर्त्तुमर्हसि'। मक्षिकाऽपि आह,—'भद्र! किमुच्यतेऽत्र विषये?
उक्तञ्च,—पुनः प्रत्युपकाराय मित्राणां क्रियते प्रियम्।
यत् पुनर्मित्रमित्रस्य कार्य्यं मित्रैर्न किं कृतम्? ॥२६८॥

---

स इति।—यः व्यसने विपदि, स्यात्, सहाय इति शेषः, सः अन्यजात्युद्भवः जात्यन्तरोत्पन्नः सन् अपि, सुहृत् मित्रम्; सर्वोऽपि जनः, सर्वेषामेव देहिनां, वृद्धौ अभ्युदये, न तु व्यसने इति भावः, मित्रं स्यात्; अतस्ते न खलु सुहृद इति भावः॥ २६६ ॥

स इति।—यः सुहृत्, व्यसने विपदि, स्यात्, सहाय इति शेषः, स एव सुहृत् बन्धुपदवाच्यः; यस्तु पुत्रः, भक्तिमान् पूज्येषु अनुरक्तः, स एव पुत्रः; यः भृत्यः विधेयज्ञः कार्य्यज्ञः, सः एव भृत्यः किङ्करपदवाच्यः; यत्र भार्य्यायां, निर्वृतिः सुखं, लभ्यते इति शेषः, सा एव भार्य्या यथार्थजाया॥ २६७ ॥

(क) इष्टा—प्रिया। अण्डस्फोटनेन—डिम्बभङ्गेन।

पुनरिति।—पुनः प्रत्युपकाराय कृतोपकारस्य प्रतिदानलाभाय, मित्राणां प्रियं क्रियते, लोकैरिति शेषः; मित्रमित्रस्य मित्रसुहृदः, पुनः यत् कार्य्यं, तत् किं मित्रैः न कृतम्? अपि तु कृतमेव इत्यवश्य दृश्यते इत्यर्थः, यथा प्रत्युपकाराशया मित्रस्य उपकारः क्रियते, तथा मित्रसम्बोधार्थं तन्मित्रस्यापि इति लोके दृश्यते, अतः अवश्यमेव उपकर्त्तव्यः इति भावः॥ २६८ ॥

सत्यमेतत्, परं ममापि भेको मेघनादो नाम मित्रं तिष्ठति, तमपि आहूय यथोचितं कुर्मः। उक्तञ्च,—

> हितैः साधुसमाचारैः शास्त्रज्ञैर्मतिशालिभिः।
>
> कथञ्चिन्न विकल्पन्ते विद्वद्भिश्चिन्तिता नयाः॥ १६९॥

अथ ते त्रयोऽपि गत्वा मेघनादस्य अग्रे समस्तमपि वृत्तान्तं निवेद्य तस्थुः। अथ स प्रोवाच, (ख)—'कियन्मात्रोऽसौ वराको गजो महाजनस्य कुपितस्याग्रे? तन्मदीयो मन्त्रः कर्त्तव्यः। मक्षिके! त्वं गत्वा मध्याह्नसमये तस्य मदोद्धतस्य गजस्य कर्णे वीणारवसदृशं शब्दं कुरु, येन श्रवणसुखलालसो निमीलितनयनो भवति। ततश्च काष्ठकूटचञ्चवा (ग) स्फोटित-नयनोऽन्धीभूतः तृषार्त्तो मम गर्त्ततटाश्रितस्य सपरिकरस्य शब्दं श्रुत्वा जलाशयं मत्वा समभ्येति; ततो गर्त्तमासाद्य पतिष्यति, पञ्चत्वं यास्यति च इति। एवं (घ) समवायः कर्त्तव्यः, यथा वैरसाधनं भवति'।

अथ तथाऽनुष्ठिते स मत्तगजो मक्षिकागेयसुखात् निमीलित-नेत्रः काष्ठकूटहृतचक्षुः मध्याह्नसमये भ्राम्यन् मण्डूक-शब्दानुसारी गच्छन् महान्तं गर्त्तमासाद्य पतितो मृतश्च। अतोऽहं ब्रवीमि,—'चटका-काष्ठकूटेन' इति।'

टिट्टिभ आह,—'भद्रे! एवं भवतु, सुहृद्वर्गसमुदायेन समुद्रं

---

हितैरिति।—हितैः हितार्थिभिः, साधुसमाचारैः सच्चरितैः, शास्त्रज्ञैः शास्त्रविद्भिः, मतिशालिभिः बुद्धिमद्भिः, विद्वद्भिः जनैः, चिन्तिताः मनःकल्पिताः, नयाः नीतिव्यापाराः, कथञ्चित् केनापि प्रकारेण, न विकल्पन्ते नान्यथा भवन्तीत्यर्थः॥ १६९॥

(ख) कियन्मात्रः,—किंप्रमाणः, अतितुच्छ इत्यर्थः। वराकः,—दीनः, नगण्य इति भावः। मन्त्रः,—मन्त्रणा, उपदेश इत्यर्थः। कर्त्तव्यः,—पालयितव्य इत्यर्थः।

(ग) स्फोटितनयनः,—उत्पाटितचक्षुः। सपरिकरस्य—सपरिवारस्य, ("भवेत् परिकरः सङ्घ पर्य्यङ्कपरिवारयोः" इति मेदिनी)।

(घ) समवायः,—सङ्घः, मेलनमिति यावत्। वैरसाधनं—प्रतिहिंसासिद्धिः।

शोषयिष्यामि' इति निश्चित्य बकसारसमयूरादीन् समाहूय प्रोवाच,—'भोः! पराभूतोऽहं समुद्रेण अण्डकापहारेण, तच्चिन्त्यतामस्य शोषणोपायः'। ते सम्मन्त्र्य प्रोचुः,—'अशक्ता वयं समुद्रशोषणे, तत् किं वृथा प्रयासेन? उक्तञ्च,—

अबलः प्रोन्नतं शत्रुं यो याति मदमोहितः।
युद्धार्थं स निवर्त्तेत शीर्णदन्तो गजो यथा॥ ३७०॥

तदस्माकं स्वामी (ङ) वैनतेयः अस्ति, तस्मै सर्वमेतत् परिभवस्थानं निवेद्यतां, येन स्वजातिपरिभवकुपितो वैरानृण्यं गच्छति; अथवा अत्रावलेपं करिष्यति, तथाऽपि नास्ति वो दुःखम्। उक्तञ्च,—

सुहृदि निरन्तरचित्ते गुणवति भृत्येऽनुवर्त्तिनि कलत्रे।
स्वामिनि शक्तिसमेते निवेद्य दुःखं सुखी भवति॥ ३७१॥

तत् यामो वैनतेयसकाशं, यतोऽसौ अस्माकं स्वामी'।

ततश्च सर्वे ते पक्षिणो विषण्णवदना बाष्पपूरितदृशः वैनतेयसकाशमासाद्य करुणस्वरेण (च) फूत्कर्तुमारब्धाः,—'अहो! अब्रह्मण्यमब्रह्मण्यम्! अधुना सदाचारस्य टिट्टिभस्य भवति नाथे

अबल इति।—यः अबलः दुर्बलः, मदमोहितः सन्, प्रोन्नतं प्रबलं, शत्रुं याति, युद्धार्थमिति भावः; स शीर्णदन्तो गजो यथा, तथा निवर्त्तेत, पराभूतः सन् इति शेषः॥३७०॥

(ङ) वैनतेयः,—विनतानन्दनः, गरुड़ः इत्यर्थः। परिभवस्थानं—तिरस्कारविषयम्। वैरानृण्यं—शत्रुप्रतिशोधमित्यर्थः। अवलेपं—गर्वम्; अहं समुद्रमतितुच्छं शोषयिष्यामीति तेन ममैव लाघवमित्येवंरूपमिति भावः।

सुहृदीति।—निरन्तरचित्ते अभिन्नहृदये, सुहृदि, गुणवति सगुणे, भृत्ये सेवके, अनुवर्त्तिनि अनुरक्ते, कलत्रे भार्य्यायां, तथा शक्तिसमेते सामर्थ्यवति, स्वामिनि प्रभौ, दुःखं निवेद्य सुखी भवति, जन इति शेषः। आर्य्या वृत्तम्॥ ३७१॥

(च) फूत्कर्त्तुं—चीत्कर्त्तुम्। अब्रह्मण्यम्—अवध्यं, "यथा वयं न हन्यामहे तथा क्रियताम्" इत्येवमार्त्तवचनमिति भावः, ("अब्रह्मण्यमवध्योक्तौ" इत्यमरः)। भवति—त्वयि। नाथे—रक्षके, प्रभौ।

सति समुद्रेण अण्डानि अपहृतानि !! तत् प्रनष्टमधुना पाञ्च-
कुलम् । अन्येऽपि स्वेच्छया समुद्रेण व्यापादयिष्यन्ते ।
उक्तञ्च,—एकस्य कर्म संवीक्ष्य करोत्यन्योऽपि गर्हितम् ।
गतानुगतिको लोको न लोकः पारमार्थिकः ॥ १७२ ॥
तथा च—चाटतस्करदुर्वृत्तैस्तथा साहसिकादिभिः ।
पीड्यमानाः प्रजा रक्ष्याः कूटच्छद्मादिभिस्तथा ॥१७३॥
प्रजानां धर्मषड्भागो राज्ञो भवति रक्षितुः ।
अधर्मादपि षड्भागो जायते यो न रक्षति ॥ १७४ ॥
प्रजापीडनसन्तापात् समुद्भूतो हुताशनः ।
राज्ञः श्रियं कुलं प्राणान् नादग्ध्वा विनिवर्त्तते ॥१७५॥

एकस्येति ।—एकस्य जनस्य, कर्म कार्य्यं, गर्हितमिति शेषः, संवीक्ष्य दृष्ट्वा, अन्योऽपि गर्हितं निन्दितं कर्म, करोति ; यतो लोकः गतानुगतिकः गतान् अनुगतानां पश्चात्, गतिः पन्थाः, गमनं वा यस्य तादृशः, ("गतिः स्त्री मार्गदशयोर्ज्ञाने यात्राऽभ्युपाययोः" इति मेदिनी ) अपरकार्य्यानुसारीत्यर्थः, पारमार्थिकः परमार्थपरः, सत्यानुसारीत्यर्थः, लोकः न, अस्तीति शेषः ; गर्हितमाचरतः समुद्रस्य प्रतीकाराभावे अन्येऽपि तथा करिष्यन्ति, ततः संसारस्य अतीवानिष्टं सम्पत्स्यते इति भावः ॥ १७२ ॥

चाटेति ।—चाटतस्करदुर्वृत्तैः प्रतारकचौरदुराचारैः, यो विश्वास्य परधनमपहरति, स चाट इति मिताक्षरा ; तथा साहसिकादिभिः अविमृश्यकारकादिभिः, दुर्जनैरपीति भावः ; तथा कूटच्छद्मादिभिः कौटिल्यच्छलादिभिः, पीड्यमानाः प्रजाः रक्ष्याः रक्षणीयाः, यथा न पीड्यन्ते तथा कार्य्या इत्यर्थः, नृपेणेति शेषः ॥ १७३ ॥

प्रजानामिति ।—रक्षितुः त्राणकर्त्तुः, दुर्जनेभ्य इति शेषः, राज्ञः प्रजानां धर्मस्य षड्भागः षष्ठो भागः, [ "सङ्ख्यावाचकानां क्वचिद्विषये पूरणार्थत्वम्" इति नियमात् अत्र पूरणार्थता ] भवति, लभ्य इति शेषः ; यः राजा, न रक्षति, प्रजा इति शेषः, तस्य अधर्मादपि, प्रजाकृतादिति शेषः, षड्भागः षष्ठो भागः, जायते ; अतः धर्मार्थिना राज्ञा प्रजा अवश्यमेव पालनीया इति तात्पर्य्यम् ॥ १७४ ॥

प्रजेति ।—प्रजानां पीडनेन यः सन्तापः तासां मनसि यत् दुःखमित्यर्थः, तस्मात्, समुद्भूतः सञ्जातः, हुताशनः अग्निः, पापवह्निरित्यर्थः, राज्ञः श्रियं कुलं प्राणांश्च अदग्ध्वा न विनिवर्त्तते ; अतो राज्ञः प्रजापीडनं सर्वानर्थमूलमिति भावः ॥ १७५ ॥

राजा बन्धुरबन्धूनां राजा चक्षुरचक्षुषाम्।
राजा पिता च माता च सर्वेषां न्यायवर्त्तिनाम् ॥१७६॥
फलार्थी पार्थिवो लोकान् पालयेत् यत्नमास्थितः।
दानमानादितोयेन मालाकारोऽङ्कुरानिव ॥ १७७ ॥
यथा वीजाङ्कुरः सूक्ष्मः प्रयत्नेनाभिरक्षितः।
फलप्रदो भवेत् काले तद्वल्लोकः सुरक्षितः ॥ १७८ ॥
हिरण्यधान्यरत्नानि यानानि विविधानि च।
तथाऽन्यदपि यत्किञ्चित् प्रजाभ्यः स्यात् नृपस्य तत्' ॥१७९॥

अथ एवं गरुड़ः समाकर्ण्य तद्दुःखदुःखितः कोपाविष्टश्च व्यचिन्तयत्,—'अहो! सत्यमुक्तमेतैः पक्षिभिः; तत् अद्य गत्वा तं समुद्रं शोषयामः'। एवं चिन्तयतस्तस्य विष्णुदूतः समागत्य आह,—'भो गरुत्मन्! भगवता नारायणेन अहं तव पार्श्वे प्रेषितः, देवकार्य्याय भगवान् अमरावत्यां यास्यतीति, तत् सत्वरम् आगम्यताम्'। तत् श्रुत्वा गरुड़ः साभिमानं प्राह,—'भो दूत! किं मया कुभृत्येन भगवान् करिष्यति? तत् गत्वा तं वद,—यदन्यो भृत्यो वाहनाय अस्मत्स्थाने क्रियताम्; मदीयो नमस्कारो वाच्यो भगवतः। उक्तञ्च,—

---

राजेति।—राजा अबन्धूनां बन्धुरहितानां, बन्धुः मित्रस्वरूपः, तादृशांहितकारित्वादिति भावः; राजा अचक्षुषाम् अन्धानां, चक्षुः नयनस्वरूपः; प्रतिपालकत्वादिति भावः; राजा सर्वेषां न्यायवर्त्तिनां न्याय्यपथावलम्बिनां, न तु कुमार्गगामिनामिति भावः; पिता च माता च पित्रोः स्वरूपः; तद्वदाचरणवत्त्वादिति भावः ॥ १७६ ॥

फलार्थीति।—फलार्थी फलम् ऐहिकं राजस्वादि, पारलौकिकञ्च स्वर्गादि, तदर्थी तत्कामी, पार्थिवः राजा, मालाकारः अङ्कुरानिव, तोयेनेति भावः, यत्नमास्थितः सयत्नः सन्, दानमानादि तोयमिव तेन, लोकान् प्रजाः, पालयेत् ॥ १७७ ॥

यथेति।—सूक्ष्मः अत्यल्पमात्रः, वीजाङ्कुरः प्रयत्नेन अभिरक्षितः सन्, यथा काले फलप्रदो भवेत्, तद्वत् तथा, सुरक्षितो लोकः, राज्ञः फलप्रदो भवतीति शेषः ॥१७८॥

सम्यक् प्रजापालने यत् फलं तदाह,हिरण्येति।—हिरण्यानि स्वर्णानि, धान्यानि

यो न वेत्ति गुणान् यस्य न तं सेवेत पण्डितः ।
न हि तस्मात् फलं किञ्चित् सुकृष्टादूषरादिव' ॥ ३८०॥

दूत आह,—'भो वैनतेय ! कदाचिदपि भगवन्तं प्रति त्वया न अभिहितम् ईदृक् ; तत् कथय, किं ते भगवता अपमानस्थानं कृतम् ?' गरुड़ आह,—'भगवदाश्रयभूतेन समुद्रेण अस्मट्टिट्टिभाण्डानि अपहृतानि, तत् यदि तस्य निग्रहं न करोति, तदहं भगवतो न भृत्यः, इत्येष निश्चयस्त्वया वाच्यः ; तत् द्रुततरं गत्वा भवता भगवतः समीपे वक्तव्यम्' ।

अथ दूतमुखेन प्रणयकुपितं वैनतेयं विज्ञाय भगवान् चिन्तयामास,—'अहो ! (छ) स्थाने कोपो वैनतेयस्य, तत् स्वयमेव गत्वा सम्मानपुरःसरं तमानयामि । उक्तञ्च—

भक्तं शक्तं कुलीनञ्च न भृत्यमपमानयेत् ।
पुत्त्रवल्लालयेन्नित्यं य इच्छेत् श्रियमात्मनः ॥ ३८१ ॥

अन्यच्च—राजा तुष्टोऽपि भृत्यानामर्थमात्रं प्रयच्छति ।
ते तु सम्मानितास्तस्य प्राणैरप्युपकुर्वते' ॥ ३८२॥

रत्नानि मणयश्च, विविधानि यानानि वाहनानि, अश्वादीनि इत्यर्थः, तथा अन्यदपि यत्किञ्चित् वस्तु, नृपस्य, प्रयोजनीयमिति शेषः, तत् सर्वं, प्रजाभ्यः स्यात् ॥ ३७९ ॥

य इति ।—यः यस्य गुणान् न वेत्ति न जानाति, पण्डितः तम् अविदितगुणं जनं, न सेवेत ; हि यतः, सुकृष्टात् सुष्ठु कृतकर्षणात्, ऊषरात् मरुभूमेरिव, ("ऊषरो मरुधन्वानौ" इत्यमरः) तस्मात् जनात्, सुसेवितादपीति भावः ; किञ्चिदपि फलं न, भवतीति शेषः ॥ ३८० ॥

• (छ) स्थाने—युक्तं इत्यर्थः, [अव्ययमेतत् "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः] ।

भक्तमिति ।—यः प्रभुः, आत्मनः श्रियम् इच्छेत, स भक्तम् अनुरक्तं, शक्तं समर्थं, कुलीनं सत्कुलप्रसूतञ्च, अभिजातमिति यावत्, भृत्यं सेवकं, न अपमानयेत् नावजानीयात्, प्रत्युत नित्यं पुत्त्रवत् पुत्त्रमिव, लालयेत् प्रतिपालयेत् ॥ ३८१ ॥

राजेति ।—राजा तुष्टोऽपि भृत्यानाम् [ अत्र सम्प्रदानत्वेऽपि सम्बन्धविवक्षया षष्ठी ] अर्थमात्रम् अर्थमेव, प्रयच्छति पुरस्करोति, ते भृत्याः, तु सम्मानिताः सन्तः,

इत्येवं सम्प्रधार्य (ज) रुक्मपुरे वैनतेयसकाशं सत्वरमगमत्। वैनतेयोऽपि स्वगृहागतं भगवन्तमवलोक्य (झ) त्रपाऽधोमुखः प्रणम्योवाच,—'भगवन्! त्वदाश्रयोन्मत्तेन समुद्रेण मम भृत्यस्य अण्डानि अपहृत्य ममापमानं विहितम्; परं भगवल्लज्जया मया विलम्बितं, नो चेत् एनमहं स्थलान्तम् अद्यैव नयामि, यतः स्वामिभयात् शुनोऽपि प्रहारो न दीयते।

उक्तञ्च,—येन स्याल्लघुता वाऽथ पीड़ा चित्ते प्रभोः क्वचित्।
प्राणात्ययेऽपि तत् कर्म न कुर्य्यात् कुलसेवकः' ॥१८३॥

तच्छ्रुत्वा भगवान् आह,—"भो वैनतेय! सत्यमभिहितं भवता। उक्तञ्च,—

भृत्यापराधजो दण्डः स्वामिनो जायते यतः।
तेन लज्जाऽपि तस्योत्था न भृत्यस्य तथा पुनः॥ १८४॥

तदागच्छ, येन अण्डानि समुद्रात् आदाय टिट्टिभं सम्भावयावः, अमरावतीञ्च गच्छावः।

तथाऽनुष्ठिते समुद्रो भगवता निर्भर्त्स्य आग्नेयं शरं सन्धाय

---

प्राणैरपि तस्य राज्ञः, उपकुर्वते उपकारं कुर्वन्ति। [तस्य इति करोतेः कर्मणि "कृञः प्रतियत्ने" (२।३।५३ पा०) इति सूत्रेण शेषत्वलक्षणा षष्ठी] ॥ १८२ ॥

(ज) रुक्मपुरं—तदाख्यं गरुडनगरं।

(झ) त्रपाऽधोमुखः,—लज्जाऽवनतमुखः। भगवल्लज्जया—भगवदाश्रयोऽसाविति, तदपमानेन भगवतो लज्जा स्यादिति भयेनेति भावः। स्थलान्तं—स्थलभावावशेषम्। शुनः,—कुक्कुरस्य, प्रभोरिति शेषः।

येनेति।—येन कार्य्येण, प्रभोः लघुता क्षुद्रता, अवमाननमिति भावः, अथवा चित्ते पीड़ा सन्तापः, स्यात्, कुलसेवकः कुलीनः, भृत्यः इति शेषः, प्राणात्ययेऽपि क्वचित् कदाऽपि, तत् कर्म न कुर्य्यात् ॥ १८३ ॥

भृत्येति।—यतः यस्मात् कारणात्, भृत्यापराधजः भृत्यदोषजनितः, दण्डः, अन्यैः कृत इति भावः, स्वामिनः एव जायते भवति, तेन लज्जाऽपि, दण्डजनितेति भावः, तस्य स्वामिनः एव, उत्था उत्पन्ना, भवति, भृत्यस्य पुनर्न तथा, लज्जेति शेषः ॥१८४॥

अभिहितः,—'भो दुरात्मन्! दीयन्तां टिट्टिभाण्डानि, नो चेत् अन्नतां त्वां नयामि'। ततः समुद्रेण सभयेन टिट्टिभाण्डानि तानि प्रदत्तानि, टिट्टिभेनापि भार्य्यायै समर्पितानि। अतोऽहं ब्रवीमि,—'शत्रोर्विक्रममज्ञात्वा' इति। तस्मात् पुरुषेण उद्यमो न त्याज्यः"।

तदाकर्ण्य सञ्जीवकस्तमेव भूयोऽपि पप्रच्छ,—"भो मित्र! कथं ज्ञेयो मया असौ दुष्टबुद्धिरिति? इयन्तं कालं यावदुत्तरोत्तरस्नेहेन प्रसादेन च अहं दृष्टः, न कदाचित् तद्विक्रतिर्दृष्टा; तत् कथ्यतां, येनाहम् आत्मरक्षार्थं तद्वधाय उद्यमं करोमि"।

दमनक आह,—"भद्र! किमत्र ज्ञेयम्? एष ते (ञ) प्रत्ययः, यदि रक्तनेत्रस्त्रिशिखां भ्रूकुटिं दधानः सृक्कणी परिलेलिह्यत् त्वां दृष्ट्वा भवति, तद्दुष्टबुद्धिः, अन्यथा सुप्रसादश्चेति। तदाज्ञापय मां, स्वाश्रयं प्रति गच्छामि। त्वया च यथा मन्त्रभेदो न भवति, तथा कार्य्यम्; यदि निशामुखं प्राप्य गन्तुं शक्नोषि, तद्देशत्यागः कार्य्यः। यतः,—

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्॥ ३८५॥

---

(ञ) प्रत्ययः,—ज्ञानहेतुरित्यर्थः। सृक्कणी परिलेलिह्यत्—ओष्ठप्रान्तद्वयं जिह्वया मार्जयन्, [परिलेलिह्यत् इति परिपूर्वस्य लिहधातोः यङि शतृप्रत्यये "नाभ्यस्ताच्छतुः" (७।१।७८ पा०) इत्यनेन शतुर्नुम निषेधः]। त्वां दृष्ट्वा रक्तनेत्रादिर्भवतीत्यन्वयः। सुप्रसादः,—सुष्ठु प्रसादसम्पन्नः इत्यर्थः।

त्यजेदिति।—कुलस्य अर्थे वंशरक्षार्थमित्यर्थः, एकं त्यजेत्, यदि एकस्य स्वजनस्य त्यागे वंशरक्षा स्यात्, तदा स कार्य्य इति भावः; ग्रामस्यार्थे ग्रामवासिनां रक्षार्थमित्यर्थः, कुलं वंशं, त्यजेत्, यदि वंशत्यागे ग्राम्याणां सर्वेषां रक्षा स्यात्, तदा तस्यापि त्यागः कार्य्य इति भावः; जनपदस्यार्थे देशवासिनां रक्षार्थमित्यर्थः, ग्रामं ग्राम्यान्, त्यजेत्, यदि ग्राम्याणां त्यागे देशवासिनां रक्षा स्यात्, तदा स कार्य्य इति भावः; आत्मार्थे स्वरक्षार्थं, पृथिवीं त्यजेत्, पृथिवीस्थानां सर्वेषां त्यागेऽपि यदि आत्मरक्षा स्यात् तदा तदपि कार्य्यमिति भावः॥ ३८५॥

आपदर्थे धनं रक्षेत् दारान् रक्षेत् धनैरपि ।
आत्मानं सततं रक्षेत् दारैरपि धनैरपि ॥ १८६ ॥

बलवता ( ट ) अभिभूतस्य विदेशगमनं तदनुप्रवेशो वा नीतिः, तत् देशत्यागः कार्य्यः; अथवा आत्मा सामादिभिरुपायैः अभिरक्षणीयः । उक्तञ्च,—

अपि पुत्रकलत्रैर्वा प्राणान् रक्षेच्च पण्डितः ।
विद्यमानैर्यतस्तैः स्यात् सर्वं भूयोऽपि देहिनाम् ॥१८७॥

तथा च,—येन केनाप्युपायेन शुभेनाप्यशुभेन वा ।
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ॥ १८८ ॥
यो मायां कुरुते मूढः प्राणत्यागे धनादिषु ।
तस्य प्राणाः प्रणश्यन्ति तैर्नष्टैर्नष्टमेव तत्" ॥ १८९ ॥

---

आपदर्थे इति ।—आपदर्थे विपन्निवारणार्थं, धनं रक्षेत्, धनैरपि दारान् स्त्रियः, रक्षेत्, दारैरपि धनैरपि आत्मानं सततं रक्षेत्; दारादित्यागेनाप्यात्मा रक्ष्य इति भावः ॥ १८६ ॥

( ट ) अभिभूतस्य—आक्रान्तस्य । तदनुप्रवेशः,—तस्य बलवतः आश्रयणम् । तत् —तस्मात् हेतोः । सामादिभि,—सामदानभेददण्डरूपैरित्यर्थः; तत्र साम— सन्धिः, दानं—भूहिरण्यादिसमर्पणं, भेदः,—उपजापः, शत्रुणा सह तदमात्य-मित्रादीनां मनोभङ्गकरणमित्यर्थः, सर्वाभावे दण्डः,—युद्धम् ।

अपीति ।—पण्डितो जनः, पुत्रकलत्रैरपि वा प्राणान् रक्षेत् च, यतः तैः प्राणैः, विद्यमानैः तिष्ठद्भिः सद्भिः, भूयोऽपि पुनरपि, देहिनां सर्वं पुत्रकलत्रादिकमित्यर्थः, स्यात्, आत्ममूलत्वात् सर्वेषामिति भावः ॥ १८७ ॥

येनेति ।—शुभेन अपि वा अशुभेन येन केनापि उपायेन दीनं विपन्नम्, आत्मानम् उद्धरेत् रक्षेत्; समर्थः शक्तिमान् सन्, धर्ममाचरेत् अनुतिष्ठेत्; विपन्नस्य धर्मानुष्ठानासम्भवादिति भावः ॥१८८॥

य इति ।—यः मूढः प्राणत्यागे प्राणविनाशसम्भवे इत्यर्थः, धनादिषु मायां ममतां, कुरुते, तस्य प्राणाः प्रणश्यन्ति; प्राणरक्षार्थं धनव्ययादिषु कुण्ठितत्वादिति भावः, नष्टैः तैः प्राणैः करणैः, तत् सर्वं धनादिकं, नष्टमेव, भोक्तुरभावात् इति भावः, भवतीति शेषः; "सम्बन्धो जीवनावधि" इत्युक्तेरिति बोध्यम् ॥ १८९॥

एवमभिधाय दमनकः करटकसकाशमगमत्। करटकोऽपि तमायान्तं दृष्ट्वा प्रोवाच,—"भद्र! किं कृतं तत्र भवता?" दमनक आह,—"मया (ठ) यावत् नीतिबीजनिर्वपणं कृतं, परतो दैवविहितायत्तम्। उक्तञ्च यतः,—

परान्मुखेऽपि दैवेऽत्र कृत्यं कार्य्यं विपश्चिता।
आत्मदोषविनाशाय स्वचित्तस्तम्भनाय च॥ ३९०॥

तथा च,—उद्‌योगिनं पुरुषसिंहमुपैति लक्ष्मी-
दैवं हि दैवमिति कापुरुषा वदन्ति।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः" ॥३९१॥

करटक आह—"तत् कथय कीदृक् त्वया नीतिबीजं निर्वापितम्?"। सोऽब्रवीत्,—"मया अन्योऽन्यं (ड) ताभ्यां मिथ्याप्रजल्पनेन भेदः तथा विहितः, यथा भूयोऽपि मन्त्रयन्तौ एकस्थानस्थितौ न द्रक्ष्यसि"। करटक आह,—"अहो! न युक्तं

(ठ) यावत्—साकल्येन। नीतिबीजनिर्वपणं—नीतयः बीजानीव, तेषां निर्वपणं—सम्यक् रोपणम्। परतः,—इतःपरं, भाविष्यदित्यर्थः। दैवेति।—दैवेन यत् विहितं—निर्दिष्टं, तस्य आयत्तम्—अधीनम्; अतः परं यत् तत् दैवाधीनमिति भावः।

पराङ्मुख इति।—अत्र संसारे, दैवे पराङ्मुखे प्रतिकूलेऽपि, विपश्चिता विदुषा, आत्मदोषविनाशाय स्वदोषक्षालनाय, स्वस्य चित्तस्य स्तम्भनाय धैर्य्याय च, प्रबोधदानायेत्यर्थः, कृत्यं पुरुषकारः, कार्य्यं, यत्नः कर्त्तव्य इत्यर्थः; दैवोपहतस्य सर्वेषु विफलायामपि चेष्टायां यत्नाकरणे परतः आत्मग्लानिः स्यात्, अतः प्रयत्नेन भाव्यमिति भावः॥३९०॥

उद्‌योगिनमिति:—लक्ष्मीः उद्‌योगिनं पुरुषसिंहम् उपैति प्राप्नोति; कापुरुषाः दैवं दैवम् इति वदन्ति हि, अतः दैवं निहत्य अगणयित्वा, आत्मशक्त्या स्वसामर्थ्येन, पौरुषं पुरुषकारं, कुरु, यत्ने कृते सति यदि न सिध्यति, कार्य्यमिति शेषः, तदा अत्र एतादृशप्रयत्ने, को दोषः काऽपि अलाञ्छना त्रुटिः, अस्तीति शेषः; योग्यपौरुषप्रयोगे तु कार्य्यसिद्धिः सुनिश्चितेति भावः। वसन्ततिलकं वृत्तम्॥ ३९१॥

(ड) ताभ्यां, सहेति शेषः, मिथ्याप्रजल्पनेन—मृषावचनेन। भेदः,—मनोभङ्गः।

भवता विहितं, यत् परस्परं तौ स्नेहार्द्रहृदयौ सुखाश्रयौ कोप-सागरे प्रक्षिप्तौ । उक्तञ्च,—

अविरुद्धं सुखस्थं यो दुःखमार्गे नियोजयेत् ।
जन्मजन्मान्तरे दुःखी स नरः स्यादसंशयम् ॥ ३९२॥

अपरं, त्वं यद्भेदमात्रेणापि तुष्टः, तदपि अयुक्तं,यतः सर्वोऽपि जनः (ढ) विरूपकरणे समर्थो भवति, नोपकर्त्तुम् । उक्तञ्च,—

घातयितुमेव नीचः परकार्य्यं वेत्ति न प्रसाधयितुम् ।
पातयितुमस्ति शक्तिर्वायोर्वृक्षं न चोन्नमयितुम्" ॥३९३॥

दमनक आह,—"अनभिज्ञो भवान् नीतिशास्त्रस्य, तेन एतत् ब्रवीषि । उक्तञ्च यतः,—

जातमात्रं न यः शत्रुं व्याधिञ्च प्रशमं नयेत् ।
महाबलोऽपि तेनैव वृद्धिं प्राप्य स हन्यते ॥ ३९४ ॥

तच्छत्रुभूतोऽयमस्माकं मन्त्रिपदापहरणात् । उक्तञ्च,—

पितृपैतामहं स्थानं यो यस्यात्र जिगीषते ।
स तस्य सहजः शत्रुरुच्छेद्योऽपि प्रिये स्थितः ॥ ३९५ ॥

---

अविरुद्धमिति ।—यः अविरुद्धम् अविरोधिनं, सुखस्थं सुखिनं जनं, दुःखमार्गे क्लेशवर्त्मनि, नियोजयेत् पातयेत्, स नरः, जन्मजन्मान्तरे प्रतिजन्म इत्यर्थः, असंशयं दुःखी स्यात् ; परापकृतेः स्वापकृतिफलकत्वादिति भावः ॥ ३९२॥

(ढ) विरूपकरणे—विरुद्धाचरणे विरोधोत्पादने वा ।

घातयितुमिति ।—नीचः जनः, परकार्य्यं घातयितुं नाशयितुमेव, वेत्ति जानाति,न प्रसाधयितुं सम्पादयितुम् ; वृक्षं पातयितुं वायोः शक्तिरस्ति,उन्नमयितुम् उत्तोलयितुं,च न ; वायुर्यथा तरुपातने क्षमः तदुत्तोलने तु सर्वथा असमर्थः, तथा नीचोऽपि परापकारे क्षमः,न तु तेषां कार्य्यसाधने इति भावः । दृष्टान्तालङ्कारः । आर्य्या वृत्तम् ॥३९३॥

जातमात्रमिति ।—यः शत्रुं व्याधिञ्च जातमात्रम् उत्पन्नमात्रं,न प्रशमं नयेत् नोप-शमयेदित्यर्थः, स महाबलोऽपि तेनैव शत्रुणा व्याधिना वा कर्त्रा, वृद्धिं प्राप्य हन्यते विनाश्यते ; अतः शत्रुः सर्वात्मना समूलघातं हन्तव्य इति भावः ॥ ३९४ ॥

पित्रिति ।—अत्र संसारे, यः यस्य पितृपैतामहं स्थानं पदं, जिगीषते [ अधात्मने

तत् मया स उदासीनतया समानीतोऽभयप्रदानेन यावत्, तावदहमपि तेन ( थ ) साचिव्यात् प्रच्यावितः। अथवा साधु इदमुच्यते,—

दद्यात् साधुर्यदि निजपदे दुर्जनाय प्रवेशं
तन्नाशाय प्रभवति ततो वाञ्छमानः स्वयं सः।
तस्माद्देयो विपुलमतिभिर्नावकाशोऽधमानां
जारोऽपि स्यात् गृहपतिरिति श्रूयते वाक्यतोऽत्र ॥२९६॥

तेन मया तस्योपरि बधोपाय एष विरच्यते ; देशत्यागाय वा भविष्यति उपाय एषः। तच्च त्वां मुक्त्वा अन्यो न ज्ञास्यति, तत् युक्तम् एतत् स्वार्थायानुष्ठितम्। उक्तञ्च यतः,—

निस्त्रिंशं हृदयं कृत्वा वाणीं क्षुरसमोपमाम्।
विकल्पोऽत्र न कर्त्तव्यो हन्यात् तत्रापकारिणम् ॥२९७॥

अपरं, मृतोऽपि अस्माकं भोज्यो भविष्यति, तदेकं तावत् (त) वैरसाधनम्, अपरं साचिव्यञ्च भविष्यति तृप्तिश्चेति। तत्

---

पदं लग्यम् ] जेतुमिच्छति, लिप्सति इत्यर्थः. स तस्य सहजः स्वाभाविकः, शत्रुः,अत प्रिये प्रियकार्य्ये, स्थितोऽपि उच्छेद्यः विनाश्यः, सः इति शेषः ॥ २९५ ॥

(थ) साचिव्यात्—मन्त्रिपदात्। प्रच्यावितः,—प्रभ्रंशितः।

दद्यादिति।—साधुर्जनः, यदि दुर्जनाय निजपदे प्रवेशं दद्यात्, तत्तदा, स स्वयं तस्य साधोः, नाशाय वाञ्छमानः सन्, [ अत्र परस्मैपदिनोऽपि धातोः शानच्प्रत्ययः विवक्षावशादेव ] प्रभवति प्रभुर्भवतीत्यर्थः, तस्मात् विपुलमतिभिः सुधीभिः, अधमानां दुर्जनानां, [ सम्बन्धे षष्ठी ] अवकाशः न देयः ; अत्र संसारे, जारोऽपि उपपतिरपि, गृहपतिः स्यात्, भिक्षुपादप्रसारणन्यायेन इति भावः, इति वाक्यतः श्रूयते, अतः पूर्वमेव सावधानेन भवितव्यम् इति भावः। मन्दाक्रान्ता वृत्तम् ॥ २९६ ॥

निस्त्रिंशमिति।—हृदयं निस्त्रिंशम् असिम्, असिसमनित्यर्थः, वाणीं क्षुरसमोपमां क्षुरसदृशीं, कृत्वा तत्र अपकारिणं हन्यात्, अत्र विकल्पः सन्देहः, न कर्त्तव्यः ॥२९७॥

. ( त ) वैरसाधनं—वैरस्य—विद्वेषस्य, साधनं—सम्पादनं, शत्रोः निर्य्यातन-मित्यर्थः। साचिव्यं—मन्त्रिपदम्। तृप्तिः,—भोजनजन्यपरितोषः।

(थ) गुणत्रयेऽस्मिन् उपस्थिते कस्मान्मां दूषयसि त्वं जाड्य-भावात्? उक्तञ्च,—

> परस्य पीड़नं कुर्वन् स्वार्थसिद्धिञ्च पण्डितः।
> मूढ़बुद्धिर्न भक्षेच्च वने चतुरको यथा" ॥ ३९८ ॥

करटक आह,—"कथमेतत्?" स आह,—

## कथा १६।

"अस्ति कस्मिंश्चिद्वनोद्देशे वज्रदंष्ट्रो नाम सिंहः। तस्य चतुरक-क्रव्यमुखनामानौ (द) शृगालवृकौ भृत्यभूतौ सदैवानुगतौ तत्रैव वने प्रतिवसतः। अथ अन्यदिने सिंहेन कदाचित् आसन्नप्रसवा प्रसववेदनया स्वयूथात् भ्रष्टा उष्ट्री उपविष्टा कस्मिंश्चित् वनगहने समासादिता। अथ तां व्यापाद्य यावदुदरं (ध) स्फोटयति, तावज्जीवल्लघुदासेरकशिशुर्निष्क्रान्तः; सिंहोऽपि दासेरक्याः पिशितेन सपरिवारः परां तृप्तिमुपागतः; परं स्नेहात् बालदासेरकं त्यक्तं गृहमानीय इदमुवाच,—'भद्र! तेऽस्ति मत्तो भयं मत्तो न, अन्यस्मादपि; ततः स्वेच्छया अत्र वने भ्राम्यताम्; यतस्ते शङ्कसदृशौ कर्णौ, ततः 'शङ्कुकर्णः' नाम भविष्यति' इति।

(थ) गुणत्रये—वैरसाधनसामर्थ्यादित्रयरूपे इत्यर्थः। जाड्यभावात्—मौर्ख्यात्।

परस्येति।—पण्डितो जनः, वने चतुरको यथा चतुरकाख्यः शृगाल इव, परस्य शत्रोः, पीडनं स्वार्थसिद्धिञ्च कुर्वन् भक्षेत् भुञ्जीत, न च मूढ़बुद्धिः, तथा भक्षेदिति शेषः; मूर्खस्तु भक्षयितुं न शक्नुयादिति भावः। [चौरादिकस्यापि भक्षधातोः केषाञ्चिन्मते भौवादिकेष्वपि पाठदर्शनात् भक्षेदिति सिद्धम्] ॥ ३९८ ॥

(द) शृगालवृकौ—जम्बुक-कुक्कुराकारव्याघ्रभेदौ। [पूर्वनिपातस्य विकल्पितत्वात् वृकस्य परतः सन्निवेशः]।

(ध) स्फोटयति—विदारयति। जीवादिति।—जीवन् लघुः,—क्षुद्रकायः, दासेरकशिशुः,—करभशावकः, उष्ट्रशावक इत्यर्थः, ("दासेरकस्तु करभे दासीपुत्रे च धीवरे" इति मेदिनी)। दासेरक्याः,—उष्ट्र्याः। पिशितेन—मांसेन। त्यक्तं—तन्मातृवधरूपापराधव्यवहारात् अभयं दत्त्वा मुक्तमित्यर्थः। मत्तो न, अन्यस्मा-

(न) एवमनुष्ठिते चत्वारोऽपि ते एकस्थाने विहारिणः परस्परमनेकप्रकारगोष्ठीसुखमनुभवन्तस्तिष्ठन्ति। शङ्कुकर्णोऽपि यौवनपदवीम् आरूढः क्षणमपि न तं सिंहं मुञ्चति। अथ कदाचित् वज्रदंष्ट्रस्य केनचित् वन्येन मत्तगजेन सह युद्धम् अभवत्, तेन मदवीर्य्यात् स दन्तप्रहारैस्तथा क्षतशरीरो विहितः, यथा प्रचलितुं न शक्नोति। तदा (प) क्षुत्क्षामकण्ठः तान् प्रोवाच,—'भोः! अन्विष्यतां किञ्चित् सत्त्वं, येन अहमेवं स्थितोऽपि तं व्यापाद्य आत्मनो युष्माकञ्च क्षुत्प्रणाशं करोमि'। तत् श्रुत्वा ते त्रयोऽपि वने सन्ध्याकालं यावत् भ्रान्ताः, परं न किञ्चित् सत्त्वमासादितम्। अथ चतुरकः चिन्तयामास,—'यदि शङ्कुकर्णोऽयं व्यापाद्यते, ततः सर्वेषां कतिचिद्दिनानि तृप्तिर्भवति, परं नैनं स्वामी मित्रत्वात् आश्रयसमाश्रितत्वाच्च विनाशयिष्यति; अथवा बुद्धिप्रभावेण स्वामिनं प्रतिबोध्य तथा करिष्ये, यथा व्यापादयिष्यति।

उक्तञ्च.—अवध्यं चाथवाऽगम्यमकृत्यं नास्ति किञ्चन।
लोके बुद्धिमतां बुद्धेस्तस्मात् तां विनियोजयेत् ॥१८८॥

एवं विचिन्त्य शङ्कुकर्णमिदमाह,—'भोः शङ्कुकर्ण! स्वामी तावत् पथ्यं विना क्षुधया परिपीड्यते, स्वाम्यभावात् अस्माकम् अपि ध्रुवं विनाश एव; ततो वाक्यं किञ्चित् स्वाम्यर्थे वदिष्यामि, तत् श्रूयताम्'। शङ्कुकर्ण आह,—'भोः! शीघ्रं निवेद्यतां,

---

द्वापि न इति सम्बन्धः। श्रूयताम्—विचरतु, [प्रमादित्वात् दीर्घः]। शङ्कुकर्णो—कौलोपमो।

(न) एवमनुष्ठिते—एवं दत्ताभये इत्यर्थः। गोष्ठीसुखं—संलापसुखं, ("गोष्ठी सभासंलापयोः स्त्रियाम्" इति मेदिनी)।

(प) क्षुत्क्षामकण्ठः,—क्षुधाक्षीणकण्ठस्वर इत्यर्थः [क्षैधातोः क्तः]।

अवध्यमिति।—लोके जगति, किञ्चन वस्तु, बुद्धिमतां बुद्धेः अवध्यम् अविनाश्यम्, अथवा अगम्यम् अविषयम्, अकृत्यम् अकर्त्तव्यं वा, नास्ति, तस्मात् तां बुद्धिं, विनियोजयेत् विशेषेण स्वव्यापारे नियुक्तां कुर्य्यात् इत्यर्थः ॥ १८८ ॥

येन तं वचनं शीघ्रं (फ) निर्विकल्पं करोमि; अपरं स्वामिनी हिते कृते मया सुकृतशतं कृतं भविष्यति'। अथ चतुरक आह,—'भो भद्र! आत्मशरीरं द्विगुणलाभेन स्वामिने प्रयच्छ, येन ते द्विगुणं शरीरं भवति, स्वामिनः पुनः प्राणयात्रा भवति'। तदाकर्ण्य शङ्कुकर्णः प्राह,—'भद्र! यदि एवं, तन्मदीयप्रयोजनमेतत्; उच्यतां 'स्वाम्यर्थः क्रियताम्' इति, परम् (ब) अत्र धर्मः प्रतिभूः' इति विचिन्त्य ते सर्वे सिंहसकाशम् आजग्मुः। ततः चतुरकः आह,—'देव! न किञ्चित् सत्त्वं प्राप्तम्; भगवान् आदित्योऽपि अस्तङ्गतः; तत् यदि स्वामी द्विगुणं शरीरं प्रयच्छति, ततः शङ्कुकर्णोऽयं द्विगुणवृद्ध्या स्वशरीरं प्रयच्छति (भ) धर्मप्रतिभुवा'। सिंह आह,—'भोः! यद्येवं, तत् सुन्दरतरं, व्यवहारस्य अस्य धर्मः प्रतिभूः क्रियताम्' इति।

अथ सिंहवचनानन्तरं वृकशृगालाभ्यां विदारितोभयकुक्षिः शङ्कुकर्णः पञ्चत्वमुपागतः। अथ वज्रदंष्ट्रः चतुरकम् आह,—'भोः चतुरक! यावदहं नदीं गत्वा स्नानं देवताऽर्चनविधिं कृत्वा आगच्छामि, तावत् त्वया अत्र (म) अप्रमत्तेन भाव्यम्' इत्युक्त्वा नद्यां गतः। अथ तस्मिन् गते चतुरकः चिन्तयामास,—'कथं मम एकाकिना भोज्योऽयमुष्ट्रो भविष्यति?' इति विचिन्त्य क्रव्यमुखमाह,—'भोः क्रव्यमुख! क्षुधालुर्भवान्; तत् यावदसौ स्वामी न आगच्छति, तावत् त्वमस्य उष्ट्रस्य मांसं भक्षय; अहं त्वां स्वामिनो निर्दोषं प्रतिपादयिष्यामि'। सोऽपि तत् श्रुत्वा यावत् किञ्चिन्मांसम्

(फ) निर्विकल्पं—निःसन्देहम्। सुकृतशतं—पुण्यशतम्।

(ब) अत्र—द्विगुणलाभविषये। प्रतिभूः,—प्रत्ययहेतुः, लग्नकः वा, ("स्युर्लग्नकाः प्रतिभुवः" इत्यमरः) "जामिन" इति बङ्गभाषा। विचिन्त्य—परस्परमालोच्य इत्यर्थः।

(भ) धर्मप्रतिभुवा—धर्मलग्नकेन, धर्मं साक्षिणं कृत्वेत्यर्थः। व्यवहारस्य—कर्मणः'।

(म) अप्रमत्तेन—अवहितेन।

आस्वादयति, तावत् चतुरकेणोक्तं,—'भोः क्रव्यमुख! समागच्छति स्वामी, तत् त्वमेनं दूरे तिष्ठ, येनास्य भक्षणं न (य) विकल्पयति'। तथाऽनुष्ठिते सिंहः समायातो यावदुष्ट्रं पश्यति, तावत् (र) रिक्तीकृतहृदयो दासेरकः। ततो भ्रूकुटिं कृत्वा(ल)परुषतरमाह,—'अहो! केनैष उष्ट्रः उच्छिष्टतां नीतः? येन तमपि व्यापादयामि'। एवमभिहिते (व) क्रव्यमुखः चतुरकमुखं तथा अवलोकयति किल,यथा,'तद्वद किञ्चित्,येन मम शान्तिर्भवति' इति प्रतीयते। अथ चतुरको विहस्योवाच,—'भोः! माम् (श)अनादृत्य पिशितं भक्षयित्वा अधुना मन्मुखमवलोकयसि? तत् आस्वादय अस्य दुर्नयतरोः फलम्' इति। तदाकर्ण्य क्रव्यमुखः (ष) जीवननाशभयात् दूरदेशं गतः। एतस्मिन् अन्तरे तेन मार्गेण (स) दासेरकसार्थो भाराक्रान्तः समायातः। (ह) तस्याग्रसरोष्ट्रस्य कण्ठे महती घण्टा बद्धा। तस्याः शब्दं दूरतोऽपि आकर्ण्य सिंहो जम्बूकमाह,—'भद्र! ज्ञायतां किमेषः (क्ष) रौद्रः शब्दः श्रूयतेऽश्रुतपूर्वः'। तच्छ्रुत्वा चतुरकः किञ्चित्

(य) विकल्पयति—सन्देग्धि, स्वामीति शेषः, त्वयि अत्र स्थिते स्वामी सन्देहं करिष्यतीति भावः।

(र) रिक्तीकृतहृदयः,—भक्षिततया शून्यीकृतोरःस्थलः, हृत्पिण्डेति भावः।

(ल) परुषतरम—अतिनिष्ठुरम्। येन—उच्छिष्टीकरणेनेत्यर्थः।

(व) क्रव्यमुखः,—तदाख्यः वृकः। चतुरकमुखं—चतुरकस्य—तदाख्यस्य शृगालस्य मुखम्। अवलोकयति किल—किलेत्यनुनयार्थमव्ययम ; सानुनयं पश्यतीत्यर्थः, ("किलशब्दस्तु वार्त्तायां सम्भाव्यानुनयार्थयोः" इति मेदिनी)। तत—तथेत्यर्थः।

(श) अनादृत्य—अगणयित्वा। पिशितं—मांसम। दुर्नयतरोः,—अविनयवृक्षस्य।

(ष) जीवननाशभयात्—मरणशङ्कया। दूरदेशं गतः,—पलायित इत्यर्थः।

(स) दासेरकसार्थः,—उष्ट्रयूथम्। भाराक्रान्तः,—भारवहनेनातिश्रान्तः इत्यर्थः।

(ह) तस्येति।—तस्य—उष्ट्रसार्थस्य, अग्रसरः,—अग्रवर्त्ती, यः उष्ट्रः तस्य।

(क्ष) रौद्रः,—भयङ्करः। अश्रुतपूर्वः,—पूर्वं कदाऽप्यनाकर्णितः।

(क) वनान्तरं गत्वा सत्वरमभ्युपेत्य प्रोवाच,—'स्वामिन्! गम्यतां गम्यतां, यदि शक्नोषि गन्तुम्'। सोऽब्रवीत्,—'भद्र! किमेवं मां (ख) व्याकुलयसि? तत् कथय, किमेतत्?' इति। चतुरक आह,—'स्वामिन्! एषः (ग) धर्मराजः तवोपरि कुपितः, यदनेन अकाले दासेरकोऽयं मदीयो व्यापादितः, तत् सहस्रगुणमुष्ट्रमस्य सकाशात् ग्रहीष्यामीति निश्चित्य बृहन्मानम् आदाय अग्रेसरस्य उष्ट्रस्य ग्रीवायां घण्टां बद्ध्वा व्यापन्नदासेरकसत्कान् अपि पितृपितामहान् आदाय वैरनिर्यातनार्थमायात एव'। सिंहोऽपि तत् श्रुत्वा (घ) सर्वतो दूरादेव अवलोक्य मृतमुष्ट्रं परित्यज्य प्राणभयात् प्रनष्टः। चतुरकोऽपि शनैः शनैः तस्य उष्ट्रस्य मांसं भक्षयामास। अतोऽहं ब्रवीमि,—'परस्य पीडनं कुर्वन्' इति"।

अथ दमनके गते सञ्जीवकश्चिन्तयामास,—"अहो! किमेतन्मया कृतं, यत् (ङ) शष्पादोऽपि मांसाशिनस्तस्यानुगः संवृत्तः!! अथवा साधु इदमुच्यते,—

अगम्यान् यः पुमान् याति असेव्यांश्च निषेवते।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा॥ ४००॥

(क) वनान्तरम्—अन्यत् वनम् [ नित्यसमासः ]। गम्यता—पलाय्यतामित्यर्थः।

(ख) व्याकुलयसि—व्याकुलं करोषि, उद्वेजयसि इत्यर्थः।

(ग) धर्मराजः,—यमः, धर्मदेवो वा। अनेन—सिंहेन, त्वयेत्यर्थः। बृहन्मानं—महापरिमाणं, बहूनुष्ट्रानित्यर्थः। व्यापन्नदासेरकसत्कान्—विनाशितोष्ट्रसम्बन्धिनः इत्यर्थः।

(घ) सर्वतः,—समन्तात्। प्रनष्टः,—पलायितः, अन्तर्हित इत्यर्थः।

(ङ) शष्पादः,—तृणभोजी, [ क्विपो वैकल्पिकात् अण् ]। मांसेति।—मांसाशिनः,—मांसभोजिनः। तस्य—पिङ्गलकस्य। अनुगः,—अनुचरः, संश्रयः, अभूदिति शेषः।

अगम्यानिति।—यः पुमान् अगम्यान् गमनायोग्यान्, याति गच्छति, असेव्यांश्च सेवानर्हांश्च, निषेवते भजते, अश्वतरी गर्भं यथा मृत्यवे गृह्णातीति भावः, तथा स मृत्युम् उपगृह्णाति प्राप्नोति; अकार्य्यकारिणो मरणमवश्यम्भावीति भावः॥ ४००॥

तत् किं करोमि? क्व गच्छामि? कथं मे शान्तिर्भविष्यति? अथवा तमेव पिङ्गलकं गच्छामि, कदाचित् मां शरणागतं रक्षति, प्राणैर्न वियोजयति। यत उक्तञ्च,—

धर्मार्थं यततामपीह विपदो दैवात् यदि स्युः क्वचित्
तत्तासामुपशान्तये सुमतिभिः कार्य्यो विशेषान्नयः।
लोके ख्यातिमुपागताऽत्र सकले लोकोक्तिरेषा यतो
दग्धानां किल वह्निना हितकरः स्वेदोऽपि तत्सम्भवः॥४०१॥

तथा च,—लोकेऽथवा तनुभृतां निजकर्मपाकं
नित्यं समाश्रितवतां विहितक्रियाणाम्।
भावार्जितं शुभमथाप्यशुभं निकामं
यद्भावि तद्भवति नात्र विचारहेतुः॥ ४०२ ॥

धर्मार्थमिति।—इह जगति, धर्मार्थं धर्मनिमित्तं, यतता चेष्टमानानां, [ यतधातोरात्मनेपदित्वात् शतृप्रत्ययो मृग्यः ] यदि क्वचित् दैवात् विपदः अपि स्युः भवेयुः, तत् तदा, तासां विपदाम्, उपशान्तये प्रशमनाय, सुमतिभिः सुबुद्धिभिः, पुरुषैरिति शेषः, विशेषात् नयः न्यायाचरणमित्यर्थः, कार्य्यः विधेयः; धार्मिकाणां विपदि जातायामपि न खलु अधर्मस्तेषां सेवनीय इति भावः; यतः अत्र सकले सर्वस्मिन्, लोके जगति, एषा लोकोक्तिः जनश्रुतिः, ख्यातिमुपागता प्रसिद्धिं गता इत्यर्थः, यत् वह्निना अग्निना, दग्धानाम्, अङ्गानामिति शेषः, तस्मात् वह्नेः,सम्भवः जातः, स्वेदोऽपि तापोऽपि, हितकरः उपकारी, किलेति वार्त्तायाम्; वह्निना दग्धदेहे यथा तत्तापः हितकरः, तथा प्राणविपत्तिसम्भावनायां येन तद्विपत्सम्भावना, तदाश्रयणमेव श्रेयः; "विषस्य विषमौषधम्" इति स्मरणादिति भावः। शार्दूलविक्रीडितं वृत्तम्॥४०१॥

लोके इति।—अथवा लोके जगति, नित्यं सततमेव,निजकर्मपाकं स्वकर्मजनितां परिणतिमित्यर्थः, समाश्रितवताम् उपभुक्तवतां, विहितक्रियाणां विहिता अनुष्ठिता, क्रिया शुभाशुभं कर्म इत्यर्थः, यैः तथोक्तानाम्, इह जन्मनि पूर्वजन्मनि वा इति भावः, तनुभृतां प्राणिनां, भावार्जितं स्वकर्मोपार्जितं, शुभम् अथापि अथवा, अशुभं यत् निकामम् अत्यर्थं, भावि अवश्यम्भावि इत्यर्थः, तत् भवति, अत्र न विचारहेतुः, अस्ति कश्चिदिति शेषः; कर्मफलस्य सर्वेषामेवावश्यभोक्तव्यतया व्यर्थमेव विचारणमिति भावः। वसन्ततिलकं वृत्तम्॥ ४०२ ॥

अपरञ्च, अन्यत्र गतस्यापि मे कस्यचित् दुष्टसत्त्वस्य मांसाशिनः सकाशात् मृत्युर्भविष्यति, तद्वरं सिंहात्। उक्तञ्च,—

महद्भिः स्पर्द्धमानस्य विपदेव गरीयसी।
दन्तभङ्गोऽपि नागानां श्लाघ्यो गिरिविदारणे॥ ४०३॥

तथा च,—महतोऽपि क्षयं लब्ध्वा श्लाघ्यं नीचोऽपि गच्छति।
दानार्थी मधुपो यद्वद्गजकर्णसमाहतः”॥ ४०४॥

एवं निश्चित्य स स्खलितगतिर्मन्दं मन्दं गत्वा सिंहाश्रयं पश्यन् अपठत्,—“अहो! साधु इदमुच्यते,—

अन्तर्लीनभुजङ्गमं गृहमिव व्यालाकुलं वा वनं
ग्राहाकीर्णमिवाभिरामकमलच्छायासनाथं सरः।
नानादुष्टजनैरसत्यवचनासक्तैरनार्य्यैर्वृतं
दुःखेन प्रतिगम्यते प्रचकितैः राज्ञां गृहं वार्धिवत्”॥४०५॥

एवं पठन् दमनकोक्ताकारं पिङ्गलकं दृष्ट्वा प्रचकितः

---

महद्भिरिति।—महद्भिः, जनैः सहेति शेषः, स्पर्द्धमानस्य स्पर्द्धां कुर्वतः जनस्य, विपदेव विपत्तिरपि, गरीयसी श्रेयसी; गिरिविदारणे शुण्डादण्डप्रतिघातेन पर्वतप्रस्फोटनकर्मणि, नागानां हस्तिनां, दन्तभङ्गः दशनस्फोटनम् अपि, श्लाघ्यः प्रशस्यः॥ ४०३॥

महत इति।—नीचोऽपि क्षुद्रोऽपि जनः, दानार्थी गजमदार्थी, अत एव गजकर्णसमाहतः हस्तिकर्णतालताडितः, मधुपो यद्वत् मधुकर इव, महतः जनात्, क्षयं विपदमित्यर्थः, लब्ध्वाऽपि श्लाघ्यं श्लाघनीयत्वं, [ भावे यप्रत्ययः ] गच्छति प्राप्नोति॥ ४०४॥

अन्तरिति।—अन्तर्लीनः अभ्यन्तरे स्थितः, भुजङ्गमो यस्य तादृशं, गृहमिव, व्यालैः श्वापदैः, हिंस्रैरिति यावत्, ( “व्यालो दुष्टगजे सर्पे श्वापदे” इति मेदिनी ) आकुलं व्याप्तं, वनं वा वनमिव, ग्राहैः जलचरविशेषैः, “हाङ्गर” इति वङ्गे प्रसिद्धैः, आकीर्णं व्याप्तम्, अभिरामा शोभना, कमलानां या छाया कान्तिः, तत्सनाथं तद्युक्तं, सर इव, नानादुष्टजनैः विविधैर्दुर्जनैः, असत्यवचनासक्तैः मृषावादरतैः, अनार्य्यैः असाधुभिः, वृतं वेष्टितं, राज्ञां गृहं वार्धिवत् वारिधिरिव, [ वारि जलानि धीयन्ते अत्र इति धाधातोः कि; वार्+धा+कि ] प्रचकितैः प्रकर्षेण भीतैः, साधुभिः जनैरिति शेषः, दुःखेन प्रतिगम्यते, राजभवनं सन्त्राससङ्कुलमिति फलितम्। शार्दूलविक्रीडितं वृत्तम्॥ ४०५॥

(च) संवृतशरीरो दूरतरं प्रणामकृतिं विनाऽपि उपविष्टः। पिङ्गलकोऽपि तथाविधं तं विलोक्य दमनकवाक्यं (छ) श्रद्दधानः कोपात् तस्योपरि पपात। अथ सञ्जीवकः (ज) खरनखर-विकर्त्तितपृष्ठः शृङ्गाभ्यां तदुदरमुल्लिख्य कथमपि तस्मात् अपेतः शृङ्गाभ्यां हन्तुमिच्छन् युद्धायावस्थितः। अथ द्वौ अपि तौ (झ) पुष्पितपलाशप्रतिमौ परस्परवधाकाङ्क्षिणौ दृष्ट्वा करटको दमनकमाह,—"भो मूढ़मते! अनयोर्विरोधं वितन्वता त्वया साधु न कृतं, न च त्वं नीतितत्त्वं वेत्सि, नीतिविद्भिरुक्तञ्च,—

कार्य्याण्युत्तमदण्डसाहसफलान्यायाससाध्यानि ये
प्रीत्या संशमयन्ति नीतिकुशलाः साम्नैव ते मन्त्रिणः।
निःसाराल्पफलानि ये त्वविधिना वाञ्छन्ति दण्डोद्यमैः
तेषां दुर्नयचेष्टितैर्नरपतेरारोप्यते श्रीस्तुलाम्॥ ४०६॥

तत् यदि स्वाम्यभिघातो भविष्यति, तत् किं त्वदीयमन्त्र-

(च) संवृतशरीरः,—सङ्कुचितदेह इत्यर्थः। प्रणामकृतिं—प्रणामक्रियाम्।

(छ) श्रद्दधानः,—विश्वसन्।

(ज) खरेति।—खरैः,—तीक्ष्णैः, नखरैः विकर्त्तितं—विशेषेण छिन्नं, पृष्ठं यस्य तथाभूतः। तदुदरं—तस्य सिंहस्य उदरम्। उल्लिख्य—विपाट्येत्यर्थः। अपेतः,—अपसृतः।

(झ) पुष्पितेति।—विकसितपलाशतरुसदृशौ, रुधिरस्रावादिति भावः। वितन्वता—विस्तारयता, घटयता इत्यर्थः। नीतितत्त्वं—नीतिशास्त्रस्य तत्त्वं—याथार्थ्यम्।

कार्य्याणीति।—ये नीतिकुशलाः नीतिज्ञाः, प्रीत्या साम्नैव सान्त्वेनैव, प्रियवाक्यादिनेत्यर्थः, आयाससाध्यानि कष्टसाध्यानि, उत्तमदण्डः प्रबलसङ्ग्राम एव, साहसफलं येषां तानि, कार्य्याणि संशमयन्ति सम्यक् शान्तिं नयन्ति, ते मन्त्रिणः मन्त्रिपदाधिकारिण इत्यर्थः; ये तु अविधिना अन्यायेन, दण्डोद्यमैः युद्धोद्योगैः, निःसाराल्पफलानि निःसाराणि असाराणि, अल्पफलानि, च कार्य्याणि वाञ्छन्ति, तेषां दुर्नयचेष्टितैः अन्यायाचरणैः, नरपतेः श्रीः राजलक्ष्मीः, तुलां सन्देहम्, आरोप्यते नीयते, तत्र स्थास्यामि न वेति सन्दिग्धा भवति राजलक्ष्मीरित्यर्थः। शार्दूलविक्रीडितं वृत्तम्॥ ४०६॥

वृथा क्रियते ? अथ सञ्जीवको न वध्यते, तथाऽपि (ञ) अभव्यं, यतः प्राणसन्देहात् तस्य च वधः ; तन्मूढ़ ! कथं त्वं मन्त्रिपदम् अभिलषसि ? सामसिद्धिं न वेत्सि, तत् वृथा मनोरथोऽयं ते दण्डरुचेः । उक्तञ्च,—

सामादिदण्डपर्य्यन्तो नयः प्रोक्तः स्वयम्भुवा ।
तेषां दण्डस्तु पापीयांस्तं पश्चाद्विनियोजयेत् ॥ ४०७ ॥

तथा च,—साम्नैव यत्र सिद्धिर्न तत्र दण्डो बुधेन विनियोज्यः ।
पित्तं यदि शर्करया शाम्यति कोऽर्थः पटोलेन ? ॥ ४०८ ॥

तथा च,—आदौ साम प्रयोक्तव्यं पुरुषेण विजानता ।
सामसाध्यानि कार्य्याणि विक्रियां यान्ति न क्वचित् ॥ ४०९ ॥
न चन्द्रेण न चौषध्या न सूर्य्येण न वह्निना ।
साम्नैव विलयं याति विद्वेषप्रभवं तमः ॥ ४१० ॥

---

(ञ) अभव्यम्—अशुभम् । प्राणसन्देहात्—सञ्जीवके जीवति स्वामिनः जीवनसन्देहादिति यावत् । तस्य—सञ्जीवकस्य, वधः, कर्त्तव्य इति शेषः । सामसिद्धिं—साम्ना—सान्त्वना, सिद्धिः ताम् । दण्डरुचेः,—दण्डे रुचिः यस्य तथोक्तस्य, युद्धप्रियस्य इत्यर्थः ।

सामादीति ।—स्वयम्भुवा ब्रह्मणा, सामादिदण्डपर्य्यन्तः सामदानभेददण्डाख्यविधिरित्यर्थः, नयः नीतिः, प्रोक्तः कथितः ; तेषां मध्ये, दण्डः सङ्ग्रामः, पापीयान् अतिनिकृष्टः, पश्चात् सामादित्रये विफले सति, तं दण्डं, विनियोजयेत् प्रयुञ्जीत ॥४०७॥

साम्नैवेति ।—यत्र साम्ना सान्त्वनेनैव, सिद्धिः, भवेदिति शेषः, बुधेन विदुषा, तत्र दण्डः सङ्ग्रामः, न विनियोज्यः न प्रयोज्यः, "न दण्डेन कदाचन" इति चरणादित्यर्थः । यदि शर्करया गुडविकारविशेषेण, पित्तं शाम्यति, तदा पटोलेन कोऽर्थः ? किं प्रयोजनम् ? न किञ्चन, परन्तु मुखविकारसम्पादनमेव इति भावः । आर्य्या वृत्तम् ॥४०८॥

आदाविति ।—विजानता विदुषा, पुरुषेण इति शेषः, आदौ प्रथमं, साम प्रयोक्तव्यं, यतः सामसाध्यानि साम्ना निष्पाद्यानि कार्य्याणि, क्वचित् कुत्रापि, न विक्रियां विकारं, यान्ति गच्छन्ति, सर्व्वत्रैव फलन्ति इत्यर्थः ॥ ४०९ ॥

नेति ।—विद्वेषप्रभवं शत्रुसमुत्थं, तमः तिमिररूपः क्रोध इत्यर्थः, चन्द्रेण न, औषध्या तृणज्योतिर्लतया न, सूर्य्येण न, वह्निना च न विलयं नाशं, याति, किन्तु साम्ना सान्त्वेनैव, विलयं यातीत्यनुषङ्गः ॥ ४१० ॥

तथा यत् त्वं मन्त्रित्वमभिलषसि, तदपि अयुक्तं, यतस्त्वं (ट) मन्त्रिगतिं न वेत्सि। पञ्चविधो हि मन्त्रः ; स च (ठ) कर्मणामारम्भोपायः, पुरुषद्रव्यसम्पत्, देशकालविभागः, विनिपातप्रतीकारः, कार्य्यसिद्धिश्चेति। (ड) सोऽयं स्वाम्यमात्ययोः एकतरस्य किं वा द्वयोरपि विनिपातः समुत्पद्यते लग्नः ; तत् यदि काचित् शक्तिरस्ति, तद्विचिन्त्यतां विनिपातप्रतीकारः। (ढ) भिन्नसन्धाने हि मन्त्रिणां बुद्धिपरीक्षा ; तन्मूर्ख ! तत् कर्त्तुमसमर्थस्त्वं, यतो विपरीतबुद्धिरसि।

उक्तञ्च,—मन्त्रिणां भिन्नसन्धाने भिषजां सान्निपातिके।
कर्मणि व्यज्यते प्रज्ञा स्वस्थे को वा न पण्डितः ?॥४११॥

---

(ट) मन्त्रिगतिं—मन्त्रणः कर्त्तव्यम् इत्यर्थः, वक्ष्यमाणपञ्चविधमन्त्रमिति यावत्।

(ठ) कर्मेति।—कर्मणां सन्ध्यादीनाम्, आरम्भे अनुष्ठाने, षाड्गुण्यप्रयोगे इत्यर्थः, उपायः कौशलम्। पुरुषेति।—पुरुषाणां—सेनानां, कर्मचारिणां वा, द्रव्याणां—धनानाञ्च, सम्पत्—समृद्धिः, पर्य्याप्तः सद्भाव इति भावः। देशेति।—अस्मिन् देशे साम, अस्मिन् देशे दानं विधेयम्, अस्मिन् देशे भेदः, अस्मिन् देशे दण्डः प्रयोक्तव्यः ; अस्मिन् काले साम, अस्मिन् काले दानं प्रयोज्यम, अस्मिन् काले भेदः, अस्मिन् काले दण्डः प्रयोक्तव्यः इत्येवंरूपो विभागः व्यवस्थापनमित्यर्थः। विनिपातेति।—विनिपातः अपायः, तस्य प्रतीकारः यथा न अपायः आपतति तथा प्रतिविधानम्। कार्य्यसिद्धिः,—कार्य्याणां सन्ध्यादीनां, सिद्धिः,—सम्यक् साधनम्।

(ड) स्वाम्यमात्ययोः,—नृपतिमन्त्रिणोः, प्रस्तुते पिङ्गलक-सञ्जीवकयोरित्यर्थः। विनिपातः,—विध्वंसकरः। समुत्पद्यते—समुदेति। लग्न,—सभयः।

(ढ) भिन्नसन्धाने—कृत्यसङ्घटने, विरोधापनयने इत्यर्थः।

मन्त्रिणामिति।—भिन्नसन्धाने वियुक्तयोजने अघटनीयघटनायामिति यावत्, मन्त्रिणाम् अमात्यानाम् ; तथा सान्निपातिके प्रकुपितानां वायुपित्तकफाभिधानानां त्रयाणां समवायजनिते चेत्यर्थः, कर्मणि व्यापारे, भिषजां चिकित्सकानां, प्रज्ञा बुद्धिः, व्यज्यते बोध्यते, स्वयं प्रतीयते इत्यर्थः, स्वस्थे प्रकृतिस्थे जने, को वा जनः पण्डितो न ? अपि तु सर्व एव पाण्डित्यं दर्शयितुं समर्थः इति भावः॥ ४११॥

अन्यच्च,—घातयितुमेव नीचः परकार्य्यं वेत्ति न प्रसाधयितुम्।
पातयितुमेव शक्तिर्नाखोरुद्धर्त्तुमन्नपिटम् ॥ ४१२ ॥

अथवा न ते दोषः, अयं स्वामिनो दोषः, यस्ते वाक्यं श्रद्दधाति। उक्तञ्च,—

नराधिपा नीचजनानुवर्त्तिनो बुधोपदिष्टेन पथा न यान्ति ये।
विशन्ति ते दुर्गममार्गनिर्गमं समस्तसम्बाधमनर्थपिञ्जरम् ॥ ४१३ ॥

तत् यदि त्वमस्य मन्त्री भविष्यसि, तदा अन्योऽपि कश्चित् न अस्य समीपे साधुजनः समेष्यति। उक्तञ्च,—

गुणालयोऽप्यसन्मन्त्री नृपतिर्नाधिगम्यते।
प्रसन्नस्वादुसलिलो दुष्टग्राहो यथा ह्रदः ॥ ४१४ ॥

तथा शिष्टजनरहितस्य स्वामिनोऽपि नाशो भविष्यति।

उक्तञ्च,—चित्रास्वादकथैर्भृत्यैरनायासितकार्मुकैः।
ये रमन्ते नृपास्तेषां रमन्ते रिपवः श्रिया ॥ ४१५ ॥

---

घातयितुमिति।—नीचः क्षुद्रो जनः, परकार्य्यं घातयितुं नाशयितुमेव, वेत्ति जानाति, प्रसाधयितुं सम्पादयितुं, न वेत्तीत्यनुषङ्गः। आखोः मूषकस्य, अन्नपिटं भक्षणीयद्रव्याधारविशेषं, पातयितुमेव भूमाववतारयितुमेव, शक्तिः सामर्थ्यम्, अस्तीति शेषः, उद्धर्त्तुम् उत्तोलयितुं, न शक्तिरित्यनुषङ्गः। आर्य्या वृत्तम् ॥ ४१२ ॥

नराधिपा इति।—ये नराधिपाः राजानः, नीचजनानुवर्त्तिनः क्षुद्रजनमतानुसारिणः सन्तः, बुधोपदिष्टेन विद्वत्प्रदर्शितेन, पथा न यान्ति चलन्ति, कार्य्ये न प्रवर्त्तन्ते इत्यर्थः, ते अमार्गनिर्गमं नास्ति मार्गः निर्गमाय यस्य तत्, निर्गममार्गरहितमित्यर्थः, समस्तसम्बाधं प्रतिबन्धभूयिष्ठं, दुर्गं दुर्गमम्, अनर्थपिञ्जरं व्यसनरूपं पिञ्जरं, विशन्ति प्रविशन्ति, विपद्यन्ते इति भावः। वंशस्थविलं वृत्तम् ॥ ४१३ ॥

गुणालय इति।—गुणाः दयादाक्षिण्यादयः, तेषाम् आलयः आकरोऽपि, नृपतिः, असन्तः असाधवः, मन्त्रिणो यस्य तथाभूतः, दुर्मन्त्रिपरिवृतः चेत् इत्यर्थः, प्रसन्नं स्वच्छं, स्वादु सुस्वादं, सलिलं यस्य तादृशः, अथ च दुष्टाः ग्राहाः जलजन्तुभेदाः यत्र तथाभूतः, ह्रदः यथा जलाशय इव, न अधिगम्यते न सेव्यते, लोकैरिति शेषः ॥ ४१४ ॥

चित्रेति।—ये नृपाः, चित्राः मनोज्ञाः, आस्वादाः यासां तादृश्यः, कथाः वचनानि येषां तैः, मधुरभाषिभिरित्यर्थः, किन्तु अनायासितं कर्मणि अनियुक्तं,

तत् किं मूर्खोपदेशेन ? यतः तत्र केवलं दोषः, न गुणः ।

उक्तञ्च,—नानाम्यं नमते दारु नाश्मनि स्यात् क्षुरक्रिया ।

सूचीमुखं विजानीहि नाशिष्यायोपदिश्यते" ॥ ४१६ ॥

दमनक आह,—"कथमेतत् ?" सोऽब्रवीत्,—

## कथा १७ ।

"अस्ति कस्मिंश्चित् पर्वतैकदेशे वानरयूथम् । (थ) तच्च कदाचित् हेमन्तसमये अतिकठोरवातसंस्पर्शवेपमानकलेवरं तुषारवर्षोद्धतप्रवर्षघनधारानिपातसमाहतं न कथञ्चित् शान्तिमगमत् । अथ केचित् वानराः (त) वह्निकणसदृशानि गुञ्जाफलानि अवचित्य वह्निवाञ्छया फूत्कुर्वन्तः समन्तात् तस्थुः । अथ सूचीमुखो नाम पक्षी तेषां तं वृथाऽऽयासम् अवलोक्य प्रोवाच,—'भोः ! सर्वे मूर्खाः यूयं, नैते वह्निकणाः, गुञ्जाफलानि एतानि, तत् किं वृथा श्रमेण ? न एतस्मात् शीतरक्षा भविष्यति ; तत् अन्विष्यतां कश्चित् निर्वातो वनप्रदेशो

---

कार्मुकं धनुः यैः तथाभूतैः, काव्यांशमौरित्यर्थः, भृत्यैः सेवकैः, रमन्ते क्रीडन्ति, न तु राजकार्य्यं कुर्वन्तीति भावः, रिपवः शत्रवः, तेषां नृपाणां, श्रिया सम्पदा, रमन्ते हृष्यन्तीत्यर्थः ; रिपवस्तान् पराभूय सम्पदो हरन्तीति भावः ॥ ४१५ ॥

नेति ।—अनाम्यम् अनमनीयं, दारु काष्ठं, न नमते [आत्मनेपदम् अत्र छन्दोऽनुरोधात्] केनापि नतं न भवति, अश्मनि प्रस्तरे, क्षुरक्रिया क्षौरकर्म, न स्यात्, प्रस्तरं क्षुरेण छेत्तुं न कोऽपि शक्नुयादिति भावः । अशिष्याय अयाज्यशिष्याय, अविनयवते इत्यर्थः, न उपदिश्यते ; अत्र दृष्टान्तं—सूचीमुखं तदाख्यं पक्षिणं, विजानीहि ; सूचीमुखः अविनयवद्भ्य उपदिश्य विपन्नोऽभवदिति निष्कर्षः ॥ ४१६ ॥

(थ) तच्च—वानरयूथम् । अतिकठोरेति ।—अतिकठोरेण अत्युत्कटेन, वातसंस्पर्शेन वायुधर्षणेन, वेपमानं कम्पमानं, कलेवरं शरीरं यस्य तथोक्तम् । तुषारेति ।—तुषारवर्षम्—तुहिनानि स्नव इव, उद्धतेन—उत्कटेन, प्रवर्षस्य—प्रबलवृष्टेः, घनधारानिपातेन—सान्द्राऽऽसारपतनेन, समाहतं—सम्यक् ताडितम् । शान्तिं—स्वास्थ्यम् ।

(त) वह्निकणसदृशानि—स्फुलिङ्गतुल्यानि, वर्णसाम्यादिति भावः ।

(ध) गुहा वा गिरिकन्दरो वा; अद्यापि साटोपा मेघा दृश्यन्ते'। अथ तेषाम् एकतमो वृद्धवानरः तमुवाच,—'भो मूर्ख! किं तव अनेन व्यापारेण? तद्गम्यताम्। उक्तञ्च,—

मुहुर्विघ्नितकर्माणं द्यूतकारं पराजितम्।
नालापयेद्विवेकज्ञो यदीच्छेत् सिद्धिमात्मनः॥ ४१७॥

तथा च,—आखेटकं वृथाक्लेशं मूर्खं व्यसनसंस्थितम्।
आलापयति यो मूढः स गच्छति पराभवम्॥ ४१८॥

सोऽपि तमनादृत्य भूयोऽपि वानरान् अनवरतमाह—'भोः! किं वृथा क्लेशेन?' अथ यावदसौ न कथञ्चित् (द) प्रलपन् विरमति, तावदेकेन वानरेण व्यर्थश्रमत्वात् कुपितेन पक्षाभ्यां गृहीत्वा शिलायाम् आस्फालित उपरतश्च। अतोऽहं ब्रवीमि,—'नानाम्यं नमते दारु' इत्यादि।

तथा च,—पयःपानं भुजङ्गानां केवलं विषवर्द्धनम्।
उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये॥ ४१९॥

---

(ध) गुहा—पर्वतगह्वरम्, अकृत्रिमविलमित्यर्थः। कन्दरः,—दरी, पर्वताकृत्रिमगुहेत्यर्थः। साटोपाः,—सदर्पाः, साडम्बरा इत्यर्थः, सगर्जिता इति यावत्।

मुहुरिति।—विवेकज्ञः प्राज्ञो जनः, यदि आत्मनः स्वस्य, सिद्धिं कल्याणम्, इच्छेत् अभिलषेत्, तदा मुहुः पुनः पुनः, विघ्नितकर्माणं विघ्नितं व्याहतं, कर्म येन तादृशं, कार्य्यव्याघातकमित्यर्थः, तथा द्यूतकारं, तथा पराजितञ्च जनं, न आलापयेत् न तैः आलापं कुर्य्यादित्यर्थः। अयन्तु पक्षी विघ्नितकर्मेति भावः॥ ४१७॥

आखेटकमिति।—यः मूढः, आखेटकं मृगयाशीलं, वृथाक्लेशम् अनर्थकपरिश्रमिणं, मूर्खं, तथा व्यसनसंस्थितं कामजक्रोधजेषु द्यूतादिषु अष्टादशसु समासक्तं जनम्, आलापयति तैरालापं कुर्य्यादित्यर्थः, सः पराभवं गच्छति॥ ४१८॥

(द) प्रलपन्—अविरतं भाषमाणः। आस्फालितः,—आक्षिप्तः। उपरतः,—मृतः।

पयः इति।—भुजङ्गानां पयःपानं दुग्धपानं, केवलं विषवर्द्धनं विषमेव वर्द्धयति इत्यर्थः, हि तथा हि, मूर्खाणाम् उपदेशः प्रकोपाय कोपवर्द्धनाय, भवतीति शेषः, शान्तये न प्रशमाय न; अतो मूर्खा नोपदेष्टव्या इति भावः॥ ४१९॥

अन्यच्च,—उपदेशो न दातव्यो यादृशे तादृशे जने।
पश्य वानरमूर्खेण सुगृही निर्गृहीकृतः" ॥ ४२० ॥

दमनक आह,—"कथमेतत् ?" सोऽब्रवीत्,—

## कथा १८।

"अस्ति कस्मिंश्चित् वनोद्देशे शमीवृक्षः; तस्य लम्बमान-शाखायां कृतावासौ अरण्यचटकदम्पती वसतः स्म। अथ कदाचित् तयोः सुखसंस्थयोर्हेमन्तमेघो मन्दं मन्दं वर्षितुमारब्धः। अत्रान्तरे कश्चित् (ध) शाखामृगो वाताऽऽसारसमाहतः प्रोद्धूषितशरीरो दण्डवीणां वादयन् वेपमानः तत् शमीमूलमासाद्य उपविष्टः। अथ तं तादृशमवलोक्य चटका प्राह,—'भो भद्र !—

हस्तपादसमायुक्तो दृश्यसे पुरुषाकृतिः।
शीतेन खिद्यसे मूढ ! कथं न कुरुषे गृहम् ?' ॥४२१॥

एतत् श्रुत्वा तां वानरः सकोपमाह,—'अधमे ! कस्मात् न त्व (न) मौनव्रता भवसि ?' इत्युक्त्वा पुनरचिन्तयत्,—'अहो ! धाष्टर्यम् अस्याः, अद्य मामुपहसति !!—

उपदेश इति।—यादृशे तादृशे यस्मिन् कस्मिन्नपि, जने, [ अत्र मुख्यदानाभावेन सम्प्रदानत्वाभावात् विषयाधिकरणे सप्तमी ] उपदेशः न दातव्यः, पश्य अवलोकय, वानरमूर्खेण सुगृही उत्तमगृहस्थः, निर्गृहीकृतः गृहशून्यीकृतः ॥ ४२० ॥

(ध) शाखामृगः,—वानरः, वाताऽऽसारसमाहतः,—वातसंवलितवृष्टिधारा-ताडितः। प्रोद्धूषितशरीरः,—वृष्टिजलाभिषक्तदेहः। दण्डवीणां—दण्ड एव वीणा ताम्, दण्डेन वीणां कुर्वन्निव प्रतीयमानमिति वा। वेपमानः,—कम्पमानः। शमीमूलं—शम्याः अग्निगर्भतरुविशेषस्य, सक्तुफलेत्यपरपर्य्यायकस्य वृक्षभेदस्य ("शमी सक्तुफला शिवा" इत्यमरः) मूलं—पाददेशः तत्।

हस्तेति।—रे मूढ ! हस्तपादेन समायुक्तः करचरणविशिष्टः, पुरुषाकृतिः नराकृतिः, दृश्यसे, अथ च शीतेन खिद्यसे क्लिश्यसे, कथं गृहं न कुरुषे ? ॥ ४२१ ॥

(न) मौनव्रता भवसि—तूष्णीं न तिष्ठसीत्यर्थः। धाष्टर्यं—चापल्यं, प्रागल्भ्यम् इत्यर्थः।

सूचीमुखी दुराचारा रण्डा पण्डितमानिनी।
नाशङ्कते प्रजल्पन्ती तत् किमेनां न हन्म्यहम् ?' ॥४२२॥

एवं विचिन्त्य प्रकाशं तामाह,—'मुग्धे! किं तव ममोपरि चिन्तया ?

उक्तञ्च,—वाच्यं श्रद्धासमेतस्य पृच्छतश्च विशेषतः।
प्रोक्तं श्रद्धाविहीनस्य अरण्यरुदितोपमम्' ॥ ४२३ ॥

तत् अनुभव तं धार्ष्ट्यस्य फलम्' इत्युक्त्वा यावत् (प) कुलायस्थितया तया अभिहितः सः, तावत् तां शमीमारुह्य तस्याः कुलायं शतधा खण्डशः अकरोत्। अतोऽहं ब्रवीमि—'उपदेशो न दातव्यः' इति। तन्मूर्ख! (फ) शिक्षापितोऽपि न शिक्षितः त्वम्; अथवा न ते दोषोऽस्ति; यतः साधोः शिक्षा गुणाय सम्पद्यते, न असाधोः। उक्तञ्च,—

किं करोत्येव पाण्डित्यमस्थाने विनियोजितम् ?
अन्धकारप्रतिच्छन्ने घटे दीप इवाहितः ॥ ४२४ ॥

---

सूचीति।—इयं सूचीमुखी सूचीव मुखं यस्याः सा, दुराचारा दुर्वृत्ता, रण्डा धूर्त्ता, विधवा वा, "राँडी" इति वङ्गभाषया व्यवहृता इति भावः; पण्डितमानिनी पण्डितमिव आत्मानं मन्यते या सा, ["आत्ममाने खश्च" ( ३।२।८३ पा० ) इति सूत्रेण मनधातोर्णिनिः] सती प्रजल्पन्ती वदन्ती, मामिति शेषः, न आशङ्कते न बिभेति, तत् तस्मात्, एनां चटकां, किं कथम्, अहं न हन्मि न नाशयामि ? ॥ ४२२ ॥

वाच्यमिति।—श्रद्धासमेतस्य श्रद्धान्वितस्य, विशेषतः विशेषेण, पृच्छतश्च जिज्ञासमानस्य च, जनस्य इति शेषः, सम्बन्धे वाच्यं वक्तव्यं, श्रद्धाविहीनस्य अश्रद्दधानस्य, समीपे प्रोक्तं वचनम्, अरण्यरुदितोपमम् अरण्यरोदनतुल्यम्; निष्फलत्वादिति भावः; अश्रद्दधाने अजिज्ञासमाने च मयि ते वचनं निष्फलमित्याशयः ॥ ४२३ ॥

( प ) कुलायस्थितया—नीडवासिन्या।

( फ ) शिक्षापितः,—शिक्षावान् कृतः। [ शिक्षावत् शब्दात् तत्करोत्यर्थे णिचि इष्ठवद्भावात् मतुपो लुक्, ततः पुगागमः ]।

किमिति।—अस्थाने अपात्रे, विनियोजितं समाहितं, पाण्डित्यं सदुपदेशः, अन्धकारप्रतिच्छन्ने तिमिरपूर्णे, घटे घटस्याभ्यन्तरे इत्यर्थः, आहितः अर्पितः, दीप इव

तत् (ब) व्यर्थपाण्डित्यमाश्रित्य मम वचनमशृण्वन् न आत्मनः शान्तिमपि वेत्सि, तन्नूनम् अपजातः त्वम्। उक्तञ्च,—

जातः पुत्रोऽनुजातश्च अतिजातस्तथैव च।
अपजातश्च लोकेऽस्मिन् मन्तव्यः शास्त्रवेदिभिः ॥४२५॥

मातृतुल्यगुणो जातस्त्वनुजातः पितुः समः।
अतिजातोऽधिकस्तस्मादपजातोऽधमाधमः ॥ ४२६ ॥

अप्यात्मनो विनाशं गणयति न खलः परव्यसनहृष्टः।
प्रायो मस्तकनाशे समरमुखे नृत्यति कबन्धः ॥ ४२७ ॥

अहो! साधु इदमुच्यते,—

धर्मबुद्धिः कुबुद्धिश्च द्वावेतौ विदितौ मम।
पुत्रेण व्यर्थपाण्डित्यात् पिता धूमेन घातितः" ॥ ४२८ ॥

दमनक आह,—"कथमेतत्?" सोऽब्रवीत्,—

---

किं करोत्येव? प्रतिबद्धप्रकाशोऽसौ केवलं तदाभ्यन्तरस्थितं वस्तु प्रकाशयितुमसमर्थः इति न, अपि तु स्वयं सपदि विलयं गच्छत्येवेति भावः ॥ ४२४ ॥

(ब) व्यर्थपाण्डित्यम्—अहं जानामीति मिथ्याऽभिमानम्। अपजातः,—अधमजातः।

जात इति।—अस्मिन् लोके शास्त्रवेदिभिः शास्त्रज्ञैः, जातः, अनुजातः, अतिजातः, तथा अपजातः इति चतुर्विधः पुत्रः मन्तव्यः ॥ ४२५ ॥

मातृतुल्येति।—मातुस्तुल्यः गुणो यस्य तथाविधः, पुत्रः, जातः जातसंज्ञकः; पितुः समः पितृतुल्यगुणः, पुत्रः, अनुजातः; तस्मात् पितुः, अधिकः अधिकगुणः, पुत्रः, अतिजातः; अधमाधमः अत्यधमः, पुत्रः अपजातः, उच्यते इति शेषः ॥४२६॥

अपीति।—खलः दुर्जनः, परव्यसने परेषां स्वेतरेषां, व्यसने विपदि, हृष्टः आनन्दितः सन्, आत्मनः स्वस्य, विनाशमपि न गणयति न पश्यतीत्यर्थः; कबन्धः छिन्नशिराः कायः, मस्तकस्य नाशे सत्यपि, स्वविनाशमगणयित्वाऽपीति भावः, समरमुखे रणाङ्गने, युद्धक्षेत्रे इत्यर्थः, प्रायः बाहुल्येन, नृत्यति, खलस्तु कबन्धवत् स्वव्यसनानभिज्ञः जड इति भावः। दृष्टान्तालङ्कारः। आर्या वृत्तम् ॥ ४२७ ॥

धर्मबुद्धिरिति।—धर्मबुद्धिः कुबुद्धिश्च एतौ द्वौ मम विदितौ ज्ञातौ, पुत्रेण कुबुद्धिनेति भावः, व्यर्थपाण्डित्यात् विफलचातुर्यात्, पिता, आत्मन इति शेषः, धूमेन धूममार्गेण इत्यर्थः, घातितः विनाशितः ॥ ४२८ ॥

## कथा १९ ।

कस्मिंश्चित् (भ) अधिष्ठाने धर्मबुद्धिः पापबुद्धिश्च द्वे मित्रे प्रतिवसतः स्म। अथ कदाचित् पापबुद्धिना चिन्तितम्,—'अहं तावत् मूर्खः (म) दारिद्र्योपेतश्च; तदेनं धर्मबुद्धिमादाय देशान्तरं गत्वा अस्य आश्रयेण अर्थोपार्जनं कृत्वा एनमपि वञ्चयित्वा सुखीभवामि'। अथ अन्यस्मिन् अहनि पापबुद्धिः धर्मबुद्धिं प्राह,—'भो मित्र! (य) वार्द्धकभावे किं त्वमात्म-विचेष्टितं स्मरिष्यसि? देशान्तरमदृष्ट्वा कां शिशुजनस्य वार्त्तां कथयिष्यसि? उक्तञ्च,—

देशान्तरेषु बहुविधभाषावेशादि येन न ज्ञातम्।
भ्रमता धरणीपीठे तस्य फलं जन्मनो व्यर्थम्॥ ४२९॥

तथा च—विद्यां वित्तं शिल्पं तावन्नाप्नोति मानवः सम्यक्।
यावत् व्रजति न भूमौ देशाद्देशान्तरं हृष्टः'॥ ४३०॥

अथ तस्य तद्वचनमाकर्ण्य प्रहृष्टमनाः तेनैव सह गुरु-जनानुज्ञातः शुभे अहनि देशान्तरं प्रस्थितः। तत्र च धर्मबुद्धि-प्रभावेण भ्रमता पापबुद्धिना प्रभूततरं वित्तम् आसादितम्।

(भ) अधिष्ठाने—पुरे, नगरे इति यावत्, ("अधिष्ठानं चक्रपुरप्रभावाध्या-सनेष्वपि" इत्यमरः)।

(म) दारिद्र्योपेतः,—दारिद्र्ययुक्तः, निर्धन इत्यर्थः।

(य) वार्द्धकेति।—वार्द्धकभावे—वृद्धावस्थायां, किम् आत्मविचेष्टितं—स्वकार्य्यं, स्मरिष्यसि?—स्मृतिविषयमानेष्यसि? इत्यर्थः।

देशान्तरेष्विति।—येन जनेन, देशान्तरेषु भ्रमता विचरता सता, बहुविध-भाषावेशादि न ज्ञातं, तस्य धरणीपीठे भूतले, जन्मनः फलं व्यर्थम्; अविज्ञात-विदेशवृत्तान्तस्य कूपमण्डूकवत् वृथैव जन्म इति भावः। आर्य्या वृत्तम्॥ ४२९॥

विद्यामिति।—भूमौ पृथिव्यां, मानवः हृष्टः सन्, यावत् देशात् देशान्तरं न व्रजति, विद्यां, वित्तं धनं, शिल्पं वैज्ञानिकव्यापारमित्यर्थः, ("विज्ञानं शिल्पशास्त्रयोः" इत्यमरोक्तेः) तावत् सम्यक् सुष्ठु, न आप्नोति न लभते। आर्य्या वृत्तम्॥ ४३०॥

ततश्च द्वौ अपि तौ प्रभूतोपार्जितद्रव्यौ प्रहृष्टौ स्वगृहं प्रति औत्सुक्येन निवृत्तौ। उक्तञ्च,—

प्राप्तविद्यार्थशिल्पानां देशान्तरनिवासिनाम्।
क्रोशमात्रोऽपि भूभागः शतयोजनवद्भवेत्॥ ४३१॥

अथ स्वस्थानसमीपवर्त्तिना पापबुद्धिना धर्मबुद्धिरभिहितः,—'भद्र! न सर्वमेतद्धनं गृहं प्रति नेतुं युज्यते, यतः (र)कुटुम्बिनो बान्धवाश्च प्रार्थयिष्यन्ते। तदत्र एव वनगहने क्वापि भूमौ निक्षिप्य किञ्चिन्मात्रमादाय गृहं प्रविशावः, भूयोऽपि प्रयोजने सञ्जाते (ल) तन्मात्रं समेत्य अस्मात् स्थानात् नेष्यावः।

उक्तञ्च—न वित्तं दर्शयेत् प्राज्ञः कस्यचित् स्वल्पमप्यहो!।
मुनेरपि यतस्तस्य दर्शनाच्चलते मनः॥ ४३२॥

तथा च,—यथाऽऽमिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि।
आकाशे पक्षिभिश्चैव तथा सर्वत्र वित्तवान्'॥ ४३३॥

---

प्राप्तेति।—प्राप्तानि विद्यार्थशिल्पानि यैः तथाभूतानां, लब्धविद्यानाम् उपार्जितधनानां, शिक्षितशिल्पकौशलानाञ्चेत्यर्थः, देशान्तरनिवासिनाम् अन्यदेशप्रोषितानां, जनानामिति शेषः, क्रोशमात्रोऽपि क्रोशपरिमितोऽपि, [प्रमाणे मात्रच् प्रत्ययः] भूभागः शतयोजनवत् चतुःशतक्रोशमित इव, अतिदूरवर्त्तीव इत्यर्थः, भवेत्। यदर्थं जना देशान्तरं गच्छन्ति, यावत् तदधिगमो न स्यात्, तावत् स्वदेशं प्रति निरुत्सुकाः तिष्ठन्ति, कृतकार्य्यास्तु स्वदेशं प्रति अतिशयसमुत्सुकतया मुहूर्त्तस्यापि विलम्बस्य असहनीयत्वात् अल्पमात्रमपि पन्थानं बहुदूरमिव मन्यन्ते इति भावः॥ ४३१॥

(र) कुटुम्बिनः,—पोष्यगृहजनाः। बान्धवाः,—ज्ञातयः, सुहृदो वा।

(ल) तन्मात्रं—प्रयोजनोपयुक्तम् इत्यर्थः।

नेति।—प्राज्ञः पण्डितः, [प्रज्ञा विद्यतेऽस्य, इति प्रज्ञादित्वात् अण्प्रत्ययः] जन इति शेषः, स्वल्पमपि वित्तं धनं, कस्यचित् न दर्शयेत्, अहो! आश्चर्य्यमेतत्, यतः तस्य वित्तस्य, दर्शनात् मुनेरपि विषयनिःस्पृहस्यापि इत्यर्थः, मनः चलते [आत्मनेपदमत्र चिन्त्यम्] चञ्चलं भवतीति भावः॥ ४३२॥

यथेति।—यथा मत्स्यैः मीनैः, जले सलिले, श्वापदैः हिंस्रैः, भुवि पृथिव्यां, स्थले इति यावत्, पक्षिभिः विहगैश्च, आकाशे अन्तरीक्षे, स्थितमिति शेषः, आमिषं

तत् आकर्ण्य धर्मबुद्धिः आह,—'भद्र! एवं क्रियताम्'। तथा अनुष्ठिते द्वौ अपि तौ स्वगृहं गत्वा सुखेन स्थितवन्तौ।

अथ अन्यस्मिन् अहनि पापबुद्धिः (व) निशीथे अटव्यां गत्वा तत् सर्वं वित्तं समादाय गर्त्तं पूरयित्वा स्वभवनं जगाम। अथ अन्येद्युः धर्मबुद्धिं समभ्येत्य प्रोवाच,—'सखे! (श) बहुकुटुम्बा वयं वित्ताभावात् सीदामः, तद्गत्वा तत्र स्थाने किञ्चिन्मात्रं धनमानयावः'। सोऽब्रवीत्,—'भद्र! एवं क्रियताम्'। अथ द्वौ अपि गत्वा तत् स्थानं यावत् खननः, तावत् रिक्तं भाण्डं दृष्टवन्तौ। अत्रान्तरे पापबुद्धिः शिरस्ताडयन् प्रोवाच,—'भो धर्मबुद्धे! त्वया हृतमेतद्धनं, न अन्येन, यतो भूयोऽपि गर्त्तापूरणं कृतं, तत् प्रयच्छ मे तस्यार्द्धम्; अन्यथा अहं राजकुले निवेदयिष्यामि'। स आह,—'भो दुरात्मन्! मैवं वद, धर्मबुद्धिः खलु अहम्; न एतच्चौरकर्म करोमि। उक्तञ्च,—

मातृवत् परदाराणि परद्रव्याणि लोष्ट्रवत्।
आत्मवत् सर्वभूतानि वीक्षन्ते धर्मबुद्धयः' ॥ ४३४ ॥

एवं द्वौ अपि तौ (ष) विवदमानौ धर्माधिकारिणं गतौ,

---

भोग्यवस्तु, ("आमिषं पुन्नपुंसकम्। भोग्यवस्तुनि सम्भोगे—" इति मेदिनी) भव्यते, तथा सर्वत्र सर्वस्मिन् देशे, वित्तवान् धनवान् लोकः, भव्यते, जनैरिति शेषः; सर्व एव धनवतो धनं काङ्क्षतीति भावः ॥ ४३३ ॥

(व) निशीथे—अर्द्धरात्रे। अटव्यां—वने।

(श) बहुकुटुम्बाः,—अनेकपरिजनाः। सीदामः,—क्लेशं प्राप्नुमः।

मातृवदिति।—धर्मबुद्धयः धर्मे पुण्यकर्मणि, बुद्धिः मतिर्येषां तथोक्ताः, धार्मिका इत्यर्थः, परदाराणि परकलत्राणि, [दारशब्दस्य पुंस्त्वेऽपि स्त्रीवाचकत्वं विवक्षावशात] मातृवत जननीरिव, परद्रव्याणि लोष्ट्रवत् भूपतितमृत्खण्डानीव, तथा सर्वभूतानि सर्वान् प्राणिनः, आत्मवत् आत्मन इव, वीक्षन्ते पश्यन्ति; धार्मिकाः सर्वत्रैव निस्पृहाः वर्त्तन्ते इति भावः ॥ ४३४ ॥

(ष) विवदमानौ—कलहायमानौ। धर्माधिकारिणं—विचारकम्।

प्रोचतुश्च परस्परं दूषयन्तौ। अथ धर्माधिकरणाधिष्ठितपुरुषैः (स) दिव्यार्थं यावत् नियोजितौ, तावत् पापबुद्धिः प्राह,—'अहो! न सम्यग्दृष्टोऽयं न्यायः। उक्तञ्च,—

विवादेऽन्विष्यते पत्रं तदभावेऽपि साक्षिणः।
साक्ष्यभावात्ततो दिव्यं प्रवदन्ति मनीषिणः॥ ४२५॥

तदत्र विषये मम (ह) वृक्षदेवताः साक्षीभूताः तिष्ठन्ति। ता अपि आवयोः एकतरं चौरं साधुं वा करिष्यन्ति'। अथ तैः सर्वैः अभिहितं,—'भोः! युक्तमुक्तं भवता। उक्तञ्च,—

अन्त्यजोऽपि यदा साक्षी विवादे सम्प्रजायते।
न तत्र विद्यते दिव्यं किं पुनर्यत्र देवताः॥ ४२६॥

तदस्माकमपि अत्र विषये महत् कौतूहलं वर्त्तते। प्रत्युष-समये युवाभ्यामपि अस्माभिः सह तत्र वनोद्देशे गन्तव्यम्' इति। एतस्मिन्नन्तरे पापबुद्धिः स्वगृहं गत्वा स्वजनकमुवाच,—'तात! प्रभूतोऽयं मयाऽर्थो धर्मबुद्धेश्चोरितः, स च तव वचनेन (च) परिणतिं गच्छति, अन्यथा अस्माकं प्राणैः सह

(स) दिव्यार्थं—शपथकरणार्थम्। नियोजितौ—आदिष्टौ इत्यर्थः। न्यायः,—विचारः, युक्तिरिति यावत्। दृष्टः, युष्माभिरिति शेषः।

विवादे इति।—विवादे व्यवहारकर्माणि, प्रथमं पत्रं लेख्यमित्यर्थः, अन्विष्यते अनुसन्धीयते, द्रष्टुं प्रार्थ्यते इत्यर्थः, धर्माधिकरणाधिकारिभिरिति शेषः, तदभावे तस्य पत्रस्य अभावे, साक्षिणः, अन्विष्यन्ते इति शेषः; ततः साक्षिणाम् अभावात् अभावे सति इत्यर्थः, मनीषिणः विद्वांसः, दिव्यं प्रवदन्ति प्रमाणत्वेन कथयन्ति; अतः प्रथममेव दिव्यानुसन्धानमनौचित्यमिति भावः॥ ४२५॥

(ह) वृक्षदेवताः,—वनदेवताः। साक्षीभूताः,—प्रत्यक्षद्रष्ट्र्यः।

अन्त्यज इति।—विवादे अन्त्यजोऽपि नीचजातीयोऽपि, यदा यदि इत्यर्थः, साक्षी सम्प्रजायते लभ्यो भवतीत्यर्थः, तत्र दिव्यं, प्रमाणमिति शेषः, न विद्यते, यत्र पुनः देवताः, साक्षिण्य इति शेषः, तत्र किम्? किं वक्तव्यमिति भावः॥ ४२६॥

(च) परिणतिं—परिपाकम्, अस्माकं सम्यगायत्तामित्यर्थः।

याचति'। स आह,—'वत्स! द्रुतं वद, (क) येन प्रोच्य तत् द्रव्यं स्थिरतां नयामि'। पापबुद्धिः आह,—'तात! अस्ति तत्प्रदेशे महाशमी, तस्यां महत् कोटरमस्ति, तत्र त्वं साम्प्रतमेव प्रविश। ततः प्रभाते यदाऽहं (ख) सत्यश्रावणं करोमि, तदा त्वया वाच्यं यत् 'धर्मबुद्धिश्चौरः' इति। तथा अनुष्ठिते प्रत्यूषे पापबुद्धिः स्नात्वा (ग) धौतप्रावरणो धर्मबुद्धिपुरःसरो धर्माधिकरणिकैः सह तां शमीमभ्येत्य तारस्वरेण प्रोवाच,—

'आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च।
अहश्च रात्रिश्च उभे च सन्ध्ये
धर्मो हि जानाति नरस्य वृत्तम् ॥ ४२७ ॥

भगवति वनदेवते! आवयोर्मध्ये यः चौरः तं कथय'। अथ पापबुद्धिपिता शमीकोटरस्थः प्रोवाच,—'भोः! शृणुत शृणुत, धर्मबुद्धिना अपहृतमेतद्धनम्'। तदाकर्ण्य सर्वे ते राजपुरुषा विस्मयोत्फुल्ललोचना यावद्धर्मबुद्धेः वित्तहरणोचितं निग्रहं शास्त्रदृष्ट्या अवलोकयन्ति, तावद्धर्मबुद्धिना तच्छमी-

(क) येन—त्वद्वचनानुसारेण इत्यर्थः। प्रोच्य—कथयित्वा, साक्ष्यं दत्त्वेति भावः। स्थिरतां—स्थायित्वम्। नयामि—प्रापयामि; यथा तद्धनम् अकस्मात् न वाहयति, तथा करोमीति भावः।

(ख) सत्यश्रावणं करोमि—सत्यं श्रावयामि, राजपुरुषेभ्यः सत्यवाक्यं श्रावयितुं वनदेवतां प्रार्थयामि इत्यर्थः, [भविष्यदर्थे लट्]।

(ग) धौतप्रावरणः,—शुभ्रवसनः। तारस्वरेण—उच्चैःस्वरेण।

आदित्येति।—आदित्यचन्द्रौ सूर्याचन्द्रमसौ, अनिलो वायुः, अनलः अग्निः, द्यौः अन्तरीक्षं, भूमिः पृथिवी, आपः जलं, [अप्शब्दः नित्यबहुवचनान्तः, तथा च—"आपः स्त्री भूम्नि वार्वारि" इत्यमरः] हृदयं मनः, यमः अन्तकः, अहः दिनं, रात्रिश्च, उभे द्वे, सन्ध्ये प्रातःसायंरूपे, तथा धर्मः, नरस्य मानवस्य, वृत्तं चरित्रं, जानाति हि जानात्येव। उपजातिः वृत्तम् ॥ ४२७ ॥

कोटरं (घ) वह्निभोज्यद्रव्यैः परिवेष्ट्य वह्निना सन्दीपितम्।

अथ ज्वलति तस्मिन् शमीकोटरे अर्द्धदग्धशरीरः(ङ) स्फुटितेक्षणः करुणं परिदेवयन् पापबुद्धिपिता निश्चक्राम। ततश्च तैः सर्वैः पृष्टः,—'भोः! किमिदम्?' इत्युक्ते (च) स पापबुद्धिविचेष्टितं सर्वमिदं निवेदयित्वा उपरतः। अथ ते राजपुरुषाः पापबुद्धिं शमीशाखायां प्रतिलम्ब्य धर्मबुद्धिं प्रशस्य इदमूचुः,—'अहो! साधु इदमुच्यते,—

उपायं चिन्तयेत् प्राज्ञस्तथाऽपायञ्च चिन्तयेत्।
पश्यतो वकमूर्खस्य नकुलेन हता वकाः॥' ॥ ४३८ ॥

धर्मबुद्धिः प्राह,—'कथमेतत्?' ते प्रोचुः,—

## कथा २०।

'अस्ति कस्मिंश्चिद्वनोद्देशे (छ) बहुवकसनाथो वटपादपः। तस्य कोटरे कृष्णसर्पः प्रतिवसति स्म। स च वकबालकान् अजातपक्षान् अपि सदैव भक्षयन् कालं नयति। अथ एको वकः

---

(घ) वह्निभोज्यद्रव्यैः,—इन्धनैः, तृणकाष्ठादिभिः दाह्यैरित्यर्थः।

(ङ) स्फुटितेक्षणः,—स्फुटिते—दग्धत्वात् बहिर्निर्गते, ईक्षणे—अक्षितारके इत्यर्थः यस्य तथोक्तः, गलितदृष्टिः इति भावः। करुणं—दीनम्। परिदेवयन्—विलपन्। निश्चक्राम—बहिराजगाम।

(च) सः,—पापबुद्धिपिता। निवेदयित्वा—कथयित्वा, [सोपसर्गात् धातोः ल्यब्विधानात् क्त्वाप्रयोगश्चात्र चिन्त्यः। "निवेद्य" इति साधु]। उपरतः,—मृतः।

उपायमिति।—प्राज्ञः बुद्धिमान् जनः, उपायं साधनं, चिन्तयेत् तथा अपायञ्च विनाशमपि, चिन्तयेत्; यथा उपायः चिन्तनीयः, तथा तस्मिन् उपाये अनुष्ठिते आपाततपूर्वः कोऽप्यपायः आगमिष्यति न वा इत्यपि विभावनीयः इति तात्पर्य्यम्; तथा हि पश्यतो वकमूर्खस्य ["षष्ठी चानादरे" (२।३।३८ पा०) इति अनादरे षष्ठी] पश्यन्तं मूर्खं वकमनादृत्येत्यर्थः, नकुलेन वकाः हताः नाशिताः॥ ४३८॥

(छ) बहुवकसनाथः,—अनेकवकयुक्तः।

तेन भक्षितानि अपत्यानि दृष्ट्वा शिशुवैराग्यात् सरस्तीरमासाद्य (ञ) बाष्पपूरपूरितनयनः अधोमुखस्तिष्ठति। तच्च तादृक् चेष्टितमवलोक्य कुलीरकः कश्चित् प्रोवाच,—'माम! किमेवं रुद्यते भवता अद्य?' स आह,—'भद्र! किं करोमि? मम मन्दभाग्यस्य बालकाः कोटरनिवासिना सर्पेण भक्षिताः, तद्दुःखदुःखितोऽहं रोदिमि। तत् कथय मे, यदि अस्ति कश्चिदुपायः तद्विनाशाय'। तदाकर्ण्य कुलीरकः चिन्तयामास,—'अयं तावत् (झ) अस्मज्जातिसहजवैरी, अतः तथा उपदेशं प्रयच्छामि सत्यानृतं, यथाऽन्येऽपि बकाः सर्वे संक्षयमायान्ति। उक्तञ्च,—

नवनीतसमां वाणीं कृत्वा चित्तन्तु निर्दयम्।
तथा प्रबोध्यते शत्रुः सान्वयो म्रियते यथा' ॥ ४२८ ॥

आह च—'माम! यदि एवं, तत् मत्स्यमांसखण्डानि नकुलस्य बिलद्वारात् सर्पकोटरं यावत् (ञ) प्रक्षिप्य, यथा नकुलस्तन्मार्गेण गत्वा तं दुष्टसर्पं विनाशयति'। अथ तथा अनुष्ठिते मत्स्यमांसानुसारिणा नकुलेन तं कृष्णसर्पं निहत्य तेऽपि तद्वृक्षाश्रयाः सर्वे बकाश्च शनैः शनैर्भक्षिताः। अतो वयं ब्रूमः,—'उपायं चिन्तयेत्' इति। तदनेन पापबुद्धिना उपायश्चिन्तितः, नापायः; ततस्तत्फलं प्राप्तम्'।

एवं मूढ! त्वयाऽपि उपायश्चिन्तितो नापायः पापबुद्धि-

(ञ) बाष्पपूरपूरितनयनः,—अश्रुप्रवाहपूर्णाक्षः।

(झ) अस्मज्जातिसहजवैरी—अस्मज्जातीनां—मत्स्यादीनां, सहजवैरी—स्वभावशत्रुः। सत्यानृतं—सत्यम्, अनृतं—मिथ्या च, सत्येन सह अनृतम् इति वा विग्रहः।

नवनीतेति।—वाणीं वाचं, नवनीतसमाम् अतिकोमलामित्यर्थः, तु किन्तु, चित्तं मनः, निर्दयं निष्ठुरं, कृत्वा विधाय, शत्रुः रिपुः, तथा तेन प्रकारेण, प्रबोध्यते उपदिश्यते, यथा येन प्रकारेण, सान्वयः सवंशः, म्रियते नाशं गच्छति इत्यर्थः, शत्रुरिति शेषः; येन केनापि प्रकारेण शत्रुनाशस्य अवश्यकर्त्तव्यत्वादिति भावः ॥ ४२८ ॥

(ञ) प्रक्षिप्य—पातय, [ क्षिपेदैवादिकस्य अपि लोटि रूपम् ]।

वत्। तत् न भवसि त्वं सज्जनः, केवलं पापबुद्धिः असि, ज्ञातो मया स्वामिनः (ट) प्राणसन्देहानयनात्; प्रकटीकृतं त्वया स्वयमेवात्मनो दुष्टत्वं कौटिल्यञ्च। अथवा साधु इदमुच्यते,—

यत्नादपि कः पश्येच्छिखिनामाहारनिःसरणमार्गम्?।
यदि जलदध्वनिमुदितास्त एव मूढा न नृत्येयुः ॥ ४४० ॥

यदि त्वं स्वामिनं एनां (ठ) दशां नयसि, तत् अस्मद्विधस्य का गणना? तस्मात् मम आसन्नेन भवता न भाव्यम्। उक्तञ्च,—तुलां लोहसहस्रस्य यत्र खादन्ति मूषिकाः।
राजन्! तत्र हरेच्छ्येनो बालकं नात्र संशयः" ॥४४१॥

दमनक आह,—"कथमेतत्?" सोऽब्रवीत्,—

## कथा २१।

"अस्ति कस्मिंश्चिदधिष्ठाने (ड) जीर्णधनो नाम वणिक्पुत्रः। स च (ढ) विभवक्षयात् देशान्तरगमनमना व्यचिन्तयत्,—

---

(ट) प्राणेति।—जीवेन्न वा इति सन्देहोत्पादनात्। प्रकटीकृतं—प्रकाशीकृतम्।

यत्नादिति।—कः यत्नादपि यत्नमाश्रित्यापि, शिखिनां मयूराणाम्, आहारनिःसरणमार्गम् अपानं,पुरीषद्वारमित्यर्थः,पश्येत्? न कोऽपीत्यर्थः; यदि मूढाः ते एव शिखिन एव, जलदानां मेघानां, ध्वनिना मुदिताः हृष्टाः सन्तः, न नृत्येयुः; नृत्यकाले एव तेषामाहारनिःसरणमार्गो दृश्यते, नान्यदा इति भावः ॥ ४४० ॥

(ठ) दशाम्—अवस्थां, दुरवस्थामित्यर्थः, मृत्युदशामिति भावः। अस्मद्विधस्येति।—अस्माकमपि ईदृशी दशा त्वया घटयितव्येति अत्र न सन्देह इति भावः।

तुलामिति।—यत्र मूषिकाः लोहसहस्रस्य हिसहस्रपललौहस्य, तुलां तोलनयन्त्रं, खादन्ति, हे राजन्! तत्र श्येनः पक्षिविशेषः, बालकं हरेत्; अत्र न संशयः सन्देहो नास्ति इत्यर्थः; अतिकठिनस्य लौहतुलादण्डस्य मूषिकभक्षणमसम्भवं यथा न सम्भवति, तथा श्येनपक्षिणाऽपि बालकहरणम्; एकस्य सम्भवत्वे तु अपरस्यापि सम्भव इति भावः; तथा च त्वं स्वामिनमपि यदा एतादृशीमापदं नयसि, तदा अस्माकम् एतादृगवस्थाया त्वया पातनं नासम्भवमित्यभिप्रायः ॥ ४४१ ॥

(ड) जीर्णधनः,—जीर्णं—क्षीणं, धनं—वित्तं यस्य तथोक्तः।

(ढ) विभवक्षयात्—धननाशात्।

'यत्र देशेऽथवा स्थाने भोगान् भुक्त्वा स्ववीर्य्यतः।
तस्मिन् विभवहीनो यो वसेत् स पुरुषाधमः ॥ ४४२ ॥

तथा च,—येनाहङ्कारयुक्तेन चिरं विलसितं पुरा।
दीनं वदति तत्रैव यः परेषां स निन्दितः' ॥ ४४३ ॥

(ण) तस्य च गृहे लोहभारघटिता पूर्वपुरुषोपार्जिता तुला आसीत्। (त) तां च कस्यचित् श्रेष्ठिनो गृहे निक्षेपभूतां कृत्वा देशान्तरं प्रस्थितः। ततः सुचिरं कालं देशान्तरं यथेच्छया भ्रान्त्वा पुनः स्वपुरमागत्य तं श्रेष्ठिनम् उवाच,—'भोः श्रेष्ठिन्! दीयतां मे सा निक्षेपतुला'। स आह,—'भोः! नास्ति सा,त्वदीया तुला मूषिकैर्भक्षिता'। जीर्णधन आह,—भोः श्रेष्ठिन्! नास्ति दोषस्ते, यदि सा मूषिकैः भक्षितेति, ईदृक् एवायं संसारः, न किञ्चित् (थ)अत्र शाश्वतमस्ति; परमहं नद्यां स्नानार्थं गमिष्यामि, तत् त्वमात्मीयं शिशुमेनं धनदेवनामानं मया सह स्नानोपकरणहस्तं प्रेषय' इति। सोऽपि चौर्य्यभयात् (द) तस्य शङ्कितः स्वपुत्रमुवाच,—'वत्स! पितृव्योऽयं तव, स्नानार्थं नद्यां

यत्रेति।—यो जनः,यत्र देशे, अथवा स्थाने,स्ववीर्य्यतः निजपौरुषबलात, भोगान् सुखानि, भुक्त्वा, तस्मिन् पुनः विभवहीनः निर्धनः, वसेत्, स पुरुषेषु मध्ये अधमः; प्रभाववतां धनिनाम आकस्मिकदारिद्र्यस्य लघुतासम्पादकत्वादिति भावः ॥४४२॥

येनेति।—येन जनेन,पुरा पूर्वम्,अहङ्कारयुक्तेन अहमिकापूर्णेन सता, चिरं दीर्घकालं, विलसितं व्यवहृतं, यस्य पुनः तत्रैव देशे,दीनं कातरतां, वदति व्यनक्ति इत्यर्थः, सः, परेषाम् अन्यैः, [ परेषामिति सम्बन्धविवक्षया षष्ठी ] निन्दितः तिरस्कृतः, भवति इति शेषः ॥ ४४३ ॥

(ण) तस्य—जीर्णधनस्य। लोहभारघटिता—द्विसहस्रपललौहनिर्मिता इत्यर्थः, "पलानां द्विसहस्रञ्च भार एकः प्रकीर्त्तितः" इति वैद्यकोक्तेः।

(त) तां—तुलामित्यर्थः। निक्षेपभूतां कृत्वा—न्यासीकृत्य इत्यर्थः।

(थ) अत्र—संसारे। शाश्वतम्—अक्षयम्। स्नानेति।—स्नानस्य उपकरणं—तैलादिकं हस्ते यस्य तथाभूतम्।

(द) तस्य—जीर्णधनस्य, [ सम्बन्धविवक्षया अपादाने षष्ठी ]।

यास्यति, तत् गम्यतामनेन सार्द्धं स्नानोपकरणमादाय' इति।
अहो! साधु इदमुच्यते,—

> न भक्त्या कस्यचित् कोऽपि प्रियं प्रकुरुते नरः।
> मुक्त्वा भयं प्रलोभं वा कार्य्यकारणमेव वा॥ ४४४॥

तथा च,—अत्यादरो भवेत् यत्र कार्य्यकारणवर्जितः।

> तत्र शङ्का प्रकर्त्तव्या परिणामेऽसुखावहा॥ ४४५॥

अथ असौ वणिक्शिशुः स्नानोपकरणमादाय (ध) प्रहृष्ट-मनाः तेन अभ्यागतेन सह प्रस्थितः। तथाऽनुष्ठिते स वणिक् स्नात्वा तं शिशुं (न) नदीगुहायां प्रक्षिप्य तद्द्वारं बृहच्छिलया आच्छाद्य सत्वरं गृहमागतः। पृष्टश्च तेन वणिजा,—'भोः अभ्यागत! कथ्यतां कुत्र मे शिशुः, यः त्वया सह नदीं गतः?' इति। स आह,—'नदीतटात् स श्येनेन हृतः' इति। श्रेष्ठी आह,—'मिथ्यावादिन्! किं क्वचित् श्येनो बालं हर्त्तुं शक्नोति? तत् समर्पय मे सुतम्, अन्यथा राजकुले निवेदयिष्यामि' इति। स आह,—'भोः सत्यवादिन्! यथा श्येनो बालं न नयति, तथा मूषिका अपि लौहभारघटितां तुलां न भक्षयन्ति; तत् अर्पय मे तुलां, यदि (प) दारकेण प्रयोजनम्'। एवं तौ विवदमानौ

---

नेति।—कोऽपि नरः, भयं त्रासहेतुं, प्रलोभं वा प्रलोभनं वा, कार्य्यकारणं वा हेतुहेतुमद्भावं वा, मुक्त्वा विहाय, भक्त्या अनुरागेण एव, कस्यचित् प्रियम् उपकारं, न प्रकुरुते न विदधाति इत्यर्थः, [ "गन्धनावक्षेपण—" ( १।३।३२ पा० ) इत्यात्मने-पदम् ]; प्रियकरणं लोकस्य भयाद्यधीनं, न तु भक्तिनिबन्धनमिति भावः॥४४४॥

अत्यादर इति।—यत्र कार्य्यकारणवर्जितः विना कार्य्यकारणमित्यर्थः, अत्यादरः अतिभक्तिः, भवेत्, तत्र तस्मिन् आदरे, परिणामे असुखावहा विषमा इत्यर्थः, शङ्का प्रकर्त्तव्या; कारणमन्तरेण प्रकृष्टादरस्यासम्भवादिति भावः॥ ४४५॥

(ध) प्रहृष्टमनाः,—सन्तुष्टचित्तः। अभ्यागतेन—आगन्तुकेन, जीर्णधनेन इत्यर्थः।

(न) नदीगुहायां—नदीतीरस्थगर्त्ते। तद्द्वारं—गुहाद्वारम्।

(प) दारकेण—पुत्रेण।

द्वौ अपि राजकुलं गतौ। तत्र श्रेष्ठी तारस्वरेण प्रोवाच,—'भोः! अब्रह्मण्यम्!! अब्रह्मण्यम्!!! मम शिशुः अनेन चौरेण अपहृतः'। अथ धर्माधिकारिणः तमूचुः,—'भोः! समर्प्यतां श्रेष्ठिसुतः'। स आह,—'किं करोमि? पश्यतो मे नदीतटात् श्येनेन अपहृतः शिशुः'। तच्छ्रुत्वा ते प्रोचुः,—'भोः! न सत्यमभिहितं भवता; किं श्येनः शिशुं हर्त्तुं समर्थो भवति?' स आह,—'भो भोः! श्रूयतां मद्वचः,—

तुलां लोहसहस्रस्य यत्र खादन्ति मूषिकाः।
राजन्! तत्र हरेच्छ्येनो बालकं नात्र संशयः' ॥४४६॥

ते प्रोचुः,—'कथमेतत्?' ततः श्रेष्ठी सभ्यानाम् अग्रे आदितः सर्वं वृत्तान्तं निवेदयामास। ततः तैर्विहस्य द्वौ अपि तौ परस्परं सम्बोध्य तुला-शिशुप्रदानेन सन्तोषितौ। अतोऽहं ब्रवीमि,—'तुलां लोहसहस्रस्य' इति।

तन्मूर्ख! (फ) सञ्जीवकप्रसादम् असहमानेन त्वया एतत् कृतम्। अहो! साधु इदमुच्यते,—

प्रायेणात्र कुलान्वितं कुकुलजाः श्रीवल्लभं दुर्भगा
दातारं कृपणा ऋजूननृजवो वित्ते स्थितं निर्धनाः।
वैरूप्योपहताश्च कान्तवपुषं धर्माश्रयं पापिनो
नानाशास्त्रविचक्षणञ्च पुरुषं निन्दन्ति मूर्खाः सदा ॥४४७॥

तुलामिति।—१९६ पृष्ठे व्याख्यातं प्राक् ॥ ४४६ ॥

(फ) सञ्जीवकप्रसादं—सञ्जीवके राजकृतानुग्रहम् इत्यर्थः।

प्रायेणेति।—अत्र जगति, प्रायेण कुकुलजाः नीचकुलोत्पन्नाः, जनाः इति शेषः, कुलान्वितं सत्कुलीनं, दुर्भगाः मन्दभाग्याः, श्रीवल्लभं लक्ष्मीप्रियमित्यर्थः, कृपणाः दातारम्, अनृजवः कुटिलाः, नराः इति शेषः, ऋजून् सरलान् नरान् इत्यर्थः, निर्धनाः वित्ते स्थितं धनिनं, वैरूप्योपहताः कुरूपाः, कान्तवपुषं रम्याकृतिं, पापिनः धर्माश्रयं धार्मिकं, तथा मूर्खाः, नानाशास्त्रेषु विचक्षणं पण्डितं, पुरुषं सदा

तथा च,—मूर्खाणां पण्डिता द्वेष्या निर्धनानां महाधनाः ।
व्रतिनः पापशीलानामसतीनां कुलस्त्रियः ॥ ४४८ ॥

तन्मूर्ख ! त्वया हितमपि अहितं कृतम् । उक्तञ्च,—

पण्डितोऽपि वरं शत्रुर्न मूर्खो हितकारकः ।
वानरेण हतो राजा विप्राश्चौरेण रक्षिताः" ॥ ४४९ ॥

दमनक आह,—"कथमेतत् ?" सोऽब्रवीत्,—

## कथा २२ ।

"कस्यचित् राज्ञो नित्यं वानरोऽतिभक्तिपरो ( व ) अङ्ग-सेवकोऽन्तःपुरेऽपि अप्रतिषिद्धप्रसरोऽतिविश्वासस्थानम् अभूत् । एकदा राज्ञो निद्रां गतस्य वानरे ( भ ) व्यजनं नीत्वा वायुं विदधति वक्षःस्थलोपरि मक्षिका उपविष्टा ; व्यजनेन मुहुर्मुहुर्निषिध्यमानाऽपि पुनःपुनः तत्रैव उपविशति । ततः तेन स्वभावचपलेन मूर्खेण वानरेण क्रुद्धेन सता तीक्ष्णं खड्गम्

---

निन्दन्ति ; स्वाधिकगुणवतां जनानामुत्कर्षासहनमेव नीचानां स्वभावः इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ४४७ ॥

मूर्खाणामिति ।—पण्डिताः विद्वांसः, मूर्खाणां शास्त्रज्ञानविवर्जितानां, महाधनाः धनिनः, निर्धनानां धनहीनानां, व्रतिनः धर्मानुष्ठायिनः, पापशीलानाम् अधर्मकर्मनिरतानां, तथा कुलस्त्रियः कुलकामिन्यः, पतिपरायणाः रमण्य इत्यर्थः, असतीनां कुलटानां, द्वेष्याः विद्वेषास्पदानि, निन्दनीयाः इति यावत्, भवन्ति इति शेषः ॥ ४४८ ॥

पण्डित इति ।—पण्डितः विद्वान्, शत्रुरपि वरं मनाक् प्रियः, हितकारकः प्रियकारी, मूर्खो न, वरमिति शेषः ; तथा हि, राजा वानरेण, हितकारकेण मूर्खेण इति भावः, हतः, विप्राः चौरेण तस्करेण, प्राणहरणेच्छुनाऽपि पण्डितेनेति भावः, रक्षिताः परित्राताः ॥ ४४९ ॥

( व ) अङ्गसेवकः,—शरीरपरिचारकः । अप्रतिषिद्धप्रसरः,—अव्याहतगतिः । अतिविश्वासस्थानं—सम्यक्प्रत्ययभाजनम् ।

( भ ) व्यजनं—तालवृन्तम् । विदधति—कुर्वति, [ भावे सप्तमी ] ।

आदाय तस्या उपरि प्रहारो विहितः। ततो मक्षिका उड्डीय गता, तेन (म) शितधारेण असिना राज्ञो वक्षो द्विधा जातं, राजा मृतश्च। तस्मात् चिरायुरिच्छता नृपेण मूर्खोऽनुचरो न रक्षणीयः। अपरम्,—

एकस्मिन् नगरे कोऽपि विप्रो महाविद्वान् परं पूर्वजन्मयोगेन चौरो वर्त्तते। स तस्मिन् पुरेऽन्यदेशात् आगतान् चतुरो विप्रान् बहूनि वस्तूनि (य) विक्रीणतो दृष्ट्वा चिन्तितवान्,—'अहो! केन उपायेन एषां धनं लभे?' इति विचिन्त्य तेषां पुरोऽनेकानि शास्त्रोक्तानि सुभाषितानि च अतिप्रियाणि मधुराणि वचनानि जल्पता तेषां मनसि विश्वासमुत्पाद्य सेवा कर्त्तुमारब्धा। अथवा साधु इदमुच्यते,—

असती भवति सलज्जा क्षारं नीरञ्च शीतलं भवति।
दम्भी भवति विवेकी प्रियवक्ता भवति धूर्त्तजनः॥ ४५०॥

अथ तस्मिन् सेवां कुर्वति तैः विप्रैः सर्ववस्तूनि विक्रीय बहुमूल्यानि रत्नानि क्रीतानि। ततः तानि जङ्घामध्ये (र) तत्समक्षं प्रक्षिप्य स्वदेशं प्रति गन्तुमुद्यमो विहितः। ततः स धूर्त्तविप्रस्तान् विप्रान् गन्तुमुद्यतान् प्रेक्ष्य चिन्ताव्याकुलितमनाः सञ्जातः,—'अहो! धनमेतत् न किञ्चित् मम (ल) चटितम्। अथ एभिः सह यामि, पथि क्वापि विषं दत्त्वा एतान् निहत्य

---

(म) शितधारेण—तीक्ष्णधारेण।

(य) "परिव्यवेभ्यः क्रियः" (१।३।१८ पा०) इत्यात्मनेपदनियमनात् "विक्रीणानान्" इति पदमेवात्र साधु, "विक्रीणतः" इति प्रयोगस्तु चिन्तनीयः।

असतीति।—असती कुलटा, सलज्जा कपटलज्जावती, भवति; क्षारं लवणाक्तं, नीरं जलञ्च, शीतलं भवति; दम्भी अहङ्कारी जनः, विवेकी प्रज्ञाव्याजोपहितः, भवति, धूर्त्तजनश्च प्रियवक्ता प्रियवादी, भवति॥ ४५०॥

(र) तत्समक्षं—तस्य चौरस्य समक्षम्।

(ल) चाटितं—हृतं, ["चट भेदने" इति भौवादिकस्य णिचायां रूपम्]।

सर्वरत्नानि गृह्णामि' इति विचिन्त्य तेषामग्रे सकरुणं विलप्य इदमाह,—'भोः! मित्राणि! यूयं माम् एकाकिनं मुक्त्वा गन्तुमुद्यताः, तन्मे मनो भवद्भिः सह स्नेहपाशेन बद्धं भवद्विरहनाम्नैव आकुलं सञ्जातं, (व) यथा धृतिं क्वापि न धत्ते ; यूयम् अनुग्रहं विधाय सहायभूतं मामपि सहैव नयत'। तद्वचः श्रुत्वा ते करुणाऽऽर्द्रचित्ताः तेन सममेव स्वदेशं प्रति प्रस्थिताः। अथ अध्वनि तेषां पञ्चानामपि पल्लीपुरमध्ये (श) व्रजतां ध्वाङ्क्षाः कथयितुम् आरब्धाः,—'रे रे किराताः! धावत धावत, सपादलक्षधनिनो यान्ति ; एतान् निहत्य धनं नयत'।

ततः किरातैः ध्वाङ्क्षवचनम् आकर्ण्य सत्वरं गत्वा ते विप्राः (ष) लगुडप्रहारैः जर्जरीकृत्य वस्त्राणि मोचयित्वा विलोकिताः, परं धनं किञ्चिन्न लब्धम्। तदा तैः किरातैः अभिहितं,—'भोः पान्थाः! पुरा कदाऽपि (स) ध्वाङ्क्षवचनमनृतं न आसीत्, ततो भवतां सन्निधौ क्वापि धनं विद्यते, तत् अर्पयत, अन्यथा सर्वेषामपि वधं विधाय (ह) चर्म विदार्य प्रत्यङ्गं प्रेक्ष्य धनं नेष्यामः'। तदा तेषाम् ईदृशं वचनम् आकर्ण्य चौरविप्रेण मनसि चिन्तितं,—'यदा एषां विप्राणां वधं विधाय अङ्गं विलोक्य रत्नानि नेष्यन्ति, तदा माम् अपि वधिष्यन्ति। ततोऽहं पूर्वमेवात्मानम् (क्ष) अरत्नं समर्प्य एतान् मुञ्चामि। उक्तञ्च,—

(व) यथा—येन विरहेणेत्यर्थः। धृतिं—सन्तोषम्।

(श) व्रजतां—गच्छताम्। ध्वाङ्क्षाः,—काकाः। किराताः,—व्याधाः। सपादलक्षधनिनः,—पञ्चविंशतिसहस्राधिकलक्षसङ्ख्याकद्रविणवन्तः।

(ष) लगुडप्रहारैः,—दण्डाघातैः। जर्जरीकृत्य—कुट्टयित्वा।

(स) ध्वाङ्क्षवचनं—काकवाक्यम्। अनृतम्—अलीकं, मिथ्या इत्यर्थः।

(ह) चर्म—त्वक्। प्रत्यङ्गं—सर्वाणि अङ्गानि, [वीप्सार्थे अव्ययीभावः]।

(क्ष) अरत्नं—रत्नहीनम्। एतान्—विप्रान्। मुञ्चामि किरातेभ्यो मोचयामि

मृत्योर्बिभेषि किं बाल ! न स भीतं विमुञ्चति ।

अद्य वाऽब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः ॥४५१॥

तथा च,—गवार्थे ब्राह्मणार्थे च प्राणत्यागं करोति यः ।

सूर्यस्य मण्डलं भित्त्वा स याति परमां गतिम्' ॥४५२॥

इति निश्चित्य अभिहितं,—'भोः किराताः ! यदि एवं, ततो मां पूर्वं निहत्य विलोकय'। ततः तैः तथाऽनुष्ठिते तं धनरहितमवलोक्य अपरे चत्वारोऽपि मुक्ताः। अतोऽहं ब्रवीमि,—'पण्डितोऽपि वरं शत्रुः' इति"।

अथ एवं (क) संवदतोस्तयोः सञ्जीवकः क्षणमेकं पिङ्गलकेन सह युद्धं कृत्वा तस्य खरनखरप्रहाराभिहतो गतासुः वसुन्धरापीठे निपपात। अथ तं गतासुम् अवलोक्य पिङ्गलकस्तद्गुणस्मरणार्द्रहृदयः प्रोवाच,—"भोः! अयुक्तं मया पापेन कृतं सञ्जीवकं व्यापादयता, यतो विश्वासघातादन्यत् नास्ति पापतरं कर्म।

उक्तञ्च,—मित्रद्रोही कृतघ्नश्च यश्च विश्वासघातकः ।

ते नरा नरकं यान्ति यावच्चन्द्रदिवाकरौ ॥ ४५३ ॥

---

इत्यर्थः, मयि अरत्ने दृष्टे सर्वे एव रिक्ता इति विज्ञाय सर्वान् विप्रान् किराताः मोचयिष्यन्तीति भावः।

मृत्योरिति।—हे बाल ! विवेकहीन ! किं कथं, मृत्योः बिभेषि ? स मृत्युः, भीतं जनं, न विमुञ्चति न त्यजति; अद्य वा अब्दशतान्ते वर्षशतान्ते वा, प्राणिनां मृत्युः ध्रुवः निश्चितः ; न कोऽपि मृत्युहस्तात् आत्मानं मोचयितुमीष्टे इति फलितम्। अतो मयाऽद्य निर्भीकेण भवितव्यमिति भावः ॥ ४५१ ॥

गवार्थे इति।—यः गवार्थे गोरक्षणार्थं, ब्राह्मणार्थे ब्राह्मणरक्षणार्थंञ्च, प्राणत्यागं करोति प्राणान् त्यजति, सः सूर्यस्य मण्डलं भित्त्वा अतिक्रम्येत्यर्थः, परमाम् उत्कृष्टां, गतिं लोकमिति यावत्, याति प्राप्नोति, मुक्तो भवतीत्यर्थः ॥ ४५२ ॥

(क) संवदतोः,—परस्परं जल्पतोः। तयोः,—दमनक-करटकयोः। खरनखरप्रहाराभिहतः,—तीक्ष्णनखाघाततासितः इत्यर्थः। गतासुः,—मृतः।

मित्रद्रोहीति।—यः मित्रद्रोही सुहृदामपकारकः, यश्च कृतघ्नः उपकारस्य

भूमिक्षये राजविनाश एव भृत्यस्य वा बुद्धिमतो विनाशे ।
नो युक्तमुक्तं ह्यनयोः समत्वं नष्टाऽपि भूमिः सुलभा न भृत्याः॥४५४॥

तथा मया सभामध्ये स सदैव प्रशंसितः । तत् किं कथयिष्यामि तेषामग्रतः !! उक्तञ्च,—

उक्तो भवति यः पूर्वं गुणवानिति संसदि ।
न तस्य दोषो वक्तव्यः प्रतिज्ञाभङ्गभीरुणा" ॥ ४५५ ॥

एवंविधं प्रलपन्तं दमनकः समेत्य सहर्षमिदमाह,—"देव ! (ख) कातरतमस्तव एष न्यायः, यत् द्रोहकारिणं शष्पभुजं हत्वा इत्थं शोचसि ; तन्न एतत् उपपन्नं भूभुजाम् ।

उक्तञ्च,—पिता वा यदि वा भ्राता पुत्रो भार्य्याऽथवा सुहृत् ।
प्राणद्रोहं यदा गच्छेद्धन्तव्यो नास्ति पातकम् ॥ ४५६ ॥

---

विश्वस्तं, यश्च विश्वासघातकः विश्वासकारिणः अपकर्त्ता, ते नराः चन्द्रदिवाकरौ यावत्, तिष्ठत इति शेषः, तावत् नरकं यान्ति निरयं प्राप्नुवन्ति ॥ ४५३ ॥

भूमीति।—भूमिक्षये राज्यनाशे, वा बुद्धिमतः सदसद्विवेकशालिन इत्यर्थः, भृत्यस्य विनाशे राजविनाश एव राज्ञ एव मरणम् ; किन्तु अनयोः भूमिक्षयभृत्यनाशयोः, समत्वं समानता, यदुक्तं कथितं, तत् नो युक्तं नोचितं, हि यतः, भूमिः नष्टाऽपि सुलभा अनायासेन लभ्या, भृत्याः, न, सुलभा इत्यनुषङ्गः, तस्मात् भृत्यविनाशो भूमिक्षयादधिको राजहानिकर इति भावः । इन्द्रवज्रा वृत्तम् ॥ ४५४ ॥

उक्त इति।—यः यो हि जनः, पूर्वं, येनेति अध्याहार्य्यम् ; संसदि सभायां, गुणवानिति उक्तः भवति, प्रतिज्ञाभङ्गभीरुणा पूर्ववाक्यालीकत्वभयाकुलेन, तेनेति शेषः, तस्य जनस्य, दोषः प्रकृतापराधोऽपीति भावः,न वक्तव्यः ; तथात्वे पूर्वापरविरोधे महत्त्वहानिः स्यादिति भावः ॥ ४५५ ॥

(ख) कातरतमः,—अतिदीनः, दुर्बलचित्त इत्यर्थः । न्यायः,—व्यवहारः । द्रोहकारिणम्—अनिष्टकारिणम् । शष्पभुजं—तृणाशिनम् । उपपन्नं—युक्तम् । भूभुजाम्—राज्ञाम् ।

पितेति।—पिता वा, भ्राता यदि वा, पुत्रो वा, भार्य्या वा, अथवा सुहृत् मित्रं, यदा प्राणद्रोहं गच्छेत् प्राणान् हन्तुमिच्छेदित्यर्थः, तदा हन्तव्यः वध्यः, तत्र पातकं नास्ति, आततायिवधस्यापापजनकत्वस्मरणादिति भावः ॥ ४५६ ॥

तथा च,— राजा घृणी ब्राह्मणः सर्वभक्षी
स्त्री चात्रपा दुष्टमतिः सहायः ।
प्रेष्यः प्रतीपोऽधिकृतः प्रमादी
त्याज्या अमी यश्च कृतं न वेत्ति ॥ ४५७ ॥

अपि च,— सत्याऽनृता च परुषा प्रियवादिनी च
हिंस्रा दयालुरपि चार्थपरा वदान्या ।
भूरिव्यया प्रचुरवित्तसमागमा च
वेश्याऽङ्गनेव नृपनीतिरनेकरूपा ॥ ४५८ ॥

अपि च,— अकृतोपद्रवः कश्चिन्महानपि न पूज्यते ।
पूजयन्ति नरा नागान् न तार्क्ष्यं नागघातिनम् ॥४५९॥

---

राजेति ।—घृणी [ घृणा कृपा अस्य अस्ति इति इनिः ] दयालुः, दयार्द्र-हृदयत्वात् दुष्टनिग्रहासमर्थ इति भावः, ( "घृणा जुगुप्साकृपयोः" इति मेदिनी ) राजा ; सर्वभक्षी सर्वभोजी, खाद्याखाद्यविचाररहितः इत्यर्थः, सदाचारविवर्जित इति भावः, ब्राह्मणः ; अत्रपा निर्लज्जा, स्त्री कुलस्त्री इत्यर्थः, दुष्टमतिः कलुषितबुद्धिः, सहायः सहचरः ; "संसर्गजा दोषगुणा भवन्ति" इति अरणादिति भावः ; प्रतीपः प्रतिकूलः; प्रेष्यः भृत्यः ; प्रमादी अनवधानवान्, अधिकृतः अध्यक्षः, राज्ञः प्रधानपुरुष इत्यर्थः, तथा यश्च कृतं कृतोपकारं, न वेत्ति न स्मरतीत्यर्थः, कृतघ्न इति भावः, अमी त्याज्याः, न आश्रयणीया इति भावः । इन्द्रवज्रा वृत्तम् ॥ ४५७ ॥

सत्येति ।—नृपनीतिः राजनीतिः, वेश्याऽङ्गनेव वारवनितेव, अनेकरूपा बहु-प्रकारा, बहुरूपविलासा इत्यर्थः, यतः सा क्वचित् सत्या, क्वचिदनृता मिथ्या च, परुषा निष्ठुरा, प्रियवादिनी च, हिंस्रा दयालुरपि च, अर्थपरा स्वार्थतत्परा, वदान्या बहुप्रदा चेत्यर्थः, भूरिव्यया बहुव्ययकारिणी, तथा प्रचुरवित्तसमागमा बहुधनो-पार्जनशीला च ; सत्यानृतत्वादीनां परस्परविरुद्धानामपि प्रियाप्रियविषयकतया एकत्र धर्मिभूतायां वेश्याऽङ्गनायां राजनीतौ च स्थितिर्न विरुध्यते इति ज्ञेयम् । वसन्ततिलकं वृत्तम् ॥ ४५८ ॥

अकृतोपद्रव इति ।—अकृतः अननुष्ठितः, उपद्रवः अत्याचारः, परपीडनमित्यर्थः, येन तादृशः, महानपि कश्चित् न पूज्यते नाद्रियते ; तथा हि, नराः नागान् सर्पान्, अत्याचारिण इति भावः, पूजयन्ति, नागघातिनं सर्पहन्तारं, तार्क्ष्यं गरुडं, न,पूजयन्ति

तथा च,—अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः" ॥ ४६० ॥

एवं तेन सम्बोधितः पिङ्गलकः सञ्जीवकशोकं त्यक्त्वा दमनकसाचिव्येन राज्यमकरोत् ।

इति श्रीविष्णुशर्मविरचिते पञ्चतन्त्रे मित्रभेदं नाम
प्रथमं तन्त्रम् ॥ १ ॥

# अथ मित्रसम्प्राप्ति नाम द्वितीयं तन्त्रम् ।



अथ इदमारभ्यते (क)मित्रसम्प्राप्ति नाम द्वितीयं (ख)तन्त्रम्; तस्य अयमाद्यः श्लोकः,—

असाधना अपि प्राज्ञा बुद्धिमन्तो बहुश्रुताः ।
साधयन्त्याशु कार्य्याणि काकाखुमृगकूर्मवत् ॥ १ ॥

तद्यथा अनुश्रूयते,—

अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम् ।

---

इत्यनुषङ्गः, सर्वैव भक्तिः भयमूलिका एव, न तु कापि भावमूलिका दृश्यते इति भावः ॥ ४५९ ॥

अशोच्यानिति ।—त्वम् अशोच्यान् शोकानर्हान्, अन्वशोचः अनुशोचसीत्यर्थः, [सामान्यवचनेऽत्र लङ्] प्रज्ञावादांश्च बुद्धियुक्तवचनानि च, अथवा प्रज्ञानां पण्डितानाम्, अवादान् अवाच्यान्, तथा च पण्डिता नैवं वदन्तीत्यर्थः, भाषसे कथयसि; किन्तु पण्डिताः जनाः, गतासून् मृतान्, अगतासूंश्च अमृतांश्च, न अनुशोचन्ति; मृतानुशोचनात् नितराम् अपण्डितत्वमिति भावः ॥ ४६० ॥

---

(क) मित्रसम्प्राप्तिः,—मित्रस्य सम्प्राप्तिः यत्र इति विग्रहे सुहृन्मिलनसाधनम् इत्यर्थः ।

(ख) तन्त्रं—प्रबन्धः, परिच्छेदः इति वा, अध्याय इति यावत् ।

असाधना इति ।—बुद्धिमन्तः, बहुश्रुताः बहुशास्त्रदर्शिनः, श्रुतसंसारवृत्तान्ता वा, प्राज्ञाः विद्वांसः, जना इति शेषः, असाधनाः निरुपायाः अपि, काकाखुमृगकूर्मवत् काकमूषिकहरिणकच्छपा इव, आशु शीघ्रं, कार्य्याणि साधयन्ति निष्पादयन्ति ॥ १ ॥

तस्य (ग) नातिदूरस्थो महोच्छ्रायवान् नानाविहङ्गोपभुक्त-फलः कीटैः आवृतकोटरः (घ) छायाऽऽश्वासितपथिकजनसमूहो न्यग्रोधपादपो महान्। अथवा युक्तं,—

छायासुप्तमृगः शकुन्तनिवहैर्विष्वग्विलुप्तच्छदः
कीटैरावृतकोटरः कपिकुलैः स्कन्धे कृतप्रश्रयः।
विश्रब्धं मधुपैर्निपीतकुसुमः श्लाघ्यः स एव द्रुमः
सर्वाङ्गैर्बहुसत्त्वसङ्गसुखदो भूभारभूतोऽपरः॥ २॥

तत्र च लघुपतनको नाम वायसः प्रतिवसति स्म। स कदाचित् (ङ) प्राणयात्रार्थं पुरम् उद्दिश्य प्रचलितो यावत् पश्यति,तावत् (च) जालहस्तोऽतिकृष्णतनुः स्फुटितचरणः ऊर्द्ध-

(ग) नातिदूरस्थः,—समीपस्थः, [ नञर्थस्य न-शब्दस्य 'सुप्सुपा' इति समासः ] महोच्छ्रायवान्—अत्युन्नतः। नानेति।—नानाविहङ्गैः विविधपक्षिभिः, उपभुक्तानि भक्षितानीत्यर्थः, फलानि यस्य तथाविधः।

(घ) छायेति।—छायया आश्वासितः,—छायादानेन तर्पितः, पथिकजनानां समूहो येन तथोक्तः। न्यग्रोधपादपः,—वटवृक्षः। महान्—श्लाघ्य इत्यर्थः।

छायेति।—छायासु अनातपेषु, सुप्ता मृगा यस्य तथोक्तः, विष्वक् समन्तात्, शकुन्तनिवहैः पक्षिसङ्घैः, विलुप्ताः वंटिताः, भक्षिताः वा, छदाः पत्राणि यस्य तादृशः, कीटैः क्षुद्रजीवविशेषैः, आवृतानि व्याप्तानि, कोटराणि यस्य तादृशः, कपिकुलैः वानरवृन्दैः, स्कन्धे प्रकाण्डदेशे, कृतः प्रश्रयः प्रणयः, आश्रयग्रहणादिति भावः, "प्रश्रयप्रणयौ समौ" इत्यमरः, यस्य तादृशः, मधुपैः भ्रमरैः, विश्रब्धं निःशङ्कं, निर्जनत्वादिति भावः; निपीतानि निःशेषेण आस्वादितानि, कुसुमानि पुष्पमधूनि इत्यर्थः,यस्य तथोक्तः,तथा सर्वैः अङ्गैः शाखाप्रशाखादिभिः, बहूनां सत्त्वानां प्राणिनां, सङ्गं संसर्गं, आश्रयणं इत्यर्थः, सुखदः, य इति शेषः, स एव द्रुमः वृक्षः, श्लाघ्यः प्रशस्यः, अपरः एतद्व्यतिरिक्तः, भुवः पृथिव्याः, भारभूतः भारस्वरूपः, क्लेशकर इत्यर्थः; सर्वेषामविशेषेण आश्रयदाता एव धन्यः, नेतर इति भावः। शार्दूल-विक्रीड़ितं वृत्तम्॥ २॥

(ङ) प्राणयात्रार्थं—जीविकाऽन्वेषणार्थमित्यर्थः। पुरं—नगरम्।

(च) जालहस्तः,—वागुराधारी। स्फुटितचरणः,—विदीर्णचरणतलः।

केशः (क) यमकिङ्कराकारो नरः सम्मुखो बभूव। अथ तं दृष्ट्वा शङ्कितमना व्यचिन्तयत्,—"यदयं दुरात्मा अद्य मम आश्रयवटपादपसम्मुखोऽभ्येति, तन्न ज्ञायते, अद्य वटवासिनां विहङ्गमानां सङ्क्षयो भविष्यति न वा ?" एवं बहुविधं विचिन्त्य तत्क्षणान्निवृत्य तमेव वटपादपं गत्वा सर्वान् विहङ्गमान् प्रोवाच,—"भोः! अयं दुरात्मा लुब्धको जालतण्डुलहस्तः समभ्येति; तत् सर्वथा तस्य न विश्वसनीयम्। एष जालं प्रसार्य्य तण्डुलान् प्रक्षेप्स्यति, ते तण्डुला भवद्भिः सर्वैरपि कालकूटसदृशा द्रष्टव्याः"। एवं वदतस्तस्य स (ख) लुब्धकस्तत्र वटतले आगत्य जालं प्रसार्य्य सिन्दुवारसदृशान् तण्डुलान् प्रक्षिप्य न अतिदूरं गत्वा निभृतः स्थितः। अथ ये पक्षिणः तत्र स्थिताः, ते (ग) लघुपतनकवाक्यार्गलया निवारितास्तान् तण्डुलान् (घ) हालाहलाङ्कुरान् इव वीक्षमाणा निभृताः तस्थुः।

अत्रान्तरे चित्रग्रीवो नाम कपोतराजः सहस्रपरिवारः प्राणयात्रार्थं परिभ्रमन् तान् तण्डुलान् दूरतोऽपि पश्यन् लघुपतनकेन निवार्य्यमाणोऽपि जिह्वालौल्यात् भक्षणार्थम् अपतत्, सपरिवारो निबद्धश्च। साधु इदमुच्यते,—

---

(क) यमकिङ्कराकारः,—यमदूतसदृशः।

(ख) लुब्धकः,—व्याधः। सिन्दुवारेति।—सिन्दुवारस्य "निसिन्दा" इति प्रसिद्धवृक्षजातकुसुमस्य, सदृशान् तुल्यान्, तस्य श्वेतत्वादिति भावः; तथा च "मुक्ताकलापीकृतसिन्दुवारम" इति कुमारे श्वेतपुष्पत्वात् मुक्तातुल्यत्वमुक्तम्। निभृतः,—प्रच्छन्नः, गुप्त इति यावत्।

(ग) लघुपतनकेति।—लघु—क्षिप्रं, पतनम्—उड्डयनं यस्य तस्य, तदाख्यस्य काकस्य इत्यर्थः, वाक्यमेव अर्गला—द्वारावरोधकदण्डविशेषः तया।

(घ) हालाहलाङ्कुरान्—विषवृक्षप्ररोहान्। वीक्षमाणाः,—पश्यन्तः। निभृताः,—प्रच्छन्नाः, गुप्तभावेनेत्यर्थः।

जिह्वालौल्यप्रसक्तानां जलमध्यनिवासिनाम् ।
अचिन्तितो वधोऽज्ञानां मीनानामिव जायते ॥ ३ ॥

अथवा (ट) दैवप्रतिकूलतया भवति एवं, न तस्य दोषोऽस्ति।

उक्तञ्च,—पौलस्त्यः कथमन्यदारहरणे दोषं न विज्ञातवान् ?
रामेणापि कथं न हेमहरिणस्यासम्भवो लक्षितः ? ।
अक्षैश्चापि युधिष्ठिरेण सहसा प्राप्तो ह्यनर्थः कथम् ?
प्रत्यासन्नविपत्तिमूढमनसां प्रायो मतिः क्षीयते ॥ ४ ॥

तथा च,—कृतान्तपाशबद्धानां दैवोपहतचेतसाम् ।
बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि ॥ ५ ॥

अत्रान्तरे ( ठ ) लुब्धकस्तान् बद्धान् विज्ञाय प्रहृष्टमनाः

---

जिह्वेति ।—जिह्वाया रसनायाः, लौल्य चापल्यं, तस्मिन् प्रसक्तानाम् आसक्तानाम्, अतिलुब्धानाम इत्यर्थः, अज्ञानां मूढानां, जलमध्यनिवासिनां जलमध्यस्थानां, मीनानां मत्स्यानामिव, अचिन्तितः अतर्कितः, वधः विनाशः, जायते सम्पद्यते, अतः अतिलोभो न कर्त्तव्यः इति भावः ॥ ३ ॥

( ट ) दैवप्रतिकूलतया—भाग्यविपर्य्ययेण ।

पौलस्त्य इति ।—पुलस्त्यस्यापत्यं पुमान् पौलस्त्यः पुलस्त्यकुलोत्पन्नः रावण इत्यर्थः, कथम् अन्यदारहरणे परस्त्रीहरणे, दोषं न विज्ञातवान् ? विदितवतोऽपि कथं बुद्धि-भ्रंशः सञ्जात इति भावः ; रामेणापि प्रज्ञापुरुषेणापि, हेमहरिणस्य काञ्चनमृगस्य, असम्भवः कथं न लक्षितः ? युधिष्ठिरेणापि अक्षैः द्यूतैः, कथं सहसा अनर्थः विपत्, प्राप्तः इह ? पूर्वोक्तमर्थं द्रढयति, प्रत्यासन्नेति ।—प्रत्यासन्नया समीपवर्त्तिन्या, उपस्थितया इत्यर्थः, विपत्त्या विपदा, मूढं विभ्रान्तं, मनो येषां तादृशानां, मतिः बुद्धिः, प्रायः बाहुल्येन, क्षीयते स्वयमेव विलुप्यते, [ कर्मकर्त्तर्य्ययं प्रयोगः ]; विनाशकाले हि ज्ञानवतामपि बुद्धिविपर्य्ययो जायते इति भावः। अर्थान्तरन्यासोऽलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥ ४ ॥

कृतान्तेति ।—कृतान्तस्य यमस्य, पाशेन रज्ज्वा, बद्धानां, सन्निहितमृत्यूनामित्यर्थः, दैवेन, दृष्टेन इति भावः, उपहतं विकृतमित्यर्थः, चेतः चित्तं येषां तादृशानां, महतामपि बुद्धयः कुब्जगामिन्यः कुब्जवत् सङ्कुचितप्रसराः, जड़प्राया इत्यर्थः, भवन्ति ॥ ५ ॥

( ठ ) लुब्धकः,—व्याधः ।

(ड) प्रोद्यतयष्टिः तद्वधार्थं प्रधावितः। चित्रग्रीवोऽपि आत्मानं सपरिवारं बद्धं मत्वा लुब्धकमायान्तं दृष्ट्वा तान् कपोतान् ऊचे, —"न भेतव्यम। उक्तञ्च,—

> व्यसनेष्वेव सर्वेषु यस्य बुद्धिर्न हीयते।
> स तेषां पारमभ्येति तत्प्रभावादसंशयम् ॥ ६ ॥
> सम्पत्तौ च विपत्तौ च महतामेकरूपता।
> उदये सविता रक्तो रक्तश्चास्तमये तथा ॥ ७ ॥

तत् सर्वे वयं हेलया उड्डीय सपाशजाला अस्य अदर्शनं गत्वा (ढ) मुक्तिं प्राप्नुमः, नो चेत् भयविक्लवाः सन्तः हेलया समुत्पातं न करिष्यथ, ततो मृत्युमवाप्स्यथ। उक्तञ्च,—

> तनवोऽप्यायता नित्यं तन्तवो बहुलाः समाः।
> बहून् बहुत्वादायासान् सहन्तीत्युपमा सताम्" ॥ ८ ॥

---

(ड) प्रोद्यतयष्टिः,—उद्गतदण्डः।

व्यसनेष्विति।—सर्वेषु व्यसनेषु विपत्सु एव, यस्य बुद्धिः न हीयते [ हाधातोः कर्मकर्त्तरि लट् ] स्वयमेव न भ्रश्यते, सः तत्प्रभावात् तस्याः बुद्धेः, प्रभावात् सामर्थ्यात्, असंशयं निःसन्देहं यथा तथा, तेषां व्यसनानां, पारम् अन्तम्, अभ्येति प्राप्नोति, धीराः विपद्भ्यः स्वयमेव उत्तीर्य्यन्ते इति भावः ॥ ६ ॥

सम्पत्ताविति।—सम्पत्तौ अभ्युदये च, विपत्तौ विपदि च, महताम् एकरूपता समभावः एव, न भावान्तरमिति भावः, विद्यते इति शेषः; तथा हि सविता सूर्य्यः, उदये रक्तः लोहितवर्णः, तथा अस्तमये च रक्तः, न तु उदयास्तमययोर्भिन्नरूपमिति भावः। [ "उदेति सविता ताम्रस्ताम्र एवास्तमेति च। सम्पत्तौ व्यसने चैव महता-मेकरूपता ॥" इति पाठान्तरम् ] ॥ ७ ॥

(ढ) मुक्तिं—मोचनं, अतस्त्राणमित्यर्थः, ("मुक्तिर्मोक्षे च मोचने" इति मेदिनी)। हेलया—अवज्ञया। समुत्पातम्—उड्डयनम्।

तनव इति।—नित्यं सततं, तनवः सूक्ष्माः, आयताः विस्तीर्णाः, दीर्घा वा, तथा बहुलाः प्रभूताः, समाः तुल्यरूपाः अपि, तन्तवः वस्त्रापरनामसूत्राणि सूत्राणि, बहुत्वात् बहुसङ्ख्यकत्वात्, बहून् आयासान् गुरुभारवहनादिरूपान्, सहन्ति, [सहधातोः परस्मैपद विवक्षावशात्] इति सतां साधूनाम्, उपमा निदर्शनम्; यथा सूक्ष्माण्यपि

तथाऽनुष्ठिते लुब्धको जालमादाय आकाशे गच्छतां तेषां पृष्ठतो (घ) भूमिष्ठोऽपि पर्य्यधावत् । ततः उर्द्धाननः श्लोकमिनम् अपठत्,—

"जालमादाय गच्छन्ति संहताः पक्षिणोऽप्यमी ।
यावच्च विवदिष्यन्ते पतिष्यन्ति न संशयः" ॥ ९ ॥

लघुपतनकोऽपि प्राणयात्राक्रियां त्यक्त्वा "किमत्र भविष्यति" इति कुतूहलात् तत्पृष्ठलग्नोऽनुसरति । अथ दृष्टेः अगोचरतां गतान् विज्ञाय लुब्धको निराशः श्लोकमपठत्, निवृत्तश्च,—

"न हि भवति यन्न भाव्यं, भवति च भाव्यं विना प्रयत्नेन ।
करतलगतमपि नश्यति यस्य हि भवितव्यता नास्ति ॥१०॥

तथा च,—पराङ्मुखे विधौ चेत् स्यात् कथञ्चित् द्रविणोदयः ।
तत् सोऽन्यदपि सङ्गृह्य याति शङ्खनिधिर्यथा ॥ ११ ॥

---

मूर्वाणि बहूनि मिलितानि गुरुभारं वहन्ति, तथा क्षुद्रा अपि बहवः मिलिताः स्वकार्य्यं साधयन्ति इति भावः ॥ ८ ॥

(घ) भूमिष्ठः,—भूमौ पृथिव्यां तिष्ठति इति कः । ["अम्बाम्बगोभूमि—" (८।३।९७ पा०) इति षत्वम्] । "भूमिस्थः" इति पाठस्तु चिन्त्य एव ।

जालमिति ।—पक्षिणः अपि अमी दुर्बला अपीति भावः, संहताः मिलिताः सन्तः, जालमादाय गच्छन्ति, यावच्च विवदिष्यन्ते विरुद्धबुद्धिपूर्वकं विचित्रं वक्ष्यन्ति इत्यर्थः, परस्परमिति शेषः, [अत्र वदतेः विमत्यर्थे वर्त्तमानत्वात् "भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः" (१।३।४७ पा०) इति तङ्] तावच्च पतिष्यन्ति, न संशयः सन्देहो नास्ति इत्यर्थः ॥ ९ ॥

न हीति ।—यत् न भाव्यं केनापि नैव भवितव्यम् इत्यर्थः, तदिति शेषः, यत्नेन अपीति अध्याहार्य्यं, न हि भवति सम्पद्यते ; यच्च भाव्यं केनचित् भवितव्यमेव, तदिति शेषः, प्रयत्नेन प्रकृष्टचेष्टया विना, अपीति शेषः, भवति च भवत्येव ; यस्य भवितव्यता अवश्यम्भाविता नास्ति, करतलगतमपि हस्तस्थमपि, तत् द्रव्यमिति शेषः, नश्यति दूरं याति, भाग्यहीनस्य कुतः लाभः ? इति भावः । आर्य्या वृत्तम् ॥ १० ॥

पराङ्मुखे इति ।—विधौ दैवे, पराङ्मुखे, चेत् यदि, कथञ्चित् द्रविणोदयः धनागमः, स्यात्, तत् तदा, सः द्रविणोदयः, अन्यदपि पूर्वार्जितं धनमपि, सङ्गृह्य याति

तदास्तां तावत् (त) विहङ्गाऽऽमिषलोभः, यावत् (थ) कुटुम्बवर्त्तनोपायभूतं जालमपि मे नष्टम्"।

चित्रग्रीवोऽपि लुब्धकम् अदर्शनीभूतं ज्ञात्वा ताम् उवाच,—"भोः! निवृत्तः स दुरात्मा लुब्धकः। तत् सर्वैरपि (द) स्वस्थैर्गम्यतां महिलारोप्यस्य प्रागुत्तरदिग्भागे, तत्र मम सुहृत् हिरण्यको नाम मूषकः सर्वेषां पाशच्छेदं करिष्यति। उक्तञ्च,—

> सर्वेषामेव मर्त्त्यानां व्यसने समुपस्थिते।
> वाङ्मात्रेणापि साहाय्यं मित्रादन्यो न सन्दधे" ॥ १२ ॥

एवं ते कपोताः चित्रग्रीवेण सम्बोधिता महिलारोप्ये नगरे हिरण्यकबिलदुर्गं प्रापुः। हिरण्यकोऽपि (ध) सहस्रमुखबिलदुर्गं प्रविष्टः सन् अकुतोभयः सुखेन आस्ते। अथवा साधु इदमुच्यते,—

---

गच्छति, देवानुकम्पितमिति शेषः; शङ्खनिधिर्यथेति।—शङ्खनिधिर्यथा स्वाधिकारिणः पुत्रकलत्रादीनपि वञ्चयित्वा केवलं तमेव पोषयति तथा प्रसन्नं दैवं प्रतिकूलदैवस्य सर्वं धनं गृहीत्वा स्वानुगृहीतमेव पोषयतीति भावः ॥ ११ ॥

(त) विहङ्गाऽऽमिषलोभः.—विहङ्गः,—पक्षी [विहायसा गच्छति इति गमधातोः खचि "विहायसो विह इति वाच्यम्" इति वार्त्तिकसूत्रेण विहादेशात्, "खच्च डिद्वा वाच्यः" इति वार्त्तिकेन खचः वैभाषिकडित्त्वाभावात् मुमागमे च विहङ्ग इति सिद्धम्। पक्षे विहगः विहङ्गम इति च ] तस्य आमिषलोभः,—पक्षिमांसलोभः इत्यर्थः।

(थ) कुटुम्बेति।—कुटुम्बानां—परिवाराणां, वर्त्तनं—जीविका, तस्य उपायभूतम्—उपायस्वरूपम्।

(द) स्वस्थैः,—निःशङ्कैरित्यर्थः। पाशच्छेदं—बन्धनकर्त्तनम्।

सर्वेषामिति।—सर्वेषामेव मर्त्त्यानां, व्यसने विपदि, समुपस्थिते सति, मित्रात् सुहृदः, अन्यः अपरः, [ मित्रात् इत्यत्र "अन्यारादितरर्त्ते—" (२।३।२९ पा० ) इत्यादिना पञ्चमी ] वाङ्मात्रेण वचनमात्रेणापि, साहाय्यं सहायतां, न सन्दधे नानुष्ठितवान्। [ धाञ् धातोः लिटि रूपम् ] ॥ १२ ॥

(ध) सहस्रेति।—सहस्रमब्दोऽत्र बहुवाची। अकुतोभयः,—नास्ति कुतोऽपि भयं यस्येति ["मयूरव्यंसकादयश्च" ( २।१।७२ पा० ) इति समासः ] निर्भीकः इत्यर्थः।

अनागतं भयं दृष्ट्वा नीतिशास्त्रविशारदः।
अवसत् मूषकस्तत्र कृत्वा शतमुखं विलम्॥ १३॥
दंष्ट्राविरहितः सर्पो मदहीनो यथा गजः।
सर्वेषां जायते वश्यो दुर्गहीनस्तथा नृपः॥ १४॥

तथा च,—न गजानां सहस्रेण न च लक्षेण वाजिनाम्।
तत् कर्म सिध्यते राज्ञां दुर्गेणैकेन यत् रणे॥ १५॥
शतमेकोऽपि सन्धत्ते प्राकारस्थो धनुर्धरः।
तस्मात् दुर्गं प्रशंसन्ति नीतिशास्त्रविदो जनाः॥ १६॥

अथ चित्रग्रीवो विलमासाद्य तारस्वरेण प्रोवाच,—"भोः भोः! मित्र हिरण्यक! सत्वरम् आगच्छ; महती मे (न)व्यसनावस्था वर्त्तते"। तत् श्रुत्वा हिरण्यकोऽपि विलदुर्गान्तर्गतः सन् प्रोवाच,—"भोः! को भवान्? किमर्थमायातः? किं कारणम्? कीदृक् ते व्यसनावस्थानम्? तत् कथ्यताम्" इति। तत् श्रुत्वा चित्रग्रीव आह,—"भोः! चित्रग्रीवो नाम कपोतराजोऽहं ते सुहृत्; तत् सत्वरम् आगच्छ, गुरुतरं प्रयोजनम्

अनागतमिति।—नीतिशास्त्रविशारदः नयविद्यानिपुणः, मूषकः उन्दुरः, अनागतम् आगामि इत्यर्थः, भयं दृष्ट्वा विविच्य, शतमुखं (शतशब्दोऽत्र बहुवाची) विलं गर्त्तं, कृत्वा तत्र अवसत्॥ १३॥

दंष्ट्रेति।—यथा दंष्ट्राविरहितः विषदन्तहीनः, सर्पः, यथा च मदहीनो गजः, सर्वेषां वश्यः वशीभूतः, जायते भवति, तथा दुर्गहीनो नृपः, सर्वेषां वश्यो जायते इत्यनुषङ्गः॥ १४॥

नेति।—एकेन दुर्गेण रणे राज्ञां यत् कर्म, सिध्यते निष्पाद्यते, सेनानीभिरिति शेषः, [कर्मणि लट्] तत् कर्म गजानां सहस्रेण न, वाजिनाम् अश्वानां, लक्षेण च न, सिध्यते इत्यनुषङ्गः॥ १५॥

शतमिति।—प्राकारस्थः दुर्गप्राचीरस्थः एकोऽपि धनुर्धरः शतं बहून् योधान् इत्यर्थः, सन्धत्ते योधयति इत्यर्थः, तस्मात् नीतिशास्त्रविदो जनाः दुर्गं प्रशंसन्ति॥१६॥

(न) व्यसनावस्था—विपदवस्था।

अस्ति"। तत् आकर्ण्य पुलकिततनुः प्रहृष्टात्मा स्थिरमनाः त्वरमाणो निष्क्रान्तः। अथवा साधु इदमुच्यते,—

सुहृदः स्नेहसम्पन्ना लोचनानन्ददायिनः।
गृहे गृहवतां नित्यं नागच्छन्ति महात्मनाम् ॥ १७ ॥

आदित्यस्योदयस्तात! ताम्बूलं भारती कथा।
इष्टा भार्य्या सुमित्रञ्च अपूर्वाणि दिने दिने ॥ १८ ॥

सुहृदो भवने यस्य समागच्छन्ति नित्यशः।
चित्ते च तस्य सौख्यस्य न किञ्चित् प्रतिमं सुखम् ॥१९॥

अथ चित्रग्रीवं सपरिवारं पाशबद्धमालोक्य हिरण्यकः सविषादम् इदमाह,—"भोः किमेतत्?" स आह,—"भोः! जानन्नपि किं पृच्छसि? उक्तञ्च यतः,—

यस्माच्च येन च यदा च यथा च यच्च
यावच्च यत्र च शुभाशुभमात्मकर्म।
तस्माच्च तेन च तदा च तथा च तच्च
तावच्च तत्र च कृतान्तवशादुपैति ॥ २० ॥

---

सुहृद इति।—स्नेहसम्पन्नाः स्निग्धाः, अत एव लोचनानन्ददायिनः नेत्रप्रीतिप्रदाः, सुहृदः महात्मनां धन्यानां, गृहवतां गृहिणां, गृहे नित्यं न आगच्छन्ति, कदाचिदागच्छन्ति इत्यर्थः, तस्मात् तेषां परिचर्य्या अवश्यं कर्त्तव्या इति भावः ॥ १७ ॥

आदित्यस्येति।—हे तात! आदित्यस्य उदयः सूर्य्योदयः, ("उदयस्तु पुमान् पूर्वपर्वते च समुन्नतौ" इति मेदिनी) ताम्बूलं, भारती कथा महाभारतीयमाख्यानम् इत्यर्थः, इष्टा प्रिया, भार्य्या पत्नी, तथा सुमित्रं सद्बन्धुश्च, एतानि दिने दिने प्रतिदिनम्, अपूर्वाणि नवानि इव प्रीतिकराणि इति भावः ॥ १८ ॥

सुहृद इति।—यस्य भवने गृहे, सुहृदः मित्राणि, नित्यशः सततं, समागच्छन्ति, तस्य चित्ते मनसि, जातस्येति शेषः, सौख्यस्य सुखसन्तानस्य, प्रतिमं तुल्यं, सुखं सन्तोषः, किञ्चित् किमपि, न च नैव, अस्ति इति शेषः ॥ १९ ॥

यस्मादिति।—कृतान्तवशात् दैववशात्, ("कृतान्तो यमदैवयोः" इत्यमरः) यस्माच्च प्रदेशाच्च, येन च कारणेन च, यदा च यस्मिन् काले च, यथा च यादृशञ्च, यावच्च यत्परिमितञ्च, यत्र च यस्मिन् लोके च, यच्च शुभाशुभम् आत्मकर्म, कृतमिति

तत् प्राप्तं मया एतत् बन्धनं जिह्वालौल्यात्; साम्प्रतं त्वं सत्वरं पाशविमोक्षं कुरु"। तत् आकर्ण्य हिरण्यकः प्राह,—

"अर्द्धार्द्धात् योजनशतादामिषं वीक्षते खगः ।
सोऽपि पार्श्वस्थितं दैवात् बन्धनं न च पश्यति ॥२१॥

तथा च,—रविनिशाकरयोर्ग्रहपीड़नं
गजभुजङ्गविहङ्गमबन्धनम् ।
मतिमताञ्च निरीक्ष्य दरिद्रतां
विधिरहो! बलवानिति मे मतिः ॥ २२ ॥

तथा च,—व्योमैकान्तविचारिणोऽपि विहगाः सम्प्राप्नुवन्त्यापदं
बध्यन्ते निपुणैरगाधसलिलात् मीनाः समुद्रादपि ।
दुर्नीतं किमिहास्ति? किञ्च सुकृतम्? कः स्थानलाभे गुणः?
कालः सर्वजनान् प्रसारितकरो गृह्णाति दूरादपि"॥२३॥

---

शेषः, तस्माच्च देशाच्च, तेन च कारणेन च, तदा च तस्मिन् काले च, तथा च तादृशञ्च, तावच्च तत्परिमितञ्च, तत्र च तस्मिन् लोके च, तत्र शुभमशुभं वा आत्मकर्म, उपैति उपगच्छति; सर्वमविकलमेव प्राक्तनकर्मफलमुपभुञ्जते जना इति तु तात्पर्य्यम् । वसन्ततिलकं वृत्तम् ॥ २० ॥

अर्द्धार्द्धादिति।—खगः पक्षी, अर्द्धार्द्धात् योजनशतात् पञ्चविंशतियोजनात्, ("अध्यर्द्धात्" इति पाठान्तरं साधु); आमिषं भोग्यं वस्तु, वीक्षते पश्यति; किन्तु सोऽपि खगः, दैवात् दौर्भाग्यात्, पार्श्वस्थितं बन्धनं बन्धनहेतुं पाशम् इत्यर्थः, न च पश्यति ॥२१॥

रवीति।—रविनिशाकरयोः सूर्य्यचन्द्रमसोः, ग्रहेण राहुणा, पीड़नं ग्रसनमित्यर्थः, गजानां, भुजङ्गानां सर्पाणां, विहङ्गमानां पक्षिणाञ्च, बन्धनं संयमनं, मतिमतां बुद्धिमताञ्च, दरिद्रतां वीक्ष्य दृष्ट्वा, विधिः दैवम् इत्यर्थः, ("विधिर्विधाने दैवे च" इत्यमरः) बलवान् सर्वेभ्यः बलवत्तमः; तथा हि,—"बलवता दैवेन सर्वमनुष्ठीयते, निमित्तमात्रमन्यत्" इति मे मम, मतिः बुद्धिः, इति जानीयात् इति शेषः, अहो आश्चर्य्यम् । द्रुतविलम्बितं वृत्तं,—"द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात् ॥ २२ ॥

व्योमैकान्तेति।—विहगाः पक्षिणः, व्योमैकान्तविचारिणोऽपि आकाशैकदेश-विहरणशीला अपि, आपदं सम्प्राप्नुवन्ति। निपुणैः जनैः जालिकैरित्यर्थः, अगाधसलिलात्

एवमुक्त्वा चित्रग्रीवस्य पाशं छेत्तुम् उद्यतं स तमाह,—"भद्र ! मा मैवं कुरु, प्रथमं मम भृत्यानां पाशच्छेदं कुरु, तदनु ममापि च"। तत् श्रुत्वा कुपितो हिरण्यकः प्राह,—"भोः ! न युक्तमुक्तं भवता, यतः (प) स्वामिनोऽनन्तरं भृत्याः"। स आह,—"भद्र ! मा मैवं वद, (फ) मदाश्रयाः सर्वे एते वराकाः अपरं स्वकुटुम्बं परित्यज्य समागताः ; तत् कथम् एतावन्मात्रमपि सम्मानं न करोमि ? उक्तञ्च,—

> यः सम्मानं सदा धत्ते भृत्यानां क्षितिपोऽधिकम् ।
> वित्ताभावेऽपि तं दृष्ट्वा ते त्यजन्ति न कर्हिचित् ॥२४॥

तथा च—विश्वासः सम्पदां मूलं तेन यूथपतिर्गजः ।
> सिंहो मृगाधिपत्येऽपि न मृगैः परिवार्यते ॥ २५ ॥

अगाधम् अतलस्पर्शं, सलिलं जलं यस्मिन् तस्मात्, ("अगाधमतलस्पर्शम्" इत्यमरः) समुद्रादपि मीनाः मत्स्याः, बध्यन्ते ध्रियन्ते। इह जगति, दुर्नीतं दुर्नयः, किम् अस्ति ? नास्ति इत्यर्थः, सुकृतञ्च किम् ? अस्ति इति शेषः, न किमपि इत्यर्थः ; स्थानलाभे उत्तमस्थानप्राप्तौ च, कः गुणः ? उपकारः ? न कोऽपि इत्यर्थः ; कालः प्राक्तनकर्मणां पारिणतिसमय इत्यर्थः, प्रसारितकरः हस्तौ प्रसार्य्येत्यर्थः, दूरादपि सर्वजनान् गृह्णाति आकर्षति ; समय एव बलाबलं करोति, नात्र पुरुषदोष इति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ २३ ॥

(प) स्वामिनः,—प्रभोः, पालयितुरित्यर्थः। अनन्तरं—पश्चादेव। भृत्याः,—सेवकाः, उपजीवका इत्यर्थः, रक्षणीया इति शेषः, इयन्तु नीतिः यत्, आदौ प्रभवः संरक्षणीयाः, ततश्च सेवकाः इति, रक्षके रक्षिते सर्वेषामेव रक्षितत्वात् ; त्वया तु तद्विरुद्धमनुष्ठातुमुच्यते, अतोऽन्याय्यमेतदित्याशयः।

(फ) मदाश्रयाः,—मदाश्रिताः, मदनुगता इत्यर्थः। एते—कपोताः। वराकाः,—दीनाः। सम्मानं—समादरम्।

य इति।—यः क्षितिपः राजा, सदा भृत्यानाम् अधिकं सम्मानं धत्ते करोति इत्यर्थः, ते भृत्याः, वित्ताभावेऽपि धनाभावेऽपि, क्षितिपस्येति शेषः, तं क्षितिपं, दृष्ट्वा कर्हिचित् कदाचित्, न त्यजन्ति ; चिरमनुरक्तास्तिष्ठन्तीति भावः ॥ २४ ॥

विश्वास इति।—विश्वासः अयमस्माकं राजा रक्षकश्चेति प्रत्ययः, सम्पदां मूलं कारणं,

अपरं,—मम कदाचित् पाशच्छेदं कुर्वतस्ते दन्तभङ्गो भवति, अथवा दुरात्मा लुब्धकः समभ्येति, तत् नूनं मम नरकपात एव ।

उक्तञ्च,—सदाचारेषु भृत्येषु संसीदत्सु च यः प्रभुः ।
सुखी स्यात् नरकं याति परत्रेह च सीदति" ॥ २६ ॥

तत् श्रुत्वा प्रहृष्टो हिरण्यकः प्राह,—"भोः ! वेद्मि अहं राजधर्मं, परं मया तव परीक्षा कृता ; तत् सर्वेषां पूर्वं पाशच्छेदं करिष्यामि। भवानपि अनेन विधिना बहुकपोतपरिवारो भविष्यति। उक्तञ्च,—

कारुण्यं संविभागश्च यस्य भृत्येषु सर्वदा ।
सम्भवेत् स महीपालस्त्रैलोक्यस्यापि रक्षणे" ॥ २७ ॥

एवमुक्त्वा सर्वेषां पाशच्छेदं कृत्वा हिरण्यकः चित्रग्रीवमाह,—"मित्र ! गम्यताम् अधुना स्वाश्रयं प्रति, भूयोऽपि व्यसने प्राप्ते समागन्तव्यम्" इति तान् सम्प्रेष्य पुनरपि दुर्गं प्रविष्टः ; चित्रग्रीवोऽपि सपरिवारः स्वाश्रयम् अगमत्। अथवा साधु इदमुच्यते,—

---

तेन विश्वासेन. गजः यूथपतिः गजसमूहाना प्रभुरित्यर्थः, गजाधिपत्यमात्रे स्थितोऽप्ययम् अस्माकं विपदस्त्राता इति यूथपतौ तेषां प्रत्ययात् तैः सदा असौ परिवार्य्यते इति भावः ; तथा मृगाधिपत्येऽपि, स्थित इति शेषः, सिंहः मृगैः न परिवार्य्यते, सकलमृगाधिपत्ये स्थितोऽपि मृगेन्द्रः हिंस्रतया तत्र मृगाणां विश्वासाभावात् तैः सदा परित्यज्यते इति भावः ; विश्वासस्यैवाभ्युदयमूलत्वादित्याशयः ॥ २५ ॥

सदेति ।—यस्य प्रभुः, सदाचारेषु सद्वृत्तेषु, अनुरक्तेष्वित्यर्थः, भृत्येषु संसीदत्सु विपद्यमानेषु सत्सु, सुखी निरुद्वेग इत्यर्थः, स्यात् भवेत्, स परत्र परलोके, नरकं याति गच्छति, इह च अस्मिन् लोके च, सीदति कष्टं प्राप्नोति ॥ २६ ॥

कारुण्यमिति ।—यस्य भृत्येषु सर्वदा कारुण्यं दया, संविभागश्च सम्यक् विभज्य व्यवस्थापनञ्च गुणदोषौ विविच्य धनदानमित्यर्थः, स्यादिति शेषः, स महीपालः, त्रैलोक्यस्यापि रक्षणे पालने, सम्भवेत् समर्थो भवेत् इत्यर्थः, नान्यथेति भावः ॥ २७ ॥

मित्रवान् साधयत्यर्थान् दुःसाध्यानपि वै यतः।
तस्मान्मित्राणि कुर्वीत समानान्येव चात्मनः॥ २८॥

लघुपतनकोऽपि वायसः सर्वं तं चित्रग्रीवबन्धमोक्षम् अवलोक्य विस्मितमना व्यचिन्तयत्,—"अहो! बुद्धिः अस्य हिरण्यकस्य शक्तिश्च (व) दुर्गसामग्री च, तत् ईदृगेव विधिः विहङ्गानां बन्धनमोक्षात्मकः। अहञ्च न कस्यचित् विश्वसिमि (भ) चलप्रकृतिश्च; तथाऽपि एनं मित्रं करोमि। उक्तञ्च,—

अपि सम्पूर्णतायुक्तैः कर्त्तव्याः सुहृदो बुधैः।
नदीशः परिपूर्णोऽपि चन्द्रोदयमपेक्षते" ॥ २९॥

एवं (म) सम्प्रधार्य्य पादपादवतीर्य्य बिलद्वारम् आश्रित्य चित्रग्रीववच्छब्देन हिरण्यकं समाहूतवान्,—"एहि एहि भोः! हिरण्यक! एहि"। तच्छब्दं श्रुत्वा हिरण्यको व्यचिन्तयत्,— "किमन्योऽपि कश्चित् कपोतः (य) बन्धनशेषः तिष्ठति, येन मां व्याहरति?" आह च,—"भोः! को भवान्?" स आह,— "अहं लघुपतनको नाम वायसः"। तत् श्रुत्वा विशेषात्

---

मित्रवानिति।—यतः यस्मात् हेतोः, मित्रवान् अकृत्रिमसुहृत्सम्पन्नः, पुमानिति शेषः, दुःसाध्यानपि असाध्यानपि, अर्थान् प्रयोजनानि, साधयति वै सम्पादयति, तस्माच्च आत्मनः समानानि एव अनुरूपाणि एव, मित्राणि कुर्वीत॥ २८॥

(व) दुर्गसामग्री—दुर्गरक्षणोपायनिचयः। ईदृगेव विधिः,—ईदृशः सख्य मैत्रीकरणरूपं विधानमित्यर्थः।

(भ) चलप्रकृतिः,—चञ्चलस्वभावः। एनं—हिरण्यकम्।

अपीति।—सम्पूर्णतायुक्तैः सम्पत्परिपूर्णैरपि, बुधैः विद्वद्भिः, सुहृदः मित्राणि, कर्त्तव्याः। नदीशः समुद्रः, परिपूर्णोऽपि चन्द्रोदयम् अपेक्षते आकाङ्क्षति, समधिकपूर्णता-ऽऽशया इति भावः। अत्र पूर्णस्यापि जलधेः समधिकपूर्णताऽऽशया चन्द्रोदयाकाङ्क्षावत् ऋद्धिमतोऽपि बुधस्य मित्राऽऽकाङ्क्षा कर्त्तव्येति सादृश्याक्षेपात् दृष्टान्तालङ्कारः॥ २९॥

(म) सम्प्रधार्य्य—निश्चित्य। बिलद्वारं—गर्त्तमुखम्।

(य) बन्धनशेषः,—बद्धावशिष्टः, पाशबद्ध इति यावत्।

(र) अन्तर्लीनो हिरण्यक आह,—"भोः ! द्रुतं गम्यताम् अस्मात् स्थानात्"। वायसः आह,—"तव पार्श्वे गुरुकार्य्येण समागतः, तत् किं न क्रियते मया सह दर्शनम् ?" हिरण्यक आह,—"न मेऽस्ति त्वया सह सङ्गमेन प्रयोजनम्"इति। स आह,—"भोः! चित्रग्रीवस्य मया तव सकाशात् पाशमोचनं दृष्टं, तेन मम महती प्रीतिः सञ्जाता ; तत् कदाचित् ममापि बन्धने जाते तव पार्श्वात् मुक्तिर्भविष्यति ; तत् क्रियतां मया सह मैत्री"। हिरण्यक आह,—"अहो ! त्वं भोक्ता, अहं ते भोज्यभूतः ; तत् का त्वया सह मम मैत्री ? तत् गम्यतां, (ल) मैत्री विरोध-भावात् कथम् ?

उक्तञ्च,—ययोरेव समं वित्तं ययोरेव समं कुलम् ।
तयोर्मैत्री विवाहश्च न तु पुष्टविपुष्टयोः ॥ ३० ॥

तथाऽन्यच्च—यो मित्रं कुरुते मूढ़ आत्मनोऽसदृशं कुधीः ।
हीनं वाऽप्यधिकं वाऽपि हास्यतां यात्यसौ जनः ॥३१॥

तत् गम्यताम्" इति। वायस आह,—"भोः हिरण्यक ! एषोऽहं तव दुर्गद्वारे उपविष्टः, यदि त्वं मैत्रीं न करोषि, ततोऽहं प्राणमोचनं तवाग्रे करिष्यामि ; अथवा

---

(र) अन्तर्लीनः,—अभ्यन्तरगतः, भयतः स्वपराभवमाशङ्क्येति भावः ।

(ल) मैत्री—सौहार्दं, विरोधभावात्—सहजशत्रुतासत्त्वात्, कथम् ? सम्भवतीति शेषः ; विरोधिना सह मैत्री अविधेयैवेत्याशयः ।

ययोरिति ।—ययोः वित्तं धनं, समम् एव, ययोः कुलम् आभिजात्यं, समम् एव, तयोरेव मैत्री बन्धुता, विवाहश्च, परस्परं सङ्गच्छते इति शेषः ; पुष्टविपुष्टयोः अधिक-हीनयोः, परस्परविरुद्धयोरित्यर्थः, न, सङ्गच्छते इति शेषः ; विषमामित्रत्वस्यानर्थ-फलकत्वाच्चानयोः मैत्री शुभोदर्का इति भावः ॥ ३० ॥

य इति ।—यः कुधीः दुर्बुद्धिः, मूढ़ः अविवेकी जनः, आत्मनः हीनं वा अधिकमपि वा, असदृशं मित्रं कुरुते, असौ हास्यताम् उपहासास्पदत्वं, याति लभते ; अतः त्वया सह मैत्री न युज्यते इति भावः ॥ ३१ ॥

(व) प्रायोपवेशनं मे स्यात्" इति। हिरण्यक आह,—"भोः! त्वया वैरिणा सह कथं मैत्रीं करोमि? उक्तञ्च,—

वैरिणा न हि सन्दध्यात् सुश्लिष्टेनापि सन्धिना।
सुतप्तमपि पानीयं शमयत्येव पावकम्" ॥ ३२ ॥

वायस आह,—"भोः! त्वया सह दर्शनमपि नास्ति, कुतो वैरम्? तत् किमनुचितं वदसि?" हिरण्यक आह,—"द्विविधं वैरं भवति, सहजं (श) कृत्रिमञ्च; तत् सहजवैरी त्वम् अस्माकम्। उक्तञ्च,—

कृत्रिमं नाशमभ्येति वैरं द्राक् कृत्रिमैर्गुणैः।
प्राणदानं विना वैरं सहजं याति न क्षयम्" ॥ ३३ ॥

वायस आह,—"भोः! द्विविधस्य वैरस्य लक्षणं श्रोतुमिच्छामि, तत् कथ्यताम्"। हिरण्यक आह,—"भोः! कारणेन निर्वृत्तं कृत्रिमं, (ष) तत्तदर्होपकारकरणात् गच्छति;

---

(व) प्रायोपवेशनम्—अनशनव्रतम्।

वैरिणेति।—सुश्लिष्टेनापि सुघटितेनापि, सन्धिना उपायविशेषेण, वैरिणा शत्रुणा सह, न हि सन्दध्यात् न हि सङ्गच्छेत; तथा हि, पानीयं जलं, सुतप्तमपि अत्युष्णमपि, तुल्यगुणमपीति यावत्, पावकम् अग्निं, शमयत्येव; सहजवैरित्वादिति भावः ॥ ३२ ॥

(श) कृत्रिमं—कार्यवशाज्जातम्। सहजवैरी—स्वभावशत्रुः।

कृत्रिममिति।—कृत्रिमं—[क्रियया निर्वृत्तमिति "ड्वितः क्त्रिः" (३।३।८८ पा०) इत्यनेन कृधातोः क्त्रिप्रत्यये "क्त्रेर्मम् नित्यम्" (४।४।२० पा०) इति सूत्रेण सिद्धम्] क्रियाकृतमित्यर्थः, वैरं, कृत्रिमैः क्रियाजन्यैः, गुणैः उपकारादिभिरित्यर्थः, द्राक् झटिति, नाशम् अभ्येति प्राप्नोति, सहजं स्वाभाविकं, वैरं प्राणदानं विना जीवनत्यागमन्तरेण, आजीवनमिति भावः, क्षयं न याति। "सखा गरीयान् शत्रुश्च कृत्रिमस्तौ हि कार्यतः। स्यातामित्रौ मित्रे च सहजप्राकृतावपि ॥" इति माघे त्रिविधं वैरम्; तेषु कृत्रिमस्यैव प्राधान्यमुक्तम्, अत्र तु सहजस्य इति; अतः प्रयोजनवशात् मुख्यामुख्यत्वकल्पनमिति विरोधाभावः ॥ ३३ ॥

(ष) तदिति।—तत्—कृत्रिमं वैरम्। तदर्होपकारकरणात्—येन कारणेन वैरं जातं, तस्य यथायोग्यप्रतीकारविधानादित्यर्थः।

स्वाभाविकं पुनः कथमपि न गच्छति; तत् यथा,—नकुल-सर्पाणां, (ख) शष्पभुङ्नखायुधानां, जलवह्न्योः, देव-दैत्यानां, सारमेयमार्जाराणाम्, ईश्वरदरिद्राणां, सपत्नीनां, (ग) लुब्धकहरिणानां, श्रोत्रियभ्रष्टक्रियाणां, मूर्खपण्डितानां, पतिव्रताकुलटानां, सज्जनदुर्जनानाम्। (घ) न कश्चित् केनापि व्यापादितः, तथाऽपि प्राणान् सन्तापयन्ति"।

वायस आह,—

"कारणान्मित्रतां याति कारणादेति शत्रुताम्।
तस्मान्मित्रत्वमेवात्र योज्यं वैरं न धीमता ॥ ३४ ॥

तस्मात् कुरु मया सह समागमं मित्रधर्मार्थम्"। हिरण्यक आह,—"भोः! श्रूयतां (ङ) नीतिसर्वस्वम्—

---

(ख) शष्पभुङ्नखायुधानां—तृणभोजिभिः सह श्वापदानाम्। सारमेय-मार्जाराणां—कुक्कुरविडालानाम्। ईश्वरदरिद्राणां—धनिदुर्गतानाम्।

(ग) लुब्धकहरिणानां—व्याधमृगाणाम्। श्रोत्रियभ्रष्टक्रियाणां—वेदविद्भिः विप्रैः सह ब्राह्मणब्रुवाणाम्। ["येषाञ्च विरोधः शाश्वतिकः" (२।४।९ पा०) इति द्वन्द्वसमासे शाश्वतिकविरोधानाम् एकवचनप्राप्तिरुक्ता, अत्र तु बहुवचनेन एतेषां कुत्रचित् कदाचित् मित्रता सम्भवतीति बोध्यते; तेन हिरण्यकेन सार्द्धं लघुपतनकस्य मैत्री भविष्यति इति सूच्यते]।

(घ) नेति।—यद्यपि अशक्तिदशायाम् एतेषां मध्ये दुर्बलेन केनापि बलवान् कश्चित् न विनाशितः, तथाऽपि एते परस्परं प्राणान् सन्तापयन्ति, विरोधस्य शाश्वतिकत्वादिति भावः।

कारणादिति।—कारणात् केनापि हेतुना, उपकारादिनेत्यर्थः, मित्रतां याति गच्छति, जनः इति शेषः, तथा कारणात् अपकारादिनेत्यर्थः, शत्रुताञ्च एति गच्छति; तस्मात् अत्र संसारे, धीमता बुद्धिमता, जनेन इति शेषः, मित्रत्वमेव योज्यं कर्त्तव्यं, न वैरम्; उभयोरेव कारणप्रयोज्यत्वेन साम्येऽपि कस्य न निखिलसुखनिलये मित्रत्वे रुचिः? इति भावः॥ ३४ ॥

(ङ) नीतिसर्वस्वं—नीतिसारः।

सकृद्दुष्टमपीष्टं यः पुनः सन्धातुमिच्छति ।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥ ३५ ॥

अथवा 'गुणवान् अहं, न मे कश्चित् (ख) वैरयातनां करिष्यति' एतदपि न सम्भाव्यम् । उक्तञ्च,—

सिंहो व्याकरणस्य कर्त्तुरहरत् प्राणान् प्रियान् पाणिनेः
मीमांसाकृतमुन्ममाथ सहसा हस्ती मुनिं जैमिनिम् ।
छन्दोज्ञाननिधिं जघान मकरो वेलातटे पिङ्गलम्
अज्ञानावृतचेतसामतिरुषां कोऽर्थस्तिरश्चां गुणैः ?" ॥३६॥

वायस आह,—"अस्त्येतत्, तथाऽपि श्रूयताम्,—

उपकाराच्च लोकानां निमित्तान्मृगपक्षिणाम् ।
भयाल्लोभाच्च मूर्खाणां मैत्री स्याद्दर्शनात् सताम् ॥ ३७ ॥

---

सकृदिति ।—यः सकृद्दुष्टम् एकवारमेव दुष्टं, का कथा पुनः पुनः दुष्टस्येति भावः ; इष्टमपि प्रियजनमपि, सर्पदष्टामङ्गुलीमिवेति भावः, पुनः सन्धातुं सम्मेलयितुम्, इच्छति, सः अश्वतरी गर्भं यथा, तथा मृत्युम् आत्मविनाशमित्यर्थः, उपगृह्णाति आश्रयति ; अश्वतर्याः गर्भधारणं यथा मृत्यवे, तथा तस्य तादृशमित्रसम्मेलनमपि भवतीत्यर्थः ॥ ३५ ॥

( ख ) वैरयातनां—वैरेण पीडनं, शत्रुतासाधनमित्यर्थः ।

सिंह इति ।—सिंहः व्याकरणस्य कर्त्तुः विदुषः, निरपराधस्येति भावः, पाणिनेः मुनेः, प्रियान् प्राणान् अहरत ; हस्ती मीमांसाकृतं मीमांसादर्शनकारिणं, जैमिनिं मुनिं सहसा उन्ममाथ विनाशितवान् [ मथतेः लिटि रूपम् ]; मकरः जलजन्तुविशेषः, वेलातटे समुद्रोपकूले, छन्दोज्ञाननिधिं छन्दःशास्त्रप्रणेतारम् इत्यर्थः, पिङ्गलं मुनिं जघान ; अज्ञानावृतचेतसां मोहाक्रान्तचित्तानाम्, अतिरुषाम् अतिकोपनानां, तिरश्चां पशुपक्षिणां, गुणैः गुणविचारैः, अयं गुणी, एनं न हनिष्यामि, अयं निर्गुणः, एनं मारयिष्यामि इति वितर्कैरिति भावः, कोऽर्थः ? किं प्रयोजनम् ? न कोऽपीत्यर्थः ; दुर्जना गुणदोषौ न गणयन्तीति भावः ॥ ३६ ॥

उपकारादिति ।—लोकानां नराणाम्, उपकारात् परस्परोपकारकरणात् इत्यर्थः, मृगपक्षिणां निमित्तात् कुतश्चित् कारणात्, मूर्खाणां भयात्, लोभाच्च, तथा सतां साधूनां, दर्शनात् परस्परावलोकनात्, मैत्री स्यात् ॥ ३७ ॥

मृद्घटवत् सुखभेद्यो दुःसन्धानश्च दुर्जनो भवति ।
सुजनस्तु कनकघट इव दुर्भेद्यः सुकरसन्धिश्च ॥ ३८ ॥
इक्षोरग्रात् क्रमशः पर्वणि पर्वणि यथा रसविशेषः ।
तद्वत् सज्जनमैत्री विपरीतानान्तु विपरीता ॥ ३९ ॥

तथा च,— आरम्भगुर्वी क्षयिणी क्रमेण
लघ्वी पुरा वृद्धिमती च पश्चात् ।
दिनस्य पूर्वार्द्धपरार्द्धभिन्ना
छायेव मैत्री खलसज्जनानाम् ॥ ४० ॥

तत् साधुरहम्, अपरं त्वां शपथादिभिः निर्भयं करिष्यामि"।
स आह,—"न मे अस्ति ते शपथैः प्रत्ययः। उक्तञ्च,—

मृद्घटेति ।—दुर्जनः मृद्घटवत् मृत्कलस इव, सुखेन भेद्यः, दुःसन्धानश्च न पुनर्योजनायोग्यश्चेत्यर्थः, भवति ; मृद्घटो यथा लोष्टादिना लघुप्रहारमात्रेण भग्नः पुनः कथञ्चित् योजयितुमशक्यश्च, तथा दुर्जनोऽपि येन केनचिदेव कारणेन भग्नमैत्रः सन् न पुनः प्रयत्नशतेनापि संयोजनीयो भवतीति भावः, सुजनस्तु कनकघट इव काञ्चनकलस इव, दुर्भेद्यः भेत्तुमशक्यः, सुकरसन्धिश्च अक्लेशं सन्धेयश्च, भवतीति शेषः ; कनककलसो यथा दैवात् केनापि भग्नोऽपि पुनरुपायेन संयोजनयोग्यः, तथा सुजनोऽपीति भावः। वृत्तमार्य्या ॥ ३८ ॥

इक्षोरिति ।—इक्षोः अग्रात् अग्रमारभ्य, पर्वणि पर्वणि अधोऽधो इत्यर्थः, यथा क्रमशः रसविशेषः रसस्य उत्कर्षः इत्यर्थः, तिष्ठतीति शेषः, सज्जनमैत्री साधुसौहार्दं, तद्वत् क्रमशः सुरसा इति भावः, भवतीति शेषः, विपरीतानान्तु दुर्जनानान्तु, विपरीता प्रागुक्तस्य विपर्य्ययः ; प्रथमतः सौहार्दं, पश्चात् शत्रुत्वमिति भावः। आर्य्या वृत्तम् ॥ ३९ ॥

आरम्भेति ।—खलानां दुर्जनानां, सज्जनानां सताञ्च, मैत्री, दिनस्य पूर्वार्द्धपरार्द्धभिन्ना पूर्वाह्णापराह्णभेदेन पृथग्भूता, छायेव आरम्भगुर्वी आदौ महती, क्रमेण क्षयिणी अपचयशीला च, तथा पुरा लघ्वी स्वल्पा, पश्चात् वृद्धिमती वर्द्धमाना च ; यथा दिनपूर्वार्द्धच्छाया प्रथमं महती, पश्चात् क्षयवती च, तथा खलस्य मैत्री ; यथा च दिनपरार्द्धच्छाया प्रथमं लघ्वी, पश्चात् महती, तथा सज्जनस्य मैत्रीति भावः। वृत्तमुपजातिः ॥ ४० ॥

शपथैः सन्धितस्यापि न विश्वासं व्रजेत् रिपोः ।
श्रूयते शपथं कृत्वा वृत्रः शक्रेण सूदितः ॥ ४१ ॥
न विश्वासं विना शत्रुर्देवानामपि सिध्यति ।
विश्वासात् त्रिदशेन्द्रेण दितेर्गर्भो विदारितः ॥ ४२ ॥
अन्यच्च,—बृहस्पतेरपि प्राज्ञस्तस्मान्नैवात्र विश्वसेत् ।
य इच्छेदात्मनो वृद्धिमायुष्यञ्च सुखानि च ॥ ४३ ॥
तथा च,—सुसूक्ष्मेणापि रन्ध्रेण प्रविश्याभ्यन्तरं रिपुः ।
नाशयेच्च शनैः पश्चात् प्लवं सलिलपूरवत् ॥ ४४ ॥

---

शपथैरिति ।—शपथैः दिव्यैः, सन्धा सन्धानं, मिलनमित्यर्थः, जाता अस्येति [ तारकादित्वादितच् ] सन्धितस्य दिव्यं कृत्वा परस्परं मिलितस्य अपि, रिपोः विश्वासं न व्रजेत् न गच्छेत्, जन इति शेषः ; तथा हि शक्रेण इन्द्रेण, शपथं कृत्वा "नाहं तुभ्यं द्रुह्यामि" इति प्रतिज्ञां कृत्वाऽपि, वृत्रः तन्नामासुरः, सूदितः नाशितः, इति श्रूयते ; देवा अपि शपथं भङ्क्त्वा शत्रुं नाशयन्ति, किमुतापरे ? इति भावः ॥ ४१ ॥

नेति ।—विश्वासं विना विश्वासोत्पादनमन्तरेणेत्यर्थः, देवानामपि शत्रुः न सिध्यति न वध्यो भवति इत्यर्थः ; विश्वासात् विश्वासम् उत्पाद्य इत्यर्थः, [ "ल्यब्लोपे कर्मण्यधिकरणे च" इति वार्त्तिकसूत्रेण पञ्चमी ] त्रिदशेन्द्रेण देवराजेन, दितेः विमातुः, गर्भः भ्रूणः, ( "गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ पनसकण्टके" इति मेदिनी ) अजिघांसुरिति भावः, विदारितः खण्डितः । पुरा हिरण्यकशिपुशोकेन आर्त्ता दितिः स्वपुत्राणां रिपुमिन्द्रं हन्तुं तद्घातनक्षमं गर्भं धृतवती । देवराजोऽपि तदनुसन्धाय विमातुः परिचर्य्याच्छलेन सततं रन्ध्रान्वेषी, एकदा दिवा शयानां दितिमवलोक्य तद्गर्भं प्रविष्टः गर्भस्थं जीवम् एकोनपञ्चाशत्खण्डैः खण्डयामास ; एकोनपञ्चाशद्विभक्तश्च स पवनदेवत्वमगादिति पौराणिकी कथा अत्र अनुसन्धेया ॥ ४२ ॥

बृहस्पतेरिति ।—तस्मात् हेतोः, यः आत्मनः वृद्धिं कल्याणम्, आयुष्यं दीर्घजीवनं, सुखानि च इच्छेत्, सः प्राज्ञः अत्र संसारे, बृहस्पतेरपि न विश्वसेत् ; अपरस्य किमु वक्तव्यम् ? इति भावः । [ 'श्वस प्राणने' इति अदादिगणीयत्वात् 'विश्वसेत' इति न साधु, 'विश्वस्यात्' इत्येव सम्यक् । विपूर्वस्य श्वसधातोः अच्प्रत्यये विश्वस इति शब्दस्य नामधातौ कथञ्चित् साधनीयम् ] ॥ ४३ ॥

सुसूक्ष्मेणेति ।—रिपुः शत्रुः, सुसूक्ष्मेण अत्यल्पेनापि, रन्ध्रेण छिद्रेण, शनैः क्रमेण,

न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत्।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ ४५ ॥
न बध्यते ह्यविश्वस्तो दुर्बलोऽपि बलोत्कटैः।
विश्वस्तास्त्वाशु बध्यन्ते बलवन्तोऽपि दुर्बलैः ॥४६॥
सुकृत्यं विष्णुगुप्तस्य मित्राप्तिर्भार्गवस्य च।
बृहस्पतेरविश्वासो नीतिसन्धिस्त्रिधा स्थितः ॥ ४७॥

तथा च,—महताऽप्यर्थसारेण यो विश्वसिति शत्रुषु।
भार्य्यासु सुविरक्तासु तदन्तं तस्य जीवितम्” ॥ ४८ ॥

तत् श्रुत्वा लघुपतनकोऽपि निरुत्तरः चिन्तयामास,—“अहो !

अभ्यन्तरं प्रविश्य आत्मीयं सलिलं इत्यर्थः, पश्चात् प्रबलं उडुपं, नौकामिति भावः, सलिलपूरवत् जलप्रवाह इव, नाशयेत्; यथा अल्पेनापि छिद्रेण सलिलप्रवाहः नौकां क्रमेण प्रविश्य निमज्जयति, तद्वत् शत्रुरपि केनचित् छलेन प्रविश्य नाशयतीति भावः ॥ ४४ ॥

नेति।—अविश्वस्ते जने न विश्वसेत्, विश्वस्ते न अतिविश्वसेत्; विश्वासात् उत्पन्नं भयं मूलानि अपि निकृन्तति नाशयति ॥ ४५ ॥

नेति।—दुर्बलोऽपि जनः इति शेषः, अविश्वस्तः अकृतविश्वासश्चेत्, बलोत्कटैः प्रबलैः, न बध्यते न हन्यते; बलवन्तोऽपि विश्वस्ताः कृतविश्वासाः सन्तः, दुर्बलैः आशु शीघ्रं, बध्यन्ते, विश्वस्तत्वेन अनवहितत्वादिति भावः ॥ ४६ ॥

सुकृत्यमिति।—नीतिसन्धिः नीतिशास्त्रोक्तः कार्य्यसाधकोपायविशेषः, त्रिधा त्रिप्रकारः, स्थितः, भवतीति शेषः, विष्णुगुप्तस्य चाणक्यस्येत्यर्थः, सुकृत्यं सुष्ठु कार्य्यं, कर्त्तव्यानुष्ठानमित्यर्थः, भार्गवस्य भृगुनन्दनस्य शुक्राचार्य्यस्य, मित्राप्तिः मित्रलाभः, बृहस्पतेः अविश्वासः विश्वासाकरणम्; चाणक्यमते नीत्यनुसारेण कार्य्यानुष्ठानं, भार्गवमते मित्रसङ्ग्रहः, बृहस्पतिमते सर्वत्रापि अविश्वास एव नीतिरिति भावः ॥ ४७ ॥

महतेति।—यः महताऽपि प्रभूतेनापि, अर्थसारेण सारधनेन, प्रभूतहीरकवाटि-धनलाभेनेति भावः, शत्रुषु रिपुषु, तथा सुविरक्तासु अननुरक्तासु, भार्य्यासु विश्वसिति, [विपूर्वकश्वसधातोः लटि "रुदादिभ्यः सार्वधातुके" (७·२·७६ पा०) इत्यनेन इटि रूपम्] तस्य जीवितं तदन्तं तत्पर्य्यन्तम्; तेन विश्वासेनैव स विनश्यतीति भावः ॥ ४८ ॥

(ग) बुद्धिप्रागल्भ्यमस्य नीतिविषये । अथवा अत एव अस्योपरि मैत्रीपक्षपातः" । ततः प्रकाशम् आह,—"भोः हिरण्यक!—

सतां साप्तपदं मैत्रमित्याहुर्विबुधा जनाः ।
तस्मात् त्वं मित्रतां प्राप्तो वचनं मम तत् शृणु ॥ ४९ ॥

(घ) दुर्गस्थेनापि त्वया मया सह नित्यमेव आलापः (ङ) गुणदोषसुभाषितगोष्ठीकथाः सर्वदा कर्त्तव्याः, यद्येवं न विश्वसिषि"। तत् श्रुत्वा हिरण्यकोऽपि व्यचिन्तयत्,—(च) "विदग्धवचनोऽयं दृश्यते लघुपतनकः सत्यवाक्यश्च, तत् युक्तम् अनेन मैत्रीकरणम्; परं कदाचित् मम दुर्गे चरणपातोऽपि न कार्य्यः। उक्तञ्च,—

भीतभीतः पुरा शत्रुर्मन्दं मन्दं विसर्पति ।
भूमौ प्रहेलया पश्चाज्जारहस्तोऽङ्गनास्विव" ॥ ५० ॥

---

(ग) बुद्धिप्रागल्भ्यं—ज्ञानप्राचुर्य्यम् इत्यर्थः ।

सतामिति ।—विबुधाः विद्वांसो जनाः, सतां साधूनां, मैत्रं साप्तपदं सप्तपदोच्चारणसाध्यम्, इति आहुः कथयन्ति; अत्र सप्तपदान्युपलक्षणानि, बहुविध आलाप एव मैत्रलक्षणं, तत् येन सह संवृत्तं स एव मित्रमिति भावः । तस्मात् त्वं मित्रतां प्राप्तः, विविधालापकरणादिति भावः, तत् ततः, मित्रताप्राप्तेः, मम वचनं शृणु ॥४९॥

(घ) दुर्गस्थेन—विलस्थेन ।

(ङ) गुणेति ।—गुणाश्च दोषाश्च तेषां सुभाषितानि शोभनालापा एव, गोष्ठीकथाः परस्परसौहार्दसंलापाः, ("गोष्ठी सभासंलापयोः स्त्रियाम्" इति मेदिनी ) ।

(च) विदग्धवचनः,—विदग्धस्य इव—पण्डितस्येव, वचनं यस्य तथाभूतः, सुवक्ता इत्यर्थः ।

भीतेति ।—शत्रुः पुरा पूर्वं, भीतभीतः अतिभीतः सन्, भूमौ भवन्त्यस्मिन् भूतानि इति भूमिः तस्यां, स्थाने, शत्रुपुरे इति भावः, ("भूमिर्वसुन्धरायां स्यात् स्थानमात्रेऽपि च स्त्रियाम्" इति मेदिनी ) मन्दं मन्दं विसर्पति पदं निदधाति इत्यर्थः, पश्चात्,प्रहेलया अत्यन्तावहेलया, अनायासेनैवेत्यर्थः, प्रकृष्टेन विलासेन च, अङ्गनासु स्त्रीषु, जारहस्त इव उपपतेः कर इव, विसर्पति इत्यनुषङ्गः; यथा जारः शनैः शनैः अभिलषणीयाङ्गनामादौ स्पृशति, पश्चात् प्रणये जाते स्वच्छन्दं, तद्वत् शत्रुरपि प्रथमं मन्दं मन्दं प्रविश्य, पश्चात् भिक्षुपादप्रसारणन्यायेन सर्वमेवायत्तीकरोतीति भावः ॥ ५० ॥

आह च,—"भद्र ! एवं भवतु" । (छ) ततः प्रभृति द्वौ अपि तौ सुभाषितगोष्ठीसुखमनुभवन्तौ तिष्ठतः, परस्परं कृतोपकारौ कालं नयतः । लघुपतनकोऽपि (ज) मांसशकलानि मेध्यानि बलिशेषाणि अन्यानि (झ) वात्सल्याऽऽहृतानि पक्वान्न-विशेषादीनि हिरण्यकार्यमानयति । हिरण्यकोऽपि तण्डुलान् अन्यांश्च भक्ष्यविशेषान् लघुपतनकार्थं रात्रौ आहृत्य (ञ) तत्-कालायातस्य अर्पयति ; अथवा युज्यते द्वयोरपि एतत् ।

उक्तञ्च,—"ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति ।
भुङ्क्ते भोजयते चैवं षड्विधं प्रीतिलक्षणम् ॥५१॥
नोपकारं विना प्रीतिः कथञ्चित् कस्यचित् भवेत् ।
उपयाचितदानेन यस्य देवा ह्यभीष्टदाः ॥ ५२ ॥

---

(छ) ततः प्रभृति—तस्मादारभ्य, [ "अपादाने पञ्चमी" (२।३।२८ पा०) इति सूत्रे कार्त्तिक्याः प्रभृतीति भाष्यप्रयोगात् प्रभृतियोगे पञ्चमी ]।

(ज) मांसशकलानि—पिशितखण्डानि । मेध्यानि—विशुद्धानि । बलि-शेषाणि—काकभुक्तस्य दत्तस्य उपहारद्रव्यस्य अवशिष्टानि ।

(झ) वात्सल्याऽऽहृतानि—प्रेम्णा सञ्चितानि ।

(ञ) तत्कालायातस्य—तत्काले—रात्रौ, आयातस्य—उपस्थितस्य, [ सम्बन्ध-विवक्षया सम्प्रदाने षष्ठी ] ।

ददातीति ।—ददाति, प्रतिगृह्णाति, गुह्यं रहस्यम्, आख्याति कथयति, पृच्छति, गुह्यमिति शेषः, भुङ्क्ते, भोजयते च, एवं षड्विधं दान-प्रतिग्रह-गुह्यभाषण-प्रश्न-भोजन-भोज्यदानात्मकमिति भावः, प्रीतेः प्रणयस्य, लक्षणं चिह्नम् ॥ ५१ ॥

नोपकारमिति ।—उपकारं विना हितसाधनादृते, कस्यचित् कथञ्चिन प्रीतिः न भवेत्, इह तथा हि, देवाः, अपि अध्याहार्यः ; उपयाचितदानेन "यदि मम एतं मनोरथं पूरयिष्यसि, तदा तुभ्यमिदमभीष्टं दास्यामि" इत्येवंरूपं दिव्यदोहदम् उपयाचितम्, [ उपयाच्यतेऽनेन इति करणे क्तप्रत्ययः । तदुक्तं,—"यत् दीयते दैवताभ्यो मनोराज्यस्य सिद्धये । उपयाचितकं दिव्य-दोहदं तत् विदुर्बुधाः ॥" इति ] तस्य दानेन प्रदानेन, अभीष्टदाः मनोरथपूरकाः, भवन्ति इति शेषः, कामं

तावत् प्रीतिर्भवेल्लोके यावद्दानं प्रदीयते ।
वत्सः क्षीरक्षयं दृष्ट्वा परित्यजति मातरम् ॥ ५३ ॥
पश्य दानस्य माहात्म्यं सद्यः प्रत्ययकारकम् ।
यत्प्रभावादपि द्वेषी मित्रतां याति तत्क्षणात् ॥ ५४ ॥
पुत्रादपि प्रियतरं खलु तेन दानं
मन्ये पशोरपि विवेकविवर्जितस्य ।
दत्ते खले नु निखिलं खलु येन दुग्धं
नित्यं ददाति महिषी ससुताऽपि पश्य" ॥ ५५ ॥
किं बहुना,—प्रीतिं निरन्तरां कृत्वा दुर्भेद्यां नखमांसवत् ।
मूषको वायसश्चैव गतौ कृत्रिममित्रताम् ॥ ५६ ॥

---

ददाति इत्यर्थः, पश्य इति दृष्टान्तमवलोकय इत्यर्थः; देवानामपि दानसापेक्षा प्रीतिः, मर्त्यानान्तु सुतरामेवेति भावः ॥ ५२ ॥

तावदिति।—लोके यावत् दानम् अन्नवस्त्रधनादिकमित्यर्थः, प्रदीयते, तावत् प्रीतिः भवेत् तिष्ठतीत्यर्थः; तथा हि,—वत्सः गोशिशुः, क्षीरक्षयं दुग्धनाशं, दृष्ट्वा क्षीरमप्राप्य इत्यर्थः, मातरं जननीं, परित्यजति; मातृतनयसम्बन्धोऽपि दानसाध्य इत्यहो! दानमाहात्म्यमिति भावः ॥ ५३ ॥

पश्येति।—दानस्य माहात्म्यं महिमा, सद्यः तत्क्षणात्, प्रत्ययकारकं विश्वासजनकं, भवतीति शेषः, इति पश्य; यत्प्रभावात् यस्य दानस्य, प्रभावात् सामर्थ्यात्, द्वेषी शत्रुरपि, तत्क्षणात् दानमात्रत एव इत्यर्थः, मित्रतां याति गच्छति, शत्रुमपि वशीकरोति दानं, किमन्यत् वक्तव्यम्? इति भावः ॥ ५४ ॥

पुत्रादिति।—येन कारणेन, महिषी ससुता सवत्साऽपि, खले तिलकल्के, दत्ते भक्षणार्थमर्पिते सति, खलु निश्चितं, नु भोः, निखिलं समस्तं, स्ववत्सार्थं किञ्चिदरक्षित्वैवेत्यर्थः, दुग्धं क्षीरं, नित्यं प्रत्यहं, ददाति प्रयच्छति, तेन हेतुना, सुतार्थमपि किञ्चिदरक्षणादिति भावः, विवेकविवर्जितस्य अज्ञानस्य, पशोरपि पशुजातेरपि, दानम् अभीष्टवस्तुनोऽर्पणं, पुत्रादपि परमस्नेहभाजनात् स्वसुतादपि, प्रियतरं खलु अतिशयेन प्रियमेव, मन्ये सम्भावयामि, पश्य इदमत्याश्चर्यकरम् उदाहरणमवलोकय। वसन्ततिलकं वृत्तम् ॥ ५५ ॥

प्रीतिमिति।—नखमांसवत् नखमांसमिव, [प्राणकृत्वात् एकत्रभावः] निर-

एवं स मूषकस्तदुपकाररञ्जितः तथा विश्वस्तः, यथा तस्य पक्षमध्ये प्रविष्टः तेन सह सर्वदैव (ट) गोष्ठीं करोति ।

अथ अन्यस्मिन्नहनि वायसोऽश्रुपूर्णनयनः समभ्येत्य सगद्गदं तमुवाच,—"भद्र हिरण्यक ! विरक्तिः सञ्जाता मे साम्प्रतं देशस्य अस्य उपरि, तदन्यत्र यास्यामि" । हिरण्यक आह,—"भद्र ! किं विरक्तेः कारणम् ?" स आह—"भद्र ! श्रूयताम्, अत्र देशे महत्या अनावृष्ट्या (ठ) दुर्भिक्षं सञ्जातं, दुर्भिक्षत्वात् जनः (ड) बुभुक्षापीडितः कोऽपि (ढ) बलिमात्रमपि न प्रयच्छति । अपरं, गृहे गृहे बुभुक्षितजनैः विहङ्गानां बन्धनाय (ण) पाशाः प्रगुणीकृताः सन्ति । अहमपि (त) आयुःशेषतया पाशेन बद्धः उद्धारितोऽस्मि, एतद्विरक्तेः कारणम् । तेनाहं विदेशं चलित इति (थ) वाष्पमोक्षं करोमि" । हिरण्यक आह,—"अथ भवान् क्व प्रस्थितः ?" स आह,—"अस्ति दक्षिणापथे (द) वनगहनमध्ये महासरः ; तत्र त्वत्तोऽधिकः परमसुहृत् कूर्मो मन्थरको

---

न्तराम् अविच्छिन्नां, दुर्भेद्यां दुरपनेयां, प्रीतिं प्रणयं, दानादिनेति शेषः, कृत्वा मूषकः हिरण्यकः, वायसः लघुपतनकश्च, कृत्रिमनिबद्धां गतौ प्राप्तौ ; नख-तदधःस्थमांसयोर्मध्ये यथा अन्तरं नास्ति, किञ्च नखस्य काठिन्यात् मांसस्य नखावृतत्वाच्च उभे अपि यथा दुर्भेद्ये तथा अनयोः प्रणयोऽपि निरन्तरो दुर्भेद्यश्च इति सरलार्थः ॥ ५६ ॥

(ट) गोष्ठीम्—अन्योऽन्यसंलापम् ("गोष्ठी सभासंलापयोः स्त्रियाम्" इति मेदिनी) ।

(ठ) दुर्भिक्षं—भिक्षाया अपि अभावः [ अत्र अभावार्थेऽव्ययीभावः ] ।

(ड) बुभुक्षापीडितः,—क्षुधार्त्तः ।

(ढ) बलिमात्रं—बलिः,—काकबलिनाम्ना प्रसिद्धं वायसेभ्यो देयं यत्किञ्चिदन्नं, तावत्परिमितम् [ "प्रमाणपरिमाणाभ्यां—" (वा०) इति मात्रच्प्रत्ययः ] ।

(ण) पाशाः,—बन्धनरज्जुविशेषाः । प्रगुणीकृताः,—सज्जीकृत्य स्थापिताः ।

(त) आयुःशेषतया—आयुषः अवशिष्टतया । उद्धारितः,—विमोचितः ।

(थ) वाष्पमोक्षम्—अश्रुविसर्जनम् ।

(द) वनगहनमध्ये—दुर्गमकाननाभ्यन्तरे, [ गहनशब्दोऽत्र दुर्गमवाची ] ।

नाम। स च मे मत्स्यमांसखण्डानि दास्यति, तद्भक्षणात् तेन सह (ध) सुभाषितगोष्ठीसुखमनुभवन् सुखेन कालं नेष्यामि। न अहमत्र विहङ्गानां पाशबन्धनेन क्षयं द्रष्टुमिच्छामि।

उक्तञ्च,—अनावृष्टिहते देशे शस्ये च प्रलयं गते।

धन्यास्तात! न पश्यन्ति देशभङ्गं कुलक्षयम्॥ ५७॥

कोऽतिभारः समर्थानाम्? किं दूरं व्यवसायिनाम्?।

को विदेशः सविद्यानाम्? कः परः प्रियवादिनाम्?॥५८॥

विद्वत्वञ्च नृपत्वञ्च नैव तुल्यं कदाचन।

स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते"॥ ५९॥

हिरण्यक आह,—"यदि एवं, तदहमपि त्वया सह गमिष्यामि; ममापि महत् दुःखं वर्त्तते"। वायस आह,—भोः! तव किं दुःखम्? तत् कथय"। हिरण्यक आह,—"भोः! बहु वक्तव्यमस्ति अत्र विषये, तत्र एव गत्वा सर्वं सविस्तरं कथयिष्यामि"। वायस आह,—"अहं तावत् आकाशगतिः, तत् कथं

(ध) सुभाषितेति।—सुभाषिता—सदालोचनरूपा, या गोष्ठी—संलापः, तया सुखं, सद्विषयकालोचनारूपालापजनितानन्दमित्यर्थः।

अनावृष्टिहते इति।—हे तात! देशे अनावृष्टिहते अनावृष्ट्या विनाशं गते, शस्ये च प्रलयं प्रणाशं, गते सति, धन्याः पुण्यवन्तः जनाः, देशभङ्गं देशोच्छेदं, कुलक्षयञ्च वंशनाशञ्च, न पश्यन्ति; अतो देशभङ्गादेः पूर्वमेव पलायनमुचितमिति भावः॥ ५७॥

क इति।—समर्थानां शक्तानाम्, अतिभारः गुरुतरकार्य्यमित्यर्थः, कः? न कोऽपि इत्यर्थः, व्यवसायिनां वाणिज्यां, दूरं किम्? न किमपि दूरमस्तीत्यर्थः; सविद्यानां विदुषां, विदेशः कः? अयं देशः अयं विदेश इति गणना नास्ति इत्यर्थः; प्रियवादिनां प्रियभाषिणां, परः कः? न कोऽपि इत्यर्थः, तेषां प्रियवाक्येनैव सर्वे आत्मीया भवन्तीति भावः॥ ५८॥

विद्वत्वमिति।—विद्वत्वञ्च विद्यावत्त्वञ्च, नृपत्वञ्च राजत्वञ्च, कदाचन तुल्यं नैव, भवतीति शेषः, यतः राजा स्वदेशे पूज्यते, विद्वान् जनः, सर्वत्र पूज्यते; नृपादपि श्रेष्ठो विद्वानिति पर्य्यवसितम्॥ ५९॥

भवतो मया सह गमनम्?" स आह,—"यदि मे प्राणान् रक्षसि, तदा स्वपृष्ठमारोप्य मां तत्र प्रापय, न अन्यथा मम गतिः अस्ति"। तत् श्रुत्वा सानन्दं वायस आह,—"यदि एवं तद्धन्योऽहं,यद्भवताऽपि सह तत्र कालं नयामि। अहं(न)सम्पाता- दिकान् अष्टौ उड्डीनगतिविशेषान् वेद्मि ; तत् समारोह मम पृष्ठं, येन सुखेन त्वां तत् सरः प्रापयामि"। हिरण्यक आह,— "उड्डीनानां नामानि श्रोतुमिच्छामि"। स आह,—

"सम्पातं विप्रपातञ्च महापातं निपातनम्।
वक्रं तिर्य्यक् तथा चोर्द्ध्वमष्टमं लघुसंज्ञकम्" ॥ ६० ॥

तत् श्रुत्वा हिरण्यकः तत्क्षणादेव तदुपरि समारूढः। सोऽपि शनैः शनैः तमादाय (प) सम्पातोड्डीनप्रस्थितक्रमेण तत् सरः प्राप्तः। ततो लघुपतनकं (फ) मूषकाधिष्ठितं विलोक्य अतिदूरतः,देशकालवित् असामान्यकाकोऽयमिति ज्ञात्वा सत्वरं मन्थरको जले प्रविष्टः। लघुपतनकोऽपि तीरस्थतरुकोटरे हिरण्यकं मुक्त्वा शाखाग्रमारुह्य तारस्वरेण प्रोवाच,—"भोः मन्थरक! आगच्छ आगच्छ, तव मित्रम् अहं लघुपतनको नाम वायसः चिरात् सोत्कण्ठः समायातः, तदागत्य आलिङ्ग माम्।

(न) सम्पातादिकान्—सम्पातप्रभृतीन् वक्ष्यमाणान्। उड्डीनगतिविशेषान् —नभोगमनप्रकारान्।

तानेवाह, सम्पातमिति।—सम्पातं समभावेन गमनं, विप्रपातं पक्षौ विधूय विशेषभावेन गमनं, महापातं बहुदूरमुत्थाय द्रुतगमनं, निपातनं निम्नदेशेन गमनं, वक्रं कुटिलगमनं, तिर्य्यक् पार्श्वदेशेन गमनम्, ऊर्द्ध्वं किञ्चिदूर्द्ध्वेन गमनम्, अष्टमं लघु- संज्ञकं द्रुतगमननामकम्, एतदष्टप्रकारमुड्डीनम् इत्यर्थः॥ ६० ॥

(प) सम्पातेति।—सम्पाताख्यं यत् उड्डीनं, तेन प्रस्थितं प्रस्थानं, तत्क्रमेण।

(फ) मूषकाधिष्ठितं—पृष्ठारूढमूषिकम्। देशकालवित्—अस्मिन् देशे इदं करणीयम्, अस्मिन् काले इदं करणीयमिति वेत्तीति तथोक्तः, विचक्षण इत्यर्थः। असामान्यकाकः,—अपूर्व्वरूपो वायसः।

उक्तञ्च,—किं चन्दनैः सकर्पूरैः ? तुहिनैः किञ्च शीतलैः ? ।
सर्वे ते मित्रगात्रस्य कलां नार्हन्ति षोड़शीम् ॥ ६१ ॥
तथा च,—केनामृतमिदं सृष्टं मित्रमित्यक्षरद्वयम् ।
आपदाञ्च परित्राणं शोकसन्तापभेषजम् ?" ॥ ६२ ॥

तत् श्रुत्वा निपुणतरं परिज्ञाय सत्वरं सलिलान्निष्क्रम्य पुलकिततनुः आनन्दाश्रुपूरितनयनो मन्थरकः प्रोवाच,—"एहि एहि मित्र ! आलिङ्ग माम् ; (ब) चिरकालात् मया त्वं न सम्यक् परिज्ञातः, तेन अहं सलिलान्तः प्रविष्टः ।
उक्तञ्च,—यस्य न ज्ञायते वीर्य्यं न कुलं न विचेष्टितम् ।
न तेन सङ्गतिं कुर्य्यादित्युवाच बृहस्पतिः" ॥ ६३ ॥

एवमुक्ते लघुपतनको वृक्षात् अवतीर्य्य तमालिङ्गितवान् । अथवा साधु इदमुच्यते,—
अमृतस्य प्रवाहैः किं कायक्षालनसम्भवैः ? ।
चिरान्मित्रपरिष्वङ्गो योऽसौ मूल्यविवर्जितः ॥ ६४ ॥

---

किमिति ।—सकर्पूरैः कर्पूरसहितैः, चन्दनैः अतिशीतलैरिति भावः, किम् ? शीतलैः तुहिनैः तुषारैश्च, किम् ? न किमपि प्रयोजनम् इत्यर्थः ; यतः ते सर्वे सकर्पूर चन्दनादयः, मित्रगात्रस्य बन्धुशरीरस्य, षाड़शीं कलां षोड़शभागैकभागम् इत्यर्थः, न अर्हन्ति ; बन्धुगात्रसंस्पर्शः तादृशचन्दनादिभ्योऽपि सन्तापनाशक इति भावः ॥ ६१ ।

केनेति ।—आपदां विपदां, परित्राणं रक्षणकारणं, शोकसन्तापभेषजञ्च इष्ट वियोगजनितसन्तापस्य प्रशमने औषधभूतम्, अत एव अमृतम् अमृतरूपम् इत्यर्थः, इदम् एतत्, "मित्रम्" इति अक्षरद्वयं, केन जनेन, सृष्टम् ? उत्पादितम् ; मित्रदर्शनस्य परमप्रीतिजनकत्वादिति भावः ॥ ६२ ॥

(ब) चिरकालात्—बहुकालादर्शनात् । परिज्ञातः,—परिचितत्वेन विदित इत्यर्थः । सलिलान्तःप्रविष्टः,—जलमध्यं गतः ।

यस्येति ।—यस्य वीर्य्यं बलं, न, कुलं वंशं, न, विचेष्टितञ्च आचारश्च, न ज्ञायते तेन सह सङ्गतिं मिलनं, न कुर्य्यादिति बृहस्पतिः उवाच ; तथा च वीर्य्यवंशचेष्टि तान् अवगत्यैव मैत्री विधेया इति तात्पर्य्यम् ॥ ६३ ॥

अमृतस्येति ।—कायस्य देहस्य, क्षालनाय सम्भवः उत्पत्तिः, प्रयोजनमिति यावत्

एवं द्वौ अपि तौ विहितालिङ्गनौ परस्परं (भ) पुलकितशरीरौ वृक्षादधः समुपविष्टौ प्रोचतुः आत्मचरितवृत्तान्तम् । हिरण्यकोऽपि मन्थरकं प्रणम्य (म) वायसाभ्यासे समुपविष्टः । अथ तं समालोक्य मन्थरको लघुपतनकमाह,—"भोः! कोऽयं मूषकः? कस्मात् त्वया भक्ष्यभूतोऽपि पृष्ठमारोप्य आनीतः? तत्र अत्र स्वल्पकारणेन भाव्यम्"। तत् श्रुत्वा लघुपतनक आह,—"भोः! हिरण्यको नाम मूषकोऽयं मम सुहृत् द्वितीयमिव जीवितम्। तत् किं बहुना?—

पर्जन्यस्य यथा धारा यथा च दिवि तारकाः।
सिकतारेणवो यद्वत् सङ्ख्यया परिवर्जिताः ॥ ६५ ॥
गुणाः सङ्ख्यापरित्यक्तास्तद्वदस्य महात्मनः।
परं निर्वेदमापन्नः सम्प्राप्तोऽयं तवान्तिकम्" ॥ ६६ ॥

मन्थरक आह,—"किमस्य वैराग्यकारणम्?" वायस

शैवां तथाभूतैः, शरीरप्रक्षालनमात्रसाधनैरित्यर्थः, अमृतस्य प्रवाहैः जलपूरैः, किम्? न किमपि प्रयोजनम् इत्यर्थः, यः चिरात् दीर्घकालादनन्तरं, मित्रपरिष्वङ्गः सुहृदालिङ्गनम्, असौ परिष्वङ्गः, मूल्यविवर्जितः अमूल्यः इत्यर्थः; चित्तसन्तापनाशकत्वात् अनुपममेतत् मित्रालिङ्गनं, केवलदैहिकसन्तापनाशको जलप्रवाहस्तु न तथेति भावः ॥ ६४ ॥

(भ) पुलकितशरीरौ—रोमाञ्चितकलेवरौ।

(म) वायसाभ्यासे—काकसमीपे, ("समीपे निकटासन्न···। सदेशाभ्याससविध···"॥ इत्यमरः)।

सङ्क्षेपतो मूषिकस्य गुणाधिक्यं प्रकटयन् आगमनकारणमपि सङ्क्षेपेणाह, पर्जन्यस्येत्यादि द्वाभ्याम्।—यथा पर्जन्यस्य मेघस्य, धाराः, यथा च दिवि अन्तरीक्षे, तारकाः, सिकतानां बालुकानां, रेणवः कणा इत्यर्थः, यद्वत् यथा, सङ्ख्यया गणनया, परिवर्जिताः परित्यक्ताः, असङ्ख्येया इत्यर्थः, तद्वत् अस्य महात्मनः मूषकस्य, गुणाः सङ्ख्यया परित्यक्ताः असङ्ख्येयाः इत्यर्थः; सोऽयं मूषकः, परं निर्वेदं वैराग्यम्, आपन्नः प्राप्तः सन्, तव आन्तिकं समीपं, सम्प्राप्तः आगतः; असङ्ख्यगुणविभूषितोऽपि पुमान् दुर्दैववशात् परं विपन्नः आपत्प्रतिकाराय आधिविघाताय वा हितैषिणं सुहृदं समाश्रयतीति वक्तुराशयः ॥ ६५ ६६ ॥

आह,—"पृष्टो मया, परमनेन अभिहितं, 'यत् बहु वक्तव्यमस्ति, तत् तत्र एव गतः कथयिष्यामि' इति ममापि न निवेदितम्। तत् भद्र हिरण्यक ! इदानीं निवेद्यताम् उभयोः अपि आवयोः तदात्मनो वैराग्यकारणम्"। सोऽब्रवीत्,—

## कथा १।

"अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरं, तस्य नातिदूरे (य) मठायतनं भगवतः श्रीमहादेवस्य। तत्र च ताम्रचूड़ो नाम (र) परिव्राजकः प्रतिवसति स्म ; स च नगरे भिक्षाऽटनं कृत्वा प्राणयात्रां समाचरति, भिक्षाशेषञ्च तत्रैव भिक्षापात्रे निधाय तद्भिक्षापात्रं (ल) नागदन्ते अवलम्ब्य पश्चात् रात्रौ स्वपिति, प्रत्युषे च तदन्नं (व) कर्मकराणां दत्त्वा सम्यक् तत्रैव देवतायतने (श) सम्मार्जनोपलेपमण्डनादिकं समाज्ञापयति।

अन्यस्मिन् अहनि मम (ष) बान्धवैः निवेदितं,—'स्वामिन् ! मठायतने सिद्धमन्नं मूषकभयात् तत्रैव भिक्षापात्रे निहितं नागदन्तेऽवलम्बितं तिष्ठति सदा एव, तत् वयं भक्षयितुं न शक्नुमः ; स्वामिनः पुनरगम्यं किमपि नास्ति, तत् किं वृथाऽटनेन अन्यत्र ? अद्य तत्र गत्वा यथेच्छं भुञ्जमहे तव प्रसादात्'। तदाकर्ण्य अहं सकलयूथपरिवृतः तत्क्षणादेव तत्र गतः, उत्पत्य च तस्मिन् भिक्षापात्रे समा-

(य) मठायतनं—देवतावासस्थानं, मन्दिरम् इत्यर्थः।

(र) परिव्राजकः,—पर्य्यटकः, सन्यासी इत्यर्थः ; भिक्षाऽटनं—भिक्षार्थंभ्रमणम्।

(ल) नागदन्ते—गृहभित्तौ प्रोथिते "डालिना" इति वङ्गभाषया प्रसिद्धे दण्डविशेषे।

(व) कर्मकराणां—भृत्यानाम्, [ सम्बन्धविवक्षया षष्ठी ]।

(श) सम्मार्जनोपलेपमण्डनादिकं—धूल्यपनयन-गोमयलेपनादिकार्य्यमिति भावः।

(ष) बान्धवैः,—ज्ञातिभिः। वृथाऽटनेन—विफलभ्रमणेन।

रूढ़ः भक्ष्यविशेषान् सेवकानां दत्त्वा पश्चात् स्वयमेव भक्षयामि ; सर्वेषां तृप्तौ जातायां भूयः स्वगृहं गच्छामि । एवं नित्यमेव तदन्नं भक्षयामि । परिव्राजकोऽपि यथाशक्ति रक्षति । परं यदा एव (स) निद्राऽन्तरितो भवति, तदा अहं तत्र आरुह्य आत्मकृत्यं करोमि ।

अथ कदाचित् तेन (ह) मम रक्षणार्थं महान् यत्नः कृतः, जर्जरवंशश्चैकः समानीतः, तेन सुप्तोऽपि मम भयात् भिक्षापात्रं ताड़यति । अहमपि अभक्षितेऽपि अन्ने प्रहारभयात् अपसर्पामि । एवं तेन सह सकलां रात्रिं (क्ष) विग्रहपरस्य कालो व्रजति ।

अथ अन्यस्मिन्नहनि तस्मिन् मठे (क) बृहत्स्फिङ्नामा परिव्राजकः तस्य सुहृत् तीर्थयात्राप्रसङ्गेन पान्थः प्राघुणिकः समायातः । तं दृष्ट्वा (ख) प्रत्युत्थानविधिना सम्भाव्य प्रतिपत्ति-पूर्वकम् (ग) अभ्यागतक्रियया नियोजितः । ततश्च रात्रौ एकत्र (घ) कुशसंस्तरे द्वौ अपि प्रसुप्तौ धर्मकथां कथयितुम् आरब्धौ ।

अथ (ङ) बृहत्स्फिक्कथागोष्ठीषु स ताम्रचूड़ो मूषकत्रासार्थं व्याक्षिप्तमनाः जर्जरवंशेन भिक्षापात्रं ताड़यन् तस्य शून्यं

(स) निद्राऽन्तरितः,—सुप्तः,निद्रित इत्यर्थः। आत्मकृत्यं—स्वकार्य्यं भक्षणादिकम् ।

(ह) मम रक्षणार्थं—मत्तः भोज्यद्रव्याणां गुप्त्यर्थम् । जर्जरवंशः,—जीर्णवंशदण्डः।

(क्ष) विग्रहपरस्य—युध्यमानस्य ।

(क) बृहदिति ।—बृहत्यौ—विशाले, स्फिचौ—नितम्बमांसपिण्डौ यस्य सः बृहत्स्फिक्, स नाम यस्य सः । प्राघुणिकः,—अतिथिः ।

(ख) प्रत्युत्थानविधिना—प्रत्युद्गमनाद्यनुष्ठानेन । सम्भाव्य—सत्कृत्य । प्रतिपत्ति-पूर्वकं—सम्मानपूर्वकम् ।

(ग) अभ्यागतक्रियया—अतिथिपरिचर्य्यया । नियोजितः, आत्मा इति शेषः ।

(घ) कुशसंस्तरे—दर्भशय्यायाम् । प्रसुप्तौ—शयितौ ।

(ङ) बृहदिति ।—बृहत्स्फिचा—तन्नाम्ना परिव्राजकेन सह, कथागोष्ठीषु—संलापावसरेषु । व्याक्षिप्तमनाः,—व्यग्रचित्तः ।

(च) प्रतिवचनं प्रयच्छति। (छ) तन्मयः न किञ्चित् (ज) उदाहरति।

अथ असौ अभ्यागतः परं कोपमुपागतः तमुवाच,—'भोः ताम्रचूड़! परिज्ञातः त्वं सम्यक् न सुहृत्, तेन मया सह साह्लादं न जल्पसि; तत् रात्रौ अपि त्वदीयं मठं त्यक्त्वा अन्यत्र मठे यास्यामि। उक्तञ्च—

एह्येहि, समाश्रयासनमिदं, कस्माच्चिरात् दृश्यसे?
का वार्त्ता? अतिदुर्बलोऽसि? कुशलम्? प्रीतोऽस्मि ते दर्शनात्।
एवं ये समुपागतान् प्रणयिनः प्रह्लादयन्त्यादरात्
तेषां युक्तमशङ्कितेन मनसा हर्म्याणि गन्तुं सदा ॥६७॥

गृही यत्राऽऽगतं दृष्ट्वा दिशो वीक्षेत वाऽप्यधः।
तत्र ये सदने यान्ति ते शृङ्गरहिता वृषाः ॥ ६८ ॥

---

(च) प्रतिवचनम्—उत्तरम्।

(छ) तन्मयः,—बृहत्स्फिक्कथायामवहितः, मूषिकध्यानेन तत्रैव निविष्टमनस्कत्वात् इति भावः।

(ज) उदाहरति—कथयति, स्वयं प्रमत्तः न किञ्चित् भाषते इत्यर्थः।

एह्येहीति।—अत्र मत्समीपे, एहि एहि आगच्छ आगच्छ, इदम् आसनं समाश्रय गृहाण, कस्मात् किमर्थं, चिरात् दीर्घकालात्, परमिति शेषः, दृश्यसे? का वार्त्ता? कः वृत्तान्तः? अतिदुर्बलोऽसि? अत्यन्तं कृशोऽसि? कुशलं मङ्गलम्? ते तव, दर्शनात् प्रीतोऽस्मि; ये जनाः, समुपागतान् उपस्थितान्, प्रणयिनः बान्धवान्, एवम् उक्तप्रकारेण, आदरात् प्रह्लादयन्ति प्रीणयन्ति, अशङ्कितेन असङ्कुचितेनेत्यर्थः, मनसा तेषां हर्म्याणि गृहाणि इत्यर्थः, [ विशेषार्थपरशब्दस्यापि कुत्रचित् सामान्यवाचकत्वदर्शनात् अत्र हर्म्यशब्दस्य गृहसामान्यपरता ] सदा गन्तुं युक्तम् उचितं, साधूनामिति शेषः। शार्दूलविक्रीडितं वृत्तम् ॥ ६७ ॥

गृहीति।—गृही गृहस्थः, यत्र यस्मिन् गृहे, आगतम् अभ्यागतम्, अतिथिम् इत्यर्थः, दृष्ट्वाऽपि दिशः वा अधः वीक्षते इतस्ततो दृष्टिं निक्षिपति, अधोमुखो वा भवति इत्यर्थः, तत्र सदने गृहे, ये यान्ति, ते शृङ्गरहिताः शृङ्गहीनाः, वृषाः, तद्वत् विवेकहीना इत्यर्थः, पशुवत् मानापमानज्ञानवर्जिता इति भावः ॥ ६८ ॥

नाभ्युत्थानक्रिया यत्र नाऽऽलापा मधुराक्षराः ।
गुणदोषकथा नैव तत्र हर्म्ये न गम्यते ॥ ६९ ॥

तत् (झ) एकमठप्राप्त्या अपि त्वं गर्वितः(ञ) त्यक्तसुहृत्स्नेहः न एतत् वेत्सि, यत् त्वया मठाश्रयव्याजेन नरकोपार्जनं कृतम्। उक्तञ्च,—नरकाय मतिस्ते चेत् पौरोहित्यं समाचर ।
वर्षं यावत् किमन्येन मठचिन्तां दिनत्रयम् ॥ ७० ॥

तन्मूर्ख ! शोचितव्यः त्वं गर्वं गतः। तदहं त्वदीयं मठं परित्यज्य यास्यामि'।

अथ तत् श्रुत्वा (ट) भयत्रस्तमनाः ताम्रचूडः तमुवाच,—'भो भगवन् ! मा एवं वद, न त्वत्समोऽन्यो मम सुहृत् कश्चिदस्ति परः ; तत् श्रूयतां (ठ)' गोष्ठीशैथिल्यकारणम्। एष

---

नेति।—यत्र गृहे, अभ्युत्थानक्रिया सादरप्रत्युद्गमनं, न, मधुराक्षराः मधुराणि अक्षराणि येषु तादृशाः, आलापाः वचनानि, न, तथा गुणदोषकथा अन्योऽन्यगुणदोषचर्चा, न, अस्तीति शेषः, तत्र हर्म्ये नैव गम्यते, तत्र गमनं नोचितमिति भावः ॥६९॥

(झ) एकमठप्राप्त्या—एकस्य मठस्य—देवमन्दिरस्य, प्राप्त्या—आधिपत्यलाभेनेत्यर्थः।

(ञ) त्यक्तसुहृत्स्नेहः,—परित्यक्तबन्धुप्रणयः।

नरकायेति।—चेत् यदि, ते तव, नरकाय नरकं गन्तुं, मतिः बुद्धिः, वर्त्तते इति शेषः, तदा वर्षं यावत् एकवर्षं व्याप्य इत्यर्थः, ["कालाध्वनोरत्यन्तसंयोगे" (२।३।५ पा०) इति अत्यन्तसंयोगे द्वितीया ] पौरोहित्यं देवमन्दिरस्य पुरोहितकार्य्यं, लोकप्रतारणात्मकमिति भावः ; पौरोहित्यं—याजकत्वमिति वा "देवलो ग्रामयाजी च" इत्यादि स्मरणादिति भावः ; ( भिक्षोपजीविनां परिव्राजकानां देवलेषु याजकेषु च लोलुप-मोक्तिर्यमिति शेषम् ) समाचर अनुतिष्ठ ; अन्येन किं किं बहुना इत्यर्थः, दिनत्रयं व्याप्य मठचिन्तां मठसंरक्षणभावनां, समाचर इति पूर्वानुषङ्गः ; दिनत्रयं व्याप्य मठचिन्तां कर्त्तुः देवलस्यापि नरके वासो भवति, एतदेव ते समुचितम् अवस्थाताभ्यागतस्येति भावः ॥ ७० ॥

( ट ) भयत्रस्तमनाः,—भयेन शङ्कितचित्तः। परः,—श्रेष्ठः।

( ठ ) गोष्ठीति।—गोष्ठ्याम्—अन्योऽन्यस्य सदालापे, यत् शैथिल्यम्—अनभिनिवेशः, तस्य कारणम्।

दुरात्मा मूषकः प्रोन्नतस्थाने धृतमपि भिक्षापात्रम् ( ड ) उत्प्लुत्य आरोहति, भिक्षाशेषञ्च तत्रस्थं भक्षयति। (ढ) तद्भावात् एव मठे (ण) मार्जनक्रिया अपि न भवति। तन्मूषकत्रासार्थम् एतेन वंशेन भिक्षापात्रं मुहुर्मुहुः ताडयामि, न अन्यत् कारणमिति। अपरमेतत् ( त ) कुतूहलं पश्य अस्य दुरात्मनः, यत् ( थ ) मार्जारमर्कटादयोऽपि तिरस्कृता अस्य उत्पतनेन'। (द) बृहत्स्फिक् आह,—'अथ ज्ञायते तस्य (ध) बिलं कस्मिंश्चित् प्रदेशे ?' ताम्रचूड आह,—'भगवन् ! न वेद्मि सम्यक्'। स आह,—'नूनं ( न ) निधानस्य उपरि तस्य बिलम्; ( प ) निधानोष्मणा प्रकूर्दते। उक्तञ्च,—

ऊष्माऽपि वित्तजो वृद्धिं तेजो नयति देहिनाम्।
किं पुनस्तस्य सम्भोगस्त्यागकर्मसमन्वितः ॥ ७१ ॥

---

(ड) उत्प्लुत्य—उल्लङ्घ्य, उद्गम्येत्यर्थः।

(ढ) तदिति।—तद्भावात्—तस्य—मूषिकस्य, भावात्—अत्र विद्यमानत्वात् इत्यर्थः।

(ण) मार्जनक्रिया—सम्मार्जनव्यापारः, तद्रेणुगहनत्वादित्याशयः।

(त) कुतूहलं—कौतुकम्।

(थ) मार्जारेति।—मार्जाराः,—बिडालाः, मर्कटाः,—वानराः, तत्प्रभृतयोऽपि ये अस्य तीव्रोद्गमनप्रसिद्धाः अनुपलब्धास्तेऽपीति भावः। तिरस्कृताः,—खर्वीकृताः; ततोऽपि शीघ्रतरमस्योत्पतनमिति भावः। अस्य—मूषिकस्य।

(द) बृहत्स्फिक्—बृहत्यौ स्फिचौ—नितम्बौ यस्य तथाभूतः, तदाख्यः इत्यर्थः।

(ध) बिलं—गर्त्तः।

(न) निधानस्य—शङ्खपद्मादिनामकस्य रत्नविशेषस्य।

(प) निधानोष्मणा—चिरसञ्चिततथाभूतनिधिप्रभावजनितगर्वेण इत्यर्थः। प्रकूर्दते—प्रकर्षेण क्रीडति इत्यर्थः, ["कूर्दते" इत्यस्य धातोः औणादिकस्य लटि रूपम् ]।

ऊष्मेति।—वित्तजः धनजातः, ऊष्मा उत्तापः, अहङ्कार इत्यर्थः, ( "ऊष्मो घर्मेऽप्युष्णि ग्रीष्मे पुमानूष्मा स्त्रियां त्विषि" इति ऊष्मशब्दो नान्तोऽदन्तोऽपि कोषे दृश्यते ) अपि देहिनां प्राणिनां, तेजः प्रभावं, वृद्धिं नयति प्रापयति [ नयतेर्द्विकर्मकत्वात् ];

तथा च,—नाकस्माच्छाण्डिली मातर्विक्रीणाति तिलैस्तिलान् ।
लुञ्चितानितरैर्येन हेतुरत्र भविष्यति' ॥ ७२ ॥

ताम्रचूड आह,—'कथमेतत् ?' स आह,—

## कथा २ ।

'यदा अहं कस्मिंश्चित् स्थाने (फ) प्रावृट्काले व्रतग्रहण-निमित्तं कञ्चित् ब्राह्मणं वासार्थं प्रार्थितवान् ; ततश्च (ब) तद्-वचनात् तेनापि (भ) शुश्रूषितः सुखेन देवार्चनपरः तिष्ठामि ।

अथ अन्यस्मिन्नहनि प्रत्यूषे (म) प्रबुद्धोऽहं ब्राह्मण-ब्राह्मणीसंवाददत्तावधानः शृणोमि । तत्र ब्राह्मण आह,—'ब्राह्मणि ! प्रभाते दक्षिणायनसङ्क्रान्तिः अनन्तदानफलदा

---

त्यागकर्मणा दानव्यापारेण, समन्वितः युक्तः, तस्य वित्तस्य, सम्भोगः किं पुनः ? तेनो-र्द्धं नयत्येव, तत्र किं वक्तव्यमस्तीत्यर्थः ; वित्तस्य दाने भोगे च, किं बहुना वित्त-संसर्गेऽपि कष्टा जायते, अर्थस्यानर्थमूलत्वादिति भावः ॥ ७१ ॥

नेति ।—हे मातः ! शाण्डिली तदाख्या, शाण्डिलगोत्रसम्भूता वा काचित् ब्राह्मणी, येन हेतुना, इतरैः अलुञ्चितैः इति भावः, तिलैः लुञ्चितान् अपनीतत्वचः, तिलान् अकस्मात् विना कारणम् इत्यर्थः, न विक्रीणाति तुषरहितैः तिलैः सतुषान् तिलान् न विनिमिनोति इति भावः ; [ "परिव्यवेभ्यः क्रियः" ( १।३।१८ पा० ) इत्यनुशासनेन आत्मनेपदव्यवस्थितेः अत्र "विक्रीणीते" इत्येवमेव भवितुं युक्तम ] तेन अत्र अविक्रये, हेतुः कारणं, भविष्यति ; प्रयोजनमुद्दिश्यैव सर्वेषां प्रवर्त्तनादिति भावः ॥७२॥

(फ) प्रावृट्काले—वर्षाकाले [ प्रावृडिति प्रपूर्वस्य वृष्धातोः क्विपि "नहि-वृतिवृषि—"( ६।३।११६ पा० ) इति सूत्रेण उपसर्गस्य दीर्घत्वम् ]। व्रतग्रहणनिमित्तं —कस्यचित् नियमस्य पालनार्थम् । वासार्थं—तद्गृहे अवस्थानार्थम् ।

(ब) तद्वचनात्—तस्मात् वचनात्, मत्प्रार्थनावचनात् इत्यर्थः । तेन—प्रार्थित-ब्राह्मणेन ।

(भ) शुश्रूषितः,—सेवितः ।

(म) प्रबुद्धः,—जागरितः । ब्राह्मणेति ।—ब्राह्मणब्राह्मणीसंवादे—ब्राह्मणस्य ब्राह्मण्या सह परस्परकथोपकथने, दत्तावधानः,—अभिनिविष्टचित्तः ।

भविष्यति। तदहं (य) प्रतिग्रहार्थं ग्रामान्तरं यास्यामि। त्वया (र) ब्राह्मणस्य एकस्य भगवतः (ल) सूर्य्यस्य उद्देशेन किञ्चिद्भोजनं दातव्यम्'।

अथ तच्छ्रुत्वा ब्राह्मणी (व) परुषतरवचनैः तं भर्त्सयमाना प्राह,—'कुतः ते (श) दारिद्र्योपहतस्य भोजनप्राप्तिः ? तत् किं न लज्जसे एवं ब्रुवाणः!! अपि च, न मया तव (ष) हस्तलग्नया क्वचिदपि लब्धं सुखम्; न मिष्टान्नस्य आस्वादनं, न च हस्त-पादकण्ठादिभूषणम्'। तत् श्रुत्वा भयत्रस्तोऽपि विप्रो मन्दं मन्दं प्राह,—'ब्राह्मणि! न एतत् युज्यते वक्तुम। उक्तञ्च,—

> ग्रासादपि तदर्द्धञ्च कस्मान्नो दीयतेऽर्थिषु ?।
> इच्छाऽनुरूपो विभवः कदा कस्य भविष्यति ? ॥ ७३ ॥
> ईश्वरा भूरिदानेन यल्लभन्ते फलं किल।
> दरिद्रस्तच्च काकिण्या प्राप्नुयादिति नः श्रुतिः ॥ ७४ ॥

---

(य) प्रतिग्रहार्थं—दत्तवस्तुनः स्वीकारः प्रतिग्रहः, तस्मै इदं, दानग्रहणार्थमित्यर्थः, [ अत्र नित्यसमासः, "अर्थेन नित्यसमासः सर्वलिङ्गता चेति वक्तव्यम्" इति वार्त्तिकात् ]।

(र) ब्राह्मणस्येति,—[ सम्बन्धविवक्षया सम्प्रदाने षष्ठी ]।

(ल) सूर्य्यस्य उद्देशेन—सूर्य्यदेवप्रीत्यर्थम इत्यर्थः।

(व) परुषतरवचनैः,—अतिकर्कशवाक्यैः। भर्त्सयमाना—तिरस्कुर्वन्ती।

(श) दारिद्र्योपहतस्य—निर्धनस्य इत्यर्थः।

दाता लघुरपि सेव्यो भवति न कृपणो महानपि समृद्धया ।
कूपोऽन्तःस्वादुजलः प्रीत्यै लोकस्य न समुद्रः ॥ ७५ ॥

तथा च,—अकृतत्यागमहिम्ना मिथ्या किं राजराजशब्देन ? ।
गोप्तारं न निधीनां कथयन्ति महेश्वरं विबुधाः ॥ ७६ ॥

अपि च,—सदा [illegible]नपरिक्षीणः शस्त एव करीश्वरः ।
[illegible]नः पीनगात्रोऽपि निन्द्य एव हि गर्दभः ॥ ७७ ॥

---

किम लभन्ते, दरिद्रो जनः, काकिण्या वराटकानां विंशत्या, ("वराटकानां दशकद्वयं यत् सा काकिणी" इति लीलावती) काकिणीमात्रदानेन इत्यर्थः, तत्र फलं, प्राप्नुयात् लभेत, इति नः अस्माकं, स्मृतिः शास्त्रेषु श्रुतम् ; अतोऽस्माकं दरिद्राणाम् अल्पदानस्यापि भूरिफलकतया किंचिदपि दातव्यमिति भावः ॥ ७४ ॥

दातेति ।—दाता लघुरपि निर्धनोऽपीत्यर्थः, सेव्यः भवति, लोकैरिति शेषः, कृपणः अदाता, समृद्ध्या [ अत्र करणे तृतीया ] सम्पदा, महानपि न, सेव्यः इत्यनुषङ्गः ; तथा हि, अन्तर्गतानि स्वादूनि जलानि यस्य तादृशः कूपः क्षुद्रोऽपीति भावः, लोकस्य जनस्य, प्रीत्यै, भवतीति शेषः, तस्य मधुरजलदातृत्वात् ; समुद्रो बृहदपीति भावः, न, लवणमयजलत्वात् तेन न कोऽपि तृप्यतीति भावः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः । आर्य्या वृत्तम् ॥ ७५ ॥

अकृतेति ।—अकृतः अविस्तारित इत्यर्थः, त्यागस्य दानस्य, महिमा महत्त्वं येन तादृशेन, दानवर्जितेनेत्यर्थः, अत एव मिथ्या अयथार्थभूतेन, राजराजशब्देन नृपश्रेष्ठ इति पदेन, अथ च राजराजशब्देन कुवेरस्य नामविशेषेण, ("कुवेरस्त्र्यम्बकसखः··· । ···राजराजो धनाधिपः ॥" इत्यमरः ) किम् ? न किमपि प्रयोजनमित्यर्थः ; विबुधाः पण्डिताः, निधीनां रत्नानां, गोप्तारं रक्षितारं, न तु दातारं, तस्य महेश्वरकोषरक्षकत्वादिति भावः ; कुवेरमिति शेषः, महेश्वरं न कथयन्ति ; धनवत्त्वमेव न महेश्वरशब्दप्रतिपाद्यत्वे हेतुः, अपि तु त्यागशीलत्वमेवेति भावः । आर्य्या वृत्तम् ॥ ७६ ॥

सदेति ।—सदा सततं, दानेन एकत्र,—मदजलेन, अन्यत्र,—धनवितरणेन, परिक्षीणः एकत्र,—कृशः, अन्यत्र,—दैन्यमापन्नः इत्यर्थः, करीश्वरः करिणामीश्वरः, गजेन्द्रः इति यावत्, शस्तः प्रशंसान्वितः, एकत्र,—मदस्राविन्त्वात्, अन्यत्र,—सदा धनदानादिति भावः ; अदानः एकत्र,—अमदस्रावी, अन्यत्र,—कृपण इति भावः, पीनगात्रः स्थूलकायोऽपि, एकत्र,—स्वभावात्, अन्यत्र,—स्वोदरमात्रपरिपोषकत्वात् केवलं मांसपिण्डमयशरीरधारक इति भावः ; गर्दभः रासभः, निन्द्य एव गर्हणीयः

सुशीलोऽपि सुवृत्तोऽपि यात्यदानादधो घटः ।
पुनः कुब्जाऽपि काणाऽपि दानादुपरि कर्कटी ॥ ७८ ॥
यच्छन् जलमपि जलदो वल्लभतामेति सकललोकस्य ।
नित्यं प्रसारितकरो मित्रोऽपि न वीक्षितुं शक्यः ॥७९॥

एव, हि निश्चयं ; दृश्यते हि तिरश्चामपि दानमूलिकैव प्रशंसा, किमुत परेषामिति तु फलितार्थः । अत्र विशेषणसाम्यवशात् अप्रस्तुतात् करीश्वरात् गर्दभाच्च प्रस्तुतस्य दातुः कृपणस्य च प्रतीतेः अप्रस्तुतप्रशंसाऽलङ्कारः ॥ ७७ ॥

सुशील इति ।—सुशीलोऽपि सुस्वभावोऽपि, एकत्र,—माङ्गलिकद्रव्यत्वात्, अन्यत्र,—कस्यचिदपि अनिष्टानाचरणादिति भावः; सुवृत्तोऽपि एकत्र,—सुवर्तुलोऽपि, अन्यत्र—सुचरितोऽपि, घटः कलसः, अदानात् एकत्र,—जलस्यावितरणात्, अन्यत्र,—कार्पण्यादिति भावः, अधो याति अधस्तिष्ठति, जलशून्यावस्थायामधोमुखं कृत्वा स्थापनादिति भावः, कृपणानामनादरणीयत्वात् इति च भावः, पुनः किन्तु, कुब्जाऽपि वक्राऽपि, काणाऽपि विकृताऽऽकृतिरपि, पक्षद्वयेऽपि समानम् ; कर्कटी एर्वारुफलं, "काँकुड़" इति वङ्गभाषया प्रसिद्धं, दानात् एकत्र,—पथिकेभ्यः आत्मसमर्पणात्, अन्यत्र,—धनवितरणात्, उपरि समुन्नते प्रदेशे, सर्वोपरि प्रशंसनीयस्थाने च इत्यर्थः, यातीति पूर्वेणान्वयः, एकत्र,—आतपोत्तप्तपान्थानां क्षुत्पिपासानिवारकतया, अन्यत्र,—आर्त्तानां विपन्नानां वा दैन्यविनाशकतया इति भावः ; अत्रापि विशेषणसाम्यवशात् अप्रस्तुतात् घटात् कर्कट्याश्च प्रस्तुतस्य अदातुः दातुश्च प्रतीतेः अप्रस्तुतप्रशंसाऽलङ्कारः ॥ ७८ ॥

यच्छन्निति ।—जलदः मेघः, सूर्यादधःस्थः इति भावः ; जलं वारि, यच्छन्नपि दददपि, सर्वत्र सुप्राप्यजलदानादपि इति भावः ; सकललोकस्य वल्लभतां सर्वजनप्रियताम्, एति प्राप्नोति ; अकातरदानशीलत्वादिति भावः ; नित्यं सततं, प्रसारितकरः एकत्र,—भूम्याः सहस्ररश्मिभिः जलसमाकर्षणार्थं विस्तारितकिरणः, अन्यत्र,—धनप्रार्थनार्थं हस्तं प्रसारयन्निति भावः, मित्रोऽपि एकत्र,—सूर्योऽपि, पूर्वोक्तजलदात् अत्युन्नतस्थलस्थितोऽपीति भावः, अन्यत्र,—बन्धुरपि, अतिप्रियोऽपीति भावः ; [ मित्रशब्दस्य बन्धुवाचकत्वे क्लीवत्वं सूर्यवाचकत्वे तु पुंस्त्वमेवेति ज्ञेयं ] वीक्षितुं द्रष्टुं, न शक्यः, एकत्र,—तेजोऽतिरेकात् दृष्टिशक्तेरुपरोधकतया, अन्यत्र,—नियतप्रार्थनावशात् लोकैरनादरणीयतयेति भावः ; अत्रापि विशेषणसाम्यवशात् अप्रस्तुतात् जलदात् मित्राच्च प्रस्तुतस्य वदान्यस्य, अदातुः प्रत्युत प्रार्थयितुरिव कृपणस्य च प्रतीतेः पूर्ववदप्रस्तुतप्रशंसाऽलङ्कारः । आर्या वृत्तम् ॥ ७९ ॥

एवं ज्ञात्वा दारिद्र्याभिभूतैरपि स्वल्पात् स्वल्पतरं काले पात्रे च देयम् । उक्तञ्च,—

सत्पात्रं महती श्रद्धा देशे काले यथोचिते ।
यद्दीयते विवेकज्ञैस्तदनन्ताय कल्पते ॥ ८० ॥

तथा च,—अतितृष्णा न कर्त्तव्या तृष्णां नैव परित्यजेत् ।
अतितृष्णाऽभिभूतस्य शिखा भवति मस्तके' ॥८१॥

ब्राह्मणी आह,—'कथमेतत् ?' स आह,—

## कथा ३ ।

'अस्ति कस्मिंश्चित् वनोद्देशे कश्चित् (स)पुलिन्दः, स च कदाचित् (ह) पापर्द्धिं कर्त्तुं वनं प्रति प्रस्थितः । अथ तेन (क) प्रसर्पता महान् (ख) अञ्जनपर्वतशिखराकारः क्रोडः समासादितः, दृष्ट्वा च (ग) कर्णान्ताकृष्टनिशितसायकेन समाहतः,

सत्पात्रमिति ।—सत्पात्रम् उत्कृष्टं दानपात्रं, महती समधिका, श्रद्धा धर्मकार्य्येषु प्रत्ययः, अस्ति चेदिति शेषः, तदा विवेकज्ञैः सुविवेचकैः, यथोचिते देशे काश्यादौ, तथा काले पौर्णमास्यादौ, यत् दीयते, श्रद्धाऽतिशयेन सत्पात्रायेति शेषः, तत् दानम्, अनन्ताय अक्षयफलाय, कल्पते प्रभवति, [ "अनन्ताय" इत्यत्र "क्लृपि सम्पद्यमाने च" (वा०) इति चतुर्थी ] अक्षयफलं भवति इत्यर्थः ॥ ८० ॥

अतितृष्णेति ।—अतितृष्णा अतिलोभः, न कर्त्तव्या, तृष्णां शास्त्रसङ्गतलोभं, नैव परित्यजेत्, अतितृष्णया अभिभूतस्य अत्यन्तलोभाऽऽक्रष्टस्य, जनस्य इति शेषः, मस्तके, शिरोमध्ये, शिखा शिखावत्प्रतीयमानः चापस्याग्रभागः इत्यर्थः, भवति उत्तिष्ठते ॥ ८१ ॥

(स) पुलिन्दः,—म्लेच्छजातिविशेषः ।

(ह) पापर्द्धिं—पापर्द्धिं, जीवहत्यापापेन सम्पदं वा ।

(क) प्रसर्पता—विचरता ।

(ख) अञ्जनपर्वतशिखराऽऽकारः,—कज्जलाचलचूडासदृशमूर्त्तिः । क्रोडः,—शूकरः, ("क्रोडः शनौ शूकरे ना न पुमानङ्कवक्षसोः" इति मेदिनी) ।

(ग) कर्णान्तेति ।—कर्णान्तम्—आकर्णम्, आकृष्टः,—कृताकर्षणः, निशितः—तीक्ष्णः, सायकः,—शरो येन तथोक्तेन सता । समाहतः,—ताडितः ।

तेनापि कोपाऽऽविष्टेन चेतसा ( घ ) बालेन्दुद्युतिना दंष्ट्राग्रेण ( ङ ) पाटितोदरः पुलिन्दो गतासुः भूतलेऽपतत्। अथ लुब्धकं व्यापाद्य शूकरोऽपि शरप्रहारवेदनया पञ्चत्वं गतः।

एतस्मिन्नन्तरे कश्चित् आसन्नमृत्युः शृगालः निराहारतया पीडितः इतस्ततः परिभ्रमन् तं प्रदेशम् आजगाम ; अथ यावत् वराहपुलिन्दौ द्वौ अपि पश्यति, तावत् प्रहृष्टो व्यचिन्तयत्,—'भोः ! सः ( च ) अनुकूलो मे विधिः, तेन एतदपि अचिन्तितं भोजनमुपस्थितम् !! अथवा साधु इदमुच्यते,—

अकृतेऽप्युद्यमे पुंसामन्यजन्मकृतं फलम्।
शुभाशुभं समभ्येति विधिना सन्नियोजितम् ॥ ८२ ॥

तथा च,—यस्मिन् देशे च काले च वयसा यादृशेन च।
कृतं शुभाशुभं कर्म तत् तथा तेन भुज्यते ॥ ८३ ॥

तदहं तथा भक्षयामि, यथा बहूनि अहानि मे (छ) प्राणयात्रा भवति ; तत् तावदेनं (ज)स्नायुपाशं धनुष्कोटिगतं भक्षयामि। उक्तञ्च,—

( घ ) बालेन्दुद्युतिना—नवोदितचन्द्रकान्तिना, शुभ्रकुटिलेनेति भावः।

( ङ ) पाटितोदरः,—विदारितकुक्षिः। पुलिन्दः,—व्याधः। गतासुः,—विगतप्राणः।

( च ) अनुकूलः,—सदयः।

अकृते इति।—उद्यमे यत्ने, अकृतेऽपि, पुंसाम् अन्यजन्मकृतं जन्मान्तरोपार्जितकर्मणैव निष्पादितं, शुभाशुभं फलं सुखदुःखादिरूपं, विधिना दैवेन, सन्नियोजितं सम्यक् प्रेरितं सदित्यर्थः, समभ्येति समाश्रयति, पुरुषानिति शेषः ॥ ८२ ॥

यस्मिन्निति।—यस्मिन् देशे च, काले च, यादृशेन वयसा च, यत् शुभाशुभं कर्म कृतं, स्यादिति शेषः, येन पूर्वजन्मनीति पदद्वयमध्याहार्यम् ; तत् सर्वं, तथा तादृशमेव, तस्मिन् देशे, तत्र काले, तादृशे वयसि च, तत्कर्मानुरूपमित्यर्थः, तेन पुंसा, भुज्यते ॥ ८३ ॥

( छ ) प्राणयात्रा—जीविका।

( ज ) स्नायुपाशं—स्नायुनिर्मितां रज्जुम्। धनुष्कोटिगतं—धनुषोऽग्रभागलग्नम्।

शनैः शनैश्च भोक्तव्यं स्वयं वित्तमुपार्जितम् ।
रसायनमिव प्राज्ञैर्हेलया न कदाचन' ॥ ८४ ॥

इत्येवं मनसा निश्चित्य (झ)चापचटितकोटिं मुखमध्ये प्रक्षिप्य स्नायुं भक्षितुं प्रवृत्तः, ततश्च त्रुटिते पाशे तालुदेशं विदार्य्य चापकोटिर्मस्तकमध्येन निष्क्रान्ता। सोऽपि तद्वेदनया तत्क्षणात् मृतः। अतोऽहं ब्रवीमि,—'अतितृष्णा न कर्त्तव्या' इत्यादि'।

स पुनरपि आह,—'ब्राह्मणि! न श्रुतं भवत्या?—

आयुः कर्म च वित्तञ्च विद्या निधनमेव च।
पञ्चैतानि हि सृज्यन्ते गर्भस्थस्यैव देहिनः' ॥ ८५ ॥

अथ एवं सा तेन प्रबोधिता ब्राह्मणी आह,—'यदि एवं, तदस्ति मे गृहे (ञ)स्तोकतिलराशिः। ततः तिलान् (ट) लुञ्चित्वा

---

शनैरिति।—प्राज्ञैः बुद्धिमद्भिः, जनैरिति शेषः, स्वयम् आत्मना, [कर्त्तरि तृतीया] उपार्जितं वित्तं धनं, रसायनमिव जराव्याधिनाशकौषधमिव, शनैः शनैश्च अल्पमल्पमेव, क्रमेणेत्यर्थः, भोक्तव्यं, कदाचन हेलया अवज्ञया, [प्रकृत्यादित्वात् तृतीया] ममत्व-बोधाभावात् अनादरेणेति भावः, न, भोक्तव्यमित्यनुषङ्गः; रसायनं यथा लोकपरि-मितमेव सादरं भुञ्जीत, न तु यदृच्छया, स्वोपार्जितं वित्तमपि तथैवेति भावः ॥८४॥

(झ) चापेति।—चापस्य—धनुषः, चटितकोटिं—खण्डिताग्रभागं, ज्यारोपण-स्थानमित्यर्थः; यद्वा,—चापे चटिता—बद्धा, कोटिः,—अग्रभागः, प्रान्तदेश इत्यर्थः, यस्य तम्; धनुरग्रभागार्थकस्यापि कोटिशब्दस्य "कश्चिद्विशेषार्थशब्दस्यापि सामान्यार्थे प्रयोगः" इति न्यायात् स्नाय्वग्रभागार्थे प्रयोगः। त्रुटिते—छिन्ने। निष्क्रान्ता—बहिर्गता, मस्तकमध्यदेशे शिखावत् उद्गम्य अवस्थिता इति भावः।

आयुरिति।—आयुः जीवनकालः, कर्म कार्य्यं, वित्तं धनं, विद्या शास्त्रज्ञानं, तथा निधनं मृत्युः, एतानि ["नपुंसकमनपुंसकेन—" (१।२।६९ पा०) इति सूत्रेणैकशेषात् पक्षे बहुवचनं क्लीवत्वञ्च] पञ्च, गर्भस्थस्य उदरस्थितस्यैव, देहिनः सृज्यन्ते हि, विधात्रा इति शेषः ॥ ८५ ॥

(ञ) स्तोकतिलराशिः,—अल्पतिलराशिः।

(ट) लुञ्चित्वा—वल्कयित्वा, त्वचोऽपनीय इत्यर्थः। ["वञ्चिलुञ्च्यृतश्च" (१।२।२४ पा०) इति क्त्वापक्षे "लुञ्चित्वा" इत्यपि]।

तिलचूर्णेन ब्राह्मणं भोजयिष्यामि' इति। ततः तद्वचनं श्रुत्वा सूर्य्याऽऽतपे दत्तवती। अत्रान्तरे तस्या गृहकर्मव्यग्रायाः तिलानां मध्ये कश्चित् (ठ) सारमेयो मूत्रोत्सर्गं चकार। तं दृष्ट्वा सा चिन्तितवती,—'अहो! (ड) नैपुण्यं पश्य पराङ्मुखी-भूतस्य विधेः, यदेते तिला अभोज्याः कृताः; तदलम्, एतान् समादाय कस्यचित् गृहं गत्वा लुञ्चितैः अलुञ्चितान् आनयामि। सर्वोऽपि जनोऽनेन विधिना प्रदास्यति' इति।

अथ यस्मिन् गृहेऽहं भिक्षाऽर्थं प्रविष्टः, तत्र गृहे साऽपि तिलान् आदाय प्रविष्टा विक्रयं कर्त्तुम्; आह च,—'गृह्णातु कश्चित् अलुञ्चितैः लुञ्चितान् तिलान्'।

अथ तद्गृहगृहिणी गृहं प्रविष्टा यावत् अलुञ्चितैः लुञ्चितान् गृह्णाति, तावत् अस्याः पुत्रेण (ढ) कामन्दकशास्त्रं दृष्ट्वा (ण) व्याहृतम्,—'मातः! अग्राह्याः खलु इमे तिलाः, न अस्या अलुञ्चितैः लुञ्चिताः ग्राह्याः, कारणं किञ्चित् भविष्यति, तेन एषा अलुञ्चितैः लुञ्चितान् प्रयच्छति'। तत् श्रुत्वा तया परित्यक्तास्ते तिलाः। अतोऽहं ब्रवीमि,—'नाकस्माच्छाण्डिली मातः' इत्यादि'।

एतदुक्त्वा (त) स भूयोऽपि प्राह,—'अथ ज्ञायते तस्य क्रमण-मार्गः?' ताम्रचूड़ आह,—'भगवन्! ज्ञायते, यत एकाकी न समागच्छति, किन्तु असङ्ख्ययूथपरिवृतः (थ) पश्यतो मे परिभ्रमन् इतस्ततः सर्वजनेन सह आगच्छति याति च'।

(ठ) सारमेयः,—कुक्कुरः।

(ड) नैपुण्यं—कौशलम्, यस्मात् विफलयितुमिति शेषः। पराङ्मुखीभूतस्य—प्रतिकूलस्य इत्यर्थः। विधिः,—दैवस्य।

(ढ) कामन्दकशास्त्रं—नीतिशास्त्रविशेषम्।

(ण) व्याहृतम्—उक्तम्।

(त) सः,—बृहत्स्फिक्। तस्य—मूषिकस्य। क्रमणमार्गः,—विचरणस्य पन्थाः।

(थ) पश्यतो मे—पश्यन्तं माम् अनादृत्य, [अनादरे षष्ठी]।

अभ्यागतः आह,—'अस्ति किञ्चित् खनित्रकम् ?' स आह,—(द) 'बाढ़म्, अस्ति एषा सर्वलोहमयी खड़हस्तिका'। अभ्यागत आह,—'तर्हि प्रत्यूषे त्वया मया सह स्थातव्यं, येन द्वौ अपि (ध) जनचरणामलिनायां भूमौ (न) तत्पदानुसारेण गच्छावः'। (प) मया अपि तद्वचनमाकर्ण्य चिन्तितम्,—'अहो! विनष्टोऽस्मि, यतोऽस्य (फ) साभिप्रायवचांसि श्रूयन्ते। नूनं यथा (ब) निधानं ज्ञातं, तथा दुर्गमपि अस्माकं ज्ञास्यति, एतदभिप्रायादेव ज्ञायते। उक्तञ्च,—

सकृदपि दृष्ट्वा पुरुषं विबुधा जानन्ति सारतां तस्य।
हस्ततुलयाऽपि निपुणाः पलप्रमाणं विजानन्ति॥ ८६॥

वाञ्छैव सूचयति पूर्वतरं भविष्यं
पुंसां यदन्यतनुजं त्वशुभं शुभं वा।
विज्ञायते शिशुरजातकलापचिह्नः
प्रत्युद्गतैरपसरन् सरसः कलापी'॥ ८७॥

(द) बाढं—स्वीकारार्थकमव्ययम्। खड़हस्तिका—खनित्रम्।

(ध) जनचरणामलिनायां—लोकानां पदविन्यासेनादूषितायामिति भावः।

(न) तदिति।—तस्य—मूषिकस्य, पदानुसारेण—पदचिह्नानुसारेण।

(प) मया—हिरण्यकेन।

(फ) साभिप्रायवचांसि—अभिप्राययुक्तानि वचनानि, मदावस्थानस्थान-सूचकानीति भावः।

(ब) निधानं—निधिः; यद्वा,—निधीयते अस्मिन् इति निधानं वित्तपेटा, धन-रक्षणपात्रमित्यर्थः; "सिन्दुक" इति बङ्गभाषा। ज्ञातम्—अनुमितम्। दुर्गं—विलम्।

सकृदिति।—विशेषेण बुध्यन्ते इति विबुधाः विद्वांसः देवा वा, पुरुषं सकृदपि एकवारमपि, दृष्ट्वा तस्य पुरुषस्य, सारताम् उत्कर्षापकर्षौ इत्यर्थः, जानन्ति बुध्यन्ते; निपुणाः कुशलाः, नरा इति शेषः, हस्ततुलयाऽपि हस्तरूपतुलादण्डेनापि, पलप्रमाणं पलस्य परिमाणं, विजानन्ति; न हि ते तुलया तोलयन्ति इति भावः। आर्या वृत्तम्॥८६॥

वाञ्छेति।—पुंसां वाञ्छैव आकाङ्क्षैव, चित्तवृत्तिः एव इत्यर्थः, पूर्वतरम् अतीतं, भविष्यञ्च, अन्यतनुजं जन्मान्तरीयदेहभवं, यत् अशुभं शुभं वा, तत् सूचयति प्रकट-

ततोऽहं भयत्रस्तमनाः सपरिवारो दुर्गमार्गं परित्यज्य अन्यमार्गेण गन्तुं प्रवृत्तः सपरिजनो यावदग्रतो गच्छामि, तावत् सम्मुखो बृहत्कायो मार्जारः समायाति। स च मूषक-वृन्दम् अवलोक्य तन्मध्ये सहसा उत्पपात।

अथ ते मूषका मां (अ) कुमार्गगामिनम् अवलोक्य (म) गर्हयन्तः हतशेषाः (य) रुधिरप्लावितवसुन्धराः तमेव दुर्गं प्रविष्टाः। अथवा साधु इदमुच्यते,—

छित्त्वा पाशमपास्य कूटरचनां भङ्क्त्वा बलात् वागुरां
पर्यन्ताग्निशिखाकलापजटिलान्निर्गत्य दूरं वनात्।
व्याधानां शरगोचरादपि जवेनोत्पत्य धावन् मृगः
कूपान्तःपतितः करोतु विधुरे किं वा विधौ पौरुषम्? ॥८८॥

यति; तथा हि, अजातम् अनुत्पन्नं, कलापस्य बर्हस्य, चिह्नं यस्य तादृशः, अपसरन् अपगच्छन्, सरसः रसवान्, मनोहर इत्यर्थः, शिशुः कलापी बालमयूरः इत्यर्थः, प्रत्युद्गतैः रमणीयगतिविशेषैरेवेत्यर्थः, विज्ञायते, जनैरिति शेषः। मयूरचिह्नस्य कला-पस्यानुद्गमेऽपि पूर्वजन्माभ्यस्तगतिविशेषेणैव "अयं मयूरः, नेतरः खगः" इति जनानां चित्तवृत्तिः एव प्रमापयतीति भावः। वसन्ततिलकं वृत्तम् ॥ ८७ ॥

(अ) कुमार्गगामिनं—दुर्गमार्गं परित्यज्य विपथप्रवृत्तम्।

(म) गर्हयन्तः,—निन्दन्तः।

(य) रुधिरप्लावितवसुन्धराः,—रक्ताक्तभूमयः।

छित्त्वेति।—मृगः पाशं जालं, छित्त्वा, कूटरचनां मृगबन्धनार्थं यन्त्रविशेषस्य विस्तारमित्यर्थः, अपास्य अतिक्रम्य, बलात् बलमाश्रित्य, वागुरां बन्धनरज्जुं, भङ्क्त्वा खण्डयित्वा, पर्यन्तेषु प्रान्तेषु, अग्निशिखाकलापैः वह्निज्वालासमूहैः, जटिलात् गहनात्, दुःखापगमादित्यर्थः, वनात् दूरं निर्गत्य, तथा व्याधानां शरगोचरात् वेगेन निक्षिप्तशरस्य सम्भावितपतनस्थानादपि, जवेन वेगेन, उत्पत्य उत्प्लुत्य, धावन् वेगेन गच्छन्, कूपान्तःपतितः कूपमध्यनिमग्नः, भवतीति शेषः; तत्रापि विपद्यते इति भावः। तथा हि, विधौ दैवे, विधुरे प्रतिकूले सति, पौरुषं पुरुषकारः, किं वा करोतु? न किमपि कर्तुं शक्नोति; प्राणिनो हि सर्वाण्येव मनुष्यकृतानि भयकार-णानि उत्तरितुमर्हन्ति न दैवकृतानि इति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ ८८ ॥

अथ अहमेकोऽन्यत्र गतः, शेषा मूढतया तत्रैव दुर्गं प्रविष्टाः। अत्रान्तरे स दुष्टपरिव्राजको रुधिरविन्दुचर्चितां भूमिमवलोक्य तेनैव दुर्गमार्गेण आगत्य उपस्थितः। ततश्च खञ्जस्तिकया खनितुम् आरब्धः।

अथ तेन खनता प्राप्तं तन्निधानं, यस्य उपरि सदा एवाहं कृतवसतिः, यस्य (र) ऊष्मणा महादुर्गमपि गच्छामि। ततो हृष्टमनाः ताम्रचूड़मिदमूचे अभ्यागतः,—'भोः भगवन्! इदानीं स्वपिहि निःशङ्कः, अस्य ऊष्मणा मूषकस्ते जागरणं सम्पादयति' एवमुक्त्वा निधानम् आदाय मठाभिमुखं प्रस्थितौ द्वौ अपि। अहमपि यावत् निधानरहितं स्थानम् आगच्छामि, तावत् अरमणीयम् उद्वेगकारकं तत् स्थानं वीक्षितुमपि न शक्नोमि, अचिन्तयञ्च,—'किं करोमि? क्व गच्छामि? कथं मे स्यात् मनसः प्रशान्तिः?' एवं चिन्तयतो महाकष्टेन स दिवसो व्यतिक्रान्तः। अथ अस्तमितेऽर्के सोद्वेगो निरुत्साहस्तस्मिन् मठे सपरिवारः प्रविष्टः।

अथ (ल) अस्मत्परिग्रहशब्दम् आकर्ण्य ताम्रचूड़ोऽपि भूयो भिक्षापात्रं जर्जरवंशेन ताड़यितुं प्रवृत्तः। अथ असौ अभ्यागतः प्राह,—'सखे! किम् अद्यापि निःशङ्को न निद्रां गच्छसि?' स आह,—'भगवन्! भूयोऽपि समायातः सपरिवारः स दुष्टात्मा मूषकः, तद्भयात् जर्जरवंशेन भिक्षापात्रं ताड़यामि'। ततो विहस्य अभ्यागतः प्राह,—'सखे! मा भैषीः, वित्तेन सह

---

(र) ऊष्मणा—उत्तापेन, प्रभावेणेति भावः। महेति।—अतिदुर्गमस्थानमपि।

(ल) अस्मदिति।—अस्मत्परिग्रहाणां—मम परिजनानां, शब्दं—आस्फालनध्वनिम्।

गतोऽस्य (व) कूर्दनोत्साहः। सर्वेषामपि जन्तूनाम् इयमेव (श) स्थितिः। उक्तञ्च,—

यदुत्साही सदा मर्त्यः पराभवति यज्जनान्।
यदुद्धतं वदेत् वाक्यं तत् सर्वं वित्तजं बलम्' ॥ ८९ ॥

अथ अहं तत् श्रुत्वा कोपाऽऽविष्टो भिक्षापात्रमुद्दिश्य विशेषादुत्कूर्दितोऽप्राप्त एव भूमौ निपतितः। तत् दृष्ट्वा असौ मे शत्रुर्विहस्य ताम्रचूड़म् उवाच,—'भोः! पश्य पश्य (ष) कौतूहलम्। आह च,—

अर्थेन बलवान् सर्वो योऽर्थयुक्तः स पण्डितः।
पश्यैनं मूषकं व्यर्थं स्वजातेः समतां गतम् ॥ ९० ॥

तत् स्वपिहि त्वं गतशङ्कः। यदस्य उत्पतनकारणं, तत् आवयोर्हस्तगतं जातम्। अथवा साधु इदमुच्यते,—

दंष्ट्राविरहितः सर्पो मदहीनो यथा गजः।
तथाऽर्थेन विहीनोऽत्र पुरुषो नामधारकः' ॥ ९१ ॥

---

(व) कूर्दनोत्साहः,—उत्प्लवनसामर्थ्यमित्यर्थः।

(श) स्थितिः,—मर्य्यादा, नियमः इत्यर्थः।

यदिति।—मर्त्यः मानवः, सदा यत् उत्साही अध्यवसायी, भवतीति शेषः, यत् जनान् पराभवति पराजयते, यच्च उद्धतं परुषं, वाक्यं वदेत्, तत् सर्वं वित्तजं धनजातं, बलम्; धनोष्मणा एव एतादृशा भवन्ति लोका इति भावः ॥ ८९ ॥

(ष) कौतूहलं—कौतुकम्।

अर्थेनेति।—सर्वो जनः, अर्थेन धनेन, बलवान्, भवतीति शेषः, यः अर्थयुक्तः धनवान्, सः जनः, पण्डितः विद्वान्, भवतीति शेषः; एनं व्यर्थं विगतार्थम्, अपहृतार्थमित्यर्थः, मूषकं स्वजातेः आत्मजातेः, इतरमूषकस्येत्यर्थः, समतां तुल्यतां, गतं प्राप्तं, दूरोत्प्लवनशक्तिहीनमिति यावत्, धनबलाभावादिति भावः, पश्य ॥ ९० ॥

दंष्ट्रेति।—दंष्ट्राविरहितः अपदन्तः, सर्पो यथा, मदहीनो गजो यथा, तथा अत्र संसारे, अर्थेन विहीनः दरिद्रः, पुरुषः नामधारकः, भवतीति शेषः, केवलं पुरुष इति नाममात्रं धरति, न तु किञ्चिदपि पौरुषं दर्शयितुं समर्थ इति भावः ॥ ९१ ॥

तत् श्रुत्वा अहं मनसा विचिन्तितवान्,—'यतोऽङ्गुलि-मात्रमपि कूर्दनशक्तिर्नास्ति, तत् धिक् अर्थहीनस्य पुरुषस्य जीवितम् !!

उक्तञ्च,—अर्थेन तु विहीनस्य पुरुषस्याल्पमेधसः।
उच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥ ८२ ॥
यथा काकयवाः प्रोक्ता यथाऽरण्यभवास्तिलाः।
नाममात्रा न सिद्धौ हि धनहीनास्तथा नराः ॥ ८३ ॥
सन्तोऽपि न हि राजन्ते दरिद्रस्येतरे गुणाः।
आदित्य इव भूतानां श्रीर्गुणानां प्रकाशिनी ॥ ८४ ॥
न तथा बाध्यते लोके प्रकृत्या निर्धनो जनः।
यथा द्रव्याणि सम्प्राप्य तैर्विहीनः सुखे स्थितः ॥ ८५ ॥

---

अर्थेनेति।—अर्थेन विहीनस्य अत एव अल्पमेधसः [ अल्पा मेधा यस्येति बहुव्रीहिसमासे—अल्पोत्तरवर्त्तमेधाया असिच् समासान्तः,—"नित्यमसिच् प्रजामेधयोः" (५।४।१०२ पा०) इत्यत्र "अन्यत्रापि भवति" इति काशिकोक्तेः अल्पशब्दस्य ग्रहणम् ] मन्दबुद्धेरित्यर्थः, अर्थबलेनैव मतेः स्फुरणादिति भावः, पुरुषस्य नरस्य, सर्वास्तु सकलाः एव, क्रियाः कर्माणि, ग्रीष्मे निदाघे, कुसरितः यथा क्षुद्रसरितः इव, उच्छिद्यन्ते स्वयमेव नश्यन्ति, [ कर्मकर्त्तरि लट् ] ; न फलदा भवन्ति इति भावः ॥ ८२ ॥

यथेति।—यथा काकयवाः अङ्कुराः, शस्यविहीनधान्यानीत्यर्थः, यथा अरण्यभवाः वन्याः, तिलाः शस्यविशेषाः, नाममात्राः यवतिलनामधारिण एव, प्रोक्ताः, न हि सिद्धौ, न कदापि कार्य्ये व्यवह्रियन्ते इति भावः, तथा धनहीनाः नराः न किमपि कार्य्यं साधयितुमर्हन्तीति भावः ॥ ८३ ॥

सन्त इति।—दरिद्रस्य निर्धनस्य, सन्तोऽपि विद्यमाना अपि, इतरे गुणाः दया-दाक्षिण्यादयः, न हि राजन्ते नैव शोभन्ते, नैव प्रकटीभवन्तीत्यर्थः, यतः भूतानां क्षित्यादीनां पदार्थानाम्, आदित्यः सूर्य्यः इव, श्रीः लक्ष्मीः, गुणानां प्रकाशिनी ; सूर्य्यो यथा स्वकिरणजालेन पदार्थान् प्रकाशयति, तथा सम्पदपि स्वप्रभावेण सर्वान् गुणान् इति भावः। अत्र उपमानभूतसूर्य्यपदस्य उपमेयभूतश्रीपदेन सह भिन्नलिङ्गनिर्देशस्तु न दोषावहः "न लिङ्गवचने भिन्ने न हीनाधिकताऽपि वा" इत्याद्युक्तेः ॥ ८४ ॥

नेति।—लोके जगति, प्रकृत्या स्वभावेन, आजन्म इत्यर्थः, निर्धनः जनः, तथा न

शुष्कस्य कीटखातस्य वह्निदग्धस्य सर्वतः ।
तरोरप्यूषरस्थस्य वरं जन्म न चार्थिनः ॥ ९६ ॥
शङ्कनीया हि सर्वत्र निष्प्रतापा दरिद्रता ।
उपकर्तुमपि प्राप्तं निःस्वं सन्त्यज्य गच्छति ॥ ९७ ॥
उन्नम्योन्नम्य तत्रैव निर्धनानां मनोरथाः ।
हृदयेष्वेव लीयन्ते विधवास्त्रीस्तनाविव ॥ ९८ ॥
व्यक्तोऽपि वासरे नित्यं दौर्गत्यतमसाऽऽवृतः ।
अग्रतोऽपि स्थितो यत्नान्न केनापीह दृश्यते ॥ ९९ ॥

बाध्यते न क्लिश्यते, यथा द्रव्याणि धनानि, सम्प्राप्य सुखे स्थितः सुखी, पश्चात् तैः द्रव्यैः, विहीनः परित्यक्तः, बाध्यते इत्यनुषङ्गः ; आकस्मिकदारिद्र्यम् अतीव दुःखजनकमिति निष्कर्षः ; "सुखात्तु यो याति नरो दरिद्रतां धृतः शरीरेण मृतः स जीवति" इति भावः ॥९५॥

शुष्कस्येति ।—शुष्कस्य नीरसस्य, कीटखातस्य कीटैः भक्षितसारस्येति भावः, सर्वतः समन्तात्, वह्निना दग्धस्य, ऊषरस्थस्य क्षारभूमिस्थितस्य, तरोरपि जन्म वरं मनाक् प्रियम्, अर्थिनः भिक्षोश्च, न, जन्म वरमित्यनुषङ्गः ; एवंविधविशेषणविशिष्टतरुरपि कदाचित् जनानां किमपि कार्यं साधयति, न च तान् कथञ्चिदुद्वेजयति, दरिद्रस्तु नान्येषामुपकारकः, प्रत्युत उद्वेजक एव ; अतः याचकात् जीवस्य तरुपस्य सन्ततस्य हीनवंशसमुत्पन्नस्यापि अयाचकस्य श्रेष्ठत्वमिति भावः ॥ ९६ ॥

शङ्कनीयेति ।—निष्प्रतापा प्रभावशून्या, दरिद्रता निर्धनता, सर्वत्र सर्वस्मिन् विषये, शङ्कनीया शङ्कास्थानमित्यर्थः, हि यतः, उपकर्तुं प्राप्तमपि उपस्थितमपि, निःस्वं निर्धनं जनं, सन्त्यज्य विहाय, प्रत्याख्यायेत्यर्थः, गच्छति, जनः इति शेषः ; दारिद्र्यात् धनापहरणादिशङ्कया न कोऽपि निःस्वेन कृतमुपकारं बहु मन्यते इति भावः ॥ ९७ ॥

उन्नम्येति ।—निर्धनानां दरिद्राणां, मनोरथाः अभिलाषाः, विधवायाः स्त्रियाः स्तनाविव, हृदयेषु एव उन्नम्य उन्नम्य उत्थाय उत्थाय, तत्रैव हृदयेष्वेव, लीयन्ते लयं गच्छन्ति ; फलसिद्ध्यभावात् वृथैव तेषामभिलाष इति भावः ॥ ९८ ॥

व्यक्त इति ।—इह संसारे, व्यक्तो सुप्रकाशितोऽपि, सूर्यालोकप्रकाशितेऽपीत्यर्थः, वासरे दिवसे, नित्यं सततं, दौर्गत्यं दारिद्र्यमेव, तमः तिमिरं तेन, आवृतः आच्छादितः, जन इति शेषः, अग्रतः सम्मुखे, स्थितोऽपि, केनापि जनेन, यत्नात् न दृश्यते ; अभानुभेद्यमिदं तमः दारिद्र्यप्रभवमिति भावः ॥ ९९ ॥

एवं विलप्य सर्वं भग्नाशः तन्निधानं (ग) गण्डोपधानीकृतं दृष्ट्वा स्वं दुर्गं प्रभाते गतः। ततश्च मद्भृत्याः प्रभाते गच्छन्तः (घ) मिथो जल्पन्ति,—'अहो! असमर्थोऽयमुदरपूरणे अस्माकम्; केवलमस्य (ङ) पृष्ठलग्नानां बिडालादिविपत्तयः; तत् किमनेन आराधितेन? उक्तञ्च,—

यत्सकाशान्न लाभः स्यात् केवलाः स्युर्विपत्तयः।
स स्वामी दूरतस्त्याज्यो विशेषादनुजीविभिः' ॥ १०० ॥

एवं तेषां वचांसि श्रुत्वा स्वदुर्गं प्रविष्टोऽहम्। यावच्च कश्चित् मम सम्मुखे नाभ्येति, तावत् मया चिन्तितं,—'धिक् इमां दरिद्रताम्!! । अथवा साधु इदमुच्यते,—

मृतो दरिद्रः पुरुषो मृतं मैथुनमप्रजम्।
मृतमश्रोत्रियं श्राद्धं मृतो यज्ञस्त्वदक्षिणः' ॥ १०१ ॥

एवं मे चिन्तयतः ते भृत्या मम शत्रूणां सेवका जाताः। ते च माम् एकाकिनं दृष्ट्वा (च) विडम्बना कुर्वन्ति।

---

(ग) गण्डेति।—गण्डस्य—कपोलस्य, उपधानीकृतम्—उपबर्हीकृतं, शिरस उपधानवत् गण्डस्य उपधानीकृतं, गण्डनिम्ने स्थापयित्वा शायितमित्यर्थः, परिव्राजकेन इति शेषः।

(घ) मिथः,—परस्परं, जल्पन्ति—आलपन्ति।

(ङ) पृष्ठलग्नानां—पृष्ठानुयायिनाम्, अस्माकम् इत्यर्थः।

यदिति।—यत्सकाशात् यस्य आश्रयं स्थित्वेत्यर्थः, लाभः प्रयोजनसिद्धिरूप इत्यर्थः, न स्यात्, (प्रत्युत) केवलाः विपत्तयः विपदः, स्युः, सः स्वामी अनुजीविभिः अनुचरैः, विशेषात् विशेषेण, दूरतः त्याज्यः; न हि विपत्तिमात्रजनके केषामप्यनुराग इति भावः ॥१००॥

मृत इति।—दरिद्रः पुरुषः मृतः मृतवत् शक्तिहीन इत्यर्थः, अप्रजं [समास-विधेरनित्यत्वात् "नित्यमसिच्—" (५।४।१२२ पा०) इति सूत्रेण प्रजाशब्दात् नासिच्प्रत्ययः] अपुत्रं, पुत्रोत्पादनशक्तिविरहितमित्यर्थः, मैथुनं स्त्रीसङ्गमः, मृतं निष्फलमित्यर्थः, अश्रोत्रियं वेदपारगब्राह्मणवर्जितं, श्राद्धं पितृदानं, मृतं नष्टं, विफलमित्यर्थः, अदक्षिणः दक्षिणाशून्यः, यज्ञः मृतः हतः, फलप्राप्तिविरहित इत्यर्थः; सर्वमेतत् व्यर्थमिति भावः ॥ १०१ ॥

(च) विडम्बनां कुर्वन्ति—उपहसन्ति, तिरस्कुर्वन्ति वा, पीडयन्तीत्यर्थः।

अथ मया एकाकिना (ग) योगनिद्रां गतेन भूयो विचिन्तितं यत्,—'तस्य कुतपस्विनः (घ) समाश्रयं गत्वा (ङ) तद्गण्डोपधानवर्त्तिकृतां वित्तपेटां शनैः शनैः विदार्य्य तस्य निद्रावशङ्गतस्य स्वदुर्गे तद्वित्तम् आनयामि, येन भूयोऽपि मे वित्तप्रभावेण आधिपत्यं पूर्ववत् भविष्यति। उक्तञ्च,—

व्यथयन्ति परं चेतो मनोरथशतैर्जनाः।
नानुष्ठानैर्धनैर्हीनाः कुलजा विधवा इव ॥ १०२ ॥
दौर्गत्यं देहिनां दुःखमपमानकरं परम्।
येन स्वैरपि मन्यन्ते जीवन्तोऽपि मृता इव ॥ १०३ ॥
दैन्यस्य पात्रतामेति पराभूतेः परं पदम्।
विपदामाश्रयः शश्वद्दौर्गत्यकलुषीकृतः ॥ १०४ ॥

---

(ग) योगनिद्रां—युक्तिस्थिरीकरणार्थं नेत्रनिमीलनरूपव्यापारमित्यर्थः।

(घ) समाश्रयम्—आश्रमम्।

(ङ) तदिति।—तस्य—तपस्विनः, गण्डस्य उपधानं—"गालबालिश" इति यस्य भाषा, तद्वर्त्तिकृतां—तत्स्थानीकृताम्। वित्तपेटाम्—अर्थपेटिकाम्।

व्यथयन्तीति।—धनैः हीनाः दरिद्रा जनाः, कुलजाः सद्वंशोत्पन्नाः विधवा इव, मनोरथशतैः विविधाभिलाषैः, चेतः चित्तं, परं केवलं, व्यथयन्ति क्लेशयन्ति, किन्तु अनुष्ठानैः तत्तन्मनोरथसम्पादनयोग्यकर्मकरणैः, न, मोदयन्तीति शेषः; उपायाभावादिति भावः; दरिद्राणाम् अभिलाषपरम्पराः केवलं मनसि स्फुरन्ति, नैव ते किञ्चिदपि साफल्यं प्राप्नुवन्तीति निष्कर्षः ॥ १०२ ॥

दौर्गत्यमिति।—दौर्गत्यं दारिद्र्यं, देहिनां प्राणिनां, परम् अत्यन्तं, दुःखं दुःखकरम्, अपमानकरञ्च अवज्ञाजनकञ्च; येन दौर्गत्येन हेतुना, स्वैरपि स्वजनैरपि, जीवन्तोऽपि प्राणान् धारयन्तोऽपि, दरिद्राः स्वजना इति शेषः, मृता इव कर्मानर्हाः इत्यर्थः, मन्यन्ते बुध्यन्ते; मृतवत् मत्वा अवज्ञया नापि तान् स्पृशन्तीति भावः ॥ १०३ ॥

दैन्यस्येति।—दौर्गत्यं दारिद्र्यं, तेन कलुषीकृतः मलिनीकृतः, पुरुषः इति शेषः, शश्वत् निरन्तरं, दैन्यस्य दीनतायाः, पात्रताम् एति प्राप्नोति, पराभूतेः पराभवस्य, परं पदं प्रधानं स्थानं, तथा विपदाम् आश्रयः, भवतीति शेषः ॥ १०४ ॥

लज्जन्ते बान्धवास्तेन सम्बन्धं गोपयन्ति च ।
मित्राण्यमित्रतां यान्ति यस्य न स्युः कपर्दकाः ॥ १०५ ॥
मूर्त्तं लाघवमेवैतदपायानामिदं गृहम् ।
पर्य्यायो मरणस्यायं निर्धनत्वं शरीरिणाम् ॥ १०६ ॥
अजाधूलिरिव त्रस्तैर्मार्जनीरेणुवज्जनैः ।
दीपखद्योतच्छायेव त्यज्यते निर्धनो जनः ॥ १०७ ॥
शौचावशिष्टयाऽप्यस्ति किञ्चित् कार्य्यं क्वचित् मृदा ।
निर्धनेन जनेनैव न तु किञ्चित् प्रयोजनम् ॥ १०८ ॥

---

लज्जन्त इति ।—यस्य जनस्य, कपर्दकाः वराटकाः, [ अपिरत्र अध्याहार्य्यः ] न स्युः, यः अकिञ्चन इति भावः, बान्धवाः, तस्येति शेषः, तेन दरिद्रस्वजनेन, लज्जन्ते, अत एव सम्बन्धं सम्पर्कं, तेन सह इति शेषः, गोपयन्ति च [गोपनार्थस्य भौवादिकस्य आत्मनेपदिनः गुप्धातोः णिचि परस्मैपदत्वात् सिद्धं] गूहन्ति, अपमानभयान्न प्रकाशयन्ति इति भावः, मित्राणि च अमित्रतां शत्रुतां, यान्ति प्राप्नुवन्ति ; सर्वे विरक्ता भवन्ति इति निष्कर्षः ॥ १०५ ॥

मूर्त्तमिति ।—एतत् निर्धनत्वं दारिद्र्यं, शरीरिणां प्राणिनां, मूर्त्तं मूर्त्तिमत्, लाघवं लघुता, अपमानस्वरूपमित्यर्थः ; इदं निर्धनत्वम्, अपायानां विपदां, गृहम्, अयं निर्धनभावः, मरणस्य पर्य्यायः नामान्तरं, मरणमेव इत्यर्थः । [ "मरणस्यायम" इत्यत्र "मरणस्येदम्" इति पाठः साधुः, निर्धनत्वमिति नपुंसकविशेष्यस्य पुंलिङ्गविशेषणा-सङ्गत्या ]॥ १०६ ॥

अजेति ।—त्रस्तैः त्रासं गतैः, किञ्चित्प्रार्थयन्ते चेत् दरिद्रा इति शङ्कयेति भावः, जनैः धनिभिरित्यर्थः, अजाधूलिरिव छागपदोत्थरज इव, तथा मार्जनीरेणुवत् सम्मार्जनी-ताडनोत्थधूलिवत्, तथा दीपखद्योतच्छायेव दीपस्य छाया अन्धकारं, तद्वत्, तथा खद्योतस्य ज्योतिरिङ्गणाख्यकीटविशेषस्य च, छायेव कान्तिरिव, [ "अविकृतविधेर-नित्यत्वात्" अत्र छकारस्य द्वित्वाभावः ] निर्धनो जनः त्यज्यते ; अशुभत्वादमङ्गल-करत्वाच्च यथा अजाधूलिप्रभृतिकं जनैस्त्यज्यते, तथा दरिद्रोऽपीति भावः । मालोपमा-ऽलङ्कारः ॥ १०७ ॥

शौचेति ।—शौचावशिष्टया शौचकार्य्यादुद्धृतया, अपवित्रया इत्यर्थः, मृदा मृत्तिकया अपि, क्वचित् किञ्चित् कार्य्यम् अस्ति भवति, निर्धनेन जनेन तु किञ्चिदेव किमपि, प्रयोजनं न, अस्तीति शेषः ; तथा च तादृशमृदोऽपि अपवित्रत्वम् अकिञ्चि-त्करत्वञ्च दरिद्राणामिति भावः ॥ १०८ ॥

अधनो दातुकामोऽपि सम्प्राप्तो धनिनां गृहम् ।
मन्यते याचकोऽयं धिक् दारिद्र्यं खलु देहिनाम् ॥१०९॥

अतः (च) वित्तापहारं विदधतो यदि मे मृत्युः स्यात् तदपि शोभनम् । उक्तञ्च,—

स्ववित्तहरणं दृष्ट्वा यो हि रक्षत्यसून् नरः ।
पितरोऽपि न गृह्णन्ति तद्दत्तं सलिलाञ्जलिम् ॥ ११० ॥

तथा च,—गवार्थे ब्राह्मणार्थे च स्त्री-वित्तहरणे तथा ।
प्राणांस्त्यजति यो युद्धे तस्य लोकाः सनातनाः' ॥१११॥

एवं निश्चित्य रात्रौ तत्र गत्वा निद्रावशम् उपागतस्य पेटायां मया छिद्रं कृतं यावत्, तावत् प्रबुद्धो दुष्टतापसः ; ततश्च जर्जर-वंशप्रहारेण शिरसि ताडितः कथञ्चित् ( छ ) आयुःशेषतया निर्गतोऽहं मृत इव । उक्तञ्च,—

---

अधन इति ।—अधनः दरिद्रः, जनः इति शेषः, दातुकामोऽपि ["तुङ्कामनसोरपि" इति कारिकया तुमः मकारलोपः] दानार्थी सन्नपि, न तु भिक्षार्थीति भावः, धनिनां गृहं सम्प्राप्तः, चेदिति शेषः, अयं याचक इति मन्यते, लोकैरिति शेषः, तस्मात् देहिनां दारिद्र्यं [ धिक्शब्दयोगे द्वितीया ] खलु निश्चितं, धिक् निन्दामि इत्यर्थः, ("धिक् निर्भर्त्सननिन्दयोः" इत्यमरः) ॥ १०९ ॥

( च ) वित्तापहारं—चौर्य्यम । विदधतः,—कुर्वतः ।

स्ववित्तेति ।—यो नरः स्ववित्तहरणं स्वस्य धनहरणं, दृष्ट्वा, असून् प्राणान्, रक्षति पालयति, जीवतीत्यर्थः, हि निश्चये, पितरोऽपि तद्दत्तं तेन दत्तं, सलिलाञ्जलिम् [ अञ्जलिमितं सलिलम् इति राजदन्तादिवत् पूर्वनिपातसमासः । "द्वौ युतावञ्जलिः पुमान्" इत्यमरः ] तर्पणजलं, न गृह्णन्ति ; स्वधनहरणात् प्राक् मरणमपि श्रेयः इति भावः ॥ ११० ॥

गवार्थे इति ।—यः गवार्थे ब्राह्मणार्थे तथा स्त्री-वित्तयोर्हरणे च गो-ब्राह्मण-स्त्री-धनरक्षार्थमित्यर्थः, युद्धे प्राणान् त्यजति, तस्य सनातनाः अक्षयाः, लोकाः स्वर्गा इत्यर्थः, भवन्तीति शेषः ; स स्वर्गं यातीत्यर्थः ; अतो धनरक्षार्थं मे प्राणत्यागोऽपि वरमिति भावः ॥ १११ ॥

( छ ) आयुःशेषतया—जीवितकालस्य अवशिष्टतया ।

'प्राप्तव्यमर्थं लभते मनुष्यो देवोऽपि तं लङ्घयितुं न शक्तः ।
तस्मान्न शोचामि न विस्मयो मे यदस्मदीयं न हि तत् परेषाम्'॥ ११२॥

काककूर्मौ पृच्छतः,—"कथमेतत् ?" हिरण्यक आह,—

## कथा ४ ।

"अस्ति कस्मिंश्चित् नगरे सागरदत्तो नाम वणिक्, (ञ) तत्सूनुना रूपकशतेन विक्रीयमाणः पुस्तको गृहीतः ; तस्मिंश्च लिखितमस्ति,—

'प्राप्तव्यमर्थं लभते मनुष्यो देवोऽपि तं लङ्घयितुं न शक्तः ।
तस्मान्न शोचामि न विस्मयो मे यदस्मदीयं न हि तत् परेषाम्'॥ ११३॥

तत् दृष्ट्वा सागरदत्तेन (झ) तनुजः पृष्टः,—'पुत्त्र ! कियता मूल्येन एष पुस्तको गृहीतः ?' सोऽब्रवीत्,—'रूपकशतेन' । तत् श्रुत्वा सागरदत्तोऽब्रवीत्—'धिक् मूर्ख ! त्वं लिखितैक-श्लोकं रूपकशतेन यत् गृह्णासि, एतया बुद्ध्या कथं द्रव्यो-पार्जनं करिष्यसि ? तत् अद्य प्रभृति त्वया मे गृहे न प्रवेष्ट-व्यम्' । एवं (ञ) निर्भर्त्स्य गृहात् (ट) निःसारितः । स च तेन

प्राप्तव्यमिति ।—मनुष्यः प्राप्तव्यम् अवश्यप्राप्यम्, अर्थं वस्तु, लभते, देवोऽपि तं प्राप्तव्यमर्थं, लङ्घयितुम् अन्यथा कर्त्तुं, न शक्तः ; तस्मात् न शोचामि, अहमिति शेषः, अर्थार्थमिति भावः ; मे मम, विस्मयः "कथं मम अर्थो नष्टः ? कथं वा न प्राप्तः ?" इत्यादिविषयक इति भावः, न, भवतीति शेषः ; हि यतः, यत् वस्तु, अस्मदीयं, तत् परेषाम् अन्येषां, न, भवितुमर्हतीति शेषः, यत् मम वस्तु, तत् चिरं ममैव आस्ते, न केनापि नेतुं शक्यते ; अतस्तदनुशोचनं तन्न विस्मयश्च व्यर्थमिति भावः । उपजातिः वृत्तम् ॥ ११२ ॥

(ञ) तत्सूनुना—वणिक्पुत्त्रेण । रूपकशतेन—शतसङ्ख्यकरौप्यमुद्रया इत्यर्थः ।
प्राप्तव्यमिति ।—व्याख्यातं प्राक् ॥ ११३ ॥

(झ) तनुजः,—पुत्त्रः ।

(ञ) निर्भर्त्स्य—तिरस्कृत्य ।

(ट) निःसारितः,—बहिष्कृतः ।

( ठ ) निर्वेदेन विप्रकृष्टं देशान्तरं गत्वा किमपि नगरमासाद्य अवस्थितः।

अथ कतिपयदिवसैः तन्नगरनिवासिना केनचित् असौ पृष्टः,—'कुतो भवान् आगतः? किंनामधेयो वा?' इति। असौ अब्रवीत्,—'प्राप्तव्यमर्थं लभते मनुष्यः'।

अथ अन्येनापि पृष्टेन अनेन तथा एव उत्तरं दत्तम्। एवं च नगरस्य मध्ये 'प्राप्तव्यमर्थः' इति तस्य प्रसिद्धं नाम जातम्।

अथ राजकन्या चन्द्रवती नाम अभिनवरूपयौवनसम्पन्ना सखीद्वितीया एकस्मिन् महोत्सवदिवसे नगरं निरीक्षमाणा अस्ति। तत्र एव च कश्चित् राजपुत्रोऽतीव रूपसम्पन्नो मनोरमश्च कथमपि तस्या दृष्टिगोचरं गतः। तद्दर्शनसमकालमेव कुसुमबाणाऽऽहतया तया निजसखी अभिहिता,—'सखि! यथा किल अनेन सह समागमो भवति, तथा अद्य त्वया यतितव्यम्' एवञ्च श्रुत्वा सा सखी तत्सकाशं गत्वा शीघ्रमब्रवीत् यत्,—'अहं चन्द्रवत्या तवान्तिकं प्रेषिता, भणितश्च त्वां प्रति तया,—'यन्मम त्वद्दर्शनात् ( ड ) मनोभवेन पश्चिमावस्था कृता, तत् यदि शीघ्रमेव मदन्तिके न समेष्यसि, तदा मे मरणं ( ढ ) शरणम्'। इति श्रुत्वा तेन अभिहितं,—'यदि अवश्यं मया तत्र गन्तव्यं, तत् कथय, केन उपायेन प्रवेष्टव्यम्?' अथ सख्या अभिहितं,—'रात्रौ ( ण ) सौधावलम्बितया दृढवरत्रया त्वया

( ठ ) निर्वेदेन—स्वावमाननेन, वैराग्येण वा। विप्रकृष्टं—दूरस्थम।

( ड ) मनोभवेन—कामेन। पश्चिमावस्था—अन्त्यावस्था, मृत्युदशा इत्यर्थः।

( ढ ) शरणं—रक्षकम्, आश्रय इत्यर्थः, ("शरणं गृहरक्षित्रोः" इत्यमरः)।

( ण ) सौधावलम्बितया—सौधात्—अट्टात्, अवलम्बितया—लम्बमानया। दृढवरत्रया—दृढया—कठिनया, दुश्छेद्यया इति भावः, वरत्रया—वध्र्या, चर्मरज्जुविशेषेण इत्यर्थः, ("नद्ध्री वध्री वरत्रा स्यात्" इत्यमरः)।

(त) तत्राऽऽरोढ़व्यम्'। सोऽब्रवीत्,—'यदि एवं निश्चयो भवत्याः, तदहमेवं करिष्यामि'। इति निश्चित्य सखी चन्द्रवतीसकाशं गता।

अथ आगतायां रजन्यां स राजपुत्रः स्वचेतसा व्यचिन्तयत्,—'अहो! महत् (थ) अकृत्यमेतत्। उक्तञ्च,—

गुरोः सुतां मित्रभार्य्यां स्वामि-सेवकगेहिनीम्।
यो गच्छति पुमाल्लोँके तमाहुर्ब्रह्मघातिनम्॥ ११४॥

अपरञ्च,—अयशः प्राप्यते येन येन चापगतिर्भवेत्।
स्वर्गाच्च भ्रश्यते येन तत् कर्म न समाचरेत्'॥ ११५॥

इति सम्यक् विचार्य्य तत्सकाशं न जगाम।

अथ (द) प्राप्तव्यमर्थः पर्य्यटन् (ध) धवलगृहपार्श्वे रात्रौ अवलम्बितवरत्रां दृष्ट्वा कौतुकाविष्टहृदयः ताम् आलम्ब्य

(त) तत्र—कुमारीसौधे इत्यर्थः, आरोढ़व्यम्—आरोहणं कर्त्तव्यं, गन्तव्यमित्यर्थः।

(थ) अकृत्यम्—अकार्य्यम्।

गुरोरिति।—यः पुमान् गुरोः सुतां कन्यां, मित्रभार्य्यां, स्वामि सेवकगेहिनीं प्रभुभार्य्यां भृत्यभार्य्याञ्च, (उपलक्षणञ्चैतत्, विधिवदूढेतराभिप्रायकं सुताभार्य्यादिपदोपादानं वेदितव्यम्) गच्छति, लोके जगति, तं जनं, ब्रह्मघातिनं ब्रह्महत्यापापिसममहापापिनमित्यर्थः, आहुः कथयन्ति, बुधा इति शेषः; एतासु गमनं महापापकरम्, अतो नानुष्ठेयमिति भावः॥ ११४॥

अयश इति।—येन कर्मणा, अयशः अकीर्त्तिः, प्राप्यते लभ्यते, येन च कर्मणा, अपगतिः दुर्गतिः, नरकमित्यर्थः, भवेत, येन च कर्मणा, स्वर्गात् भ्रश्यते, [दैवादिकस्य भ्रशधातोः भावविहितस्यैव रूपमेतत; पुरुषेणेति कर्त्तृपदमत्रोह्यं वेदितव्यम्] पुरुषः च्यवते इत्यर्थः, तत कर्म न समाचरेत् न कुर्य्यात्॥ ११५॥

(द) प्राप्तव्यमर्थः,—सागरदत्तसुत इति भावः, [प्राप्तव्यमर्थं पौनःपुन्येनाभिदधाति यः इत्यर्थे अर्थशब्दात् णिचि पश्चात् पचाद्यचि रूपमेतत्, अन्यथा कर्त्तुरनुपस्थितेः]।

(ध) धवलगृहपार्श्वे—सौधपार्श्वे।

अधिरूढ़ः। तया च राजपुत्र्या 'स एव अयम्' इति आश्वस्तचित्तया ( न ) स्नानखादनपानाऽऽच्छादनादिना सम्मान्य तेन सह शयनतलमाश्रितया तदङ्गसंस्पर्शसञ्जातहर्षरोमाञ्चितगात्रया उक्तं,—'युष्मद्दर्शनमात्रानुरक्तया मया आत्मा प्रदत्तोऽयम् ; (प) त्वद्वर्जम् अन्यो भर्त्ता मनसि अपि मे न भविष्यति, तत् कस्मात् मया सह न (फ) ब्रवीषि ?' इति। सोऽब्रवीत्,—'प्राप्तव्यमर्थं लभते मनुष्यः'। इत्युक्ते तयाऽन्योऽयमिति मत्वा धवलगृहात् ( ब ) उत्तार्य्य मुक्तः। स तु ( भ ) खण्डदेवकुले गत्वा सुप्तः।

अथ तत्र कयाचित् ( म ) स्वैरिण्या दत्तसङ्केतको यावत् ( य ) दण्डपाशकः प्राप्तः, तावत् (र) असौ पूर्वसुप्तः तेन दृष्टः,

(न) स्नानेति।—स्नानभोजनपानीयवसनादिना। तदङ्गेति।—तस्य—वणिक्पुत्रस्य, अङ्गसंस्पर्शेन—देहस्पर्शेन, सञ्जातः,—उत्पन्नः, यो हर्षः,—आनन्दः, तेन रोमाञ्चितं—पुलकितं, गात्रं यस्याः तया, तद्देहसंस्पर्शजनिताऽऽनन्देन पुलकितशरीरया।

( प ) त्वद्वर्जं—तव वर्जः,—वर्जनं यस्मिन् कर्मणि तत् यथा स्यात् तथा, [ क्रियाविशेषणमेतत् ] त्वां वर्जयित्वा इत्यर्थः, [ अथवा द्वितीयान्तोपपदात् वर्जयतेः णमुल्प्रत्ययः, "द्वितीयायाञ्च" ( ३ । ४ । ५३ पा० ) इति सूत्रात्। अत्र दीक्षितमते—परीप्सायामित्येव त्वरायां गम्यमानायामेवेत्यर्थः ; पद्मनाभमते—अत्वरायामपि वेदितव्यम् ]।

( फ ) ब्रवीषि—आलपसि।

( ब ) उत्तार्य्य—निष्काश्य। मुक्तः,—त्यक्तः।

( भ ) खण्डदेवकुले—भग्नदेवमन्दिरे।

( म ) स्वैरिण्या—कुलटया। दत्तसङ्केतकः,—अभिसारार्थं कृतेङ्गितः।

( य ) दण्डपाशकः,—तदाख्यः पुरुषः, नगररक्षको वा।

( र ) असौ—वणिक्सुतः इत्यर्थः। पूर्वसुप्तः,—पूर्वं निद्रितः, ["पूर्वापराधरोत्तरम्" ( २।२।१८ पा० ) इति सूत्रेण पूर्वादिशब्दयोगात् अवयविना सह एकदेशिसमासस्यैव दर्शनात्, अत्र तु तथाऽभावात् "सुपा सुप्" ( २।१।४ पा० ) इति सूत्रेण समासः ]।

रक्षणार्थमभिहितश्च,—'को भवान् ?' सोऽब्रवीत्,— 'प्राप्तव्यमर्थं लभते मनुष्यः'। इति श्रुत्वा दण्डपाशकेन अभिहितं,—'यच्छून्यं देवगृहमिदं, तदत्र मदीयस्थाने गत्वा स्वपिहि'। तथा (ल) प्रतिपद्य सः (व) मतिविपर्य्यासात् अन्यशयने सुप्तः।

अथ तस्य रक्षकस्य कन्या नियमवती नाम रूपयौवन-सम्पन्ना कस्यापि पुरुषस्य अनुरक्ता सङ्केतं दत्त्वा तत्र शयने सुप्ताऽऽसीत्।

अथ सा तम् आयातं दृष्ट्वा 'स एव अयम् अस्मद्वल्लभः' इति रात्रौ (श) घनतरान्धकारव्यामोहिता उत्थाय भोजनाच्छादनादिक्रियां कारयित्वा गान्धर्वविवाहेन आत्मानं (ष) विवाहयित्वा तेन समं शयने स्थिता विकसितवदनकमला तमाह,—'किमद्य अपि मया सह विस्रब्धं भवान् न ब्रवीति ?' सोऽब्रवीत्,—'प्राप्तव्यमर्थं लभते मनुष्यः'। इति श्रुत्वा तया चिन्तितं,—'यत् कार्य्यम् (स) असमीक्षितं क्रियते, तस्य ईदृक् फलविपाको भवति' इति। एवं विमृश्य सविषादया तया निःसारितोऽसौ। स च यावत् (ह) वीथीमार्गेण गच्छति, तावत्

---

(ल) प्रतिपद्य—बुद्धा, ("प्रतिपत्तिर्ज्ञप्तिचेतना" इत्यमरोक्तेः) अङ्गीकृत्य इत्यर्थो वा, ("प्रतिपत्तोऽन्यलिङ्गः स्यात् विज्ञातेऽङ्गीकृतेऽपि च" इति मेदिनीवचनात्)।

(व) मतिविपर्य्यासात्—बुद्धिवैपरीत्यात्।

(श) घनेति।—घनतरेण—अतिमात्रेण, अन्धकारेण—तिमिरेण, व्यामोहिता—व्यामोहं गता, भ्रान्ता सतीत्यर्थः।

(ष) विवाहयित्वा—उद्वाह्य। [ अत्र ल्यप्प्रयोगाभावश्चिन्त्यः ; अथवा विवाहं कृत्वेत्यर्थे विवाहशब्दात् तत्करोत्यर्थे णिजन्तात् क्त्वापि रूपम् ]।

(स) असमीक्षितम्—अपरीक्षितम्, अविविच्येत्यर्थः। फलविपाकः,—परिणामः।

(ह) वीथीमार्गेण—वीथीपदस्य अत्रत्यया गृहादिपरं वीथ्यं, तया च तत्-शोभितेन मार्गेण, राजपथेनेत्यर्थः।

(क) अन्यविषयवासी वरकीर्त्तिर्नाम वरो महता वाद्यशब्देन आगच्छति। ब्राह्मणमूर्खोऽपि तैः समं गन्तुमारब्धः।

अथ यावत् प्रत्यासन्ने लग्नसमये ( ख ) राजमार्गसमीपस्थित-वणिग्गृहद्वारे रचितमण्डपवेदिकायां ( ग ) कृतकौतुकमङ्गलवेशा वणिक्सुता आस्ते, तावत् मदमत्तो हस्ती (घ) आरोहकं हत्वा ( ङ ) प्रणश्यज्जनकोलाहलेन लोकम् ( च ) आकुलयन् तमेव उद्देशं प्राप्तः। तञ्च दृष्ट्वा सर्वे ( छ ) वरानुयायिनो वरेण सह ( ज ) प्रणश्य च दिशो जग्मुः।

अथ अस्मिन् अवसरे ( झ ) भयतरललोचनाम् एकाकिनीं कन्याम् अवलोक्य 'मा भैषीः, अहं (ञ) परित्राता' इति सुधीरं स्थिरीकृत्य दक्षिणपाणौ सङ्गृह्य महासाहसिकतया ब्राह्मणमूर्खः परुषवाक्यैः हस्तिनं निर्भर्त्सितवान्। ततः कथमपि दैवयोगादपयाते हस्तिनि ससुहृद्बान्धवेन अतिक्रान्तलग्नसमये वरकीर्त्तिना

---

( क ) अन्यविषयवासी—अन्यदेशवासी, ("विषयो गोचरे देशे तथा जनपदेऽपि च" इति मेदिनी )।

( ख ) राजमार्गेति।—राजपथसमीपस्थितवणिग्भवनद्वारसमीपे।

( ग ) कृतेति।—कृतः,—धृतः, कौतुकं—विवाहसूत्रं, विवाहकाले हस्ते धार्य्यम् इत्यर्थः, ("कौतुकन्त्वभिलाषे···। विवाहसूत्रगीतादिभोगयोरपि न द्वयोः॥" इति मेदिनी ) मङ्गलवेशश्च यया तादृशी।

(घ) आरोहकं—हस्तिपालम्।

(ङ) प्रणश्यदिति।—प्रणश्यतां—पलायमानानां, जनानां—लोकानां, कोलाहलेन—कलकलध्वनिना, [ सहार्थे तृतीया ]।

( च ) आकुलयन्—व्याकुलीकुर्वन्, इतस्ततो विक्षिपन् इत्यर्थः।

( छ ) वरानुयायिनः,—वरयात्रिकाः।

( ज ) प्रणश्य—पलाय्य।

( झ ) भयेति।—भयेन—त्रासेन, तरले—चपले, लोचने—नयने यस्यास्तथाभूताम्।

( ञ ) परित्राता—रक्षिता। सुधीरं—सधैर्य्यम्। स्थिरीकृत्य—सान्त्वयित्वा।

आगत्य तावत् तां कन्याम् (ट) अन्यहस्तगतां दृष्ट्वा (ठ) अभिहितं,—'भोः श्वशुर! विरुद्धमिदं त्वया अनुष्ठितं, यन्मह्यं प्रदाय कन्या अन्यस्मै प्रदत्ता' इति। सोऽब्रवीत्,—'भोः! अहमपि हस्तिभयपलायितो भवद्भिः सह आयातः, न जाने किमिदं वृत्तम्' इति अभिधाय दुहितरं प्रष्टुमारब्धः,—'वत्से! न त्वया सुन्दरं कृतम्; तत् कथ्यतां कोऽयं वृत्तान्तः?' सोऽब्रवीत्,—'यदहमनेन प्राणसंशयात् रक्षिता, तदा एनं मुक्त्वा मम जीवन्त्या नान्यः पाणिं ग्रहीष्यति' इति। अनेन (ड) वार्त्ताव्यतिकरेण रजनी (ढ) व्युष्टा।

अथ प्रातस्तत्र सञ्जाते (ण) महाजनसमवाये, वार्त्ताव्यतिकरं श्रुत्वा राजदुहिता तमुद्देशमागता। (त) कर्णपरम्परया श्रुत्वा दण्डपाशकसुताऽपि तत्रैव आगता।

अथ तं महाजनसमवायं श्रुत्वा राजा अपि तत्रैव आजगाम, प्राप्तव्यमर्थं प्राह च,—'भोः! विश्रब्धं कथय, कीदृशोऽसौ वृत्तान्तः?' अथ सोऽब्रवीत्,—'प्राप्तव्यमर्थं लभते मनुष्यः' इति। राजकन्या स्मृत्वा प्राह,—'देवोऽपि तं लङ्घयितुं न शक्तः'। ततो दण्डपाशकसुता अब्रवीत्,—'तस्मान्न शोचामि न विस्मयो मे' इति। तम् अखिललोकवृत्तान्तम् आकर्ण्य वणिक्सुताऽब्रवीत्,—'यदस्मदीयं न हि तत् परेषाम्' इति। ततश्च अभयदानं दत्त्वा

(ट) अन्यहस्तगतां—प्राप्तव्यमर्थहस्तगताम्।

(ठ) अभिहितम्—उक्तम्। विरुद्धम—अन्याय्यम्।

(ड) वार्त्ताव्यतिकरेण—परस्परवार्त्ताविसंवादेन इत्यर्थः।

(ढ) व्युष्टा—अतिक्रान्ता, प्रभाता इत्यर्थः। ["उष् दाहे" इति धातोः निष्ठायां रूपम्, "औषीत्, औषत्" इति लुङि रूपद्वयं वेदितव्यम्]।

(ण) महाजन समवाये।—बहुलोकसम्मेलने।

(त) कर्णपरम्परया—श्रुतिक्रमेण, जनश्रुत्यनुसारेणेत्यर्थः।

राजा पृथक् पृथक् वृत्तान्तान् ज्ञात्वा ( थ ) अवगततत्त्वः तस्मै प्राप्तव्यमर्थाय स्वदुहितरं ( द ) सबहुमानं ग्रामसहस्रेण समं सर्वालङ्कारपरिवारयुतां दत्त्वा 'त्वं मे पुत्रोऽसि' इति नगर-विदितं तं यौवराज्येऽभिषिक्तवान्। दण्डपाशकेनापि स्वदुहिता स्वशक्त्या वस्त्रदानादिना सम्भाव्य प्राप्तव्यमर्थाय प्रदत्ता।

अथ प्राप्तव्यमर्थेनापि स्वीयमातापितरौ समस्तकुटुम्बावृतौ तस्मिन् नगरे सम्मानपुरःसरं समानीतौ। अथ सोऽपि स्वगोत्रेण सह विविधभोगान् उपभुञ्जानः सुखेन अवस्थितः। अतोऽहं ब्रवीमि,—'प्राप्तव्यमर्थं लभते मनुष्यः' इत्यादि।

तदेतत् सकलं (ध) सुखदुःखमनुभूय परं विषादमुपागतोऽनेन मित्रेण त्वत्सकाशम् आनीतः; तदेतत् मे वैराग्यकारणम्"।

मन्थरक आह,—"भद्र! भवति ( न ) सुहृदयमसन्दिग्धं, यत् (प) क्षुत्क्षामोऽपि प्रभूतं त्वां भक्ष्यस्थाने स्थितमेवं पृष्ठ-मारोप्य आनयति, न मार्गेऽपि भक्षयति। उक्तञ्च ततः,—

विकारं याति नो चित्तं वित्ते यस्य कदाचन।
मित्रं स्यात् सर्वकाले च कारयेन्मित्रमुत्तमम् ॥ ११६ ॥

---

( थ ) अवगततत्त्वः,—विदितयाथार्थ्यः, ज्ञातसर्ववृत्तान्त इत्यर्थः।

( द ) सबहुमानं—सादरम्। सर्वेति।—विविधभूषणभूषितपरिजनसहिताम्।

( ध ) सुखदुःखं—[ सुखञ्च दुःखञ्चेति समाहारद्वन्द्वः, "विप्रतिषिद्धं चानधिकरणवाचि" ( २।४।१३ पा० ) इति सूत्रात् समाहारः वैकल्पिकः, तथा च सुखदुःखे इत्यपि भवितुमर्हतीति बोध्यम् ]।

( न ) सुहृदयमसन्दिग्धम्—अयं—वायसः, सुहृत्—मित्रम्, असन्दिग्धम्—अत्र सन्देहो नास्तीत्यर्थः।

( प ) क्षुत्क्षामः,—क्षुधार्त्तः, [ क्षैधातोः क्तप्रत्ययेन क्षाम इति पदं सिद्धम् ]। भक्ष्यस्थाने स्थितं—भक्ष्यभूतम्।

विकारमिति।—यस्य वित्ते धनविषये, चित्तं कदाचन विकारं नो याति न प्राप्नोति, न विकृतं भवतीत्यर्थः, यस्य सर्वकाले सम्पदि विपदि च इत्यर्थः, मित्रं सुहृत्,

विद्वद्भिः सुहृदामत्र चिह्नैरेतैरसंशयम् ।
परीक्षाकरणं प्रोक्तं होमाग्नेरिव पण्डितैः ॥ ११७ ॥

तथा च,—आपत्काले तु सम्प्राप्ते यन्मित्रं मित्रमेव तत् ।
वृद्धिकाले तु सम्प्राप्ते दुर्जनोऽपि सुहृद्भवेत् ॥ ११८ ॥

तन्ममापि अद्य अस्य विषये विश्वासः समुत्पन्नः ; यतो नीतिविरुद्धा इयं मैत्री मांसाशिभिः वायसैः सह जलचराणाम् । अथवा साधु इदमुच्यते,—

मित्रं कोऽपि न कस्यापि नितान्तं न च वैरकृत् ।
दृश्यते मित्रविध्वस्तात् कार्य्याद्वैरी परीक्षितः ॥ ११९ ॥

तत् स्वागतं भवतः ? स्वगृहवदास्यताम्, अत्र विषये सन्तापो न कर्त्तव्यः । उक्तञ्च,—

स्यात्, न कदाचित् कुतश्चित् शत्रुर्भवतीत्यर्थः, एवम्भूतम् उत्तमं, जनमिति शेषः, मित्रं कारयेत्, जन इति शेषः ॥ ११६ ॥

विद्वद्भिरिति ।—विद्वद्भिः प्राज्ञैः, एतैश्चिह्नैः लक्षणैः, अविकृतमुखभावादिभिरिति भावः, असंशयं यथा तथा, अत्र संसारे, सुहृदां मित्राणां, परीक्षाकरणं चित्तमविकृतं न वेति निर्णयकरणमित्यर्थः, पण्डितैः वेदविद्भिः, होमाग्नेः आहवनीयादियज्ञीयाग्नेरिव, प्रोक्तं कथितम् ; पण्डितैर्यथा यज्ञादौ दक्षिणावर्त्तत्व-धूमशिखावत्त्वादिभिर्लक्षणैः अङ्गमङ्गलजनकत्वादिकं परीक्षया ज्ञातव्यमुक्तं, तथा मित्रताकरणे सुहृदामपि प्रोक्तलक्षणैः हृदयविशुद्धत्वादिकमिति भावः ॥ ११७ ॥

आपत्काले इति ।—आपत्काले विपत्तिसमये, सम्प्राप्ते तु उपस्थिते सति, यत् मित्रम् आपत्कालेऽपि यः सुहृत् भवति इत्यर्थः, तदेव मित्रं मित्रपदवाच्यम् ; वृद्धिकाले सम्पत्समये, सम्प्राप्ते तु दुर्जनोऽपि सुहृत् भवेत्, आत्मनः हितसाधनेच्छयेति भावः ; विपत्सहाय एव बन्धुरिति निष्कर्षः ॥ ११८ ॥

मित्रमिति ।—कोऽपि जनः, कस्यापि न नितान्तं मित्रं, न च वैरकृत् शत्रुः ; अत्रापि "नितान्तम्" इति पदं योजनीयम् ; मित्रविध्वस्तात् मित्रेण मित्रभावेनावस्थितेन जनेन, विध्वस्तात् कारणविशेषात् स्वार्थसाधनाय वा नाशं गमितात्, विफलीकृतादित्यर्थः, कार्य्यात् वैरी शत्रुः, परीक्षितः, भवतीति शेषः, इति दृश्यते, जनैरिति शेषः ; मित्रभावेनावस्थितोऽपि जनः स्वार्थवशात् रिपुरपि भवतीति भावः ॥ ११९ ॥

अभ्रच्छाया खलप्रीतिः सिद्धमन्नञ्च योषितः ।
किञ्चित्कालोपभोग्यानि यौवनानि धनानि च ॥ १२० ॥

अत एव (फ) विवेकिनः जितात्मानो धनस्पृहां न कुर्वन्ति ।

उक्तञ्च,—सुसञ्चितैर्जीवनवत् सुरक्षितैः
निजेऽपि देहे न वियोजितैः क्वचित् ।
पुंसो यमान्तं व्रजतोऽपि निष्ठुरैः
एतैर्धनैः पञ्चपदी न दीयते ॥ १२१ ॥

अन्यच्च,—यथाऽऽमिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि ।
आकाशे पक्षिभिश्चैव तथा सर्वत्र वित्तवान् ॥ १२२ ॥

---

अभ्रेति ।—अभ्राणां मेघानां, छाया अनातपः, खलानां दुर्जनानां, प्रीतिः प्रणयः, सिद्धं पक्वम्, अन्नं भक्ष्यं, योषितः स्त्रियः, यौवनानि तारुण्यानि, धनानि वित्तानि च, किञ्चित्कालोपभोग्यानि अल्पकालसम्भोगार्हाणि, [ भुजधातोः "ऋहलोर्ण्यत्" ( ३।१।१२४ पा० ) इति ण्यति "चजोः कु घिण्ण्यतोः" ( ७।३।५२ पा० ) इति कुत्वात् भोग्यमिति सिद्धं, भक्षणार्थे तु—"भोज्यं भक्ष्ये" ( ७।३।६९ पा० ) इति सूत्रेण भोज्यमित्येव स्यात् ] एतानि न चिरं तिष्ठन्तीत्यर्थः ; अतः नाशेऽप्येतेषां कदाऽपि नानुशोचितव्यमिति भावः ॥ १२० ॥

( फ ) विवेकिनः,—सदसद्विचारकुशलाः । जितात्मानः,—जितेन्द्रियाः ।

सुसञ्चितैरिति ।—सुसञ्चितैः अतिकष्टेन सङ्गृहीतैः, जीवनवत् प्राणवत्, सुरक्षितैः दस्युतस्करादिभ्यः इति भावः, निजे देहेऽपि निजदेहार्थमपि, [ निमित्ते सप्तमी ] क्वचित् न वियोजितैः कदाऽपि न व्ययितैरिति भावः ; एतैः दृष्टैरपीत्यर्थः, निष्ठुरैः आत्मानं कर्षयित्वाऽपि तद्रक्षणार्थं यतमानस्य उपकारविस्मरणात् अतीव कठिनैरित्यर्थः, अकृतज्ञैरिति भावः, धनैः यमान्तं यमसकाशं, व्रजतः गच्छतोऽपि, पुनरागमनसम्भावनाविरहितस्यापीति भावः, पुंसः स्वरक्षकस्येत्यर्थः, पञ्चपदी (अपिरत्राध्याहार्यः ) पञ्चानां पदानां वस्तूनां समाहारः पञ्चपदी लोकान्तरगमनकालिकं पाथेयभूतं काकिनीपञ्चकमपि, न दीयते न समर्प्यते इत्यर्थः, अथवा पदपञ्चकमपि नानुगम्यते इत्यर्थः । वंशस्थविलं वृत्तम् ॥ १२१ ॥

यथेति ।—मत्स्यैः जले, श्वापदैः भुवि, पक्षिभिश्च आकाशे, आमिषं भक्ष्यं वस्तु, यथा भक्ष्यते, तथा वित्तवान् धनवान् जनः, सर्वत्रैव सुगमे दुर्गमे वा यत्रैव प्रदेशे

निर्दोषमपि वित्ताढ्यं दोषैर्योजयते नृपः।
निर्धनः प्राप्तदोषोऽपि सर्वत्र निरुपद्रवः॥ १२३॥
अर्थानामर्जने दुःखमर्जितानाञ्च रक्षणे।
नाशे दुःखं व्यये दुःखं धिगर्थान् कष्टसंश्रयान्॥१२४॥
अर्थार्थी यानि कष्टानि मूढोऽयं सहते जनः।
शतांशेनापि मोक्षार्थी तानि चेन्मोक्षमाप्नुयात्॥ १२५॥

अपरं,—विदेशवासजमपि वैराग्यं त्वया न कार्य्यम्; यतः,—

को धीरस्य मनस्विनः स्वविषयः? को वा विदेशः स्मृतः?
यं देशं श्रयते तमेव कुरुते बाहुप्रतापार्जितम्।

---

गच्छति तत्रैवेत्यर्थः, भक्ष्यते इत्यनुषज्यते; अन्यामिषस्य स्थाननियमः वर्त्तते, धनिरूपामिषन्तु यत्रैव गच्छति, तत्रैवार्थिभिः अर्थगृध्नुभिः तस्करैश्च ग्रस्यते इति भावः॥१२२॥

निर्दोषमिति।—नृपः निर्दोषमपि दोषहीनमपि, वित्ताढ्यं धनिनं, दोषैः योजयते दूषितं करोति इत्यर्थः, धनलोभात् मिथ्यादोषं प्रख्याप्य दण्डयतीति भावः; निर्धनः जनः, प्राप्तदोषोऽपि दोषी अपि, सर्वत्र निरुपद्रवः उत्पातहीनः, कैरपि न दूष्यते इत्यर्थः, धनप्राप्त्याशाविरहादिति भावः; धनमूला हि विपत्तिः सर्वेषामिति तात्पर्य्यम्॥१२३॥

अर्थानामिति।—अर्थानां धनानाम्, अर्जने उपार्जने, दुःखं कष्टम्, अर्जितानाञ्च, अर्थानामिति शेषः, रक्षणे दुःखं, नाशे, अर्थानामिति शेषः, दुःखं, व्यये वितरणे, दुःखं, तस्मात् कष्टसंश्रयान् केवलकष्टाऽऽधारान्, अर्थान् [अत्र धिक्शब्दयोगे द्वितीया, "उपान्वध्याङ्वसः" (१।४।४८ पा०) इत्यस्य दीक्षितकृतौ धिक्शब्दयोगे द्वितीया स्यादित्युक्तम्; तथा हि,—"उभसर्वतसोः कार्य्या धिगुपर्य्यादिषु त्रिषु। द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते॥" इति] धिक् निन्दामि इत्यर्थः; सर्वदा दुःखकरत्वात् अर्थलोभः परिहरणीयः इति निष्कर्षः॥ १२४॥

अर्थार्थीति।—अयं मूढो जनः, अर्थार्थी धनार्थी सन्, यानि कष्टानि सहते, चेत् यदि, मोक्षार्थी सन् तानि कष्टानि, शतांशेनापि, सहते इति शेषः, तदा स मोक्षम् आप्नुयात् लभेत; परमपुरुषार्थमुक्तिसाधनादपि अर्थसाधनं नितरां दुःखकरमित्यहो! विडम्बना इति भावः॥ १२५॥

क इति।—धीरस्य मनस्विनः स्वविषयः स्वदेशः, कः? को वा विदेशः स्मृतः? न देशविदेशगणनेति भावः; यं देशं श्रयते आश्रयति, धीरो जनः इति शेषः, तमेव

यद्दंष्ट्रानखलाङ्गुलप्रहरणः सिंहो वनं गाहते
तस्मिन्नेव हतद्विपेन्द्ररुधिरैस्तृष्णां छिनत्त्यात्मनः ॥१२६॥

अर्थहीनः (व) परे देशे गतोऽपि यः प्रज्ञावान् भवति, स कथञ्चिदपि न सीदति। उक्तञ्च,—

कोऽतिभारः समर्थानाम्? किं दूरं व्यवसायिनाम्?।
को विदेशः सुविद्यानाम्? कः परः प्रियवादिनाम्? ॥१२७॥

तत् (भ)प्रज्ञानिधिर्भवान् न (म)प्राकृतपुरुषतुल्यः। अथवा,—

उत्साहसम्पन्नमदीर्घसूत्रं
क्रियाविधिज्ञं व्यसनेष्वसक्तम्।
शूरं कृतज्ञं दृढसौहृदञ्च
लक्ष्मीः स्वयं मार्गति वासहेतोः ॥ १२८ ॥

देशं, बाहुप्रतापार्जितं स्वबाहुबललब्धं, स्वायत्तमित्यर्थः, कुरुते, तत्रैव प्रभूतधनमानादिकम् अर्जयतीति भावः; दंष्ट्रा नखाः लाङ्गुलञ्च तानि [ श्लोकारवलाङ्गुलशब्दोऽयं छन्दोभङ्गभयात् प्रयुक्तः ] प्रहरणानि अस्त्राणि यस्य तादृशः, सिंहः यत् वनं गाहते प्रविशति, तस्मिन्नेव वने, हतानां स्वबाहुबलेन विनाशितानां, द्विपेन्द्राणां गजश्रेष्ठानां, रुधिरैः रक्तैः, आत्मनः स्वस्य, तृष्णां छिनत्ति अपनयति; न हि परतन्त्रवृत्तिता मनस्विस्वभाव इति भावः। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः। शार्दूलविक्रीडितं वृत्तम् ॥ १२६ ॥

(व) परे देशे—अन्यस्मिन् देशे। सीदति—क्लिश्यति।

क इति।—समर्थानां शक्तिमताम्, अतिभारः कः? व्यवसायिनां वणिजां, दूरं किम्? सुविद्यानां सुशिक्षितविद्यानां, [ सविद्यानामिति वा पाठः ] विदेशः कः? तथा प्रियवादिनां परः कः? न कोऽपि, तेषां प्रियवाक्येनैव सर्वे अनात्मीया अपि आत्मीया भवन्ति इति भावः ॥ १२७ ॥

(भ) प्रज्ञानिधिः,—बुद्धिमान्।

(म) प्राकृतपुरुषतुल्यः,—नीचजनसदृशः, ("विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः" इत्यमरः)।

उत्साहेति।—लक्ष्मीः सम्पत्, वासहेतोः [ हेतुशब्दयोगात् "षष्ठी हेतुप्रयोगे" (२।३।२६ पा०) इति सूत्रेण षष्ठी ] आश्रयार्थम्, उत्साहसम्पन्नम् उद्योगिनम्,

अपरं, प्राप्तोऽपि अर्थः (य) कर्मप्राप्त्या नश्यति; तत् एतावन्ति (र) दिनानि त्वदीयमासीत्, (ल) मुहूर्त्तमपि अनात्मीयं भोक्तुं न लभ्यते; (व) स्वयमागतमपि विधिनाऽपह्रियते।

अर्थस्योपार्जनं कृत्वा नैव भोगं समश्नुते।
अरण्यं महदासाद्य मूढः सोमिलको यथा" ॥ १२९ ॥

हिरण्यक आह,—"कथमेतत्?" स आह,—

## कथा ५।

"कस्मिंश्चिदधिष्ठाने सोमिलको नाम (श) कौलिको वसति स्म। स च (ष) अनेकविधपटरचनारञ्जितानि पार्थिवोचितानि सदा एव वस्त्राणि उत्पादयति; परं तस्य च अनेकविधपटरचनानिपुणस्यापि न भोजनाच्छादनाभ्यधिकं कथमपि अर्थ-

अदीर्घसूत्रम् अचिरक्रियम्, अनलसमित्यर्थः, ("दीर्घसूत्रश्चिरक्रियः" इत्यमरः) क्रियाविधिज्ञं कार्य्यानुष्ठानदक्षं, व्यसनेषु कामजक्रोधजाष्टादशविधमृगयादिदोषेषु, असक्तम् अनासक्तं, शूरं बलवन्तं, कृतज्ञम् उपकारस्मर्त्तारं, तथा दृढं स्थिरं, सौहृदं मैत्री यस्य तादृशं, मित्रधर्मादस्खलितञ्च इत्यर्थः, जनमिति शेषः, स्वयं मार्गति अन्विष्यति; एतादृशपुरुषस्य करतलगतैव लक्ष्मीरिति तात्पर्य्यम्। उपजातिः वृत्तम् ॥ १२८ ॥

*(य) कर्मप्राप्त्या—कर्मवशेनेत्यर्थः, प्राक्तनकर्मपरिपाककाले इति भावः। नश्यति—नष्टः भवति।

(र) दिनानि इति [अत्यन्तसंयोगे द्वितीया]। त्वदीयं—त्वदायत्तं, धनमिति शेषः।

(ल) मुहूर्त्तमपि—अल्पकालमपि। अनात्मीयम्—अस्वम्, अन्यदीयं वस्तु इत्यर्थः। लभ्यते—प्राप्यते।

(व) स्वयमागतमपि, अनात्मीयमिति शेषः।

अर्थस्येति।—महत् अरण्यम् आसाद्य प्राप्य, सोमिलकः यथा, तथा मूढः अज्ञः जनः, अर्थस्य उपार्जनं कृत्वा भोगं नैव समश्नुते लभते इत्यर्थः ॥ १२९ ॥

(श) कौलिकः,—तन्तुवायाख्यजातिविशेषः।

(ष) अनेकेति।—बहुप्रकारवस्त्रवयनकौशलाभिज्ञतया मनोज्ञानीत्यर्थः। पार्थिवोचितानि—राजयोग्यानि। उत्पादयति—वयतीत्यर्थः।

मात्रं सम्पद्यते। अथ अन्ये तत्र सामान्यकौलिकाः (ख) स्थूल-वस्त्रसम्पादनविज्ञानिनो महर्द्धिसम्पन्नाः। तान् अवलोक्य स स्वभार्य्यामाह,—'प्रिये! पश्य एतान् स्थूलपटकारकान् धनकनकसमृद्धान्, तत् (ङ) अधारणकं मम एतत् स्थानम्; तदन्यत्र उपार्जनाय गच्छामि'। सा प्राह,—'भोः प्रियतम! मिथ्याप्रलपितमेतत् यत् अन्यत्र गतानां धनं भवति, स्वस्थाने न भवति। उक्तञ्च,—

उत्पतन्ति यदाकाशे निपतन्ति महीतले।
पक्षिणां तदपि प्राप्त्या नादत्तमुपतिष्ठते॥ १२० ॥

तथा च,—न हि भवति यन्न भाव्यं भवति च भाव्यं विना प्रयत्नेन।
करतलगतमपि नश्यति यस्य तु भवितव्यता नास्ति॥१२१॥

(ख) स्थूलेति।—स्थूलवस्त्रवयनकुशलाः। महर्द्धिसम्पन्नाः,—महाधनशालिनः।

(ङ) अधारणकं—न धारकम्, एतत् स्थानं मां न धारयति इत्यर्थः; अत्र मम सौभाग्यं नास्तीति भावः। [ धार्य्यतेऽनेनेति वेत्यर्थेऽधिकरणे करणे वार्थे ल्युटि पश्चात् स्वार्थे कनि रूपं, पश्चात् नञ्समासः ]।

उत्पतन्तीति।—आकाशे नभसि, यत् उत्पतन्ति उड्डीयन्ते, कदाचिदिति भावः; यत्र महीतले पृथिव्यां, निपतन्ति कदाचिदवतरन्तीत्यर्थः, पक्षिण इति शेषः, पक्षिणां खगानामपि सम्बन्धे इत्यर्थः, तत् कदाचिदुत्पतनं कदाचिच्च निपतनमित्यर्थः, प्राप्त्या किञ्चित् लाभाशया इत्यर्थः, ( "प्राप्तिर्महोदये। लाभेऽपि च स्त्रियाम्" इति मेदिनी ) किन्तु अदत्तं कदाचित् कस्मैचित् किमपि अवितरितं द्रव्यं, न उपतिष्ठते न प्राप्नोतीत्यर्थः; "तन्नष्टं यन्न दीयते" इति स्मरणात्, [ उपपूर्वकात् तिष्ठतेः "अकर्मकाच्च" ( १।३।२६ पा० ) इति सूत्रेण आत्मनेपदम् ]; योजनशतादपि आमिषं द्रष्टुं समर्थानां किञ्चित् प्राप्त्यर्थं दिवि भुवि च मुहुर्विचरतां खगानामपि प्राप्तिः यदा कर्मफलायत्ता, तदा भूमावचराणामदूरदर्शिनां कर्माधीनानां मानवानां तत्प्राप्तौ का कथा? यदि त्वया कदाऽपि कस्मैचित् किमपि दत्तमासीत् तदा गृहे स्थित्वैव प्रभूतधनं प्राप्स्यसि, किं बहिर्गमनायासेनेति निष्कर्षः। [ "प्राप्त्या" इत्यत्र "प्राप्तौ" इति पाठे—प्राप्तिविषये इत्यर्थः ]॥ १२० ॥

न हीत्यादि।—व्याख्यातं प्राक् १० सङ्ख्यकश्लोके। आर्य्या वृत्तम्॥ १२१ ॥

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पुराकृतं कर्म कर्त्तारमनुगच्छति ॥ १२२ ॥
शेते सह शयानेन गच्छन्तमनुगच्छति ।
नराणां प्राक्तनं कर्म तिष्ठेदथ सहात्मना ॥ १२३ ॥
यथा छायातपौ नित्यं सुसम्बद्धौ परस्परम् ।
एवं कर्म च कर्त्ता च संश्लिष्टावितरेतरम् ॥ १२४ ॥

तस्मादत्र एव (क) व्यवसायपरो भव' । कौलिक आह,— 'प्रिये ! न सम्यगभिहितं भवत्या, (ख) व्यवसायं विना कर्म न (ग) फलति । उक्तञ्च,—

यथैकेन न हस्तेन तालिका सम्प्रपद्यते ।
तथोद्यमपरित्यक्तं न फलं कर्मणः स्मृतम् ॥ १२५ ॥

यथेति ।—धेनुसहस्रेषु मध्ये [ अत्र निर्द्धारणे सप्तमी ] वत्सः गोशावकः, यथा मातरं विन्दति आश्रयति, बहुषु गोषु मध्ये अवस्थितां स्वमातरं परिचित्य तदन्तिकं गच्छति इत्यर्थः, तथा पुराकृतं प्राक्तनं, कर्म, कर्त्तारं तत्तत्कर्मणः फलभोक्तारम्, अनुगच्छति प्राप्नोति, स्वयमन्विष्य इति भावः ॥ १२२ ॥

शेते इति ।—नराणां प्राक्तनं पूर्वकृतं, कर्म शयानेन, नरेण इति शेषः, सह शेते, गच्छन्तं नरम् अनुगच्छति ; अथ आत्मना सह तिष्ठेत् स्थितिं करोति इत्यर्थः ; दुरत्यजमेतत् प्राक्तनं कर्म प्राणिभिरिति तात्पर्य्यम् ॥ १२३ ॥

यथेति ।—छायातपौ छाया प्रतिबिम्बम्, आतपः रौद्रं तौ, यथा नित्यं सततं, परस्परं सुसम्बद्धौ संयुक्तौ, तिष्ठत इति शेषः, यत्रैव आतपस्तत्रैव छायेति भावः, एवं तथा, कर्म च प्राक्तनमिति भावः, कर्त्ता च तावपीत्यर्थः, इतरेतरम् अन्योऽन्यं, संश्लिष्टौ सम्बद्धौ, तात्वपि नान्योऽन्यं जहीत इत्यर्थः ; स्वकर्मफलभुक् पुमानिति भावः ॥ १२४ ॥

(क) व्यवसायपरः,—उद्योगपरः, यत्नवान् इत्यर्थः ।

(ख) व्यवसायं—यत्नम् ।

(ग) फलति—सिध्यति ।

यथेति ।—यथा एकेन हस्तेन तालिका करतलशब्दः, न सम्प्रपद्यते न निष्पद्यते,

पश्य कर्मवशात् प्राप्तं भोज्यकालेऽपि भोजनम् ।
हस्तोद्यमं विना वक्त्रे प्रविशेन्न कथञ्चन ॥ १२६ ॥

तथा च,—उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी:
दैवं हि दैवमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोष: ॥ १२७ ॥

तथा च,—उद्यमेन हि सिध्यन्ति कार्य्याणि न मनोरथै: ।
न हि सिंहस्य सुप्तस्य प्रविशन्ति मुखे मृगा: ॥ १२८ ॥
उद्यमेन विना राजन्! न सिध्यन्ति मनोरथा: ।
कातरा इति जल्पन्ति यद्भाव्यं तद्भविष्यति ॥ १२९ ॥

न उत्पद्यते इत्यर्थ:, तथा उद्यमपरित्यक्तं यत्नरूपसिद्धिकारणविवर्जितं, कर्मण: फलं न भूतं न कथितम् ; पुरुषकारं विना एकेन दैवेनैव कर्म न सिध्यति इत्यर्थ: ॥ १२५ ॥

पश्येति ।—पश्य अवलोकय, कर्मवशात् प्राक्तनादिति भाव:, भोज्यकाले भोजनसमये, प्राप्तमपि उपस्थितमपि, भोजनं हस्तस्य उद्यमं चेष्टां, विना वक्त्रे मुखे, कथञ्चन न प्रविशेत् ; पूर्वकर्मणा भोजनकाले भोजनमुपस्थातुमर्हति, किन्तु मुखविवरप्रवेश: प्रयत्नसाध्य: ; अत: सर्वत्र सयत्नेन भवितव्यमिति भाव: ॥ १२६ ॥

उद्योगिनमिति ।—लक्ष्मी: श्री:, उद्योगिनं प्रयत्नवन्तं, पुरुषसिंहं नरवरम्, उपैति प्राप्नोति, कापुरुषा: हि दैवं दैवमिति वदन्ति । दैवं निहत्य दूरीकृत्य, आत्मशक्त्या पौरुषं यत्नं, कुरु, यत्ने कृते सति यदि न सिध्यति, कार्य्यमिति शेष:, तदा अत्र एतादृशे यत्ने, कोऽपि दोष:, वर्त्तते इति शेष: ; यत्नेऽपि सिद्ध्यभावस्य दर्शनात् सम्यक् यत्नो न भूत: इति मन्तव्यमिति भाव: ॥ १२७ ॥

उद्यमेनेति ।—कार्य्याणि उद्यमेन हि यत्नेनैव, सिध्यन्ति फलन्ति, मनोरथै: सङ्कल्पै:, अभिलाषमात्रैरित्यर्थ:, न, सिध्यन्तीत्यनुषङ्ग: ; तथा हि, सुप्तस्य निद्रितस्य, सिंहस्य मुखे मृगा: न हि प्रविशन्ति ; तदा तस्य यत्नाभावादिति भाव: ; अत्र विशेषेण सामान्यसमर्थनादर्थान्तरन्यासोऽलङ्कार: ॥ १२८ ॥

उद्यमेनेति ।—हे राजन्! उद्यमेन यत्नेन, विना मनोरथा: अभिलाषा:, न सिध्यन्ति, कातरा: अलसा:, जना: इति शेष:, यत् भाव्यं तत् भविष्यतीति जल्पन्ति कथयन्ति ; न पुनरेवं तेषां वाक्यमिति भाव: ॥ १२९ ॥

स्वशक्त्या कुर्वतः कर्म न चेत् सिद्धिं प्रयच्छति ।
नोपालभ्यः पुमांस्तत्र दैवान्तरितपौरुषः ॥ १४० ॥

तत् मया अवश्यं देशान्तरं गन्तव्यम्' । इति निश्चित्य वर्द्धमानपुरं गतः । तत्र च वर्षत्रयं स्थित्वा सुवर्णशतत्रयोपार्जनं कृत्वा भूयः स्वगृहं प्रस्थितः ।

अथ अर्द्धपथे गच्छतः तस्य कदाचित् अटव्यां (घ) पर्य्यटतो भगवान् रविरस्तमुपागतः । तदा असौ (ङ) व्यालभयात् स्थूलतरवटस्कन्धमारुह्य यावत् प्रसुप्तः, तावत् (च) निशीथे स्वप्ने द्वौ पुरुषौ (छ) रौद्राकारौ परस्परं प्रजल्पन्तौ अशृणोत् । तत्रैक आह,—'भोः (ज) कर्त्तः ! त्वं किं सम्यक् न वेत्सि, यदस्य सोमिलकस्य (झ) भोजनाच्छादनाभ्यधिका समृद्धिर्नास्ति ; तत् किं त्वया अस्य सुवर्णशतत्रयं प्रदत्तम् ?' स आह,—'भोः कर्मन् !

स्वशक्त्येति ।—स्वशक्त्या निजसामर्थ्येन, कुर्वतः कार्य्यं सम्पादयतः, जनस्य इति शेषः, कर्म चेत् यदि, सिद्धिं साफल्यं, न प्रयच्छति न विदधाति, न सफलं भवतीत्यर्थः, तदा तत्र अस्मिन्, पुमान् न उपालभ्यः न तिरस्कार्य्यः, ["उपात् प्रशंसायाम्" (७।१।६६ पा० ) इति सूत्रेण उपपूर्वकात् लभधातोः यकारादिप्रत्ययविषये प्रशंसायां गम्यमानायामेव नुमागमः, अत्र तु निन्दाऽर्थकत्वात् न नुमिति वेदितव्यम्] यतः सः दैवेन अन्तरितं व्याहतं, पौरुषं प्रयत्नः यस्य तथाभूतः ; दैवविघ्निते पुरुषदोषानवकाशात् न कोऽपि भवति निन्दास्पदमिति भावः ॥ १४० ॥

(घ) पर्य्यटतः,—विचरतः ।

(ङ) व्यालभयात्—हिंस्रभयात् । स्थूलतरवटस्कन्धं—पीनतरवटहक्षकाण्डम् ।

(च) निशीथे—अर्द्धरात्रे ।

(छ) रौद्राकारौ—भीषणाकृती ।

(ज) कर्त्तः ! प्रभो ! कर्मफलदातः ! इत्यर्थः ।

(झ) भोजनाच्छादनाभ्यधिका—अन्नवस्त्रातिरिक्ता, समृद्धिः,—सम्पत्, नास्ति, भोग्येति शेषः ।

मया अवश्यं दातव्यं ( ञ ) व्यवसायिनां, तत्र च ( ट ) तस्य परिणतिः ( ठ ) त्वदायत्ता' इति ।

अथ यावदसौ कौलिकः (ड) प्रबुद्धः सुवर्णग्रन्थिम् अवलोकयति, तावत् रिक्तं पश्यति । ततः ( ढ ) साक्षेपं चिन्तयामास, —'अहो ! किमेतत् ? महता कष्टेन उपार्जितं वित्तं हेलया क्वापि गतम् !! तत् व्यर्थश्रमः अकिञ्चनः कथं स्वपत्न्या मित्राणाञ्च मुखं दर्शयिष्यामि ?' इति विचिन्त्य पुनरपि तदेव (ण) पत्तनं गतः । तत्र च (त) वर्षमात्रेणापि सुवर्णशतपञ्चकमुपार्ज्य भूयोऽपि स्वस्थानं प्रति प्रस्थितः यावत्, तावत् अर्द्धपथे भूयोऽटवीगतस्य भगवान् भानुरस्तं जगाम ।

अथ सुवर्णनाशभयात् सुश्रान्तोऽपि न विश्राम्यति, केवलं ( थ ) स्वगृहोत्कण्ठः सत्वरं व्रजति । अत्रान्तरे द्वौ पुरुषौ तादृशौ दृष्टिदेशे समागच्छन्तौ जल्पन्तौ च शृणोति । तत्रैकः प्राह,—'भोः कर्त्तः ! किं त्वया एतस्य सुवर्णशतपञ्चकं प्रदत्तम् ? तत् किं न वेत्सि, यत् भोजनाच्छादनाभ्यधिकमस्य किञ्चित् नास्ति ?' स आह,—'भोः कर्मन् ! मया अवश्यं देयं व्यवसायिनां, तस्य परिणामः त्वदायत्तः । तत् किं माम्

( ञ ) व्यवसायिनाम्—उद्योगिनाम्, [अत्र सम्प्रदाने सम्बन्धविवक्षया षष्ठी] ।

( ट ) तस्य—दत्तस्येत्यर्थः, परिणतिः,—परिणामः, स्थितिरिति यावत् ।

( ठ ) त्वदायत्ता—तवाधीना ।

( ड ) प्रबुद्धः,—जागरितः । सुवर्णग्रन्थिं—सुवर्णमुद्राणां वसनप्रान्तेन बन्धनं, सुवर्णसनाथं सुदृढ़निबद्धमितं वस्त्राञ्चलमिति यावत् । रिक्तं—शून्यम् ।

( ढ ) साक्षेपं—सखेदम । हेलया—अवज्ञया, अतर्कितभावेनेत्यर्थः । अकिञ्चनः,—निर्धनः । [ नास्य किञ्चिदस्तीत्यकिञ्चनः । मयूरव्यंसकादिवत् समासः ] ।

( ण ) पत्तनं—नगरम् ।

( त ) वर्षमात्रेणापि—एकवर्षेणैव, [ अपवर्गे तृतीया ] ।

( थ ) स्वगृहोत्कण्ठः,—गृहं प्रति उत्कण्ठितः इत्यर्थः ।

(द) उपालम्भयसि ?' तत् श्रुत्वा सोमिलको यावत् ग्रन्थिम् अवलोकयति, तावत् सुवर्णं नास्ति। ततः परं दुःखमापन्नो व्यचिन्तयत्,—'अहो ! किं मम धनरहितस्य जीवितेन ? तदत्र वटवृक्षे आत्मानमुद्बध्य प्राणान् त्यजामि'। एवं निश्चित्य (ध) दर्भमयीं रज्जुं विधाय स्वकण्ठे पाशं नियोज्य शाखायाम् आत्मानं निबध्य यावत् प्रक्षिपति, तावदेकः पुमान् आकाशस्थः एव इदमाह,—'भो भोः सोमिलक ! मा एवं (न) साहसं कुरु, अहं ते वित्तापहारकः, न ते भोजनाच्छादनाभ्यधिकां (प) वराटिकामपि सहामि ; तद्गच्छ स्वगृहं प्रति। अन्यच्च, भवदीयसाहसेन अहं तुष्टः, तथा मे न स्यात् व्यर्थं दर्शनम् ; तत् प्रार्थ्यताम् अभीष्टो वरः कश्चित्'। सोमिलकः आह,—'यदि एवं, तद्देहि मे प्रभूतं धनम्'। स आह,—'भोः ! किं करिष्यसि भोगरहितेन धनेन ? यतः तव भोजनाच्छादनाभ्यधिका प्राप्तिरपि नास्ति। उक्तञ्च,—

> किं तया क्रियते लक्ष्म्या या वधूरिव केवला ? ।
> या च वेश्येव सामान्या पथिकैरुपभुज्यते ? ॥ १४१ ॥

(द) उपालम्भयसि—तिरस्करोषि, [ उपपूर्वकात् लभधातोः स्वार्थे णिचि नुमागमः "लभेश्च" (७।१।६४ पा०) इति सूत्रात् ; उपालभसे इति तु पश्चिमाञ्चल-प्रयोग एवात्र समीचीनम् ]।

(ध) दर्भमयीं—कुशमयीम् ; [ दर्भनिर्मितामिति "मयड्वैतयोः" (४।३।१४३ पा०) इति सूत्रात् अवयवार्थे मयट् ]।

(न) साहसं—हठकारिताम्। वित्तापहारकः,—धनहर्ता।

(प) वराटिकामपि—कपर्दकमपि, न सहामि—सर्षयितुं न शक्नोमीत्यर्थः, [ सहधातोः वैकल्पिकचौरादिकस्य अतर्थकस्य रूपमेतत् ; 'साहयति' 'सहति' च अटि रूपद्वयं बोद्धव्यम् ]।

किमिति।—या लक्ष्मीः, केवला वधूरिव कुवेव, पुत्रवधूरिवेत्यर्थः, केवलं पुत्रस्यैव भोग्या न आत्मनः इति भावः ; या च लक्ष्मीः, सामान्या साधारणी, वेश्येव कुलटेव,

सोमिलक आह,—'यद्यपि भोगो नास्ति, तथाऽपि तद्भवतु।

उक्तञ्च,—कृपणोऽप्यकुलीनोऽपि सज्जनैर्वर्जितः सदा।

सेव्यते स नरो लोके यस्य स्याद् वित्तसञ्चयः॥ १४२॥

तथा च,—शिथिलौ च सुबद्धौ च पततः पततो न वा।

निरीक्षितौ मया भद्रे! दश वर्षाणि पञ्च च'॥ १४३॥

पुरुष आह,—'किमेतत्'? सोऽब्रवीत्,—

## कथा ६।

'कस्मिंश्चित् अधिष्ठाने (क) तीक्ष्णविषाणो नाम महावृषभः प्रतिवसति स्म। स च (ख) मदातिरेकात् परित्यक्तनिजयूथः शृङ्गाभ्यां नदीतटानि विदारयन् स्वेच्छया मरकतसदृशानि शष्पाणि भक्षयन् अरण्यचरो बभूव।

अथ तत्र एव वने प्रलोभको नाम शृगालः प्रतिवसति स्म। स कदाचित् स्वभार्य्यया सह नदीतीरे सुखोपविष्टः तिष्ठति।

---

पथिकैः सर्वसाधारणैरित्यर्थः, उपभुज्यते; न तु स्वयमित्यर्थः; तया लक्ष्म्या सम्पदा, किं क्रियते? न किमपि प्रयोजनं तत्र; पुत्रस्यैव भोगार्हा भवतु अन्येषां वा, या नात्मभोगसाधिका, सा नैव काम्या इति भावः॥ १४१॥

कृपण इति।—यस्य वित्तसञ्चयः धनसङ्ग्रहः, सञ्चितं धनमिति यावत्, स्यात्, सः नरः कृपणः व्ययवर्जितः, अकुलीनः असत्कुलप्रसूतः, तथा सज्जनैः वर्जितः परित्यक्तोऽपि, सदा लोके संसारे, सेव्यते पूज्यते, लोकैरिति शेषः; धनस्यैव मान-हेतुत्वादिति भावः॥ १४२॥

शिथिलाविति।—हे भद्रे! मया दश पञ्च च वर्षाणि पञ्चदशवत्सरान् व्याप्य, [अत्र "कालाध्वनोरत्यन्तसंयोगे" (२।३।५पा०) इति द्वितीया] शिथिलौ च लम्बमानौ चेत्यर्थः, सुबद्धौ दृढसंश्लिष्टौ च, पततः न वा पततः, वृषणाविति शेषः, निरीक्षितौ दृष्टौ; चाञ्चल्यात् पतनसन्देहास्पदीभूततया इति भावः, तात्पर्य्यमस्य परतः स्फुटीभविष्यति॥१४३॥

(क) तीक्ष्णविषाणः,—निशिताग्रशृङ्गः।

(ख) मदातिरेकात्—गर्वाधिक्यात्। मरकतसदृशानि—हरिद्वर्णमणिविशेष-तुल्यानि, श्यामलानि इत्यर्थः। शष्पाणि—तृणानि।

अत्रान्तरे स तीक्ष्णविषाणो जलार्थं तदेव (भ) पुलिनम् अवतीर्णः ; ततश्च तस्य लम्बमानौ वृषणौ अवलोक्य शृगाल्या शृगालोऽभिहितः,—'स्वामिन् ! पश्य, अस्य वृषभस्य मांसपिण्डौ लम्बमानौ यथा स्थितौ, तदेतौ क्षणेन प्रहरेण वा पतिष्यतः ; एवं ज्ञात्वा भवता (म) पृष्ठानुयायिना भाव्यम्'। शृगाल आह,—'प्रिये ! न ज्ञायते कदाचित् एतयोः पतनं भविष्यति वा न वा, तत् किं वृथा श्रमाय मां नियोजयसि ? अत्रस्थः तावत् जलार्थम् आगतान् मूषकान् भक्षयिष्यामि (य) समं त्वया, मार्गोऽयं यतः तेषाम्। अपरं, यदि त्वां (र) मुक्त्वा अस्य तीक्ष्णविषाणस्य वृषभस्य पृष्ठे गमिष्यामि, तदा आगत्य अन्यः कश्चिदेतत् स्थानं समाश्रयिष्यति। न एतत् युज्यते कर्त्तुम्।

उक्तञ्च,—यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते।

ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च' ॥ १४४ ॥

शृगाली आह,—'भोः ! कापुरुषः त्वं यत्किञ्चित् प्राप्तं, तेनापि सन्तोषं करोषि।

उक्तञ्च,—सुपूरा स्यात् कुनदिका सुपूरो मूषिकाञ्जलिः।

सुसन्तुष्टः कापुरुषः स्वल्पकेनापि तुष्यति ॥ १४५ ॥

---

(भ) पुलिनं—तोयोत्थितं तटम्। वृषणौ—अण्डकोषौ।

(म) पृष्ठानुयायिना—पश्चाद्गामिना, अनुसरणपरेण इत्यर्थः।

(य) समं—सह। यतः,—यस्मात् हेतोः, तेषां—मूषकाणाम्, अयं मार्गः,—पन्थाः।

(र) मुक्त्वा—विहाय।

य इति।—यो जनः, ध्रुवाणि निश्चितानि, परित्यज्य त्यक्त्वा, अध्रुवाणि अनिश्चितानि, निषेवते आश्रयति, तस्य ध्रुवाणि नश्यन्ति, अध्रुवञ्च अनिश्चितं पुनः, नष्टमेव पूर्वमेव नष्टमित्यर्थः ; "नापमोच्य परं स्थानं पूर्वमायतनं त्यजेत्" इति भावः ॥ १४४॥

सुपूरेति।—कुनदिका क्षुद्रा नदी, सुपूरा अल्पेनैव पूरणीया, स्यात्, मूषिकस्य अञ्जलिः अतिक्षुद्र इति भावः, सुपूरः अल्पेनैव पूर्य्यः, [ सर्वत्र सुपूरशब्दे कर्मणि खल्-

तस्मात् पुरुषेण सदा एव उत्साहवता भाव्यम् ।

उक्तञ्च,—यत्रोत्साहसमारम्भो यत्राऽऽलस्यविहीनता ।
नयविक्रमसंयोगस्तत्र श्रीरचला ध्रुवम् ॥ १४६ ॥
तद्दैवमिति सञ्चिन्त्य त्यजेन्नोद्योगमात्मनः ।
अनुद्योगं विना तैलं तिलानां नोपजायते ॥ १४७ ॥

अपरञ्च,—यः स्तोकेनापि सन्तोषं कुरुते मन्दधीर्जनः ।
तस्य भाग्यविहीनस्य दत्ता श्रीरपि मार्ज्यते ॥ १४८ ॥

यच्च त्वं वदसि, एतौ पतिष्यतो न वेति, तदपि अयुक्तम् ।

प्रत्यय: ] तथा सुसन्तुष्ट: स्वावस्थायामेव परितुष्ट: इत्यर्थ:, कापुरुष: ["कुगति—" ( २।२।१८ पा० ) इति नित्यसमास:, ततश्च "विभाषा—" ( ६।३।१०६ पा० ) इति कुशब्दस्य 'का' आदेशे कापुरुष: कुपुरुष इति ] अधमो नर:, स्वल्पकेनापि, वस्तुनेति शेष:, तुष्यति, उत्तमस्तु न तथा इति भाव: ॥ १४५ ॥

यत्रेति ।—यत्र उत्साहेन समारम्भ: सम्यक् उद्योग:, ("आरम्भस्तु त्वरायां स्यादुद्यमे वधदर्पयो:" इति मेदिनी ) यत्र आलस्यविहीनता अनालस्यं, श्रमशीलता इत्यर्थ:, तथा नयविक्रमयो: नीतिपुरुषकारयो:, संयोग: समावेश:, तत्र श्री: सम्पत्, ध्रुवं निश्चितम्, अचला स्थिरा सती, तिष्ठतीति शेष: ; पौरुषपक्षपातिन्य: सम्पद इति हृदयम् ॥ १४६ ॥

तदिति ।—तत् तस्मात्, उत्साहसमारम्भादौ श्रिया अचलत्वेनावस्थानादित्यर्थ:, यद्वा,—तत् प्रसिद्धम् इत्यर्थ: ; दैवम् अप्रतिसमाधेयमिति भाव:, इति सञ्चिन्त्य आत्मन: उद्योगं पुरुषकारं, न त्यजेत् ; तथा हि, अनुद्योगं पीडनयन्त्रेण सह योगं, पुरुषव्यापारमिति यावत्, विना पीडनादृते इति भाव:, तिलानां तैलं न उपजायते न बहि:प्रकटीभवतीत्यर्थ: ; पौरुषादेव कार्य्यसिद्धि: भवतीति भाव: ॥ १४७ ॥

य इति ।—य: मन्दधी: मूढमति:, जन: स्तोकेनापि अल्पेनैव, सन्तोषं कुरुते सन्तुष्टो भवति इत्यर्थ:, भाग्यविहीनस्य मन्दभाग्यस्य, तस्य दत्ताऽपि, केनचिदिति शेष:, श्री: सम्पत्, मार्ज्यते शोध्यते, तादृशकापुरुषसमीपे अवस्थानजनितदोषवादपरिहारार्थं तस्मात् पलाय्य आत्मा निर्दोषीक्रियते इत्यर्थ: ; स्वयमेवेति शेष: ; "सम्पदा सुस्थिरम्मन्यो भवति स्वल्पयाऽपि य: । कृतकृत्यो विधिर्मन्ये न वर्द्धयति तस्य ताम् ॥" इति भाव: । [ पौराणिकास्तु मार्ज्यते; विनश्यति इत्यर्थ इत्यभिप्रायमिति ] ॥ १४८ ॥

उक्तञ्च,—कृतनिश्चयिनो वन्द्यो तुङ्गिमा नः प्रशस्यते ।
चातकः को वराकोऽयम् ? यस्येन्द्रो वारिवाहकः ॥ १४९ ॥

अपरं, मूषकमांसस्य ( ख ) निर्विण्णा अहम्, एतौ च मांसपिण्डौ पतनप्रायौ दृश्येते, तत् सर्वथा नान्यथा कर्त्तव्यम्' इति ।

अथ असौ तदाकर्ण्य मूषकप्राप्तिस्थानं परित्यज्य तीक्ष्णविषाणस्य पृष्ठमन्वगच्छत् । अथवा साधु इदमुच्यते,—

तावत् स्यात् सर्वकृत्येषु पुरुषोऽत्र स्वयं प्रभुः ।
स्त्रीवाक्याङ्कुशविक्षुण्णो यावन्नो म्रियते बलात् ॥ १५० ॥
अकृत्यं मन्यते कृत्यमगम्यं मन्यते सुगम् ।
अभक्ष्यं मन्यते भक्ष्यं स्त्रीवाक्यप्रेरितो नरः ॥ १५१ ॥

कृतेति ।—कृतनिश्चयिनः ["न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः" इति नियमात् कृतनिश्चयिनः इति पदस्य असाधुत्वेऽपि एतन्नियमस्यासार्वत्रिकत्वस्वीकारात् कथञ्चित् समाधेयम् ] कार्य्यसिद्धौ दृढसङ्कल्पस्य इत्यर्थः, वन्द्यो वन्दनीयः, समादरणीयः इत्यर्थः, तुङ्गिमा [तुङ्गशब्दात् भावे इमन्प्रत्ययः] उच्चाभिलाष इति यावत्, नः अस्माकं, प्रशस्यते प्रशंसनीयो भवति, ["प्रशस्यते" इति कर्मकर्त्तरि प्रयोगः, "नः" इति सम्बन्धविवक्षायां षष्ठी ] ; तथा हि, वराकः दीनः, अयं चातकः कः ? यस्य चातकस्य, कृतनिश्चयस्येति भावः, इन्द्रः देवराजः, वारिवाहकः जलदाता ; चातकः अतिक्षुद्रोऽपि कार्य्यं साधयामीति कृतनिश्चयः सन् जलार्थं देवराजं प्रार्थयते, तेन च देवराजोऽपि तस्य मनोरथं पूरयतीति भावः ॥ १४९ ॥

( ख ) निर्विण्णा—विरक्ता, मूषकमांसभक्षणे न मम रुचिरस्तीति भावः ।

तावदिति ।—अत्र संसारे, पुरुषः यावत् बलात् हठात्, स्त्रीणां वाक्यमेव अङ्कुशः ताड़नदण्डविशेषः, तेन विक्षुण्णः विताड़ितः, नो म्रियते न तिष्ठति, तावत् सर्वेषु कृत्येषु कार्य्येषु, स्वयं प्रभुः स्वाधीनः, स्यात् ; स्त्रीवश्यानां हि स्वाधीनता नश्यतीति भावः ॥१५०॥

अकृत्यमिति ।—स्त्रीणां वाक्येन प्रेरितः नियुक्तः, चालितः इत्यर्थः, नरः अकृत्यम् अकार्य्यं, कृत्यं मन्यते, अगम्यं सुगं सुगमं, मन्यते, तथा अभक्ष्यं भक्ष्यं मन्यते ; तथा च प्रतिकूलमपि सर्वम् अनुकूलमिव मन्यते स्त्रैण इति भावः ; "तावदेव प्रधानं स्यात् यावद्गुरुजने रतः । पुरुषो योषितां यावन्न शृणोति वचो रहः ॥" इति मनूक्तिस्मरणात् स्त्रीवश्यता न समीचीना इति निष्कर्षः ॥ १५१ ॥

एवं स: (व) तस्य पृष्ठत: सभार्य्य: परिभ्रमन् चिरकालम् अनयत्, न च (श) तयो: पतनम् अभूत्। ततश्च (ष) निर्वेदात् पञ्चदशे वर्षे शृगाल: स्वभार्य्यामाह,—

'शिथिलौ च सुबद्धौ च पतत: पततो न वा।
निरीक्षितौ मया भद्रे! दश वर्षाणि पञ्च च॥ १५२॥

एतयो: तत्पश्चादपि पातो न भविष्यति, तत् तदेव स्वस्थानं गच्छाव:'। अतोऽहं ब्रवीमि—'शिथिलौ च सुबद्धौ च' इति'।

पुरुष आह,—'यदि एवं, तद्गच्छ भूयोऽपि वर्द्धमानपुरम्। तत्र द्वौ वणिक्पुत्रौ वसत:, एक: (स) गुप्तधन:, द्वितीय: (ह) उपभुक्तधन:। तत: तयो: (क) स्वरूपं बुद्ध्वा एकस्य वर: प्रार्थनीय:। यदि ते धनेन प्रयोजनम् (ख) अभक्षितेन, तत: त्वामपि गुप्तधनं करोमि; अथवा दत्तभोग्येन धनेन ते प्रयोजनं तदुपभुक्तधनं करोमि' इति। एवमुक्त्वा अदर्शनं गत:।

सोमिलकोऽपि विस्मितमना भूयोऽपि वर्द्धमानपुरं गत:।

---

(व) तस्य—वृषभस्य। पृष्ठत:,—पश्चात्, [आद्यादित्वात् सप्तम्यां तसिल्प्रत्यय:]।

(श) तयो:,—वृषणयो:।

(ष) निर्वेदात्—खेदात्।

शिथिलाविति।—व्याख्यातं प्राक् १४२ सङ्ख्यकश्लोके। अत्रायं भाव:, तथा हि,—कृपण: धनं वितरतु न वा, तस्य पेटकाबद्धं धन "यदि कदाऽपि अस्माकं भोग्यं जायेत" इति धिया जना: तं सेवन्ते, यथा शृगालौ सुबद्धावपि वृषभवृषणौ शिथिलत्वात् अचिरादेव पतिष्यमाणौ मत्वा दीर्घकालं तदनुसरणपरौ अभूताम् इति॥ १५२॥

(स) गुप्तधन:,—रक्षितधन:।

(ह) उपभुक्तधन:,—व्ययितधन:।

(क) स्वरूपं—धनभोगादिविषयकपरिचयम् इत्यर्थ:। बुद्ध्वा—ज्ञात्वा।

(ख) अभक्षितेन—भोगरहितेन। दत्तभोग्येन—दत्तं भोग्यं वस्तु येन तादृशेन उपभोगार्हेण इत्यर्थ:।

अथ सन्ध्यासमये श्रान्तः कथमपि तत् पुरं प्राप्तो गुप्तधनगृहं पृच्छन् ( ग ) कृच्छ्रात् लब्ध्वा ( घ ) अस्तमितसूर्य्ये प्रविष्टः।

अथ असौ भार्य्यापुत्रसमेतेन गुप्तधनेन ( ङ ) निर्भर्त्स्यमानो हठात् गृहं प्रविश्य उपविष्टः। ततश्च भोजनवेलायां तस्यापि (च) भक्तिवर्जितं किञ्चित् अशनं दत्तम्। ततश्च भुक्त्वा तत्र एव यावत् सुप्तो निशीथे, पश्यति तावत् तौ अपि द्वौ पुरुषौ परस्परं मन्त्रयतः। तत्र एक आह,—'भोः कर्त्तः! किं त्वया अस्य गुप्तधनस्य ( छ ) अन्योऽधिको व्ययः निर्मितः, यत् सोमिलकस्य अनेन भोजनं दत्तम्? तदयुक्तं त्वया कृतम्'। स आह,—'भोः कर्मन्! न मम अत्र दोषः, मया पुरुषस्य लाभप्राप्तिर्दातव्या, तत्परिणतिः पुनः त्वदायत्ता' इति।

अथ ( ज ) असौ यावदुत्तिष्ठति, तावत् गुप्तधनः विसूचिकया खिद्यमानो रुजाभिभूतः क्षणं तिष्ठति। ततो द्वितीयेऽह्नि ( झ ) तद्दोषेण कृतोपवासः सञ्जातः। सोमिलकोऽपि प्रभाते

( ग ) कृच्छ्रात—कष्टेन।

( घ ) अस्तमितसूर्य्ये—अस्तमितः,—अस्तङ्गतः सूर्य्यः तस्मिन् सूर्य्ये अस्तं गते, प्रदोषे इत्यर्थः।

( ङ ) निर्भर्त्स्यमानः,—तिरस्क्रियमाणः।

( च ) भक्तिवर्जितम्—अनुरागविहीनम्, अनादरोपकल्पितमित्यर्थः, अशनं—भोजनम्।

( छ ) अन्य इत्यादि।—स्वोदरपूरणमात्रव्ययादतिरिक्तः व्ययः, निर्मितः,—कल्पितः, निर्द्धारित इत्यर्थः। सोमिलकस्य—सोमिलकाय इत्यर्थः, [ अत्र सम्प्रदाने सम्बन्धविवक्षया षष्ठी ]।

( ज ) असौ—सोमिलकः। उत्तिष्ठति—जागर्त्ति। विसूचिकया—व्याधिविशेषेण। खिद्यमानः,—पीड्यमानः।

( झ ) तद्दोषेण—तेन दोषेण, व्याधिनेति भावः; सोमिलकाय एकवारभोजनदानेन आत्मनस्तदंशस्य स्वल्पीभावात् एकदिनोपवासेन तत्पूरणं कृतं कर्मणेति भावः।

तद्गृहात् निष्क्रम्य उपभुक्तधनगृहं गतः। तेनापि च अभ्युत्थानादिना सत्कृतः ( ञ ) विहितभोजनाच्छादनसम्मानः तस्य एव गृहे भव्यशय्यायाम् आरुह्य सुष्वाप। ततश्च निशीथे यावत् पश्यति, तावत् तौ एव द्वौ पुरुषौ मिथो मन्त्रयतः।

अथ तयोः एक आह,—'भोः कर्त्तः! अनेन सोमिलकस्य उपकारं कुर्वता प्रभूतो व्ययः कृतः, तत् कथय, कथम् अस्य ( ट ) उद्धारकविधिः भविष्यति? अनेन सर्वम् ( ठ ) एतत् व्यवहारकगृहात् समानीतम्'। स आह,—'भोः कर्मन्! मम कृत्यमेतत्, परिणतिः त्वदायत्ता' इति।

अथ प्रभातसमये राजपुरुषः ( ड ) राजप्रसादजं वित्तम् आदाय समायात उपभुक्तधनाय समर्पयामास। तत् दृष्ट्वा सोमिलकः चिन्तयामास,—'सञ्चयरहितोऽपि वरमेष उपभुक्तधनः, न असौ गुप्तधनः।

उक्तञ्च,—अग्निहोत्रफला वेदाः शीलवित्तफलं श्रुतम्।
रतिपुत्त्रफला दारा दत्तभुक्तफलं धनम्॥ १५३॥

(ञ) विहितेति।—विहितः,—कृतः, भोजनाच्छादनाभ्यां सम्मानः,—आदरः यस्य तथोक्तः। भव्यशय्यायां—योग्यशयनीये, उत्तमशय्यायामित्यर्थः, ("भव्यं शुभे च सत्ये च योग्ये भाविनि च त्रिषु" इति मेदिनी)।

( ट ) उद्धारकविधिः,—परिशोधविधानं, व्ययितधनस्य पूरणमिति यावत्।

( ठ ) एतत्—सोमिलकस्य परिचर्य्यार्थं द्रव्यम्। व्यवहारकगृहात्—व्यवसायिगृहादित्यर्थः; समानीतं—मूल्यमदत्त्वैव कालान्तरे दास्यामि इति प्रतिश्रुत्य सङ्गृहीतमित्यर्थः।

( ड ) राजप्रसादजं—कुतोऽपि कारणात् राज्ञा पुरस्काररूपेण दत्तमित्यर्थः, आतिथ्यसत्काररूपकर्मफलभूतमिदं विधिप्रेरितमिति भावः।

अग्नीति।—वेदाः अग्निहोत्रं तन्नामकयागानुष्ठानं, मन्त्रकरणकवह्निस्थापनपूर्वकहोमादिकं वा, फलं प्रयोजनं येषां तादृशाः, साग्निकत्वमेव वेदाध्ययनफलमित्यर्थः, श्रुतं शास्त्रज्ञानं, शीलं सुचरित्रं, वित्तं धनञ्च, फलं प्रयोजनं यस्य तादृशं, विद्वान्

तद्विधाता मां दत्तभुक्तधनं करोतु, न कार्य्यं मे गुप्तधनेन' । ततः सोमिलको दत्तभुक्तधनः सञ्जातः । अतोऽहं ब्रवीमि,—

'अर्थस्योपार्जनं कृत्वा नैव भोगं समश्नुते ।
अरण्यं महदासाद्य मूढः सोमिलको यथा' ॥ १५४ ॥

तद्भद्र हिरण्यक ! एवं ज्ञात्वा धनविषये सन्तापो न कार्य्यः अथ विद्यमानमपि धनं (ढ) भोज्यवन्ध्यतया तत् अविद्यमानं मन्तव्यम् ।

उक्तञ्च,—गृहमध्यनिखातेन धनेन धनिनो यदि ।
भवामः किं न तेनैव धनेन धनिनो वयम् ? ॥ १५५ ॥

तथा च,—उपार्जितानामर्थानां त्याग एव हि रक्षणम् ।
तड़ागोदरसंस्थानां परीवाह इवाम्भसाम् ॥ १५६ ॥

जनः सुशीलो भवति, सत्पात्रतया सम्पदञ्च लभते इति भावः ; दाराः [ दारशब्दस्तु पुंलिङ्गः नित्यबहुवचनान्तः ] स्त्रियः, रतिः सुरतं, पुत्रश्च फलं येषां तादृशाः, पुत्रार्थं रत्यर्थं च क्रियते भार्य्येति भावः ; धनं, दत्तं दानं, भुक्तं भोगश्च, फलं यस्य तथाभूतं, भवतीति शेषः, धनं भुज्यते दीयते चेति भावः ; अन्यथा सर्वं निष्फलमिति तात्पर्य्यम् ॥ १५३ ॥

अर्थस्येति ।—व्याख्यातं प्राक् १२९ सङ्ख्यकश्लोके ॥ १५४ ॥

( ढ ) भोज्यवन्ध्यतया—भोगफलाभावेन, केवलं सञ्चयवासनया स्वेषां भोजनादि-व्ययनिर्वाहेऽपि बद्धमुष्टितया इत्यर्थः ।

गृहेति ।—यदि, मानवाः इति कर्त्तृपदमत्र ऊहनीयम् ; गृहमध्ये निखातेन भूतलप्रोथितेन इत्यर्थः, भोगसाधनागर्हेण इति हृदयं, धनेन धनिनः धनवन्तः, भवन्ति इति शेषः, तदा वयमपि तेनैव धनेन किं कथं, धनिनः न भवामः ? तत् धनं तेषाम् अस्माकञ्च एतदिति नास्ति विशेषः, भोगराहित्यमेवात्र नियामकमिति भावः ॥ १५५ ॥

उपार्जितानामिति ।—तड़ागोदरसंस्थानां सरोवरमध्यस्थितानाम्, अम्भसां जलानां, परीवाहः [ परिपूर्ववह्धातोः घञि रूपम् ; अत्र "उपसर्गस्य घञ्यमनुष्ये बहुलम्" ( ६।३।१२२ पा० ) इति सूत्रेण उपसर्गस्य दीर्घता ] इव जलोच्छ्वास इव, जलनिःसारणमिव इत्यर्थः, उपार्जितानाम् अर्थानां धनानां, त्यागः एव दानमेव, रक्षणं हि रक्षणोपायः, तन्नाशस्यावश्यम्भावित्वादिति भावः ॥ १५६ ॥

दातव्यं भोक्तव्यं धनविषये सञ्चयो न कर्त्तव्यः।
पश्येह मधुकरीणां सञ्चितमर्थं हरन्त्यन्ये ॥ १५७ ॥

अन्यच्च,—दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥१५८॥

एवं ज्ञात्वा विवेकिना न स्थित्यर्थं वित्तोपार्जनं कर्त्तव्यं, यतो दुःखाय तत्।

उक्तञ्च,—धनादिकेषु विद्यन्ते येऽत्र मूर्खाः सुखाशया।
तप्तग्रीष्मेण सेवन्ते शैत्यार्थं ते हुताशनम् ॥ १५९ ॥

सर्पाः पिबन्ति पवनं न च दुर्बलास्ते
शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति।
कन्दैः फलैर्मुनिवरा गमयन्ति कालं
सन्तोष एव पुरुषस्य परं निधानम् ॥ १६० ॥

---

दातव्यमिति।—धनविषये दातव्यं दानं कर्त्तव्यं, भोक्तव्यं भोगः कर्त्तव्यः, सञ्चयः सङ्ग्रहः, न कर्त्तव्यः; पश्य, इह संसारे, मधुकरीणां (मधुकराणामिति वा पाठः) मधुमक्षिकाणां, केवलसञ्चयशीलानामिति भावः, सञ्चितम् अर्थं मधुरूपं धनम्, अन्ये जनाः, हरन्ति; तथा च मधुकर्य्येव सदा केवलसञ्चयशीलेन न भवितव्यमिति भावः। आर्य्या वृत्तम् ॥ १५७ ॥

दानमिति।—वित्तस्य धनस्य, दानं, भोगः, नाशश्च इति तिस्रो गतयः अवस्थाः, भवन्ति; यो जनः, न ददाति, न भुङ्क्ते, तस्य जनस्य, तृतीया गतिः नाशः इति भावः, भवति, धनानामिति शेषः। आर्य्या वृत्तम् ॥ १५८ ॥

धनादिकेष्विति।—अत्र संसारे, ये मूर्खाः धनादिकेषु भोग्यवस्तुषु इत्यर्थः, सुखाशया सुखमभिलष्य इत्यर्थः, विद्यन्ते तिष्ठन्ति, धनादिनैव सुखं भवति इति ये मन्यन्ते इत्यर्थः, ते तप्तग्रीष्मेण [ उपलक्षणे तृतीया ] उपलक्षिताः, आर्त्ताः सन्तः इत्यर्थः; "तप्ता ग्रीष्मेण" इति पाठकल्पना साध्वी, शैत्यार्थं हुताशनम् अग्निं, सेवन्ते आश्रयन्ति; धनादिना सुखाशा ग्रीष्मार्त्तस्य अग्निसेवनमिवेति भावः। निदर्शनाऽलङ्कारः ॥ १५९ ॥

सर्पा इति।—सर्पाः पवनं वायुं, पिबन्ति, न च ते सर्पाः दुर्बलाः; वनगजाः शुष्कैः नीरसैः, तृणैः भक्ष्यैरिति भावः, बलिनः बलवन्तः, भवन्ति, मुनिवराः कन्दैः मूलविशेषैः, फलैश्च कालं गमयन्ति यापयन्ति, जीवन्तीति यावत्; एते सन्तोषेणैव

सन्तोषामृततृप्तानां यत् सुखं शान्तचेतसाम् ।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ? ॥ १६१॥
पीयूषमिव सन्तोषं पिबतां निर्वृतिः परा ।
दुःखं निरन्तरं पुंसामसन्तोषवतां पुनः ॥ १६२ ॥
निरोधाच्चेतसोऽक्षाणि निरुद्धान्यखिलान्यपि ।
आच्छादिते रवौ मेघैराच्छन्नाः स्युर्गभस्तयः ॥ १६३ ॥
वाञ्छाविच्छेदनं प्राहुः स्वास्थ्यं शान्ता महर्षयः ।
वाञ्छा निवर्त्तते नार्थैः पिपासेवाग्निसेवनैः ॥ १६४ ॥

सन्तुष्टा इत्याशयः ; तस्मात् सन्तोष एव यत्किञ्चिल्लाभेनापि आत्मतृप्तिरेव, दुराकाङ्क्षा-वर्जनमेवेति भावः, पुरुषस्य परं निधानं रत्नम्, आश्रयो वा । सामान्येन विशेष-समर्थनरूपोऽर्थान्तरन्यासः । वसन्ततिलकं वृत्तम् ॥ १६० ॥

सन्तोषेति ।—सन्तोष एव अमृतं, तेन तृप्तानां परितोषं गतानां, शान्तचेतसां शान्त [ शम्-धातोः णिचि निष्ठाप्रत्यये "वा दान्तशान्तेत्यादि—" ( ७।२।२७ पा० ) इत्यनेन निपातनात् सिद्धम्; पक्षे शमित इति रूपम्] चेतो येषां तथोक्तानां निःस्पृह-चित्तानां, यत् सुखं, भवतीति शेषः, धनलुब्धानाम् अर्थगृध्नूनाम्, अत एव इतश्च इतश्च [ इदम्-शब्दात् सप्तम्यां तसिल्प्रत्ययः ] समन्तादित्यर्थः, धावतां धनार्थं चेष्टमानानाम् इत्यर्थः, जनानामिति शेषः, तत् सुखं कुतः ? कस्मात् ? भवति इति शेषः; नैव भवति इत्यर्थः ; लोभपरित्याग एव सुखहेतुः सर्वेषाम् इति भावः ॥ १६१ ॥

पीयूषमिवेति ।—पीयूषमिव अमृतमिव, सन्तोषं परितोषं, पिबतां सेवमानानां, सादरमाश्रयतामित्यर्थः, जनानामिति शेषः, परा निर्वृतिः परमं सुखं, भवतीति शेषः । असन्तोषवताम् असन्तुष्टानां, केनापि अपरितुष्यतामित्यर्थः, पुंसां पुरुषाणां, पुनः किन्तु, निरन्तरम् अविच्छन्नं, दुःखं, भवतीति शेषः ; सर्वत्र असन्तोषस्यैव दुःखमूलकत्वादिति भावः ॥ १६२ ॥

निरोधादिति ।—चेतसः चित्तस्य, निरोधात् दमनादित्यर्थः, अखिलानि समस्तानि, अक्षाणि इन्द्रियाणि अपि, श्रोत्रादीन्यपीत्यर्थः, निरुद्धानि वशीकृतानि, दान्तानि इत्यर्थः, भवन्तीति शेषः, मनःसंयोगादृते ज्ञानसामान्यस्यानुदयात् मनस एव सर्वेन्द्रियाध्यक्षत्वं वेदितव्यम् इति भावः ; तथा हि, रवौ सूर्य्ये, मेघैः आच्छादिते सति, गभस्तयः सूर्य्यकिरणाः, आच्छन्नाः स्युः । दृष्टान्तालङ्कारः ॥ १६३ ॥

वाञ्छेति ।—शान्ताः महर्षयः वाञ्छायाः वासनायाः, विच्छेदनं विध्वंसः, स्वास्थ्यं

अनिन्द्यमपि निन्दन्ति स्तुवन्त्यस्तुत्यमुच्चकैः ।
स्वापतेयकृते मर्त्याः किं किं नाम न कुर्वते ? ॥१६५॥
धर्मार्थं यस्य वित्तेहा तस्यापि न शुभावहा ।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ १६६ ॥

दानेन तुल्यो निधिरस्ति नान्यो
लोभाच्च नान्योऽस्ति रिपुः पृथिव्याम् ।
विभूषणं शीलसमं न चान्यत्
सन्तोषतुल्यं धनमस्ति नान्यत् ॥ १६७ ॥

सुस्थतां सुखमित्यर्थः, प्राहुः कथयन्ति ; अग्निरिन्धनैः पिपासेव जलतृष्णेव, अर्थैः धनैः, वाञ्छा आकाङ्क्षा, न निवर्तते, परन्तु वर्द्धते एव इत्यर्थः, "हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते" इति भावः ॥ १६४ ॥

अनिन्द्यमिति ।—मर्त्याः मानवाः, स्वापतेयकृते धनार्थं, ("द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु" इत्यमरः) अनिन्द्यमपि निन्दानर्हमपि, जनमिति शेषः, निन्दन्ति, अस्तुत्यञ्च स्तुत्ययोग्यञ्च, उच्चकैः अतिमात्रं, स्तुवन्ति प्रशंसन्ति ; किं बहुना, किं किं नाम न कुर्वते ? सर्वमेव कुर्वते इत्यर्थः ; धनार्थं तेषां किमपि अकार्य्यं नास्तीति भावः ॥ १६५ ॥

धर्मार्थमिति ।—यस्य जनस्य, धर्मार्थं धर्मकार्य्यानुष्ठानार्थं, वित्तेहा धनार्जनचेष्टा, तस्यापि धर्मेप्सोरपि, सा चेष्टा इत्यूहनीयम् ; न शुभावहा न शुभकरी ; हि यतः, पङ्कस्य कर्दमस्य, प्रक्षालनात् [अत्र ल्यब्लोपे पञ्चमी] आदौ गात्रे पङ्कं प्रलिप्य पश्चात् तस्य प्रक्षालनमपेक्ष्य इत्यर्थः, दूरात् ["दूरान्तिकार्थेभ्यो द्वितीया च" (२।३।३५ पा०) इति सूत्रेण पञ्चमी,] अस्पर्शनं वरं मनाक् प्रियम् ; प्रथमतः धनार्जनहेतोः पापं सञ्चित्य ततः परं तत्कारणकधर्माचरणेन तदपनयनेच्छा स्वेच्छया सञ्चितकर्दमप्रक्षालनवत् नितरां हेयमिति भावः ॥ १६६ ॥

दानेनेति ।—दानेन तुल्यः समः, अन्यः अपरः, निधिः रत्नं, नास्ति, लोभात् [अत्र "अन्यारादितरर्त्तेदिक्—" (२।३।२९ पा०) इति सूत्रेण पञ्चमी] अन्यः पृथिव्यां रिपुः नास्ति ; शीलेन सत्स्वभावेन, समं तुल्यम्, अन्यत् अपरं, विभूषणञ्च न, अस्तीति शेषः, सन्तोषेण तुल्यम् अन्यत् धनं नास्ति । उपजातिः वृत्तम् ॥ १६७ ॥

दारिद्र्यस्य परा भूतिर्यन्मानद्रविणाल्पता ।
जरद्गवधनः शर्वः तथाऽपि परमेश्वरः ॥ १६८ ॥

सकृत् कन्दुकपातेन पतत्यार्य्यः पतन्नपि ।
तथा पतति मूर्खस्तु मृत्पिण्डपतनं यथा ॥ १६९ ॥

एवं ज्ञात्वा भद्र ! त्वया सन्तोषः कार्य्यः" इति । मन्थरक-वचनमाकर्ण्य वायस आह,—"भद्र ! मन्थरको यत् एवं वदति, तत् त्वया चित्ते कर्त्तव्यम् । अथवा साध्विदमुच्यते,—

सुलभाः पुरुषा राजन् ! सततं प्रियवादिनः ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ १७० ॥

अप्रियाण्यपि पथ्यानि ये वदन्ति नृणामिह ।
त एव सुहृदः प्रोक्ता अन्ये स्युर्नामधारकाः" ॥ १७१ ॥

---

दारिद्र्यस्येति ।—यत् या इत्यर्थकमव्ययम् ; मान एव द्रविणं धनं, तस्य अल्पता न्यूनता, सा एव दारिद्र्यस्य दैन्यस्य, परा भूतिः श्रेष्ठा सम्पत्, चरमोत्कर्षः इत्यर्थः ; तथा हि, शर्वः शम्भुः, जरद्गवधनः जरन् गौरिति जरद्गवः वृद्धोक्षः, ["गोरतद्धितलुकि" ( ५।४।९२ पा० ) इति समासान्तः टच् । "वृद्धोक्षस्तु जरद्गवः" इत्यमरः ] स एव धनं यस्य सः, जीर्णवृषभमात्रसमृद्धिरित्यर्थः, तथाऽपि परमेश्वरः ; निर्धनत्वेऽपि मानोन्नतत्वादिति भावः ; मानहीनतैव दरिद्रता नाम, न धनहीनता इत्यभिप्रायः ॥ १६८ ॥

सकृदिति ।—आर्य्यः सुजनः, पतन्नपि अधोगच्छन्नपि, कन्दुकपातेन कन्दुकपतनवत्, सकृत् एकवारं, पतति तत्क्षणादेव पुनरुत्पततीति भावः, मूर्खस्तु तथा पतति, यथा मृत्पिण्डपतनं मृत्पिण्डो यथा पतति ; मृत्पिण्डो यथा पतित्वा पुनर्नोत्पतति, तथा मूर्खोऽपि पतनानन्तरमभ्युदयं न लभते इति भावः ॥ १६९ ॥

सुलभा इति ।—हे राजन् ! सततं प्रियवादिनः प्रियभाषिणः, पुरुषाः सुलभाः सुप्रापाः, सर्व एव सततं श्रुतिसुखानि वक्तुं शक्नुवन्ति इति भावः, किन्तु अप्रियस्य श्रुतिकर्कशस्य, च अथ च, पथ्यस्य हितस्य, वचनस्य इति शेषः, वक्ता श्रोता च दुर्लभः, यः अप्रियं किन्तु हितम् उपदिशति, यश्च तत् शृणोति, तावुभौ दुर्लभौ इत्यर्थः ; मन्थरकस्तु एवं वक्ता इति भावः ॥१७० ॥

अप्रियाणीति ।—इह अस्मिन् संसारे, ये जनाः, नृणां पुरुषाणाम्, अप्रियाणि आपाततः असन्तोषकराण्यपि, पथ्यानि हितानि, परिणामसुखानीति यावत्,

अथ एवं जल्पतां तेषां चित्राङ्गो नाम हरिणो लुब्धकत्रासितः तस्मिन् एव सरसि प्रविष्टः।

अथ आयान्तं ससम्भ्रमम् अवलोक्य लघुपतनको वृक्षम् आरूढ़ः। हिरण्यको निकटवर्त्तिनं (थ) शरस्तम्बं प्रविष्टः। मन्थरकः सलिलाशयम् आस्थितः।

अथ लघुपतनको मृगं सम्यक् परिज्ञाय मन्थरकम् उवाच,—"एहि एहि सखे मन्थरक! मृगोऽयं तृषार्त्तोऽत्र समायातः सरसि प्रविष्टः, तस्य शब्दोऽयं, न मानुषसम्भवः" इति। तच्छ्रुत्वा मन्थरको देशकालोचितमाह,—"भो लघुपतनक! यथा अयं मृगो दृश्यते (त) प्रभूतम् उच्छ्वासम् उद्वहन् (थ) उद्भ्रान्तदृष्ट्या पृष्ठतोऽवलोकयति, तन्न तृषार्त्त एषः, नूनं लुब्धकत्रासितः; तज्ज्ञायताम् अस्य पृष्ठे लुब्धका आगच्छन्ति न वा? इति। उक्तञ्च,—भयत्रस्तो नरः श्वासं प्रभूतं कुरुते मुहुः।

दिशोऽवलोकयत्येव न स्वास्थ्यं व्रजति क्वचित्" ॥१७२॥

तच्छ्रुत्वा चित्राङ्ग आह,—"भो मन्थरक! ज्ञातं त्वया सम्यक् मे त्रासकारणम्, अहं लुब्धकशरप्रहारात् (द) उद्धारितः

वदन्ति आपन्ने, त एव सुहृदः [ सु शोभनं हृदयं येषां ते "सुहृद्दुर्हृदौ मित्रामित्रयोः" (५।४।१५० पा०) इति हृदयस्य हृदावः निपात्यते ] मित्राणि, प्रोक्ताः कथिताः, अन्ये तद्भिन्नाः पुनः, नामधारकाः सुहृद इति नाममात्रधारिणः, स्युः; न एते परमार्थतः सुहृद इति भावः॥ १७१ ॥

(थ) शरस्तम्बं—शराख्यतृणगुच्छम्।

(त) प्रभूतं—समधिकम्। उच्छ्वासं—निश्वासम्।

(थ) उद्भ्रान्तदृष्ट्या—चकितदर्शनेन।

भयत्रस्त इति।—भयेन त्रस्तः उद्विग्नः, नरः मुहुः पुनः पुनः, प्रभूतम् अधिकं, श्वासं कुरुते दीर्घं निश्वसिति इत्यर्थः, दिशः अवलोकयति समन्तात् निरीक्षते एव, तथा क्वचित् कुत्रापि, स्वास्थ्यं न व्रजति नाधिगच्छति॥ १७२ ॥

(द) उद्धारितः—निस्तीर्णः।

कष्टेन अत्र समायातः। मम यूथं तैः लुब्धकैः व्यापादितं भविष्यति; तत् शरणागतस्य मे दर्शय किञ्चित् अगम्यं स्थानं लुब्धकानाम्"। तदाकर्ण्य मन्थरक आह,—"भोः चित्राङ्ग! श्रूयतां नीतिशास्त्रं,—

द्वावुपायाविह प्रोक्तौ विमुक्तौ शत्रुदर्शने।
हस्तयोश्चालनादेको द्वितीयः पादवेगजः॥ १७२॥

तद्गम्यतां शीघ्रं (ध) सघनं वनं, यावत् अद्यापि न आगच्छन्ति ते दुरात्मानो लुब्धकाः"। अत्रान्तरे लघुपतनकः सत्वरम् अभ्युपेत्य उवाच,—"भो मन्थरक! गतास्ते लुब्धकाः स्वगृहोन्मुखाः प्रचुरमांसपिण्डधारिणः; तत् चित्राङ्ग! त्वं (न) विश्रब्धो वनात् बहिर्भव"।

ततः ते चत्वारोऽपि मित्रभावमाश्रिताः तस्मिन् सरसि मध्याह्नसमये वृक्षच्छायायाः (प) अधस्तात् सुभाषित-गोष्ठीसुखम् अनुभवन्तः सुखेन कालं नयन्ति। अथवा युक्तमेत-दुच्यते,—

---

द्वाविति।—इह संसारे, शत्रुदर्शने, जाते इति शेषः, वैरिकृतपराभवसम्भावनायां समागतायाम् इति भावः, विमुक्तौ परित्राणविषये, द्वौ उपायौ साधने, प्रोक्तौ कथितौ, एकः, उपाय इति शेषः, हस्तयोश्चालनात् करयोः व्यापारात्, हस्ताभ्यां प्रहारादिरूप इति भावः; द्वितीयः, उपाय इत्यनुषङ्गः, पादवेगजः चरणवेगजनितः, दूरतः पलायनरूप इति भावः॥ १७२॥

(ध) सघनं—सान्द्रं, निबिडमिति भावः।

(न) विश्रब्धः,—विश्वस्तः, निःशङ्क इति यावत्। वनादिति।—["पञ्चम्या—" (२।१।१२पा०) इति सूत्रे "अपपरिबहिरिति समासविधानात् ज्ञापकात् बहिर्योगे पञ्चमी" इति काशिकावचनात् बहिःशब्दयोगे पञ्चमी]।

(प) अधस्तात्—तलदेशे। सुभाषितेति।—सुभाषिते—सूक्तावपि, या गोष्ठी—सभा, तया सुखम्—आनन्दम्।

सुभाषितरसास्वाद-बद्धरोमाञ्चकञ्चुकाः ।
विनाऽपि सङ्गमं स्त्रीणां सुधियः सुखमासते ॥ १७४ ॥
सुभाषितमयद्रव्य-सङ्ग्रहं न करोति यः ।
स तु प्रस्तावयज्ञेषु कां प्रदास्यति दक्षिणाम् ? ॥ १७५ ॥
तथा च,—सकृदुक्तं न गृह्णाति स्वयं वा न करोति यः ।
यस्य सम्पुटिका नास्ति कुतस्तस्य सुभाषितम् ? ॥१७६॥

अथ एकस्मिन्नहनि गोष्ठीसमये चित्राङ्गो न आयातः ; ततः ते व्याकुलीभूताः परस्परं जल्पितुम् आरब्धाः,—"अहो ! किमद्य सुहृन्न समायातः? किं सिंहादिभिः क्वापि व्यापादितः? उत लुब्धकैः? अथवा अनले प्रपतितः? (फ) गर्त्तविषमे वा नवतृणलौल्यादिति? अथवा साधु इदमुच्यते,—

सुभाषितेति ।—सुधियः विद्वांसः, सुभाषितस्य मधुरालापस्य, रसास्वादेन बद्धः जनितः, रोमाञ्चः लोमहर्षणमेव, कञ्चुकः वारबाणः येषां तादृशाः सन्तः, स्त्रीणां सङ्गमं साहचर्य्यं, विनाऽपि सुखम् आसते अवतिष्ठन्ते ; सुधियां स्त्रीसङ्गमादपि मित्रसङ्गः नितरां प्रीतिप्रदः इति तात्पर्य्यम् ॥ १७४ ॥

सुभाषितेति ।—यः सुभाषितमयानां सूक्तिरूपाणां, द्रव्याणां धनानां, सङ्ग्रहं न करोति, स तु प्रस्तावयज्ञेषु प्रस्तावाः परस्परालापाः एव, यज्ञाः तेषु, कां दक्षिणां प्रदास्यति ? कथं सभ्यान् तोषयिष्यतीत्यर्थः ; सभ्यसन्तोषसम्पादनार्थं सुभाषितस्यैव आवश्यकत्वात् इति भावः ॥ १७५ ॥

सकृदिति ।—यः सकृत् एकवारम्, उक्तं भाषितं, न गृह्णाति वाक्यप्रयोगमात्रेणैव तदर्थं बोद्धुं न शक्नोति इत्यर्थः, स्वयं वा न करोति वक्तुं न शक्नोतीति भावः ; यस्य च सम्पुटिका आधारविशेषः, सुभाषितमयद्रव्यं सङ्गृह्य तद्रक्षणार्थमिति भावः ; सद्वाक्य-सङ्ग्रह इति निष्कर्षः, यद्वा,—सम्पुटिका आवरणभेदः, अवधानमिति भावः, नास्ति, यद्वा,—यस्य सम्पुटिका वचनावरणं, नास्ति, निरन्तरमेव यः प्रसङ्गरहितमपि वक्तीति भावः ; तस्य सुभाषितं कुतः? स सुभाषिते नाधिकारीति भावः ; यः भावज्ञः, यश्च स्वयं विदग्धः, यस्य च विविधसूक्तिसङ्ग्रहोऽस्ति, स एव सभाभूषणं, नान्य इति तात्पर्य्यम् ॥ १७६ ॥

(फ) गर्त्तविषमे—गर्त्तवशात् उन्नतानते प्रदेशे इत्यर्थः। नवतृणेति ।—नवेषु—नूतनेषु, कोमलेषु इति यावत्, तृणेषु लौल्यात्—लोभावेशवशात् ।

स्वगृहोद्यानगतेऽपि स्निग्धैः पापं विशङ्क्यते मोहात् ।
किमु दृष्टबह्वपायप्रतिभयकान्तारमध्यस्थे ?" ॥ १७७ ॥

अथ मन्थरको वायसमाह,—"भो लघुपतनक ! अहं हिरण्यकश्च तावत् द्वौ अपि अशक्तौ तस्य अन्वेषणं कर्त्तुं मन्द-गतित्वात् ; तत् गत्वा त्वम् अरण्यं (व) शोधय, यदि कुत्रचित् तं जीवन्तं पश्यसि" इति । तदाकर्ण्य लघुपतनको नातिदूरे यावत् गच्छति, तावत् (भ)पल्वलतीरे चित्राङ्गः(म)कूटपाशनियन्त्रितः तिष्ठति, इति दृष्ट्वा शोकव्याकुलितमनाः तम् अवोचत्,—"भद्र ! किमिदम् ?" चित्राङ्गोऽपि वायसमवलोक्य विशेषेण दुःखितमना बभूव । अथवा युक्तमेतत्,—

अपि मन्दत्वमापन्नो नष्टो वाऽपीष्टदर्शनात् ।
प्रायेण प्राणिनां भूयो दुःखाऽऽवेगोऽधिको भवेत् ॥१७८॥

ततश्च वाक्यावसाने चित्राङ्गो लघुपतनकमाह,—"भो

स्वगृहोद्यानेति ।—स्निग्धैः सुहृद्भिः, मोहात् मायावशात्, स्वगृहस्य यत् उद्यानं गृहसन्निहितम् उपवनं, तत्र गतेऽपि, सुहृदि इति शेषः, पापम् अनिष्टं, विशङ्क्यते विशेषेण चिन्त्यते । दृष्टेति ।—दृष्टा बहवः अपायाः विपदः यत्र तादृशः, अत एव प्रतिभयः भयावहः, यः कान्तारः दुर्गमं वनं, वर्त्म वा, तस्य मध्यस्थे मध्यवर्त्तिनि सति, किमु ? वक्तव्यमिति शेषः ; तादृशे देशे प्रियजनानां स्थितिरतीव शङ्कास्पदमिति भावः । आर्य्या वृत्तम् ॥ १७७ ॥

( व ) शोधय—अन्वेषयेति भावः ।

( भ ) पल्वलतीरे—क्षुद्रसरोवरतटे, ("पल्वलञ्चाल्पसरः" इत्यमरः ) ।

( म ) कूटेति ।—कूटपाशेन—कपटजालेन, नियन्त्रितः,—निबद्धः ।

अपीति ।—इष्टस्य प्रियस्य, दर्शनात् मन्दत्वं लाघवम्, आपन्नोऽपि प्राप्तोऽपि, नष्टोऽपि नाशं गतोऽपि वा, प्राणिनां दुःखाऽऽवेगः, प्रायेण प्रायशः, बाहुल्येन वा, भूयः पुनरपि, अधिको भवेत् ; "स्वजनस्य हि दुःखमग्रतः विवृतद्वारमिवोपजायते" इत्यादि-दर्शनात् मन्दीभूतं विलुप्तमपि वा तद्दुःखमभिनवीभूय स्वजनदर्शनावसरे पुनरभिवर्द्धते इत्याशयः ॥ १७८ ॥

मित्र ! सञ्जातोऽयं तावन्मम मृत्युः ; तत् ( य ) युक्तं सम्पन्नं यत् भवता सह मे दर्शनं सञ्जातम् ।

उक्तञ्च,—प्राणात्यये समुत्पन्ने यदि स्यान्मित्रदर्शनम् ।

तत् द्वाभ्यां सुखदं पश्चाज्जीवतोऽपि मृतस्य च ॥ १७९ ॥

तत् क्षन्तव्यं यन्मया प्रणयात् सुभाषितगोष्ठीषु अभिहितम् । तथा हिरण्यकमन्थरकौ मम वाक्याद्वाच्यौ ।

अज्ञानाज्ज्ञानतो वाऽपि दुरुक्तं यदुदाहृतम् ।

तत् क्षन्तव्यं युवाभ्यां मे कृत्वा प्रीतिपरं मनः" ॥१८०॥

तत् श्रुत्वा लघुपतनक आह,—"भद्र ! न भेतव्यम् अस्मद्विधैः मित्रैः विद्यमानैः ; यावत् अहं द्रुततरं हिरण्यकं गृहीत्वा आगच्छामि । अपरं, ये सत्पुरुषा भवन्ति, ते व्यसने न व्याकुलत्वमुपयान्ति । उक्तञ्च,—

---

( य ) युक्तम्—उचितम् । सम्पन्नं—भूतम् ।

प्राणात्यये इति ।—प्राणानाम् अत्यये अपगमे, प्राणविनाशहेतौ इत्यर्थः, समुत्पन्ने समुपस्थिते, यदि मित्रदर्शनं स्यात्, तदा पश्चात् मित्रदर्शनानन्तरं, जीवतः मित्रसाहाय्येन प्राप्तजीवनस्य, मृतस्य च मृतस्य वा जनस्य, उभयोरेवेत्यर्थः, द्वाभ्यां जीवनमरणाभ्यामपि, उभाभ्यामेव अवस्थाभ्यामित्यर्थः, जीवनं वा तिष्ठतु, मरणं वा भवतु, उभयोरेव अवस्थयोरिति यावत्, तत मित्रदर्शनं, सुखदं सुखप्रदम् ; मित्रकौशलेन जीवनरक्षाऽपि भवितुमर्हति, मरणेऽपि वा मित्रकर्तव्यौर्ध्वदैहिकव्यापारेण मृतस्य सद्गतिलाभः भवितुमर्हति इति द्वयोरेव जीवन्मृतयोः चरमदर्शनालापाभ्यां सुखसम्भवेनेति भावः ; तेन हि अहमिदानीं जीविष्यामि मरिष्यामि वा एतद्द्वयमपि मे सममेव, अन्तिमसमये मित्रदर्शनस्यैव केवलं वाञ्छनीयत्वादित्याशयः ॥ १७९ ॥

अथेदानीमन्तिमसमयं निश्चित्य प्रार्थयते, अज्ञानादिति ।—अज्ञानात् ज्ञानतोऽपि वा, यत् दुरुक्तं दुर्वचः, उदाहृतम् उक्तं, मया सुभाषितगोष्ठीषु इति शेषः, युवाभ्यां प्रीतिपरं प्रणयपूर्णं, मनः कृत्वा, सानुग्रहमिति भावः ; यद्वा,—मे मम, मनः प्रीतिपरम् इति कृत्वा प्रणयवशादेव मया तदभिहितमिति विविच्येत्यर्थः ; मे मम, तत् दुरुक्तं, क्षन्तव्यं सोढव्यम् ; मृत्युसमये प्रियसुहृदां पूर्वोक्तमशोभनं मे वचनजातं सर्वथैव विस्मरणीयं, सम्बन्धस्य जीवनावधिकत्वादित्याशयः ॥ १८० ॥

सम्पदि यस्य न हर्षो विपदि विषादो रणे न भीरुत्वम् ।
तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम्"॥१८१॥

एवमुक्त्वा लघुपतनकः चित्राङ्गम् आश्वास्य यत्र हिरण्यक-मन्थरकौ तिष्ठतस्तत्र गत्वा सर्वं चित्राङ्गपाशपतनं कथितवान् । हिरण्यकश्च (र) चित्राङ्गपाशमोक्षणं प्रति कृतनिश्चयं पृष्ठम् आरोप्य भूयोऽपि सत्वरं चित्राङ्गसमीपे गतः । सोऽपि मूषक-मवलोक्य किञ्चित् जीविताशया (ल) संश्लिष्ट आह,—

"आपन्नाशाय विबुधैः कर्त्तव्याः सुहृदोऽमलाः ।
न तरत्यापदं कश्चित् योऽत्र मित्रविवर्जितः" ॥ १८२ ॥

हिरण्यक आह,—"भद्र! त्वं तावत् नीतिशास्त्रज्ञः (व) दक्षमतिः, तत् कथमत्र कूटपाशे पतितः?" स आह,—

---

इदानीं सुहृदः चित्राङ्गस्य धैर्य्यं सम्पादयितुं यतते, सम्पदीति ।—यस्य जनस्य, सम्पदि हर्षः अतिभूमिं गत आनन्दः, न, विपदि आपत्काले, विषादोऽत्यधिकं दुःखं, न, रणे युद्धे, भीरुत्वं भयशीलता, न, विद्यते इति शेषः, जननी माता, भुवनत्रयतिलकं लोकत्रयललामभूतं, श्रेष्ठमित्यर्थः, तं तादृशं, सुतं पुत्रं, विरलम् अल्पं, जनयति प्रसूते; एतल्लक्षणलाञ्छितः भुवि दुर्लभ एव, अतः सत्पुरुषेण भवता न विपदि व्याकुलीभूतेन भवितव्यमिति तु निष्कर्षः । आर्य्या वृत्तम् ॥ १८१ ॥

(र) चित्राङ्गेति ।—चित्राङ्गस्य—तदाख्यस्य मृगस्य, पाशात् मोक्षणं—मोचनं प्रति, मोचनार्थम् इत्यर्थः । कृतनिश्चयं—विहितसिद्धान्तं, कृतप्रतिज्ञमित्यर्थः ।

(ल) संश्लिष्टः,—समालिङ्गितः, युक्तः इत्यर्थः ।

इदानीं सुहृत्सङ्ग्रहस्य अवश्यकर्त्तव्यतामाह, आपदिति ।—विबुधैः विद्वद्भिः, आपन्नाशाय विपदो मुक्त्यै, अमलाः निर्दोषाः, सज्जना इत्यर्थः, सुहृदः कर्त्तव्याः; अत्र संसारे, यः कश्चित् मित्रविवर्जितः बन्धुविहीनः, स आपदं न तरति आपदो न मुच्यते इत्यर्थः; आपत्परित्राणे बन्धुः एव एकः समर्थः इति भावः; अतः प्रियसुहृत् मूषकः नूनं मां मोचयिष्यतीति निगूढाशयः ॥ १८२ ॥

(व) दक्षमतिः,—निपुणबुद्धिः ।

"भोः ! न कालोऽयं (अ) विवादस्य ; तद्यावत् स पापात्मा लुब्धकः समभ्येति, तावत् द्रुततरं (ब) कर्त्तय इमं (स) मत्पादपाशम्"। तदाकर्ण्य विहस्य आह हिरण्यकः,—"किं मयि अपि समायाते लुब्धकात् बिभेषि ? ततः शास्त्रं प्रति महती मे (ड) विरक्तिः सम्पन्ना, यत्, भवद्विधा अपि नीतिशास्त्रविद एनाम् अवस्थां प्राप्नुवन्ति, तेन त्वां पृच्छामि"। स आह,—"भद्र ! कर्मणा बुद्धिरपि हन्यते ।

उक्तञ्च,—कृतान्तपाशबद्धानां दैवोपहतचेतसाम् ।
बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि ॥ १८३ ॥
विधात्रा रचिता या सा ललाटेऽक्षरमालिका ।
न तां मार्जयितुं शक्ताः स्वबुद्ध्याऽप्यतिपण्डिताः" ॥१८४॥

(अ) विवादस्य—अनुयोगस्य, तिरस्कारस्य इत्यर्थः ; अथवा विवादस्य—विविधवादस्य, वाक्प्रत्युक्तिरूपस्य विरुद्धस्य भाषणस्य इत्यर्थः ।

(ब) कर्त्तय—छिन्धि ।

(स) मदिति ।—मम पादानां—चरणानां, पाशः तम् ।

(ड) विरक्तिः,—अनास्था । सम्पन्ना—जाता ।

दैवप्रभावमाह, कृतान्तेति ।—कृतान्तस्य यमस्य, ("कृतान्तो यमदैवयोः" इति विश्वः) पाशेन बद्धानां नियन्त्रितानाम्, आसन्नमृत्यूनामित्यर्थः, दैवेन उपहतं विनष्टं, विकृतमिति यावत्, चेतो येषां, दुर्दैवविलुप्तमतीनाम् इत्यर्थः, महतामपि विदुषामपि, बुद्धयः कुब्जगामिन्यः वक्रगतयः, कुपथगा इत्यर्थः, भवन्ति ; नीतिविमार्जिता धियोऽपि दौर्भाग्यात् कुण्ठिता भवन्तीति भावः ; दैवविलसितत्वात् नात्र मे दोषो दातव्य इति गूढाभिप्रायः ॥ १८३ ॥

इदानीं दैवस्य अलङ्घनीयतामाह, विधात्रेति ।—विधात्रा विधिना, ("विधाता विश्वसृग्विधिः" इत्यमरः) ललाटे भालदेशे, सा पौर्वदैहिककर्मफलेन जन्मसमकालमेव निर्दिष्टा इत्यर्थः, या अक्षरमालिका वर्णावली, रचिता लिखिता, या हि स्वप्राक्तनकर्मवशादायाता इति भावः ; अतिपण्डिताः अपि स्वबुद्ध्या आत्मबुद्धिप्रभावेण इत्यर्थः, ताम् अक्षरमालिकां, मार्जयितुं शोधयितुं, खण्डयितुम् इत्यर्थः, न शक्ताः न समर्थाः, भवन्ति इति शेषः ; अप्रतिविधेया हि भवन्ति दैवगतय इति भावः ॥ १८४ ॥

एवं तयोः प्रवदतोः (क) सुहृद्व्यसनसन्तप्तहृदयो मन्थरकः शनैः शनैः तं प्रदेशम् आजगाम। तं दृष्ट्वा लघुपतनको हिरण्यकमाह,—"अहो ! न शोभनम् (ख) आपतितम्"। हिरण्यकः आह,—"किं स लुब्धकः समायाति ?" स आह,— "आस्तां तावत् (ग) लुब्धकवार्त्ता, एष मन्थरकः समागच्छति ; तत् (घ) अनीतिः अनुष्ठिता अनेन, यतो वयमपि (ङ) अस्य कारणात् नूनं(च) व्यापादनं यास्यामः ; यदि स पापात्मा लुब्धकः समागमिष्यति, तदहं तावत् खम् उत्पतिष्यामि, त्वं पुनर्विलं प्रविश्य आत्मानं रक्षयिष्यसि, चित्राङ्गोऽपि वेगेन दिगन्तरं यास्यति, एष पुनर्जलचरः स्थले (छ) कथं भविष्यति ? इति व्याकुलोऽस्मि"। अत्रान्तरे प्राप्तोऽयं मन्थरकः। हिरण्यक आह,—"भद्र ! न युक्तम् अनुष्ठितं भवता, यदत्र समायातः ; तद्भूयोऽपि द्रुततरं गम्यतां, यावत् असौ लुब्धको न समायाति"। मन्थरक आह,—"भद्र ! किं करोमि ? न शक्नोमि (ज) तत्रस्थो मित्रव्यसनाग्निदाहं सोढुं, तेनाहम् अत्र आगतः। अथवा साधु इदमुच्यते,—

(क) सुहृदिति।—बन्धुविपच्छ्रवणेन दुःखितचित्तः।

(ख) आपतितम्—उपस्थितम्।

(ग) लुब्धकवार्त्ता—व्याधवृत्तान्तः, व्याधप्रसङ्ग इति यावत्।

(घ) अनीतिः,—दुर्नयः।

(ङ) अस्य—मन्थरकस्य।

(च) व्यापादनं—विनाशम् ; मन्दगामित्वेन पलायनाक्षमम् अमुं विहाय प्रणयपाशबद्धानाम् अस्माकमपि गन्तुमशक्यत्वादिति भावः। खम्—आकाशम्।

(छ) कथं भविष्यति—किं करिष्यति इत्यर्थः, जलचरस्य स्थलगमनासामर्थ्या- दिति भावः।

(ज) तत्रस्थः,—तस्मिन् स्थाने स्थितः। मित्रव्यसनेति।—बन्धुविपत्तिरूपः यो वह्निः तेन दाहं—तदुद्भूतं सन्तापमित्यर्थः।

दयितजनविप्रयोगा: वित्तवियोगाश्च केन सह्याः स्युः ? ।
यदि सुमहौषधकल्पो वयस्यजनसङ्गमो न स्यात् ॥ १८५ ॥
वरं प्राणपरित्यागो न वियोगो भवादृशैः ।
प्राणा जन्मान्तरे भूयो न भवन्ति भवद्विधाः" ॥ १८६ ॥

(भ) एवं तस्य प्रवदतः आकर्णपूरितशरासनो लुब्धकोऽपि उपागतः; तं दृष्ट्वा मूषकेण तस्य स्नायुपाशस्तत्क्षणात् खण्डितः। अत्रान्तरे चित्राङ्गः सत्वरं पृष्ठमवलोकयन् प्रधावितः, लघुपतनको वृक्षमारूढः, हिरण्यकश्च समीपवर्त्ति बिलं प्रविष्टः।

अथ असौ लुब्धको मृगगमनात् विषण्णवदनो व्यर्थश्रमः तं मन्थरकं मन्दं मन्दं स्थलमध्ये गच्छन्तं दृष्टवान्, अचिन्तयच्च,—"यद्यपि कुरङ्गो धात्रा अपहृतः, तथाऽपि अयं कूर्म आहारार्थं

इदानीं मित्रव्यसनस्य असह्यतावर्णनप्रसङ्गात् मित्रसङ्गमस्य सुखहेतुत्वमाह, दयितेति।—यदि सुमहौषधकल्पः ["ईषदसमाप्तौ कल्पप्" (५।३।६७ पा०) इति सूत्रेण कल्पप्प्रत्ययः] वीर्य्यवदौषधसदृशः, सकलव्यथाऽपहारक इति यावत्, वयस्यजनसङ्गमः सुहृत्समागमः, न स्यात्, तदा दयितजनानां प्रियजनानां, विप्रयोगाः विरहाः, वित्तवियोगाश्च धननाशाश्च, केन जनेन, सह्याः सोढव्याः, स्युः ? मित्रसङ्गमेन प्रियजनानां धनानाञ्च विरहात् जायमानः शोको विस्मर्य्यते लोकैः इति तु निष्कर्षः। आर्य्या वृत्तम् ॥ १८५ ॥

अथ सत्मित्रबन्धोः अतीव दुर्लभतामाह, वरमिति।—प्राणपरित्यागः मरणं, वरं मनाक्प्रियः, [अत्र मनाक्प्रियार्थे वरशब्दस्य क्लीबत्वम्; "देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबे मनाक्प्रिये" इत्यमरवचनात्] किन्तु भवादृशैः सुहृद्भिरिति भावः, वियोगः विच्छेदः, न, वरमित्यनुषङ्गः; प्राणाः जन्मान्तरे भूयः पुनः, भवन्ति, लभ्या इति शेषः, भवद्विधाः भवादृशाः, सुहृदः, न, लभ्या इति शेषः; भवादृशसज्जनबन्धुवियोगक्लेशो हि प्राणवियोगदुःखादपि सुदुःसह इति भावः; प्राणेभ्योऽपि बन्धुः गरीयानिति निष्कर्षः ॥ १८६ ॥

(भ) एवं तस्य प्रवदतः,—एवं कथयन्तं तं मन्थरकमनादृत्येत्यर्थः; तस्येति —["षष्ठी चानादरे" (२।३।३८ पा०) इति अनादरे षष्ठी]। आकर्णेति।—कर्णपर्य्यन्तम् आकृष्टकार्मुकः। तस्य—चित्राङ्गस्य, स्नायुपाशः,—स्नायुनिर्मितबन्धनरज्जुः।

सम्पादितः। तदद्य अस्य आमिषेण मे कुटुम्बस्य आहार-
निर्वृत्तिः भविष्यति"। एवं विचिन्त्य तं दर्भैः संच्छाद्य धनुषि
समारोप्य स्कन्धे कृत्वा गृहं प्रति प्रस्थितः। अत्रान्तरे तं नीय-
मानम् अवलोक्य हिरण्यको दुःखाऽऽकुलः (अ) पर्य्यदेवयत्,—
"कष्टं भोः! कष्टमापतितम्!!—

एकस्य दुःखस्य न यावदन्तं गच्छाम्यहं पारमिवार्णवस्य।
तावद्द्वितीयं समुपस्थितं मे छिद्रेष्वनर्था बहुलीभवन्ति॥ १८७॥

तावदस्खलितं यावत् सुखं याति समे पथि।
स्खलिते च समुत्पन्ने विषमञ्च पदे पदे॥ १८८॥

यन्नम्रं सरलञ्चापि तच्चापत्सु न सीदति।
धनुर्मित्रं कलत्रञ्च दुर्लभं शुद्धवंशजम्॥ १८९॥

---

(अ) पर्य्यदेवयत्—व्यलपत्, विलापं कृतवान् इत्यर्थः।

कष्टकारणं विवरीतं विपदः रन्ध्रानुसरणशीलत्वमाह, एकस्येति।—अहम् अर्णवस्य समुद्रस्य, असीमस्येति भावः, पारमिव परतीरमिव, एकस्य दुःखस्य यावत् अन्तम् अवसानं, न गच्छामि न प्राप्नोमि, तावत् मे मम, द्वितीयम् अपरं दुःखं, समुपस्थितम्; तथा हि छिद्रेषु रन्ध्रेषु प्राप्तेषु सत्सु, अनर्थाः विपदः, बहुलीभवन्ति विस्तारं गच्छन्ति; रन्ध्रानुसारिण्यः विपदः इति भावः। इन्द्रवज्रा वृत्तम्॥ १८७॥

उक्तमेवार्थं प्रकारान्तरेणाह, तावदिति।—यावत् समे समतले, पथि अस्खलितम् अपतितमित्यर्थः, अविचलितपदमिति यावत्, याति, तावत् सुखम् अनायासेन, यातीति अनुषज्यते, तावत्कालं हि निरवच्छिन्नं सुखमुपभुञ्जते जना इति भावः; च किन्तु, स्खलिते पतने, पदच्युतौ इत्यर्थः, समुत्पन्ने समुपस्थिते सति, दुर्दैववशात् सकृदपि पादस्खलने जाते इति भावः, पदे पदे प्रतिपदं, प्रतिकार्य्यम् इत्यर्थः, विषमं दारुणं, विपत्सङ्कटरूपमित्यर्थः, उपतिष्ठते इति शेषः; सुसमये हि सुखधाराः, दुःसमये च दुःखपरम्पराः उपर्य्युपरि समापतितुमारभन्ते इति गूढाभिप्रायः॥ १८८॥

सरलचापवत् सुकलत्रस्य सन्मित्रस्य दुर्लभतामाह, यदिति।—यत् धनुः, मित्रं, कलत्रं भार्य्या च, नम्रम् अवनमनयोग्यं, विनयान्वितञ्च, तथा सरलम् अवक्रम्, ऋजुस्वभावञ्च, तथा शुद्धवंशजं सद्वेणुसम्भूतं, सत्कुलोत्पन्नञ्च, तथा आपत्सु धन्विनः मित्रस्य भर्त्तुश्च विपत्स्वपि च, न सीदति न भग्नं न खण्डितं भवतीत्यर्थः, न

न मातरि न दारेषु न सोदर्य्ये न चात्मजे।
विश्रम्भस्तादृशः पुंसां यादृक् मित्रे निरन्तरे॥ १९०॥

यदि तावत् (ट) कृतान्तेन मे धननाशो विहितः, तत् (ठ) मार्गश्रान्तस्य मे विश्रामभूतं मित्रं कस्मात् अपहृतम्? अपरमपि मित्रं परं मन्थरकसमं न स्यात्।

उक्तञ्च,—असम्पत्तौ परो लाभो गुह्यस्य कथनं तथा।
आपद्विमोचनञ्चैव मित्रस्यैतत् फलत्रयम्॥ १९१॥

(ड) तदस्य पश्चान्नान्यः सुहृत् मे; तत् किं मम उपरि

---

अवसादं गच्छति च, न विकृतिं लभते इत्यर्थः, दृढतया सहायतामेव करोतीति भावः, तत् तादृशं धनुरादिवयं, दुर्लभं दुष्प्रापं, विरलमित्यर्थः; अयन्तु तथाविधो बन्धुरिति भावः॥ १८९॥

अकृत्रिममित्रस्य सर्वेभ्यो गरीयस्त्वमाह, नेति।—निरन्तरे अभिन्ने, अभिन्नहृदये इति भावः, ["स्वभावजे" इति पाठान्तरम्] मित्रे पुंसां यादृक् विश्रम्भः विश्वासः, भवतीति शेषः, तादृशः विश्रम्भः, मातरि न, दारेषु स्त्रियां, न, सोदर्य्ये सहोदरे भ्रातरि, न, आत्मजे पुत्रे च, न, भवतीति शेषः; तथा च, अतिविश्वासस्थानेभ्यः प्रागुक्त-चतुष्टयेभ्योऽपि समधिकविश्वासास्पदं मित्रमिति तात्पर्य्यम्॥ १९०॥

(ट) कृतान्तेन—दैवेन। धननाशः,—अर्थापहरणं, विहितः,—कृत इत्यर्थः।

(ठ) मार्गश्रान्तस्य—अध्वाक्रान्तस्य, अनाश्रयस्येति भावः। विश्रामभूतं—विश्राम-स्वरूपम्, आश्रय इति भावः। अपहृतमिति।—स्वर्णरौप्यादिरूपं धनं मे विधात्रा अपहृतम् अपहृतं, तेन न तादृशदुःखं, किन्तु सर्वथा निःस्वस्य मे सर्वदुःखापहरणं महार्घं मित्रधनं यत् अपहृतं तत्तु मे अतीव असह्यमेव इति भावः।

मित्रसङ्गस्य फलमाह, असम्पत्ताविति।—असम्पत्तौ निर्धनत्वे सति, परः महान्, लाभः, धनस्येति शेषः, तथा गुह्यस्य रहस्यस्य च, कथनम् आलापः, आपद्विमोचनं विपत्परित्राणञ्च, मित्रस्य एतदेव फलत्रयम् एतानि त्रीण्येव प्रयोजनानि॥ १९१॥

(ड) तत्—तस्मात्, अस्य—मन्थरकस्य, ["षष्ठ्यतसर्थप्रत्ययेन" (२।३।३० पा०) इति अतिप्रत्ययान्तपश्चाच्छब्दयोगे षष्ठी], पश्चात्—अपरः, [अपरशब्दात् प्रथमार्थे "पश्चात्" (५।३।३२ पा०) इति आतिप्रत्ययः पश्चादेशश्च] मन्थरक-

अनवरतं (ढ) व्यसनशरैः वर्षति (ण) हन्त विधिः? यत आदौ तावद्वित्तनाशः, ततः परिवारभ्रंशः, ततो देशत्यागः, ततो मित्रवियोग इति। अथवा (त) स्वरूपमेतत् सर्वेषामेव जन्तूनां (थ) जीवितधर्मस्य।

उक्तञ्च,—कायः सन्निहितापायः सम्पदः क्षणभङ्गुराः।
समागमाः सापगमाः सर्वेषामेव देहिनाम्॥ १८२॥

तथा च,—क्षते प्रहारा निपतन्त्यभीक्ष्णं
धनक्षये दीप्यति जाठराग्निः।
आपत्सु वैराणि समुल्लसन्ति
छिद्रेष्वनर्था बहुलीभवन्ति॥ १८३॥

व्यतिरिक्त इत्यर्थः, अन्यः,—इतरः, सुहृत—मित्रं, मे—मम, न, अस्तीति शेषः; एतत्समकक्षः अपरः बन्धुः मया दुर्लभ इति भावः।

(ढ) व्यसनशरैः,—व्यसनान्येव—विपद एव, शराः तैः। "व्यसनशराम्" इति साधुः।

(ण) हन्त—खेदे। विधिः,—दैवं, ("विधिर्विधाने दैवे च" इत्यमरः)।

(त) स्वरूपं—लक्षणम् इत्यर्थः।

(थ) जीवितधर्मस्य—जीवितस्य—जीवनस्य, यो धर्मः,—व्यापारः तस्य, जीवनधारणरूपव्यापारस्य इत्यर्थः।

सर्वेषामेव क्षयित्वं प्रतिपादयति, काय इति।—सर्वेषामेव देहिनां प्राणिनां, ["सर्वेषामेव देहिनाम्" इत्यत्र "सर्वमुत्पादि भङ्गुरम्" इति पाठान्तरम्] कायः देहः, सन्निहितः आसन्नः, अपायो विध्वंसो यस्य तादृशः, अचिरविनश्वर इत्यर्थः, तथा सम्पदः धनानि, क्षणभङ्गुराः क्षणध्वंसिनः, ["क्षणभङ्गुराः" इत्यत्र "पदमापदाम्" इति पाठान्तरम्] समागमाः प्रियसंयोगाः, सापगमाः सविच्छेदाः, भवन्तीति शेषः॥१८२॥

विपदां विपत्त्यन्तरजनकत्वमाह, क्षते इति।—क्षते क्षतस्थाने एव, अभीक्ष्णं सततं, प्रहाराः ताडनानि, निपतन्ति सम्भवन्ति, जायन्ते इत्यर्थः; धनक्षये सति, जठरसम्भूतोऽग्निः जाठराग्निः उदरानलः, क्षुधा इत्यर्थः, दीप्यति क्रीडति, वर्द्धते इत्यर्थः; तथा आपत्सु वैराणि विद्वेषाः, समुल्लसन्ति सम्यक् स्फुरन्ति; तथा छि, छिद्रेषु रन्ध्रेषु, अनर्थाः विपदः, बहुलीभवन्ति प्रसरन्ति; विपदां विपदनुगामित्वादिति भावः। उपजातिः वृत्तम्॥ १८३॥

अहो! साधु उक्तं केनापि,—

> प्राप्ते भये परित्राणं प्रीतिविश्रम्भभाजनम्।
> केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम्?" ॥ १९४ ॥

अत्रान्तरे च (ट) आक्रन्दपरौ चित्राङ्गलघुपतनकौ तत्र एव समायातौ। अथ हिरण्यक आह,—"अहो! किं वृथा (थ) प्रलपितेन? तत् यावदेव मन्थरको दृष्टिगोचरात् न नीयते, तावदस्य (न) मोक्षोपायः चिन्त्यतामिति,—

> व्यसनं प्राप्य यो मोहात् केवलं परिदेवयेत्।
> क्रन्दनं वर्द्धयत्येव तस्यान्तं नाधिगच्छति ॥ १९५ ॥
> केवलं व्यसनस्योक्तं भेषजं नयपण्डितैः।
> तस्योच्छेदसमारम्भो विषादपरिवर्जनम् ॥ १९६ ॥

---

इदानीं मित्रस्य सर्वसहायेभ्योऽप्याधिक्यमाह, प्राप्त इति।—भये प्राप्ते उपस्थिते सति, परित्राणं [परित्रायते अनेनेति करणे ल्युट्] रक्षणहेतुरित्यर्थः, तथा प्रीत्याः प्रणयस्य, विश्रम्भस्य विश्वासस्य च, भाजनं पात्रम्, अत एव रत्नं रत्नभूतं, सर्वोत्कृष्टमित्यर्थः, इदं मित्रमिति अक्षरद्वयं द्वे अक्षरे इत्यर्थः, केन महापुरुषेणेति भावः, सृष्टम्? निर्मितम्? ॥ १९४ ॥

(ट) आक्रन्दपरौ—रुदन्तौ।

(थ) प्रलपितेन—प्रलापेन, अनर्थकेन वचसा इत्यर्थः।

(न) मोक्षोपायः,—परित्राणोपायः।

धैर्य्यावलम्बनमेव विपदुद्धरणोपायः इत्याशयेन श्लोकद्वयमाह, व्यसनमिति।—यः व्यसनं विपदं, प्राप्य लब्ध्वा, मोहात् अज्ञानात्, केवलं परिदेवयेत् विलपेदेव, तथा क्रन्दनं वर्द्धयति क्रन्दनपर एव भवति इत्यर्थः, स तस्य व्यसनस्य, अन्तम् अवसानं, न अधिगच्छति न प्राप्नोति, न विपदो मुच्यते इत्यर्थः; अतो व्यसनपरिजिहीर्षुणा विलापो न कर्त्तव्य इति भावः ॥ १९५ ॥

केवलमिति।—नयपण्डितैः नीतिकुशलैः, मनीषिभिः इति भावः, तस्य व्यसनस्य, उच्छेदसमारम्भः विध्वंसकरणोद्योग इत्यर्थः, तथा विषादस्य अधैर्य्यस्य, विलापस्य वा, परिवर्जनं परित्यागः, व्यसनस्य विपदः, केवलम् एकम्, एकमेवेत्यर्थः, ("एके [illegible];" इत्यमरः) भेषजम् औषधम्, उक्तं कथितम्; [illegible] हि

अपरञ्च,—अतीतलाभस्य सुरक्षणार्थं

भविष्यलाभस्य च सङ्गमार्थम्।

आपत्प्रपन्नस्य च मोक्षणार्थं

यन्मन्त्र्यतेऽसौ परमो हि मन्त्रः" ॥१९७॥

तत् श्रुत्वा वायस आह,—"भोः! यदि एवं, तत् क्रियतां मद्वचः; एष चित्राङ्गः (प) अस्य मार्गे गत्वा किञ्चित् पल्वलम् आसाद्य तस्य तीरे निश्चेतनो भूत्वा पततु, अहमपि अस्य शिरसि समारुह्य मन्दैः चञ्चुप्रहारैः शिर उल्लेखयिष्यामि, येन असौ दुष्टलुब्धकोऽमुं मृतं मत्वा मम (फ) चञ्चुप्रहरणप्रत्ययेन मन्थरकं भूमौ क्षिप्त्वा मृगार्थं परिधाविष्यति, अत्रान्तरे त्वया (ब) दर्भमयाणि पाशानि (भ) खण्डनीयानि, येन असौ मन्थरको द्रुततरं पल्वलं प्रविशति"। चित्राङ्ग आह,—"भोः! भद्रोऽयं त्वया दृष्टो मन्त्रः, नूनं मन्थरकोऽयं मुक्तो मन्तव्य इति।

---

विपद्द्वारं हन्तारमिति भावः; विषादपरीहारेण हृतप्रतीकारचिन्तनमेव विपदं समूलघात हन्तीति निष्कर्षः ॥ १९६ ॥

योगक्षेमसूलिकायाः मन्त्रणायाः श्रेष्ठतामाह, अतीतेति।—अतीतः भूतः, पूर्वोपार्जित इति भावः, लभ्यते इति लाभो धनम्, अतीतश्चासौ लाभश्चेति तस्य, पूर्वोपार्जितधनस्य इत्यर्थः, सुरक्षणार्थं सुष्ठु रक्षार्थं, भविष्यस्य भाविनः, अप्राप्तस्येत्यर्थः, लाभस्य सङ्गमार्थं सङ्ग्रहार्थञ्च, प्राप्त्यर्थम् इत्यर्थः, आपदं प्रपन्नः प्राप्तः तस्य विपन्नस्य, मोक्षणार्थं त्राणार्थञ्च, यत् मन्त्र्यते रहसि परस्परं स्थिरीक्रियते, असौ हि परमो महान्, मन्त्रः मन्त्रणा; यथा इदानीम् आपदो मुच्येमहि, तथा मन्त्र्यतामिति भावः। उपजातिः वृत्तम् ॥ १९७ ॥

(प) अस्य—लुब्धकस्य। पल्वलं—क्षुद्रं सरः। मन्दैः—स्वल्पैः। उल्लेखयिष्यामि—विदारयिष्यामि।

(फ) चञ्च्विति।—चञ्चुभ्यां यत् प्रहरणम्—आघातः, तेन यः प्रत्ययः,—मृत इति विश्वासः तेन।

(ब) दर्भमयाणि—कुशमयानि। ["तत्प्रकृतवचने मयट्" (५।४।२१ पा०) इति मयट्]।

(भ) खण्डनीयानि—कर्तनीयानि।

उक्तञ्च,—सिद्धं वा यदि वाऽसिद्धं चित्तोत्साहो निवेदयेत्।
प्रथमं सर्वजन्तूनां तत् प्राज्ञो वेत्ति नेतरः ॥ १९८ ॥

तत् एवं क्रियताम्" इति।

तथा अनुष्ठिते स लुब्धकः तथा एव मार्गासन्नपल्वलतीरस्थं चित्राङ्गं वायससनाथम् अपश्यत्। तं दृष्ट्वा हर्षितमना अचिन्तयत्,—"नूनं पाशबन्धनवेदनया वराकोऽयं मृगः (म) सावशेषजीवितः पाशं त्रोटयित्वा कथमपि एतद्वनान्तरं यावत् प्रविष्टः, तावन्मृतः; वश्योऽयं मे कच्छपः (य) सुयन्त्रितत्वात्, तत् एनमपि तावत् गृह्णामि" इति।

इत्यवधार्य्य कच्छपं भूतले प्रक्षिप्य मृगम्(र)उपाद्रवत्। एतस्मिन् अन्तरे हिरण्यकेन (ल) वज्रोपमदंष्ट्राप्रहरणेन तत् (व) दर्भवेष्टनं खण्डशः कृतम्। मन्थरकोऽपि तृणमध्यात् निष्क्रम्य समीपवर्त्तिनं पल्वलं प्रविष्टः। (श) चित्राङ्गोऽपि अप्राप्तस्यापि तस्य

---

मन्थरकस्य सुनिश्चयकरणे मनसः प्रामाण्यमाह, सिद्धमिति।—चित्तस्य मनसः, उत्साहः उद्यमः, एकाग्रता इति यावत्, प्रथमं सिद्ध्यसिद्ध्योः प्रागित्यर्थः, सर्वेषां जन्तूनां सिद्धं सफलं वा, असिद्धं निष्फलं यदि वा, कार्य्यमिति शेषः, निवेदयेत् ज्ञापयेत्; प्राज्ञो जनः, तत् वेत्ति बुध्यते, इतरोऽनभिज्ञ इत्यर्थः, न, वेत्तीति पूर्वानुषङ्गः; तथा च कार्य्यस्य सिद्ध्यसिद्धिविषये सताम् अन्तःकरणमेव प्रमाणं, तच्च प्राज्ञैः आदावेव शक्यते बोद्धुम्, इतरैस्तु दुर्बोधमिति सरलार्थः। "सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः" इत्यस्यानुरूपोऽयं श्लोकः ॥ १९८ ॥

(म) सावशेषजीवितः,—किञ्चिदवशिष्टजीवनः, मृतप्राय इत्यर्थः। त्रोटयित्वा—छित्त्वा।

(य) सुयन्त्रितत्वात्—सुबद्धत्वात्।

(र) उपाद्रवत्—अधावत।

(ल) वज्रोपमेति।—वज्रोपमा—कुलिशतुल्या, या दंष्ट्रा—दन्तः, सा एव प्रहरणम्—अस्त्रं तेन; सुकठिनदन्तरूपास्त्रेण।

(व) दर्भवेष्टनं—कुशबन्धनम्।

(श) चित्राङ्ग इत्यादि।—अप्राप्तस्यापि—अनुपस्थितस्य एव, अपिशब्दात्

तले उत्थाय वायसेन सह पलायितः। एतस्मिन्नन्तरे (ष) विलक्षो विषादपरो लुब्धको निवृत्तो यावत् पश्यति, तावत् कच्छपोऽपि गतः। ततश्च तत्र उपविश्य इमं श्लोकम् अपठत्,—

"प्राप्तो बन्धनमप्ययं गुरुमृगस्तावत् त्वया मे हृतः
सम्प्राप्तः कमठः स चापि नियतं नष्टस्तवाऽऽदेशतः।
क्षुत्क्षामोऽत्र वने भ्रमामि शिशुकैस्त्यक्तः समं भार्य्यया
यच्चान्यन्न कृतं कृतान्त! कुरु ते तच्चापि सह्यं मया" ॥१९९॥

एवं बहुविधं विलप्य स्वगृहं गतः।

अथ तस्मिन् व्याधे दूरतरं गते, सर्वेऽपि ते काककूर्ममृगमूषिकाः परमानन्दभाजः परस्परम् आलिङ्ग्य पुनर्जातमिव आत्मानं मन्यमानाः तदेव सरः सम्प्राप्य महासुखेन सुभाषितकथागोष्ठीविनोदेन कालं नयन्ति स्म। एवं ज्ञात्वा (स) विवेकिना

एवार्थं। तस्य—लुब्धकस्य, अप्राप्त तमनादृत्येत्यर्थः, ["षष्ठी चानादरे"(२।३।३८ पा०) इति षष्ठी ]। तले—भूतले, धावितः इति शेषः, चिवाकाऽपीत्यनेनान्वयः। "तले" इत्यत्र "तूर्णं" "त्वरितम्" इत्यादि पाठकल्पनं साधु, भूतले धावित इत्याद्यर्थस्य कष्टकल्पनत्वात्।

(ष) विलक्षः,—विस्मितो लज्जितो वा। विषादपरः,—विषण्णः, दुःखित इत्यर्थः।

लुब्धकस्य दैवोपालम्भं विवृणोति, प्राप्त इति।—हे कृतान्त! दैव! अयं गुरुमृगः महान् मृगः, बन्धनं प्राप्तोऽपि बद्धोऽपि, त्वया तावत् मे मम, ["षष्ठी चानादरे" (२ ३ ३८ पा०) इत्यनादरे षष्ठी] मामनादृत्य इत्यर्थः, हृतः गृहीतः; कमठः कच्छपः, सम्प्राप्तः, मयेति शेषः, स चापि स कच्छपोऽपि, नियतं निश्चितं, तव आदेशतः आज्ञया, नष्टः पलायितः; भार्य्यया पत्न्या, शिशुकैः बालकैः, पुत्रैरित्यर्थः, समं समकालं, त्यक्तः विरहितः, पुत्रकलत्रवियुक्त इत्यर्थः, अत्र वने क्षुत्क्षामः क्षुधया निपीड़ितः सन्, भ्रमामि पर्य्यटामि, यच्च अन्यत्, अनिष्टमिति शेषः, ते त्वयेत्यर्थः, [ त्वया मया इत्यर्थे ते मे इत्यवगन्तव्यौ। तथा च वामनः,—"ते मे शब्दौ निपातेषु" ( ५म अधि० १अ० १० सू० ) अस्यार्थस्तु वृत्तौ,—"त्वया मया इत्यस्मिन्नर्थे ते मे शब्दौ निपातेषु द्रष्टव्यौ"] न कृतं, तत् कुरु, तच्चापि, सर्वमिति शेषः, मया सह्यं सोढ़व्यम्; भवति तव नियोगस्य अशक्यपरिहारत्वात् इति भावः। शार्दूलविक्रीड़ितं वृत्तम् ॥ १९९ ॥

( स ) विवेकिना—विज्ञेन।

मित्रसङ्ग्रहः कार्य्यः। न च मित्रेण सह (ङ) व्याजेन वर्त्तितव्य-मिति। उक्तञ्च यतः,—

यो मित्राणि करोत्यत्र न कौटिल्येन वर्त्तते।
तैः समं न पराभूतिं सम्प्राप्नोति कथञ्चन॥ २००॥

इति श्रीविष्णुशर्मविरचिते पञ्चतन्त्रे मित्रसम्प्राप्तिर्नाम द्वितीयं तन्त्रम्॥ २॥

---

# अथ तृतीयं तन्त्रम्।

अथ इदमारभ्यते (क) काकोलूकीयं नाम तृतीयं तन्त्रम्; यस्य अयमाद्यः श्लोकः,—

"न विश्वसेत् पूर्वविरोधितस्य शत्रोश्च मित्रत्वमुपागतस्य।
दग्धां गुहां पश्य उलूकपूर्णां काकप्रणीतेन हुताशनेन"॥१॥

---

(ङ) व्याजेन—कपटेन।

अकपटमित्रताया गुणमाह, य इति।—अत्र संसारे, यः मित्राणि करोति, तैः मित्रैः, समं सह, कौटिल्येन कापट्येन, न वर्त्तते च, सः कथञ्चन कदाचन, पराभूतिं पराभवम्, अतिबलवच्छत्रोऽपि शत्रुभ्यः इति शेषः, न सम्प्राप्नोति; तथा च कापट्य-रहिता मैत्री करणीया, तथा च परमैश्वर्य्यलाभः भवतीति निष्कर्षः॥ २००॥

---

(क) काकोलूकीयं—काकस्य उलूकस्य तयोः समाहारः काकोलूकं, तस्य संवादो वर्णितो यस्मिन् तत्; तदधिकृत्य कृतमेतत् इति वा।

शत्रौ विश्वासस्यानर्थकरत्वमाह, नेति।—पूर्वविरोधितस्य पूर्वं विद्वेषमापादितस्य, शत्रोः रिपोः, पश्चात् मित्रत्वं बन्धुताम्, उपागतस्य प्राप्तस्य, अपीति शेषः, न च नैव, विश्वसेत्, शत्रौ मित्रभावमापन्नेऽपि विश्वासो नैव कर्त्तव्य इत्यर्थः. [श्वसितेरदादिकत्वात् "विश्वस्यात्" इति पदमेवात्र साधुतया प्रतिभाति]; तथा हि, उलूकपूर्णां पेचका-ऽऽकीर्णां, गुहां काकप्रणीतेन काकेन वायसेन, मित्रतया प्रविष्टेनेति भावः; प्रणीतः दत्तः तेन, हुताशनेन अग्निना, दग्धां भस्मीकृतां, पश्य अवलोकय। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः। उपजातिः वृत्तम्॥ १॥

तत् यथा अनुश्रूयते,—

अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम्; तस्य समीपस्थः (ख) अनेकशाखासनाथः (ग) अतिघनतरपत्रच्छन्नो न्यग्रोधपादपोऽस्ति। तत्र च मेघवर्णो नाम वायसराजोऽनेककाकपरिवारः प्रतिवसति स्म। स तत्र (घ) विहितदुर्गरचनः सपरिजनः कालं नयति स्म। तथा अन्यः (ङ) अरिमर्दनो नाम उलूकराजोऽसङ्ख्योलूकपरिवारः (च) गिरिगुहादुर्गाऽऽश्रयः प्रतिवसति स्म। स च रात्रौ अभ्येत्य सदा एव तस्य न्यग्रोधस्य समन्तात् परिभ्रमति।

अथ उलूकराजः (छ) पूर्वविरोधवशात् यं कश्चिद्वायसं (ज) समासादयति, तं व्यापाद्य गच्छति। एवं नित्याभिगमनात् शनैः शनैः तत् न्यग्रोधपादपदुर्गं तेन समन्तात् निर्वायसं कृतम्। अथवा भवत्येवम्।

उक्तञ्च,—य उपेक्षेत शत्रुं स्वं प्रसरन्तं यदृच्छया।

रोगञ्चालस्यसंयुक्तः स शनैस्तेन हन्यते ॥ २ ॥

---

(ख) अनेकेति।—बहुविटपसमन्वित इत्यर्थः।

(ग) अतीति।—अतिघनतरैः,—अतिनिविडैरित्यर्थः, पत्रैः छन्नः,—आकीर्णः। न्यग्रोधपादपः,—वटतरुः।

(घ) विहितेति।—विहिता—कृता, दुर्गस्य—कोटस्य, शत्रुप्रवेशनिवारणार्थं दुर्गमस्थानविशेषस्येत्यर्थः, रचना—निर्माणं येन तथाभूतः।

(ङ) अरिमर्दनः,—शत्रुनाशकः।

(च) गिरीति।—गिरेः,—पर्वतस्य गुहा—कन्दरः एव, दुर्गं—कोटं, शत्रुप्रवेशनिवारणार्थं दुर्गमस्थानविशेषः इत्यर्थः, आश्रयः यस्य तथोक्तः।

(छ) पूर्वविरोधवशात्—पूर्ववैरहेतुना।

(ज) समासादयति—प्राप्नोति। व्यापाद्य—विनाश्य।

शत्रावुपेक्षायां दोषमाह, य इति।—यः आलस्यसंयुक्तः सन्, यदृच्छया स्वेच्छया, प्रसरन्तं वृद्धिं गच्छन्तं, स्वं स्वकीयं, शत्रुं रिपुं, रोगञ्च व्याधिञ्च, उपेक्षेत हेलया न

तथा च,—जातमात्रं न यः शत्रुं व्याधिञ्च प्रशमं नयेत् ।
अतिपुष्टाङ्गयुक्तोऽपि स पश्चात् तेन हन्यते ॥ ३ ॥

अथ अन्येद्युः स वायसराजो सर्वान् वायससचिवान् आहूय प्रोवाच,—"भोः ! (झ) उत्कटः तावत् अस्माकं शत्रुः (ञ) उद्यमसम्पन्नश्च, कालवशात् नित्यमेव निशाऽऽगमे समेत्य (ट) अस्मत्पक्षकदनं करोति ; तत् कथमस्य (ठ) प्रतिविधानम् ? वयं तावत् रात्रौ न पश्यामः, न च तस्य (ड) दिवा दुर्गं विजानीमः, येन गत्वा प्रहरामः ; तदत्र विषये किं युज्यते सन्धिविग्रहयानासनसंश्रयद्वैधीभावानाम् एकतमस्य क्रियमाणस्य ? तद्विचार्य्य शीघ्रं कथयन्तु भवन्तः" ।

अथ ते प्रोचुः,—"युक्तम् अभिहितं देवेन, यदा एष प्रश्नः कृतः ।

अपृष्टेन तु वक्तव्यं सचिवेनात्र किञ्च न ।
पृष्टेन तु ऋतं पथ्यं वाच्यञ्च प्रियमप्रियम् ॥ ४ ॥

---

प्रतिकुर्य्यादिति भावः, सः शनैः क्रमेणेत्यर्थः, तेन शत्रुणा, रोगेण च, हन्यते विनाश्यते ; अतः एतयोः प्रथमतः एव प्रतीकारः श्रेयान् इति भावः ॥ २ ॥

पूर्वोक्तमेव भङ्ग्यन्तरेणाह, जातमात्रमिति ।—यः जातमात्रं जातमेव, [ स्वरूपार्थे मात्रच् ] उत्पत्तिमात्रैवेत्यर्थः, शत्रुं व्याधिञ्च प्रशमं शान्तिं, न नयेत् न प्रापयेत, न प्रतिकुर्य्यात् इत्यर्थः, सः अतिपुष्टैः अतिप्रबलैः, अतिस्थूलैश्च, अङ्गैः अमात्यादिभिः राज्याङ्गैः, हस्तपदादिभिश्च, युक्तोऽपि पश्चात् अनन्तरं, तेन शत्रुणा, व्याधिना च, हन्यते ; उपेक्षितौ व्याधिः शत्रुश्च विनाशनकारणं सर्वेषाम्, अतः समूलघातं हन्तव्यः इति भावः ॥ ३ ॥

(झ) उत्कटः,—दारुणः, प्रबल इत्यर्थः ।

(ञ) उद्यमसम्पन्नः,—समुत्साहान्वितः ।

(ट) अस्मत्पक्षकदनम्—अस्माकं पक्षीयप्राणिविनाशम् ।

(ठ) प्रतिविधानं—प्रतीकारः ।

(ड) दिवा—दिवसे, [ अव्ययमेतत् ] ।

राज्ञः सचिवेषु जिज्ञासाया औचित्यमाह, अपृष्टेनेति ।—अत्र संसारे, सचिवेन

यो न पृष्टो हितं ब्रूते परिणामे सुखावहम्।
सुमन्त्री प्रियवक्ता च केवलं स रिपुः स्मृतः॥ ५॥
तस्मादेकान्तमासाद्य कार्य्यो मन्त्रो महीपतेः।
येन तस्य वयं कुर्मो निर्णयं कारणं तथा"॥ ६॥

अथ स मेघवर्णः (ढ) अन्वयागतोज्जीवि-सञ्जीवि-अनुजीवि-प्रजीवि-चिरञ्जीविनाम्नः पञ्च (ण)सचिवान् प्रत्येकं प्रष्टुमारब्धः। तत्र एतेषामादौ तावत् उज्जीविनं पृष्टवान्,—"भद्र! एवं (त) स्थिते किं मन्यते भवान्?" स आह,—"राजन्! बलवता

अमात्येन, अपृष्टेन अजिज्ञासितेन, अननुयुक्तेन सता इत्यर्थः, किञ्च किमपि, न तु नैव वक्तव्यम्: "नापृष्टः कस्यचित् ब्रूयात" इति स्मरणात; पृष्टेन तु, अमात्येन इति शेषः, ऋतं सत्यं, पथ्यं हितं, प्रियं प्रीतिकरम्, अप्रियञ्च अप्रियमपि, वाच्यं वक्तव्यम्; अत इदानीं कथनावसरोऽस्माकमिति भावः॥ ४॥

पृष्टस्यापि सचिवस्य हितानुपदेशे दोषमाह, य इति।—यः पृष्टः सन्, अपीति शेषः, परिणामे उत्तरकाले, सुखावहं सुखकरं, हितम्, अप्रियमपीति भावः, न ब्रूते न कथयति, नोपदिशति इत्यर्थः, स सुमन्त्री, प्रियवक्ता च प्रियवक्ता वा, यद्वैव भवतु इति शेषः, केवलं रिपुः शत्रुः, स्मृतः; यद्वा,—यः सुमन्त्री पृष्टः सन्नपि परिणामे सुखावहं हितं न ब्रूते, केवलं प्रियवक्ता च प्रियवादी एव, न तु अप्रियसत्यस्य वक्ता इति भावः, सः रिपुः स्मृतः; पयोमुखविषकुम्भवत् स वर्जनीय एव इति भावः॥ ५॥

मन्त्रणायाः करणीयतामाह, तस्मादिति।—तस्मात् हितकथनौचित्यात्, एकान्तं निर्जनदेशम्, आसाद्य प्राप्य, गत्वा इत्यर्थः, महीपतेः राज्ञः, वायसराजस्येति भावः, मन्त्रः कार्य्यः, मन्त्रिभिरिति शेषः, येन मन्त्रेण, वयं तस्य राज्ञः, निर्णयं निर्द्धारणं, सन्धि-विग्रहादीनामिति शेषः, तथा कारणं हेतुञ्च, कथं स ईदृशमाचरति तस्य हेतु-निर्द्धारणञ्चेत्यर्थः; यद्वा,—कारणं—करणम्, अनुष्ठानमित्यर्थः, निर्णीतविषयस्येति भावः; ("कारणं करणे हेतुवधयोश्च नपुंसकम्" इति मेदिनी) कुर्मः विदधीम इत्यर्थः; प्रकाशेन मन्त्रभङ्गभयात् एकान्ते एव मन्त्रणाविधिः कार्य्य इति भावः॥ ६॥

(ढ) अन्वयेति।—अन्वयागतान्—कुलक्रमागतान्, उज्जीव्यादिसंज्ञकान्।

(ण) सचिवान्—मन्त्रिणः।

(त) स्थिते—उपस्थिते। मन्यते—कर्त्तव्यत्वेनावधारयतीत्यर्थः।

सह (थ) विग्रहो न कार्य्यः ; यतः स बलवान् (द) कालप्रहर्त्ता च। उक्तञ्च यथा,—

बलीयसे प्रणमतां काले प्रहरतामपि।
सम्पदो नापगच्छन्ति प्रतीपमिव निम्नगाः ॥ ७ ॥

तथा च,—सन्धाज्यो धार्मिकश्चार्य्यो भ्रातृसङ्घातवान् बली।
अनेकविजयी चैव सन्धेयः स रिपुर्भवेत् ॥ ८ ॥
सन्धिः कार्य्योऽप्यनार्य्येण विज्ञाय प्राणसंशयम्।
प्राणैः संरक्षितैः सर्वं यतो भवति रक्षितम् ॥ ९ ॥

---

(थ) विग्रहः,—युद्धमित्यर्थः, ("युद्धमायोधनं……। ……कलहविग्रहौ" इत्यमरः)।

(द) कालप्रहर्त्ता—समयानुसारेणागत्य प्रहारकः, रन्ध्रप्रहर्त्ता इत्यर्थः।

देशकालानुसारेण सन्धिविग्रहयोरुपकारितामाह, बलीयसे इति।—बलीयसे प्रबलाय, प्रणमतां बलवन्तं रिपुं प्रणत्या प्रसादयताम् इत्यर्थः, अपि किञ्च, काले समयोपस्थिते, प्रहरतां रन्ध्रं प्राप्य तमपि घ्नताम् इत्यर्थः, जनानामिति शेषः, सम्पदः वित्तानि, निम्नगाः निम्नगामिन्यः नद्यः, प्रतीपं प्रतिकूलमिव, ऊर्द्ध्वदेशमिवेत्यर्थः, प्रतीपं प्रतिकूलं, अनुपचारमित्यर्थः, न अपगच्छन्ति नापयान्तीत्यर्थः, अनुकूलगता भूत्वा न विनश्यन्तीति भावः ; निम्नगा यथा नीचगामित्वस्वभावात् क्वापि नोर्द्ध्वं प्रवहन्ति, तद्वत् चञ्चला अपि सम्पदः अवसरज्ञत्वादिगुणसम्पन्नान् दुर्बलानपि स्वस्वामिनः परित्यज्य न प्रबलान् आश्रयन्ति इति निष्कर्षः ॥ ७ ॥

के सन्धेयाः इत्याह, सन्धाज्य इति।—धार्मिकः धर्मपरः, आर्य्यः साधुः, भ्रातृसङ्घातवान् बहुभ्रातृपरिवृतः, बली प्रबलः, अनेकविजयी बहुसङ्ग्रामजेता च, रिपुः शत्रुः, सन्धाज्यः परिहरणीयः ; न तेन विग्रहः कर्त्तव्यः, दुर्जेयत्वादिति भावः ; स सन्धेय एव सन्धिना अन्तीकरणीय एव इत्यर्थः, भवेत् ॥ ८ ॥

सन्दिग्धविजये कर्त्तव्यमाह, सन्धिरिति।—प्राणानां संशयं प्राणास्तिष्ठन्ति न वा इत्येवं सन्देहं, विज्ञाय अनार्य्येण दुर्जनेनापि, सन्धिः कार्य्यः, जनैरिति शेषः ; यदि दुर्जनेन सह विग्रहे प्राणसंशयो बुध्यते, तदा तेनापि सन्धिं कुर्य्यात् इत्यर्थः ; यतः प्राणैः संरक्षितैः सद्भिः, सर्वं रक्षितं भवति ; "जीवन्नरो भद्रशतानि पश्यति" इत्याशयः ; लोके शत्रुत्वबन्धुत्वयोः जीवितपर्य्यन्तपर्य्यवसायित्वादिति भावः ॥ ९ ॥

(ध) येन अनेकयुद्धविजयी (न) सः, तेन विशेषात् (प) सन्धानीयः। उक्तञ्च,—

अनेकयुद्धविजयी सन्धानं यस्य गच्छति।
तत्प्रभावेण तस्याऽऽशु वशं गच्छन्त्यरातयः॥ १०॥
सन्धिमिच्छेत् समेनापि सन्दिग्धो विजयो युधि।
न हि सांशयिकं कुर्य्यादित्युवाच बृहस्पतिः॥ ११॥
सन्दिग्धो विजयो युद्धे जनानामिह युध्यताम्।
उपायत्रितयादूर्द्ध्वं तस्मात् युद्धं समाचरेत्॥ १२॥

---

(ध) येन—येन हेतुना।

(न) सः,—उलूकराजः।

(प) सन्धानीयः,—सन्धेयः, [सम्पूर्व्वकात् भ्वादिगणीयदधधातोरनीयर्]।

बलवता सह सन्धानस्य गुणमाह, अनेकेति।—अनेकयुद्धविजयी बहुसङ्ग्रामजेता, नृपतिः इति शेषः, यस्य सन्धानं सन्धिना मित्रभावमित्यर्थः, गच्छति प्राप्नोति, येन संहितः भवति इत्यर्थः, तस्य अरातयः शत्रवः, तस्य संहितस्य, अनेकयुद्धजयिनः इत्यर्थः, प्रभावेण प्रतापेन, आशु शीघ्रं, वशं गच्छन्ति वश्या भवन्ति॥ १०॥

पुनरपि विजयसंशये कार्य्यमुपादिशति, सन्धिमिति।—यदि युधि युद्धे, विजयः सन्दिग्धः संशयापन्नः, भवेदिति शेषः, तदा समेन तुल्यबलेनापि, सन्धिम् इच्छेत्; सांशयिकं सन्देहसङ्कुलं, सन्दिग्धफलकमिति यावत्, किमपि कार्य्यमिति शेषः, न हि कुर्य्यात् इति बृहस्पतिः उवाच॥ ११॥

सहसा विग्रहस्याकर्त्तव्यतामाह, सन्दिग्ध इति।—इह संसारे, युध्यतां सङ्ग्रामं कुर्व्वतां, [यद्यपि युधधातोः दैवादिकस्य आत्मनेपदित्वात् "युध्यताम्" इत्यत्र "युध्यमानानाम्" इत्येव साधु, तथाऽपि वामनमते—आत्मनः युधमिच्छतामित्यर्थे "सुप आत्मनः क्यच्" (३।१।८ पा०) इति क्यचि शतरि कृते "युध्यताम्" इति पदं भवितुमर्हति, तथा च सूत्रं "युध्येदिति युधः क्यचि" (५ अधि० २ अ० २८ सू०)] जनानां युद्धे विजयः सन्दिग्धः सन्देहपूर्णः, तस्मात् उपायानां सामदानभेदानां, त्रितयात् ऊर्द्ध्वं पश्चादित्यर्थः, सामादिभिः कार्य्यस्य असिद्धौ इति भावः, युद्धं समाचरेत् कुर्य्यात्; तथा च युद्धे विजयसन्देहात् प्रथमतः सामाद्युपाय एव अनुष्ठेयः, विफलीभूतेषु च तेषु पश्चात् युद्धम् आश्रयणीयम् इति तात्पर्य्यम्॥ १२॥

असन्दधानो मानात् यः समेनापि हतो भृशम् ।
आमकुम्भ इवान्येन करोत्युभयसङ्क्षयम् ॥ १३ ॥

समं शक्तिमता युद्धमशक्तस्य हि मृत्यवे ।
दृषत् कुम्भं यथा भित्त्वा तावत् तिष्ठति शक्तिमान् ॥ १४ ॥

अन्यच्च—भूमिर्मित्रं हिरण्यं वा विग्रहस्य फलत्रयम् ।
नास्त्येकमपि यद्येषां विग्रहं न समाचरेत् ॥ १५ ॥

---

पूर्वं समेनापि सन्धिः कार्यः इत्युक्तम्, इदानीं तदकरणे दोषमाह, असन्दधान इति ।—यः समबल इत्यर्थः, मानात् गर्वात्, ( "गर्वोऽभिमानोऽहङ्कारो मानश्चित्तसमुन्नतिः" इत्यमरः ) अहं समेन अनेन सह सन्धिं न करिष्यामीत्यभिमानादिति भावः, समेनापि समबलेनापि, का कथा प्रबलेन इत्यपिशब्दार्थः, असन्दधानः सन्धिम् अकुर्वन्, तिष्ठतीति शेषः ; अत्र स इति कर्तृपदमूहनीयं, सः अन्येन समबलेन अन्येन रिपुणेत्यर्थः, भृशम् अत्यर्थं, हतः ताडितः सन्, आमकुम्भ इव अपक्वघट इव, उभयसङ्क्षयम् आत्मनः रिपोश्च द्वयोरपि नाशं, करोति विदधाति ; समेन सह विग्रहे मृन्मयघटयोरिव स्वस्य परस्य च उभयोरपि नाशस्यावश्यम्भावित्वात् समेनापि सन्धिः करणीयः, न तु विग्रह इति फलितार्थः ॥ १३ ॥

असमविग्रहस्य दोषमाह, सममिति ।—अशक्तस्य अक्षमस्य, दुर्बलस्य इत्यर्थः, नृपतेरिति शेषः, शक्तिमता प्रबलेन, रिपुणेति शेषः, समं सह, युद्धं सङ्ग्रामः, मृत्यवे हि निधनकारणमेव इत्यर्थः, भवतीति शेषः ; शक्तिमान् जनः, दृषत् पाषाणः, कुम्भं यथा मृन्मयं कलसमिवेति यावत्, भित्त्वा विदार्य, दुर्बलमिति शेषः, तिष्ठति तावत् स्थितिं करोत्येव ; ( "यावत्तावच्च साकल्ये एवार्थे च समुच्चये" इति मेदिनी ) पाषाणो यथा मृन्मयं कलसं विनाश्य स्वयमभग्न एव तिष्ठति, एवं शक्तिमान् रिपुरपि दुर्बलं प्रतिपक्षं विजित्य स्वयमक्षतशरीर एव वर्त्तते इति निष्कर्षः ॥ १४ ॥

लाभालाभौ विचार्य्य युद्धं कर्त्तव्यमित्याह, भूमिरिति ।—भूमिः राज्यं, मित्रं सुहृत्, हिरण्यं सुवर्णं वा, ( धनादानमलक्षणमेतत् ) एतत् विग्रहस्य सङ्ग्रामस्य, फलत्रयम् एषां त्रयाणामन्यतम एव लाभ इत्यर्थः ; एषां त्रयाणां प्राप्त्यर्थमेव जिगीषवः युद्धे प्रवर्त्तन्ते इति भावः ; यदि एषां भूम्यादीनाम्, एकमपि नास्ति न लभ्यं भवतीत्यर्थः, तदा विग्रहं युद्धं, न समाचरेत् न कुर्य्यादित्यर्थः ; प्रयोजनमुद्दिश्यैव सर्वेषां सर्वत्र प्रवर्त्तनादिति भावः ॥ १५ ॥

खनन्नाखुबिलं सिंहः पाषाणशकलाकुलम्।
प्राप्नोति नखभङ्गं वा फलं वा मूषको भवेत् ॥ १६ ॥
तस्मान्न स्यात् फलं यत्र दृष्टं युद्धन्तु केवलम्।
न तत् स्वयं समुत्पाद्यं कर्त्तव्यं न कथञ्चन ॥ १७ ॥
बलीयसा समाक्रान्तो वैतसीं वृत्तिमाचरेत्।
वाञ्छन् अभ्रंशिनीं लक्ष्मीं न भौजङ्गीं कदाचन ॥ १८ ॥
कुर्वन् हि वैतसीं वृत्तिं प्राप्नोति महतीं श्रियम्।
भुजङ्गवृत्तिमापन्नो वधमर्हति केवलम् ॥ १९ ॥

---

खनन्निति।—सिंहः पाषाणशकलैः प्रस्तरखण्डैः, पतितैरिति भावः; आकुलं पूर्णम्, आखोः मूषिकस्य, ("उन्दुरुर्मूषिकोऽप्याखुः" इत्यमरः) बिलं गर्त्तं, खनन् विदारयन् सन्, नखानां भङ्गं वा प्राप्नोति, वा अथवा, मूषकः मूषिकप्राप्तिमात्रमित्यर्थः, फलं भवेत्, तस्येति शेषः; अतिसामान्यलाभाकाङ्क्षया, सामान्यस्यापि कदाचित् लाभविरहसम्भावनाया महान् प्रयत्नो न आश्रयणीय इति भावः, "अल्पस्य हेतोर्बहु हातुमिच्छन् विचारमूढः प्रतिभासि मे त्वम्" इति तात्पर्य्यम् ॥ १६ ॥

तस्मादिति।—तस्मात् यत्र यस्मिन् कार्य्ये, फलं लाभः, भूम्यादिषु विषु कस्यापि वस्तुनः प्राप्तिः इत्यर्थः, ("फलं जातीफले शस्ये हेतुत्थे व्युष्टिलाभयोः" इति मेदिनी) न दृष्टं न लक्षितं, स्यात्, तु किन्तु, केवलं निरर्थकमित्यर्थः, युद्धं विरोधः, भवेदिति शेषः, तत् कार्य्यं, स्वयं न समुत्पाद्यं न उत्थापनीयं, स्वचेष्टया न पुनः तादृशं कार्य्यं विधेयमित्यर्थः, कथञ्चन न कर्त्तव्यञ्च अन्येन समुत्पादितमपि तादृशं कार्य्यं सर्वथा वर्जनीयमिति भावः ॥ १७ ॥

बलीयसीति।—अभ्रंशिनीम् अक्षय्यां, लक्ष्मीं सम्पदं, वाञ्छन् अभिलषन्, जनः इति शेषः, बलीयसा प्रबलेन शत्रुणा, समाक्रान्तः अभिभूतः सन्, वैतसीं वृत्तिं वेतसलतावत् व्यवहारं, नम्रतामिति भावः, आचरेत् आश्रयेत्, कदाचन कदापि, भौजङ्गीं सर्पसम्बन्धिनीं, शिरःसमुत्थापनरूपामिति यावत्, दुर्नमत्वरूपामिति भावः, वृत्तिमित्यनुषङ्गः, न, आचरेत् इति पूर्वानुषङ्गः; तथा कृते पतनस्यावश्यम्भावित्वादिति भावः ॥१८॥

कुर्वन्निति।—वैतसीं वेतससम्बन्धिनीं, वृत्तिम् आनुगत्यमिति भावः, कुर्वन् आश्रयन्, महतीं श्रियं विपुलां सम्पदं, प्राप्नोति हि, भुजङ्गवृत्तिम् सर्पव्यवहारम्, आपन्नस्तु केवलं वधं विनाशम्, अर्हति विनश्यतीत्यर्थः ॥ १९ ॥

कौर्मं सङ्कोचमास्थाय प्रहारानपि मर्षयेत् ।
काले काले च मतिमान् उत्तिष्ठेत् कृष्णसर्पवत् ॥ २० ॥
आगतं विग्रहं मत्वा सुसाम्ना प्रशमं नयेत् ।
विजयस्य ह्यनित्यत्वात् रभसच्च समुत्सृजेत् ॥ २१ ॥
तथा च,—बलिना सह योद्धव्यमिति नास्ति निदर्शनम् ।
प्रतिवातं न हि घनः कदाचिदुपसर्पति" ॥ २२ ॥

एवम् (फ) उज्जीवी साममन्त्रं सन्धिकारं कृतवान् ।

---

कौर्ममिति ।—मतिमान् बुद्धिमान् जनः, कूर्मस्यायं कौर्मः तं कौर्मं कूर्मसम्बन्धिनं, सङ्कोचम् आकुञ्चनभावं, प्रतिप्रहारचेष्टां विसृज्य करपदाद्यङ्गसङ्कोपनरूपमिति भावः, आस्थाय अवलम्ब्य, प्रहारानपि मर्षयेत् सहेत ; तथा काले काले सुसमयं प्राप्येति भावः, कृष्णसर्पवत् कालभुजङ्ग इव, उत्तिष्ठेत् शत्रून् दशेदिति भावः ; तथा च बलवता सह विरोधे कदाचित् कूर्मवृत्तिः कदाचिच्च भुजङ्गवृत्तिः आश्रयणीया इत्यभिप्रायः । ["उत्तिष्ठेत्" इत्यत्र "उदोऽनूर्द्ध्वकर्मणि" (१।३।२४ पा०) इति सूत्रेण अनूर्द्ध्वताविशिष्टक्रियावचनार्थकत्वाभावप्रतीतेः नात्मनेपदमिति विभाव्यम् ] ॥२०॥

आगतमिति ।—विग्रहं युद्धम्, आगतम् उपस्थितं, मत्वा सुसाम्ना ["सुसामादिषु च" (८।३।९८ पा०) इत्यत्र उदाहरणद्वारा बहुशोदाहृतेव अन्वदर्शनात् अत्र न मूर्द्धन्य-षकारः ] शोभनेन सान्त्वेन, सामप्रयोगेणेत्यर्थः, प्रशमं प्रकृष्टां शान्तिं, नयेत् प्रापयेत् ; विजयस्य अनित्यत्वात् कादाचित्कत्वादिति भावः, रभसं वेगञ्च, युद्धोद्योगमित्यर्थः, समुत्सृजेत् हि त्यजेदेव, बुद्धिमान् जन इति शेषः ; तत्र च पराजयस्यापि सम्भवादिति भावः ॥ २१ ॥

बलिनेति ।—बलिना बलवता, सह योद्धव्यम् इति अत्र निदर्शनं दृष्टान्तः, न अस्ति न विद्यते, अन्वयेन इति शेषः । यद्यपि अन्वयदृष्टान्तस्यात्र न सुलभः, तथाऽपि व्यतिरेकदृष्टान्तस्य यन्नैवं तन्नैवमित्याद्याकारकस्य सर्वत्र सुलभतया वैधर्म्येण तमेवो-त्थापयति, प्रतिवातमित्यादिना ।—हि तथा हि, घनः मेघः, प्रतिवातं वातस्य प्राति-कूल्येनेति भावः, कदाचित् न उपसर्पति न उद्गच्छति, वातस्य प्रबलत्वादिति भावः ॥ २२ ॥

(फ) उज्जीवी—तदाख्यमन्त्री । साममन्त्रं—साम्नः मन्त्रम् । सन्धिकारं—सन्धिकरणोपयोगिनमित्यर्थः । कृतवान्—रचितवान्, वर्णयामासेत्यर्थः ।

अथ तत् श्रुत्वा सञ्जीविनम् आह,—"भद्र! तव अभिप्राय-मपि श्रोतुम् इच्छामि"। स आह,—"देव! (ब) न मम एतत् प्रतिभाति, यत् शत्रुणा सह सन्धिः क्रियते। उक्तञ्च यतः,—

शत्रुणा न हि सन्दध्यात् सुश्लिष्टेनापि सन्धिना।
सुतप्तमपि पानीयं शमयत्येव पावकम्॥ २३॥

अपरञ्च, स क्रूरोऽत्यन्तलुब्धो धर्मरहितः; तत् त्वया विशेषात् न सन्धेयः। उक्तञ्च यतः,—

सत्यधर्मविहीनेन न सन्दध्यात् कथञ्चन।
सुसन्धितोऽप्यसाधुत्वादचिरात् याति विक्रियाम्॥ २४॥

तस्मात् तेन सह योद्धव्यमिति मे मतिः। उक्तञ्च यतः,—

क्रूरो लुब्धोऽलसोऽसत्यः प्रमादी भीरुरस्थिरः।
मूढो युद्धावमन्ता च सुखोच्छेद्यो भवेद्रिपुः॥ २५॥

---

(ब) एतत्—माम इत्यर्थः, न प्रतिभाति—न स्फुरति, न रोचते इति भावः।

शत्रुणेति।—सुश्लिष्टेनापि सुघटितेनापि, सन्धिना बहुधान्तर्गतसन्ध्याद्यङ्गुणे-नेत्यर्थः, शत्रुणा सह न हि नैव, सन्दध्यात् सम्मेलनं कुर्य्यादित्यर्थः, जनः इति शेषः, पूर्ववैरप्रतिविधानाऽऽशङ्कया इति भावः; पानीयं जलं, सुतप्तम् अत्युष्णमपि, शैत्य-गुणत्यागेन उष्णगुणमाश्रितमपीति भावः, पावकम् अग्निं, शमयत्येव निर्वापयत्येव; सहजवैरित्वादिति भावः; पानीयं पावकस्य शत्रुः, तत्तु पावकेन नितरामनुप्रवेशेन उष्णीकृतमपि समयं प्राप्य यथा तमेवाग्निं नाशयति, तथा कृतसन्धिं पूर्वशत्रुरपीति तात्पर्य्यम्॥ २३॥

सत्येति।—सत्यधर्मविहीनेन सत्यपालनरूपधर्मभ्रष्टेन, कपटाऽऽचरणपरेण इत्यर्थः, अनेन सह इति शेषः, कथञ्चन न सन्दध्यात् न सन्धिं कुर्य्यात; सुसन्धितोऽपि सन्धिना सुनियन्त्रितोऽपि, ["सुसन्धितः" इत्यत्र तारकादित्वादितच्। विक्रियापदेन अन्वये तु षष्ठ्याः तसिल् इति केचित] असाधुत्वात् दुष्टत्वात, सत्यधर्मविहीनत्वा-दित्यर्थः, अचिरात् शीघ्रं, विक्रिया विकारम्, अन्यथाभावमित्यर्थः, याति गच्छति, सन्धिं विघटयतीत्यर्थः॥ २४॥

क्रूर इति।—क्रूरः निष्ठुरः, लुब्धः लोभपरः, अलसः चिरायितकर्मा, असत्यः

प—२७

अपरं, तेन पराभूता वयम् ; तत् यदि (भ) सन्धानकीर्त्तनं करिष्यामः, स भूयोऽत्यन्तं कोपं करिष्यति । उक्तञ्च,—

चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया ।
स्वेद्यमामज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चति ? ॥ २६ ॥

सामवादाः सकोपस्य शत्रोः प्रत्युत दीपकाः ।
प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः ॥ २७ ॥

यदेव एतत् वदति रिपुर्बलवान्, तदपि अकारणम् । यतः,—

मिथ्यावादी, प्रमादी अनवधानवान्, भीरुः भयशीलः, अस्थिरः अधीरः, मन्दः निर्बोधः, युद्धावमन्ता युद्धनिरुत्सुकः, रिपुः शत्रुः, सुखोच्छेद्यः सुखेन उन्मूलनीयः, भवेत् ; अत एव युद्धे निरुत्साहताप्रदर्शनं नोचितम् इति भावः ॥ २५ ॥

(भ) सन्धानकीर्त्तनं—सन्धिप्रस्तावम् ।

चतुर्थोपायेति ।—चतुर्थेन उपायेन युद्धेन इत्यर्थः, "सामदानभेददण्डाः इत्युपायचतुष्टयम्" इत्यनेन युद्धस्य चतुर्थत्वेन परिगणनादिति भावः, साध्ये प्रतिकार्य्ये, दमनीये इत्यर्थः, रिपौ शत्रौ, सान्त्वं सामप्रयोगः, ("साम सान्त्वमुभे समे" इत्यमरः) अपक्रिया अपकारः, अनिष्टकारणम् इत्यर्थः । तथा हि, कः प्राज्ञः, स्वेद्यं स्वेदक्रियया चिकित्स्यम्, उष्णोपचारेण प्रतिकार्य्यम् इत्यर्थः, ("स्वेदस्तु स्वेदने घर्मे" इति विश्वः) आमज्वरं नवज्वरम्, अपक्वज्वरिणमिति यावत्, ("आमो रोगे रोगभेदे आमोऽपक्वे तु वाच्यवत्" इति विश्वः) अम्भसा जलेन, परिषिञ्चति ? ["उपसर्गात् सुनोति—" (८।३।६५ पा०) इति षत्वम्] न कोऽपीत्यर्थः ; तादृशशत्रौ सान्त्ववादो नवज्वरे जलसेक इव उद्दीपनकरः, अतो दण्ड एव इति भावः । नवज्वरितस्याम्भसेको यथा तद्वृद्धये, न तूपशान्तये, तथा सकोपे रिपौ सान्त्वमुद्दीपनकरमिति वाक्यभेदेन बिम्बप्रतिबिम्बताक्षेपात् दृष्टान्तालङ्कारः,—"दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्" इति लक्षणात ॥ २६ ॥

सामेति ।—सकोपस्य क्रुद्धस्य, शत्रोः सामवादाः सान्त्ववाक्यानि, प्रतप्तस्य अत्युष्णस्य, सर्पिषः घृतस्य, सहसा हठात्, तोयबिन्दवः जलबिन्दवः इव, जलबिन्दुप्रक्षेप इवेत्यर्थः, प्रत्युत वैपरीत्येन, दीपकाः उद्दीपयितारः, न तु शान्तिकरा इत्यर्थः ; अतः कोपहार्द्दहेतुसामाचरणं तत्र न कर्त्तव्यम्, अपि तु स दण्ड्य एवेति भावः ॥२७॥

सोत्साहशक्तिसम्पन्नो हन्याच्छत्रुं लघुर्गुरुम् ।
यथा कण्ठीरवो नागे सुसाम्राज्यं प्रपद्यते ॥ २८ ॥
मायया शत्रवो वध्या अवध्याः स्युर्बलेन ये ।
यथा स्त्रीरूपमास्थाय हतो भीमेन कीचकः ॥ २९ ॥

तथा च,—मृत्योरिवोग्रदण्डस्य राज्ञो यान्ति वशं द्विषः ।
शष्पतुल्यं हि मन्यन्ते दयालुं रिपवो नृपम् ॥ ३० ॥

---

सोत्साहेति ।—नागे हस्तिनि, महाकाये इति भावः, वर्त्तमाने सत्यपीति शेषः, यथा कण्ठीरवः सिंहः, ("सिंहो मृगेन्द्रः पञ्चास्यो हर्य्यक्षः केशरी हरिः । कण्ठीरवो मृगरिपुर्मृगदृष्टिर्मृगाशनः ॥" इति कोषः) नागापेक्षया क्षुद्रकायोऽपि इति भावः, यथा सुसाम्राज्यं प्रपद्यते सुखेन साम्राज्यं करोति ; उत्साहशक्तिसम्पन्नत्वात् इति भावः ; तथा लघुः क्षुद्रो जनः, सोत्साहा अध्यवसायसमन्विता, या शक्तिः तया सम्पन्नः संयुक्तः, उत्साहशक्तिसंयुक्तश्चेत् इत्यर्थः, गुरुं महान्तमपि, प्रबलमपीत्यर्थः, शत्रुं हन्यात् ॥ २८ ॥

माययेति ।—ये शत्रवः बलेन पराक्रमेण, अवध्याः स्युः, ते मायया छलेन, वध्याः हन्तव्याः ; यथा भीमेन स्त्रीरूपं नारीरूपं, सैरिन्ध्रीवेशमिति यावत्, आस्थाय अवलम्ब्य, कीचकः विराटसेनापतिः, द्रौपदीधर्षणोद्यत इति यावत्, हतः विनाशितः, तद्वदिति शेषः ; पुरा अज्ञातवासावस्थायां पाण्डवाः सह पाञ्चाल्या छद्मवेशेन विराटनगरमधिवसन्ति स्म । तदा अन्तःपुरवासिनीं सैरिन्ध्रीवेशां पाञ्चालीं कीचको विराटसेनानीः कामयाञ्चक्रे । सा तु तद्वार्त्तां महानसाधिकृताय भीमाय समाचचक्षे । तदाकर्ण्य भीमः "अहमेव तव वेशेन सङ्केतस्थानं गत्वा तं निपातयिष्यामि" इत्युक्त्वा तां प्रियां समाश्वास्य कीचकाय सङ्केतं कर्तुमादिदेश । ततश्च गत्वा कीचकं प्राप्य छद्मवेशेन तत्रैव निहतवानिति भारतीया कथाऽत्रानुसन्धेया ॥ २९ ॥

मृत्योरिति ।—द्विषः शत्रवः, मृत्योरिव यमस्येव, उग्रदण्डस्य तीक्ष्णतेजसः इत्यर्थः, राज्ञो वशम् अधीनतां, यान्ति वश्याः भवन्ति इत्यर्थः । रिपवः शत्रवः, दयालुं कृपाशीलं, युद्धविमुखमिति भावः, [ दयालुरिति "स्पृहि-गृहि-पति-दयि-निद्रा-तन्द्रा-श्रद्धाभ्य आलुच्" (३।२।१५८ पा०) इति आलुच् ] नृपं शष्पतुल्यं तृणसमं, हेयमिति भावः, मन्यन्ते हि ; तथा च जगति प्रभुत्वकामानां नृपाणां तेजस्विता कदाचिदपि न परित्यक्तव्या इति भावः ॥ ३० ॥

प्रयाति शमनं यस्य तेजस्तेजस्वितेजसा ।
वृथा जातेन किं तेन मातुर्यौवनहारिणा ? ॥ ३१ ॥
या लक्ष्मीर्नानुलिप्ताङ्गी वैरिशोणितकुङ्कुमैः ।
कान्ताऽपि मनसः प्रीतिं न सा धत्ते मनस्विनाम् ॥३२॥
रिपुरक्तेन संसिक्ताऽरिस्त्रीनेत्राम्बुभिस्तथा ।
न भूमिर्यस्य भूपस्य का श्लाघा तस्य जीवने ?" ॥ ३३ ॥

एवं सञ्जीवी विग्रहमन्त्रं विज्ञापयामास ।

अथ तत् श्रुत्वा अनुजीविनम् अपृच्छत्,—"भद्र ! त्वमपि स्वाभिप्रायं निवेदय" । सोऽब्रवीत्,—"देव ! दुष्टः स बलाधिकः (म) निर्मर्य्यादश्च, तत् तेन सह सन्धिविग्रहौ न युक्तौ, केवलं (य) यानम् अर्हं स्यात् ।

प्रयातीति ।—यस्य तेजः प्रतापः, तेजस्विनः प्रतापवतः, तेजसा प्रभावेण, शमनं शान्तिं, प्रयाति गच्छति, पराभवं प्राप्नोतीति भावः ; मातुः जनन्याः, यौवनहारिणा तारुण्यक्षयकारिणा, वृथा जातेन निरर्थकमुत्पन्नेन, तेजोहीनत्वेन सर्वस्यैव पराभवस्थानत्वादिति भावः ; तेन नरेण, किम् ? न किमपि प्रयोजनमित्यर्थः ॥ ३१ ॥

येति ।—या लक्ष्मीः वैरिणां शत्रूणां, शोणितान्येव कुङ्कुमानि काश्मीरजानि, रक्तवर्णद्रव्यविशेषाः इति यावत्, तैः, नानुलिप्तं न रञ्जितम्, अङ्गं यस्याः तादृशी, भवतीति शेषः, सा लक्ष्मीः, कान्ताऽपि कमनीयाऽपि, स्पृहणीयाऽपि इत्यर्थः, मनस्विनां वीराणां, मनसः चित्तस्य, प्रीतिम् आनन्दं, न धत्ते नोत्पादयति ; युद्धप्रियत्वात् शक्तिमतां स्वयमुद्धतस्वभावानां मनस्विनां न अनायासलब्धे प्रीतिरिति भावः ॥ ३२ ॥

रिपुरक्तेनेति ।—यस्य भूपस्य राज्ञः, भूमिः रिपूणां रक्तेन, तथा अरीणां रिपूणां, याः स्त्रियः तासां नेत्राम्बुभिः नयनजलैः, पतिपुत्रादिशोकजनितैरिति भावः, न संसिक्ता न सम्यक् आर्द्रा, न सिञ्चिता इत्यर्थः, तस्य जीवने का श्लाघा ? का प्रशंसा ? न काऽपि इत्यर्थः ॥ ३३ ॥

(म) निर्मर्य्यादः,—मर्य्यादालङ्घनकारी, अशिष्टाचार इत्यर्थः ।

(य) यानं—स्वराज्यस्य रक्षाविधानं कृत्वा रिपुविनाशार्थं गमनम् ; शत्रोर्भीत्युत्पादनाय युद्धोद्योग इति भावः । अर्हं—योग्यम् ।

अन्यच,—बलोत्कटेन दुष्टेन मर्य्यादारहितेन च।
न सन्धिविग्रहौ नैव विना यानं प्रशस्यते ॥ २४ ॥
द्विधाऽऽकारं भवेत् यानं भयवस्तुप्ररक्षणम्।
एकमन्यज्जिगीषोस्तु यात्रालक्षणमुच्यते ॥ २५ ॥
कार्त्तिके वाऽथ चैत्रे वा विजिगीषोः प्रशस्यते।
यानमुत्कृष्टवीर्य्यस्य शत्रुदेशे न चान्यदा ॥ २६ ॥
अवस्कन्दप्रदानस्य सर्वे कालाः प्रकीर्त्तिताः।
व्यसने वर्त्तमानस्य शत्रोश्छिद्रान्वितस्य च ॥ २७ ॥
स्वस्थानं सुदृढं कृत्वा शूरैराप्तैर्महाबलैः।
परदेशं ततो गच्छेत् प्रणिधिव्याप्तमग्रतः ॥ २८ ॥

बलोत्कटेनेति।—बलोत्कटेन बलाधिकेन, दुष्टेन अनार्य्येण, मर्य्यादा शिष्टाचारः, तद्रहितेन, शत्रुणा सहेति शेषः, चकारः समुच्चये, सन्धिविग्रहौ नैव, कार्य्यौ इति शेषः, तत्र यानं विना यात्राव्यतिरेकेण, अन्यदिति शेषः, न प्रशस्यते न युज्यते; यानमेव तत्र योग्यमिति भावः ॥ २४ ॥

द्विधेति।—यानं द्विधाऽऽकारं द्विप्रकारं, भवेत्, एकं, तयोरिति शेषः, भयवस्तुप्ररक्षणं भयवस्तूनां रिपुभयार्त्तानां, प्रकर्षेण रक्षणम्; अन्यत् द्वितीयं, जिगीषोः [जिघांसोः सन्नन्तात् उप्रत्ययः] जयार्थिनः, यात्रालक्षणं युद्धार्थं शत्रुं प्रति गमनस्वरूपं, नो वयं रिपुभीताः, अपि तु युद्धकामाः इत्येव प्रकटनमिति भावः; उच्यते कथ्यते ॥ २५ ॥

कार्त्तिके इति।—उत्कृष्टवीर्य्यस्य अधिकतेजसः, विजिगीषोः विजयार्थिनः, राज्ञः इति शेषः, कार्त्तिके वा, अथवा चैत्रे शत्रुदेशे यानं यात्रा, प्रशस्यते, अन्यदा अन्यस्मिन् काले, न च नैव, प्रशस्यते इत्यनुषङ्गः ॥ २६ ॥

अवस्कन्देति।—व्यसने स्त्रीमद्यादौ, वर्त्तमानस्य प्रसक्तस्य, तथा छिद्रान्वितस्य च प्रकृतिकोपादिरूपदोषयुक्तस्य इत्यर्थः, शत्रोः अवस्कन्दप्रदानस्य अवस्कन्दः आक्रमणं, तस्य यत् प्रदानं विधानं तस्य, सर्वे कालाः प्रकीर्त्तिताः कथिताः; तादृशशत्रुनिधनाय कालाकालविचारः न करणीयः इति भावः ॥ २७ ॥

स्वस्थानमिति।—शूरैः वीरैः, महाबलैः आप्तैः विश्वस्तैः पुरुषैः, स्वस्थानं स्वं नगरं, सुदृढं शत्रुदुरासदमित्यर्थः, कृत्वा, सुसंरक्ष्येति हृदयं, राज्यरक्षणाय तथाविधा-

अज्ञातविवधासार-तोयसस्यो व्रजेत् तु यः ।
परराष्ट्रं स नो भूयः स्वराष्ट्रमधिगच्छति ॥ ३९ ॥

तत् ते युक्तं कर्तुम् ( २ ) अपसरणम् ।

अन्यच्च,—न विग्रहो न सन्धानं बलिना तेन पापिना ।
कार्य्यलाभमपेक्ष्याप-सरणं क्रियते बुधैः ॥ ४० ॥

उक्तञ्च यतः,—यदपसरति मेषः कारणं तत् प्रहर्त्तुं
मृगपतिरपि कोपात् सङ्कुचत्युत्पतिष्णुः ।
हृदयविहितवैरा गूढमन्त्रोपचाराः
किमपि विगणयन्तो बुद्धिमन्तः सहन्ते ॥ ४१ ॥

ऽऽसपुरुषान् संस्थाप्य इति निष्कर्षः, ततः अनन्तरम्, अग्रतः पूर्वं, प्रणिधिभिः चारैः, शत्रूणां छिद्रज्ञानार्थं सम्प्रेरितैरिति भावः, व्याप्तम् आकीर्णं, परदेशं शत्रुराज्यं, गच्छेत ; राज्ञः चक्षुःसदृशा एव चाराः, अतः तान् अग्रतः अनियोज्य शत्रुराज्याभिगमने अन्धवत् पदे पदे स्खलनमिति तात्त्विकम् ॥ ३८ ॥

अज्ञातेति ।—अज्ञातानि अविदितानि, विवधः अध्वा, शत्रुदेशगमनमार्ग इत्यर्थः, ( "विवधो वीवधश्चापि पर्य्याहारेऽध्वभारयोः." इति विश्वः ) आसारः सुहृद्बलम्, ( "आसारस्तु सुहृद्बलम् । प्रसारस्तृणकाष्ठादेः प्रवेशः ॥" इति वैजयन्ती ) तोयं जलं, शस्यञ्च तानि विवधासारतोयशस्यानि येन तादृशः, शत्रुराज्ये गमनाय सुगममार्गं तथा स्वपक्षस्य शत्रुपक्षस्य च सहायबलाद्यपानीयादीनां प्राचुर्य्यादिकमननुसन्धाय इत्यर्थः, यस्तु राजा, परराष्ट्रं शत्रुदेशं, व्रजेत गच्छेत, सः भूयः पुनः, स्वराष्ट्रं न अधिगच्छति न प्राप्नोति ; शत्रुभिः पराजीयते इति भावः ॥ ३९ ॥

( २ ) अपसरणं—यानम् ।

नेति ।—बलिना बलवता, पापिना सदाचारभ्रष्टेन, तेन उलूकेन, विग्रहो युद्धं, न, सन्धानं सन्धिश्च, न, कर्त्तव्यमिति शेषः ; कार्य्यलाभं कार्य्यस्य विजयरूपस्य, लाभं प्राप्तिम, अपेक्ष्य प्रतीक्ष्य, बुधैः विद्वद्भिः, अपसरणं यानं, क्रियते ॥ ४० ॥

यदिति ।—मेषः मेडकः, यत् अपसरति पश्चात् गच्छति, अपरमेषेणाक्रान्तः इति शेषः, तत् अपसरणं, प्रहर्त्तुं कारणम् आक्रामकमेषस्य प्रहारनिमित्तमित्यर्थः ; भवतीति शेषः, कोपात् उत्पतिष्णुः उत्पतनेच्छुः, [ उत्पूर्वकपतधातोः "अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्" ( ३।२।१३६ पा० ) इतीष्णुचि रूपम ] आक्रमणोद्यत इति भावः, मृगपतिः सिंहोऽपि, सङ्कुचति सङ्कोचं प्राप्नोति, कस्यापि जन्तु

अन्यच,—बलवन्तं रिपुं दृष्ट्वा देशत्यागं करोति यः ।
युधिष्ठिर इवाप्नोति पुनर्जीवन् स मेदिनीम् ॥ ४२ ॥
युध्यतेऽहङ्कृतिं कृत्वा दुर्बलो यो बलीयसा ।
स तस्य वाञ्छितं कुर्य्यादात्मनश्च कुलक्षयम् ॥ ४३ ॥

तत् बलवताऽभियुक्तस्य अपसरणसमयोऽयं न सन्धेर्विग्रहस्य च”।

एवम् अनुजीविमन्त्रोऽपसरणस्य ।

अथ तस्य वाक्यं समाकर्ण्य प्रजीविनमाह,—“भद्र ! त्वमपि आत्मनोऽभिप्रायं वद”। सोऽब्रवीत्,—“देव ! मम सन्धि-विग्रहयानानि त्रीणि अपि (ख) न प्रतिभान्ति, विशेषतश्च (ग) आसनं प्रतिभाति । उक्तञ्च यतः,—

नक्रः स्वस्थानमासाद्य गजेन्द्रमपि कर्षति ।
स एव प्रच्युतः स्थानाच्छुनाऽपि परिभूयते ॥ ४४ ॥

भूतस्य प्राणिन उपरि उत्पतनात् प्राक् स्वाङ्गं सङ्कोच्य तत्कालावच्छेदेन उत्पतनात् निवर्त्तते इत्यर्थः ; तत् इहापि कार्य्यं समुचितम् इति भावः । तथा हि, बुद्धिमन्तो जनाः, हृदये विहितं वैरं यैः तथोक्ताः अपि, गूढः अप्रकाशितः, मन्त्रः मन्त्रणमेव, उपचारः मनोवृत्तिविशेषः येषां तथाभूताः सन्तः, किमपि कारणविशेषं, विगणयन्तः विचारयन्तः, सहन्ते, शत्रूणामुपद्रवमिति शेषः । मालिनी वृत्तम् ॥ ४१ ॥

बलवन्तमिति ।—यः, बलवन्तम् अधिकवीर्य्यं, रिपुं शत्रुं, दृष्ट्वा देशत्यागं करोति, स पुनर्जीवन् पुनरभ्युदयं गच्छन्, युधिष्ठिर इव मेदिनीं राज्यम्, आप्नोति ; अतः आयति प्रबले वैरिणि भाविराज्यस्थैर्य्यमिच्छुना देशत्यागोऽपि कर्त्तव्य इति भावः ॥४२॥

युध्यते इति ।—यः दुर्बलः अहङ्कृतिं गर्वं, कृत्वा बलीयसा प्रबलेन सह, युध्यते, सः तस्य बलीयसः रिपोः, वाञ्छितम् अभिप्रेतं, स्वपराभवरूपम् इत्यर्थः, आत्मनः कुलक्षयस्य वंशनाशस्य, कुर्य्यात् ॥ ४३ ॥

(ख) न प्रतिभान्ति—न रोचन्ते, मनसि न आयान्ति इति भावः ।

(ग) आसनं—नायं युद्धकालः किन्तु दुर्गादिः संस्कार्य्यः इति कालादि-प्रतीक्षया स्वस्थाने अवस्थितिः ।

नक्र इति ।—नक्रः कुम्भीरः, स्वस्थानम् आसाद्य स्वस्मिन् स्थाने स्थित्वेत्यर्थः, गजेन्द्रमपि गजराजमपि, स्वस्मात् बलवन्तमपि इति भावः, कर्षति ; स एव गजेन्द्राकर्षी

अन्यच्च,—अभियुक्तो बलवता दुर्गे तिष्ठेत् प्रयत्नवान् ।
तत्रस्थः सुहृदाह्वानं प्रकुर्वीताऽऽत्ममुक्तये ॥ ४५ ॥
यो रिपोरागमं श्रुत्वा भयसन्त्रस्तमानसः ।
स्वस्थानं सन्त्यजेत् तत्र न स भूयो वसेन्नरः ॥ ४६ ॥
दंष्ट्राविरहितः सर्पो मदहीनो यथा गजः ।
स्थानहीनस्तथा राजा गम्यः स्यात् सर्वजन्तुषु ॥ ४७ ॥
निजस्थानस्थितोऽप्येकः शतं योद्धुं सहेन्नरः ।
शक्तानामपि शत्रूणां तस्मात् स्थानं न सन्त्यजेत् ॥ ४८ ॥

नक्रः एव, स्थानात् स्वस्थानात्, जलादित्यर्थः, प्रच्युतः भ्रष्टः चेत्, शुना कुक्कुरेणापि, हीनबलिनेति भावः, परिभूयते पराजीयते, बध्यते इत्यर्थः ; "स्थानस्थितः कापुरुषोऽपि सिंहः" इति भावः ॥ ४४ ॥

अभियुक्त इति ।—बलवता प्रबलेन, शत्रुणा इति शेषः, अभियुक्तः आक्रान्तः, जनः इति शेषः, प्रयत्नवान् सावहितः सन्, दुर्गे तिष्ठेत, तत्रस्थः दुर्गस्थितः, आत्ममुक्तये आत्मनस्त्राणाय, सुहृदां मित्राणाम्, आह्वानं प्रकुर्वीत, साहाय्यार्थं मन्त्रणार्थं वा इति भावः ॥ ४५ ॥

य इति ।—यः रिपोः शत्रोः, आगमम् आगमनं, युद्धार्थमिति भावः, श्रुत्वा भयेन सन्त्रस्तम् अतिभीतं, मानसं यस्य तथाभूतः सन्, स्वस्थानं सन्त्यजेत, स नरः, तत्र स्वस्थाने, भूयः पुनः, न वसेत् न वसतिं कर्तुं शक्नुयादित्यर्थः ; अतः स्थानभ्रष्टेन भवितव्यमिति भावः ॥ ४६ ॥

दंष्ट्रेति ।—दंष्ट्राविरहितः भग्नदन्तः सर्पः, मदहीनः मदस्रावशून्यः, गजश्च, यथा एतौ यथा निर्वीर्यत्वात् सर्वैरेव अभिभवनीयौ स्यातामित्यर्थः, तथा स्थानहीनः स्वस्थानात् भ्रष्टः, राजा सर्वेषु जन्तुषु प्राणिषु मध्ये, येन केनापीति शेषः, गम्यः सुधर्षणीयः, स्यात् ॥ ४७ ॥

निजेति ।—एकोऽपि असहायोऽपि, नरः निजस्थानस्थितः स्वदुर्गावस्थितः सन्, शक्तानामपि शक्तिमतामपि, प्रबलानामित्यर्थः, शत्रूणां शतं योद्धुं शतेन वीरैः सह विग्रहं कर्तुमित्यर्थः, सहेत् क्षमेत, शक्नुयादित्यर्थः, [ उभयपदिनः सहेः चौरादिकस्य विकल्पितत्वात् णिचः अभावपक्षे रूपमिदम् ] ; तस्मात् स्थानं स्वाऽऽवासं, न सन्त्यजेत् ॥ ४८ ॥

तस्माद्दुर्गं दृढं कृत्वा सुभटाऽऽसारसंयुतम् ।
प्राकारपरिखायुक्तं यन्त्रादिभिरलङ्कृतम् ॥ ४९ ॥
तिष्ठ मध्यगतो नित्यं युद्धाय कृतनिश्चयः ।
जीवन् सम्प्राप्स्यसि क्ष्माऽन्तं मृतो वा स्वर्गमेष्यसि ॥ ५० ॥

अन्यच्च,—बलिनाऽपि न बाध्यन्ते लघवोऽप्येकसंश्रयाः ।
विपक्षेणापि मरुता यथैकस्थानवीरुधः ॥ ५१ ॥
महानप्येकजो वृक्षः बलवान् सुप्रतिष्ठितः ।
प्रसह्य इव वातेन शक्यो धर्षयितुं यतः ॥ ५२ ॥
अथ ये संहता वृक्षाः सर्वतः सुप्रतिष्ठिताः ।
न ते शीघ्रेण वातेन हन्यन्ते ह्येकसंश्रयात् ॥ ५३ ॥

स्वमतमाह, तस्मादित्यादिद्वाभ्याम् ।—तस्मात् युद्धाय कृतनिश्चयः दृढसङ्कल्पः सन्, दुर्गं सुभटैः सुयोधैः, आसारैः सुहृद्बलैश्च, ( "आसारस्तु सुहृद्बलम्" इति वैजयन्ती ) संयुतं, प्राकारैः प्राचीरैः, परिखाभिश्च युक्तं, यन्त्रादिभिः प्रहरणादिभिः, प्रहारसाधनैरित्यर्थः, अलङ्कृतं सज्जितम्, अत एव दृढं शत्रुदुर्भेद्यमिति भावः, कृत्वा मध्यगतः तन्मध्यवर्ती सन्, नित्यं सततं, तिष्ठ, एवं कृते जीवन् प्राणान् बिभ्रत्, क्ष्माऽन्तं पृथिव्यन्तं, समग्रां पृथिवीमित्यर्थः, सम्प्राप्स्यसि, मृतो वा म्रियसे चेत्, युद्धे इति शेषः, स्वर्गम् एष्यसि प्राप्स्यसि ; धर्मार्थयोः द्वयोरेव पुरुषार्थत्वात् युगपत् उभयप्राप्तेरसम्भवाच्च तदेकतराभ्युदय एव महोदयः पुरुषाणाम्, स च इत्थं कृते भवितव्यमेव इति भावः ॥ ४९ । ५० ॥

बलिनेति ।—मरुता वायुना, प्रबलेनापीति भावः, एकस्य वीरुधः स्वस्थाने एव सजातीयाभिः वल्लीभिः सह अवस्थिताः, लताः यथा न बाध्यन्ते न विनाश्यन्ते, तथा बलिनाऽपि प्रभूतशक्तिनाऽपि, विपक्षेण शत्रुणा, एकः संश्रयो येषां तथोक्ताः एकस्थानस्थाः, स्वस्थाने एव मित्रवर्गैः सह अवस्थिताः इत्यर्थः, लघवोऽपि दुर्बला अपि, न बाध्यन्ते इति पूर्वानुषङ्गः ॥ ५१ ॥

महानिति ।—महान् विशालः, बलवान् सुप्रतिष्ठितोऽपि सुबद्धमूलोऽपि, एकजः एकाकी एव स्थित इत्यर्थः, वृक्षः यतः वातेन वायुना, प्रसह्य इव बलादिव, धर्षयितुं भङ्क्तुं, शक्यः समर्थः, तस्मात् एकाकी न सन्तिष्ठेदिति भावः ॥ ५२ ॥

अथेति ।—अथ पक्षान्तरे, ये वृक्षाः संहताः मिलिताः, अपरवृक्षैरिति शेषः, सर्वतः समन्तात्, सुप्रतिष्ठिताः सुबद्धमूलाः, ते शीघ्रेण वेगवताऽपि, प्रबलेनापि इत्यर्थः,

एवं मनुष्यमेकञ्च शौर्य्येणापि समन्वितम् ।
शक्यं द्विषन्तो मन्यन्ते हिंसन्ति च ततः परम्” ॥ ५४ ॥

एवं प्रश्नोविमन्त्रम् इदम् आसनसंश्रयम् ।

एतत् समाकर्ण्य चिरञ्जीविनं प्राह,—“भद्र ! त्वमपि स्वाभिप्रायं वद” । सोऽब्रवीत्,—“देव ! (श) षाड्गुण्यमध्ये मम संश्रयः सम्यक् प्रतिभाति ; तत् तस्य अनुष्ठानं कार्य्यम् ।

उक्तञ्च,—असहायः समर्थोऽपि तेजस्वी किं करिष्यति ? ।
निर्वाते ज्वलितो वह्निः स्वयमेव प्रशाम्यति ॥ ५५ ॥
सङ्गतिः श्रेयसी पुंसां स्वपक्षे च विशेषतः ।
तुषैरपि परिभ्रष्टा न प्ररोहन्ति तण्डुलाः ॥ ५६ ॥

---

वातेन एकसंश्रयात् एकत्रावस्थानात्, न हन्यन्ते हि नैव विनाश्यन्ते इत्यर्थः, अत एव स्वाऽऽवासे एव सर्वैः मिलित्वा अवस्थातव्यमिति भावः ॥ ५३ ॥

एवमिति।—द्विषन्तः शत्रवः, शौर्य्येण विक्रमेण, समन्वितमपि युक्तमपि, एकम् असहायं, मनुष्यम्, एवम् एकं वृक्षं वायुरिवेति भावः, शक्यम्, अभिभवितुमिति शेषः, मन्यन्ते, ततः परं तदनन्तरम्, अभिभवनीयज्ञानानन्तरमित्यर्थः, हिंसन्ति च ; वीर्य्यवन्तमपि शत्रुम् एकाकिनम् अवलोक्य को नाम विरमेत् ? इति भावः ॥ ५४ ॥

(श) षाड्गुण्यमध्ये—सन्धिविग्रहयानाऽऽसनद्वैधीभावसमाश्रयमध्ये । संश्रयः,—दुर्बलस्य बलवच्छत्रुकाविजयिनृपसमाश्रयणम् ।

संश्रयस्य प्रयोजनमाह, असहाय इति।—तेजस्वी शक्तिमान् जनः, समर्थोऽपि योग्योऽपि, युद्धं कर्तुमिति शेषः, असहायः चेत् किं करिष्यति ? न किमपि कर्तुं शक्ष्यतीत्यर्थः ; तथा हि, निर्वाते वायुशून्यदेशे, वह्नेः वायुसखत्वात् सहायाभाववति स्थाने इति भावः, ज्वलितो वह्निः तेजोमयोऽपीति भावः, स्वयमेव आत्मनैव, प्रशाम्यति निर्वाणमेति ; सहायाभावादिति भावः ; वायोः सहायतामन्तरेण यथा तेजसा प्रदीप्तोऽपि वह्निः स्वयमुपशाम्यति, तथा तेजःप्रदीप्तः शक्तिमत्त्वेऽपि पुमान् सहायहीनश्चेत् शमतामेव धत्ते इति निष्कर्षः । दृष्टान्तालङ्कारः ॥ ५५ ॥

तदेव प्रकारान्तरेणाह, सङ्गतिरिति।—पुंसां पुरुषाणां, सङ्गतिः सम्मेलनं, सहायसङ्घः इत्यर्थः, बहुभिरेकत्रावस्थानम् इत्यर्थो वा, विशेषतः विशेषेण, [ प्रकृत्यादित्वात् तृतीया, ततः तसिल् ] स्वपक्षे श्रेयसी अतिशयेन श्रेयस्करीत्यर्थः, तथा हि, तण्डुलाः

तदत्रैव स्थितेन त्वया कश्चित् (घ) समर्थः समाश्रयणीयः, यो विपत्प्रतीकारं करोति। यदि पुनस्त्वं स्वस्थानं त्यक्त्वा अन्यत्र यास्यसि, तत् कोऽपि ते वाङ्मात्रेणापि सहायत्वं न करिष्यति। उक्तञ्च यतः,—

> वनानि दहतो वह्नेः सखा भवति मारुतः।
> स एव दीपनाशाय कृशे कस्यास्ति सौहृदम्?॥ ५७॥

अथवा न एतत् (ङ) एकान्तं यत् बलिनमेकं समाश्रयेत्, लघूनामपि संश्रयो रक्षार्थ एव भवति। उक्तञ्च यतः,—

> सङ्घातवान् यथा वेणुर्निविड़ो वेणुभिर्वृतः।
> न शक्यः स समुच्छेत्तुं दुर्बलोऽपि तथा नृपः॥ ५८॥

यदि पुनरुत्तमसंश्रयो भवति, तत् किमुच्यते? उक्तञ्च,—

> महाजनस्य सम्पर्कः कस्य नोन्नतिकारकः?।
> पद्मपत्रस्थितं तोयं धत्ते मुक्ताफलश्रियम्॥ ५९॥

---

तुषैरपि बुषैरपि, परिभ्रष्टाः विच्युताः सन्तः, न प्ररोहन्ति नोत्पद्यन्ते, नाङ्कुरिता भवन्तीत्यर्थः, संहत्यभावादिति भावः॥ ५६॥

(घ) समर्थः,—शक्तिमान्, अवपराजयक्षम इत्यर्थः।

वनानीति।—मारुतः वायुः, वनानि दहतः भस्मीकुर्वतः, प्रबलस्येति भावः, वह्नेः सखा सहाय इत्यर्थः, भवति, स एव प्रबलवह्नेः सखा स मारुतः एवेत्यर्थः, दीपनाशाय प्रदीपनिर्वापणाय, वर्त्तिकां दहतः क्षीणस्य वह्नेः ध्वंसाय इति भावः, प्रभवतीति शेषः; तथा हि, कृशे क्षीणे जने, कस्य सौहृदं सद्भावः, अस्ति? न कस्यापीत्यर्थः॥ ५७॥

(ङ) एकान्तं—दृढं, सिद्धान्तमित्यर्थः।

सङ्घातवानिति।—वेणुभिः वंशैः, वृतः वेष्टितः, सङ्घातवान् समूहान्वितः, अत एव निविड़ः घनः, दृढः अतिकठिन इति भावः, वेणुः यथा समुच्छेत्तुं विनाशयितुं, न शक्यः, तथा दुर्बलोऽपि, ससहायः इति शेषः, नृपः, न समुच्छेत्तुं शक्यः इति पूर्वान्वयः; "स्वल्पानामपि वस्तूनां संहतिः कार्यसाधिका" इति भावः॥ ५८॥

महाजनस्येति।—महाजनस्य महतो जनस्य, सम्पर्कः सम्बन्ध इत्यर्थः, कस्य जनस्य, उन्नतिकारकः न? अपि तु सर्वस्यैवेत्यर्थः; तथा हि, पद्मपत्रस्थितं तोयं जलं, मुक्ताफलस्य श्रियं कान्तिं, धत्ते धारयति; महतः संसर्गादिति भावः॥ ५९॥

तदेवं संश्रयं विना न कश्चित् प्रतीकारो भवति ; तस्मात् संश्रयः कार्य्यः इति मेऽभिप्रायः"।

एवं चिरञ्जीविमन्त्रः।

अथ एवमभिहिते स मेघवर्णो राजा (ङ) चिरन्तनं पितृसचिवं दीर्घायुषं सकलनीतिशास्त्रपारङ्गतं स्थिरजीविनामानं प्रणम्य प्रोवाच,—"तात! यत् एते मया पृष्टाः सचिवाः तावत् (क) अत्र स्थितस्यापि तव, तत् परीक्षार्थं, येन त्वं सकलं श्रुत्वा यदुचितं, तन्मे समादिशसि, तत् यत् युक्तं भवति, तत् समादेश्यम्"। सः आह,—"वत्स! सर्वैरपि एतैः (ख) नीतिशास्त्राश्रयमुक्तं सचिवैः, तदुपयुज्यते (ग) स्वकालोचितं सर्वमेव; परमेष द्वैधीभावस्य कालः। उक्तञ्च,—

अविश्वासं सदा तिष्ठेत् सन्धिना विग्रहेण च।
द्वैधीभावं समाश्रित्य नैव शत्रौ बलीयसि॥ ६०॥

---

(ङ) चिरन्तनं—चिरकालादागतं, कुलक्रमागतमित्यर्थः।

(क) अत्र स्थितस्यापि तव—अत्र स्थाने स्थितं त्वामनादृत्येत्यर्थः, [अनादरे षष्ठी; अथवा सम्बन्धविवक्षया षष्ठी, त्वयि अत्र स्थितेऽपि इत्यर्थः; तत्र "तत्परीक्षार्थम्" इति एकं पदम्; तेषां परीक्षायां भवानेव मध्यस्थो भविष्यतीति भावः]।

(ख) नीतिशास्त्राश्रयं—नीतिशास्त्रानुमोदितं, वचनमिति शेषः।

(ग) स्वकालोचितं—स्वसमयोचितं, स्वावस्थाऽनुरूपमित्यर्थः। द्वैधीभावस्य—प्रबलारिपुद्वयमध्ये काकाक्षिवदलक्षितया स्थितः "इदं राज्यमहञ्च तवैव" इति वाचा उभयत्र आत्मानं समर्पयन् अवस्थानस्य।

अविश्वासमिति।—बलीयसि प्रबले, शत्रौ सन्धिना मैत्रीस्थापनेन, विग्रहेण युद्धेन च, सदा अविश्वासं सन्दिग्धं यथा तथा, तिष्ठेत्, केनापि छलेन सन्धिभङ्गभयात् युद्धे पराजयाशङ्कया च इति भावः; किन्तु द्वैधीभावं प्रबलारिपुद्वयमध्ये काकाक्षिवदलक्षितभावेनावस्थितः "राज्येन सह अहं तवैव" इति उभयत्र वाचा आत्मानं समर्पयन् दुर्गमाश्रित्य स्वाभ्युदयापेक्षया अवस्थानं, समाश्रित्य अवलम्ब्य, नैव अविश्वासं तिष्ठेत्, एकेन वैरिणा कदाचिदाक्रान्ते अपरसाहाय्येन आत्मानं रक्षयामि इति निश्चित्य निःशङ्कस्तिष्ठेदिति भावः॥ ६०॥

तत् शत्रुं विश्वास्य अविश्वस्तैर्लोभं दर्शयद्भिः सुखेन उच्छिद्यते रिपुः। उक्तञ्च,—

उच्छेद्यमपि विद्वांसो वर्द्धयन्त्यरिमेकदा।
गुडेन वर्द्धितः श्लेष्मा सुखं वृद्ध्या निपात्यते ॥ ६१ ॥

तथा च,—स्त्रीणां शत्रोः कुमित्रस्य पण्यस्त्रीणां विशेषतः।
यो भवेदेकभावेन न स जीवति मानवः ॥ ६२ ॥

कृत्यं देवद्विजातीनामात्मनश्च गुरोस्तथा।
एकभावेन कर्त्तव्यं शेषं द्वैधं समाश्रितम् ॥ ६३ ॥

एको भावः सदा शस्तो यतीनां भावितात्मनाम्।
स्त्रीलुब्धानां न लोकानां विशेषेण महीभृताम् ॥ ६४ ॥

---

उच्छेद्यमिति।—विद्वांसः पण्डिताः, उच्छेद्यमपि विनाशयोग्यमपि, अरिं रिपुम्, एकदा एकस्मिन् काले, कदाचिदित्यर्थः, वर्द्धयन्ति तस्य विश्वासोत्पादनाय अभ्युदयादिकमनुपेक्षन्ते इत्यर्थः, तथा हि, गुडेन वर्द्धितः वृद्धिं नीतः, श्लेष्मा वृद्ध्या वर्द्धनेनैव, सुखम् अनायासेन, निपात्यते निरस्यते; यथा कश्चित् गुडेन श्लेष्माणं वर्द्धयित्वा पश्चात् तं श्लेष्माणम् अनायासेन निपातयति, तद्वत् प्रथमं विश्वासमुत्पाद्य उपेक्ष्य च शत्रुं वर्द्धयन् पश्चात् अनवहितं तं सुखेन निपातयेदिति भावः ॥ ६१ ॥

स्त्रीणामिति।—यः मानवः, स्त्रीणां, शत्रोः, कुमित्रस्य निन्दितबन्धोः, विशेषतश्च पण्यस्त्रीणां वेश्यानां सम्बन्धे, एकभावेन एकरूपमनोवृत्त्या उपलक्षितः, भवेत्, मनसा अन्यं वचसा च अन्यं भावं न दर्शयेदिति भावः, स मानवः न जीवति; स्त्र्यादिभिरेव स हन्यते, अतः जिजीविषुणा तत्र तादृशविश्वासः न कर्त्तव्य इति भावः ॥ ६२ ॥

कृत्यमिति।—देवद्विजातीनां देवताब्राह्मणानाम्, आत्मनः स्वस्य, तथा गुरोः कृत्यं कार्य्यम्, एकभावेन बाह्याभ्यन्तरैक्येनेति भावः, कर्त्तव्यं विधेयं, शेषम् अवशिष्टं, देवादिकृत्यादन्यादित्यर्थः, कृत्यमिति शेषः, द्वैधं द्विभावं, समाश्रितं प्राप्तं, द्विभावेनैव युक्तमित्यर्थः; कर्त्तव्यमिति पूर्वानुषङ्गः; तदन्यथाऽनर्थापातशङ्कयेति भावः ॥ ६३ ॥

एक इति।—भावितात्मनां शुद्धस्वरूपाणाम्, ईश्वरासक्तचेतसामित्यर्थः, यतीनां योगिनां सम्बन्धे, सदा एको भावः अनुरागः, विश्वासः वा, शस्तः प्रशंसनीयः; स्त्रीलुब्धानां लोभपरायणानां, स्त्र्यासक्तानामित्यर्थः, लोकानां, विशेषेण महीभृतां राज्ञाम्, एको भावः शस्त इति पूर्वानुषङ्गः; तेषां तु द्वैधीभावः विधेयः इत्यर्थः ॥ ६४ ॥

तत् द्वैधीभावं संश्रितस्य तव स्वस्थाने वासो भविष्यति, (घ) लोभाश्रयाच्च शत्रुम् (ङ) उच्चाटयिष्यसि ; अपरं, यदि किञ्चित् छिद्रं तस्य पश्यसि, तत् गत्वा व्यापादयिष्यसि"। मेघवर्ण आह,—"तात ! मया सः (च) अविदितसंश्रयः, तत् कथं तस्य छिद्रं ज्ञास्यामि ?" स्थिरजीवी आह,—"वत्स ! न केवलं स्थानं, छिद्राण्यपि तस्य (छ) प्रकटीकरिष्यामि प्रणिधिभिः। उक्तञ्च,—

गावो गन्धेन पश्यन्ति वेदैः पश्यन्ति वै द्विजाः।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥ ६५ ॥

उक्तञ्चात्र विषये,—

यस्तीर्थानि निजे पक्षे परपक्षे विशेषतः।
गुप्तैश्चारैर्नृपो वेत्ति न स दुर्गतिमाप्नुयात्" ॥ ६६ ॥

मेघवर्ण आह,—"तात! कानि तीर्थानि उच्यन्ते ? कतिसङ्ख्यानि च ? कीदृशाः गुप्तचराः ? तत् सर्वं निवेद्यताम्"इति। स आह,—"तत्र विषये भगवता नारदेन युधिष्ठिरः प्रोक्तः यत्, शत्रुपक्षेऽष्टादश तीर्थानि, स्वपक्षे पञ्चदश ; त्रिभिः त्रिभिः

(घ) लोभाश्रयात्—लोभपरवशत्वात्, शत्रोरिति शेषः।

(ङ) उच्चाटयिष्यसि—दूरीकरिष्यसि।

(च) अविदितसंश्रयः,—अज्ञातावासः।

(छ) प्रकटीकरिष्यामि—प्रकाशयिष्यामि। प्रणिधिभिः,—चारैः।

गाव इति।—गावः गन्धेन पश्यन्ति जानन्ति, पदार्थान् निरूपयन्ति इत्यर्थः, द्विजाः ब्राह्मणाः, वेदैः सामादिभिः,पश्यन्ति सदसती विचारयन्ति इति भावः, राजानः चारैः प्रणिधिभिः, पश्यन्ति परराष्ट्रव्यापारं जानन्तीत्यर्थः, इतरे जनाः द्विजातिनृपतिव्यतिरिक्ता इत्यर्थः, चक्षुर्भ्यां, पश्यन्तीत्यनुषङ्गः ॥ ६५ ॥

य इति।—यः नृपः, गुप्तैः छद्मवेशिभिः,चारैः निजे पक्षे,विशेषतः परपक्षे शत्रुपक्षे, तीर्थानि मन्त्र्याद्यष्टादशस्थानानि,("तीर्थं शास्त्रेऽध्वरे क्षेत्रोपायोपाध्यायमन्त्रिषु। योनौ जलावतारेषु मन्त्र्याद्यष्टादशस्वपि॥" इति विश्वः) वेत्ति जानाति, सः दुर्गतिं दुरवस्थां, न प्राप्नुयात् न पराभवं लभेत ॥ ६६ ॥

गुप्तचरैः तानि ज्ञेयानि। तैः ज्ञातैः स्वपक्षः परपक्षश्च वश्यो भवति। उक्तञ्च नारदेन युधिष्ठिरं प्रति,—

"कच्चिदष्टादशान्येषु स्वपक्षे दश पञ्च च।
त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः?" ॥६७॥

तीर्थशब्देन (ज) अयुक्तकर्माभिधीयते, तत् यदि तेषां कुत्सितं भवति, तदा स्वामिनोऽभिघाताय भवति; यदि प्रधानं भवति, तदा वृद्धये स्यादिति। तत् यथा—मन्त्री, पुरोहितः, सेनापतिः, युवराजः, (झ) दौवारिकः, अन्तर्वंशिकः, प्रशासकः, समाहर्त्तृ-सन्निधातृ-प्रदेष्टृ-ज्ञापकाः, साधनाध्यक्षः, गजाध्यक्षः, (ञ) कोशाध्यक्षः, दुर्गपाल-करपाल-सीमापाल प्रोत्कटभृत्याः;

---

कच्चिदिति।—त्रिभिः त्रिभिः अविज्ञातैः गूढैः, छद्मवेशाच्छन्नैरित्यर्थः, चारकैः प्रणिधिभिः, अन्येषु विपक्षेषु इत्यर्थः, अष्टादश, स्वपक्षे दश पञ्च च पञ्चदश, तीर्थानि वेत्सि कच्चित्? जानासि किम्? अपि तु जानास्येव इत्यभिप्रायवेदनं कच्चित् शब्दस्यार्थ, ("कच्चित् कामप्रवेदने" इत्यमरः) ॥ ६७ ॥

(ज) अयुक्तकर्म—अयुक्ते—अनवहिते रिपौ, कर्म—विनाशचेष्टादिरूपमित्यर्थः, अयुक्ते—आपन्ने प्रभौ, कर्म—आपदुद्धरणरूपमित्यर्थो वा, यस्य सः, मन्त्र्यादीत्यर्थः। तत्—तीर्थम्।

(झ) दौवारिकः,—द्वाररक्षकः। अन्तर्वंशिकः,—अन्तर्वंशे—अन्तःपुरे नियुक्तः, ["तत्र नियुक्तः" (४।४।६९ पा०) इति सूत्रेण नियुक्तार्थे ठक्, संज्ञापूर्वकविधेरनित्यत्वात् न वृद्धिः। अन्तर्वंशः नित्यांज्यतया अस्ति अस्य इति व्युत्पत्त्या वा]। अन्तःपुरचरः, अन्तःपुररक्षणाय नियुक्तः कञ्चुक्यादिरिति यावत्। (अन्तर्वंशिकशब्दोऽप्यत्रैव अर्थे व्यवह्रियते,—"अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जनः" इत्यमरः)। प्रशासकः,—प्रकर्षेण शासनकर्त्ता, सर्वशासनाध्यक्षः इत्यर्थः। समाहर्त्तेत्यादि।—समाहर्त्ता—करसङ्ग्रहकर्त्ता, सन्निधाता—सङ्गृहीतकराणां सन्निधानकारकः। प्रदेष्टा—मार्गोपदेष्टा। ज्ञापकः,—वेदयिता, संवादस्येति भावः। साधनाध्यक्षः,—बलाध्यक्षः।

(ञ) कोशाध्यक्षः,—धनाध्यक्षः। दुर्गेत्यादि।—दुर्गपालः,—दुर्गरक्षिता। करपालः,—राजस्वरक्षकः। सीमापालः,—सीमाध्यक्षः। प्रोत्कटभृत्यः,—प्रबलकर्मचारी।

एषां (ट) भेदेन द्राक् रिपुः (ठ) साध्यते । स्वपक्षे च (ड) देवी, जननी, (ढ) कञ्चुकी, मालिकः, शय्यापालकः, (ण) स्पर्शाध्यक्षः, सांवत्सरिकः, भिषक्, जलवाहकः, ताम्बूलवाहकः, (त) आचार्य्यः, अङ्गरक्षकः, स्थानचिन्तकः, छत्रधरः, (थ) विलासिनी ; एषां वैरद्वारेण स्वपक्षे विघातः ।

तथा च,—वैद्यसांवत्सरिकाऽऽचार्य्याः स्वपक्षेऽधिकृताश्चराः ।
यथाऽऽहितुण्डिकोन्मत्ताः सर्वं जानन्ति शत्रुषु ॥ ६८ ॥

तथा च,—कृत्वा कृत्यविदस्तीर्थेष्वन्तः प्रणिधयः पदम् ।
विदाङ्कुर्वन्तु महतस्तलं विद्विषदम्भसः" ॥ ६९ ॥

---

(ट) भेदेन—उपजापेन, स्वामिन उपरि वैरूप्यसम्पादनेन इत्यर्थः । द्राक्—झटिति, ("स्राग्झटित्यञ्जसाऽह्नाय द्राग्मङ्क्षु सपदि द्रुते" इत्यमरः) ।

(ठ) साध्यते—वशीक्रियते ।

(ड) देवी—कृताभिषेका स्त्री, ("देवी कृताभिषेकायाम्" इत्यमरः) ।

(ढ) कञ्चुकी—"अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः । सर्वकार्य्यार्थकुशलः कञ्चुकीत्यभिधीयते ॥" इत्युक्तलक्षणः । मालिकः,—मालाकारः, राज्ञः अन्तःपुरं नित्यमाल्यदायकः इत्यर्थः । शय्यापालकः,—शय्यारचिता ।

(ण) स्पर्शाध्यक्षः,—राज्ञः स्पर्शेन्द्रियग्राह्याणाम् अनुलेपनादीनाम् अधिपतिः । सांवत्सरिकः,—दैवज्ञः । भिषक्—चिकित्सकः । जलवाहकः,—पानीयभारी ।

(त) आचार्य्यः,—गुरुः । अङ्गरक्षकः,—शरीररक्षी । स्थानचिन्तकः,—उपवेशनस्थानस्य सदसद्भावविवेचकः ।

(थ) विलासिनी—वेश्या । एषां—देवीप्रभृतीनां, वैरद्वारेण—शत्रुतासम्पादनद्वारा ; राजसमीपे अबाधगतित्वात् एषां वैरद्वारेण हननस्य सुकरत्वादिति भावः ।

वैद्येति ।—चराः गूढचारिणः, आहितुण्डिकोन्मत्ताः विषवैद्याः क्षिप्ताश्च सन्तः, गूढचराः विषवैद्यवेशम् उन्मत्तवेशञ्च परिगृह्य चरन्त इति निष्कर्षः, यथा शत्रुषु सर्वं रहस्यमित्यर्थः, जानन्ति, तथा अधिकृताः प्राप्ताधिकाराः, अतीवविश्वस्तत्वात् तदधिकारे नियुक्ता इत्यर्थः, वैद्यसांवत्सरिकाऽऽचार्य्याः भिषग्दैवज्ञगुरवः, स्वपक्षे, सर्वं जानन्तीति पूर्वेणान्वयः ; अत एषां वैरद्वारेण स्वपक्षे विघातः इति बोध्यम् ॥ ६८ ॥

कृत्वेति ।—कृत्यविदः कार्य्यज्ञाः विचित्राश्च, प्रणिधीयन्ते इति प्रणिधयः गूढ-

एवं मन्त्रिवाक्यम् आकर्ण्य मेघवर्ण आह,—"तात ! अथ किं निमित्तम् एवंविधं (द) प्राणान्तिकं सदैव वायसोलूकानां वैरम् ?" स आह,—

## कथा १ ।

"वत्स ! कदाचित् हंस-शुक-बक-कोकिल-चातकोलूक-मयूर-कपोत-पारावत-विष्किर-प्रभृतयः सर्वेऽपि पक्षिणः समेत्य सोद्वेगं मन्त्रयितुम् आरब्धाः,—'अहो ! अस्माकं तावत् (ध) वैनतेयो राजा, स च वासुदेवभक्तः न कामपि चिन्ताम् अस्माकं करोति : तत् किं तेन वृथास्वामिना, यो लुब्धकपाशैः नित्यं निबध्यमानानां न रक्षां विधत्ते ?—

यो न रक्षति वित्रस्तान् पीड्यमानान् परैः सदा ।
जन्तून् पार्थिवरूपेण स कृतान्तो न संशयः ॥ ७० ॥

---

पुरुषाः, गुप्तचराः इति यावत्, ("प्रणिधिर्गूढपुरुषः" इति हलायुधः) तीर्थेषु मन्त्र्याद्यष्टादशस्थानेषु, जलावतारेषु च, ("योनौ जलावतारे च मन्त्र्याद्यष्टादशस्वपि । पुण्यक्षेत्रे तथा पात्रे तीर्थं स्यात्" इति हलायुधः) अन्तः पदं स्थानं पादप्रक्षेपञ्च, कृत्वा महतः प्रबलस्य, गभीरस्य च, विद्विषन् शत्रुरिवाम्भः तस्य तत्त्वं स्वरूपम्, आशयमिति यावत्, अधश्च, ("अधःस्वरूपयोरस्त्री तलम्" इत्यमरः) विदाङ्कुर्वन्तु [ विदधातोर्लोटि "विदाङ्कुर्वन्त्वित्यन्यतरस्याम्" ( ३।१।४१ पा० ) इति निपातः ] जानन्तु ॥६९॥

( द ) प्राणान्तिकं—जीवनान्तकरम् । वायसेति ।—["येषाञ्च विरोधः—" ( २।४।९ पा० ) इति सूत्रेण नित्यद्वन्द्वैकवद्भावव्यवस्थितेः "वायसोलूकानाम्" इत्यत्र "वायसोलूकस्य" इत्येव भवितुं युक्तम् ; "काकोलूकमित्यादौ परत्वात् विभाषा वृक्षमृगेति प्राप्ते चकारेण बाध्यते" इति दीक्षितोक्तेः ; बहुवचनमौजन्तु विवक्षाप्राप्तौ ( २२१ ) पृष्ठस्थटीकायां चास्माभिः प्रदर्शितम् इत्यवधेयम् ] ।

( ध ) वैनतेयः,—विनतानन्दनः, गरुड इत्यर्थः । लुब्धकपाशैः,—व्याधजालैः ॥

य इति ।—यः परैः शत्रुभिः, पीड्यमानान्, अत एव सदा वित्रस्तान् भीतान्, जन्तून् प्रजा इत्यर्थः, न रक्षति, स पार्थिवरूपेण राजरूपेण, राजरूपीत्यर्थः, [ "प्रकृत्यादिभ्य उपसङ्ख्यानम्" (वा०) इति तृतीया ] कृतान्तो यमः, अत्र संशयः न नास्ति ॥ ७० ॥

यदि न स्यान्नरपतिः सम्यङ्नेता ततः प्रजा।
अकर्णधारा जलधौ विप्लवेतेह नौरिव ॥ ७१ ॥

षडिमान् पुरुषो जह्याद्भिन्नां नावमिवार्णवे।
अप्रवक्तारमाचार्य्यमनधीयानमृत्विजम् ॥ ७२ ॥

अरक्षितारं राजानं भार्य्याञ्चाप्रियवादिनीम्।
ग्रामकामञ्च गोपालं वनकामञ्च नापितम् ॥ ७३ ॥

तत् सञ्चिन्त्य अन्यः कश्चित् राजा विहङ्गमानां क्रियताम्' इति। अथ तैः (न) भद्राऽऽकारम् उलूकम् अवलोक्य सर्वैः अभिहितं,—'यत् एष उलूको राजा अस्माकं भविष्यति, तत् आनीयन्तां नृपाभिषेकसम्बन्धिनः (प) सम्भाराः' इति।

अथ (फ) साधिते विविधतीर्थोदके, (ब) प्रगुणीकृते

यदीति।—यदि सम्यक् सुष्ठु, नेता नायकः, परिचालक इत्यर्थः, नरपतिः न स्यात्, ततः तदा, प्रजा जलधौ समुद्रे, अकर्णधारा नाविकशून्या, नौः तरणिः इव, इह संसारे, विप्लवेत विपर्य्यासं गच्छेत, म्रियेत इत्यर्थः ॥ ७१ ॥

युग्मेन व्याख्यानाह, षडित्यादि।—पुरुषः अर्णवे समुद्रे, [ अर्णस्शब्दात् मत्वर्थे वप्रत्ययः, सलोपश्च निपातनात्] भिन्नां त्रुटितां, नावमिव तरणिमिव, अप्रवक्तारं प्रकृष्टवाक्यकथनानर्हम्, असम्यगुपदेष्टारमिति यावत्, मौनिनमिति वा, आचार्य्यं गुरुम्, अनधीयानम् अध्ययनवर्जितं, मूर्खमित्यर्थः, ऋत्विजं पुरोहितम्; अरक्षितारं रक्षणपराङ्मुखं, राजानम्; अप्रियवादिनीं कर्कशभाषिणीं, भार्य्याम्; ग्रामकामं ग्रामलुब्धं, गोचारणाय ग्रामं विहाय प्रचुरतृणसम्पन्नं वनमगन्तुमित्यर्थः, गोपालं गोपम्; वनकामम् अरण्याभिलाषिणं, लोकालयं विहाय केवलं वनं गन्तुमुन्मुखमित्यर्थः, वने लोकाभावात् विस्मृतक्षौरकार्य्यमिति भावः, नापितञ्च; इमान् षट् जह्यात् त्यजेत्; एषां परिग्रहे कार्य्यवैफल्यस्यावश्यम्भावित्वादिति भावः ॥ ७२।७३ ॥

(न) भद्राऽऽकारं—शोभनावयवं, प्रशान्तमूर्त्तिमित्यर्थः।

(प) सम्भाराः,—द्रव्याणि।

(फ) साधिते—आहृते इत्यर्थः।

(ब) प्रगुणीकृते—प्रकर्षेण सज्जीकृते, यथाप्रयोजनं सङ्कुच्य गणनां कृत्वा स्थापिते इत्यर्थः।

(भ) अष्टोत्तरशतमूलिकासङ्घाते, प्रदत्ते सिंहासने, वर्त्तिते सप्तद्वीपसमुद्रभूधरविचित्रे धरित्रीमण्डले, प्रसारिते व्याघ्रचर्मणि, (म) आपूरितेषु हेमकुम्भेषु दीपेषु वाद्येषु च, सज्जीकृतेषु दर्पणादिषु माङ्गल्यवस्तुषु, पठत्सु (य) वन्दिमुख्येषु, वेदोच्चारणपरेषु (र) समुदितमुखेषु ब्राह्मणेषु, गीतपरे युवतीजने, आनीतायाम् (ल) अग्रमहिष्यां कृकालिकायाम्, उलूकोऽभिषेकार्थं यावत् सिंहासने उपविशति, तावत् कुतोऽपि वायसः समायातः। सोऽचिन्तयत्,—'अहो! किमेष सकलपक्षिसमागमो महोत्सवश्च?'

अथ तं पक्षिणः तं दृष्ट्वा मिथः प्रोचुः,—'पक्षिणां मध्ये वायसः चतुरः श्रूयते। उक्तञ्च,—

नराणां नापितो धूर्त्तः पक्षिणाञ्चैव वायसः।
दंष्ट्रिणाञ्च शृगालस्तु श्वेतभिक्षुस्तपस्विनाम् ॥ ७४ ॥

---

(भ) अष्टेत्यादि।—अष्टाधिकशतविधमूलसमूहे। वर्त्तिते—उपस्थिते। प्रसारिते—विस्तारिते, पातिते इत्यर्थः।

(म) आपूरितेष्विति।—विशेषणमिदं हेमकुम्भदीपवाद्येषु यथासम्भवं योज्यम; तथा च, प्रथमम् आपूरितेषु पूर्णेषु, जलेन इति शेषः; द्वितीयं तैलेन, तृतीयं शब्देन इति यथार्हं शेषानुसन्धानं कार्य्यम।

(य) वन्दिमुख्येषु—स्तुतिपाठकश्रेष्ठेषु।

(र) समुदितमुखेषु—समुदितानि—परस्परं मिलितानि, मुखानि—कण्ठस्वराः इत्यर्थः, येषां तेषु, समस्वरेण वेदपाठं कुर्वत्सु इति निष्कर्षः; [ सम्पूर्वकवदधातोः क्तप्रत्ययेन रूपमिदम् ]।

(ल) अग्रमहिष्यां—प्रधानमहिष्यां, कृकालिकायां—तदाख्यपेचकपत्न्याम्।

नराणामिति।—नराणां मनुष्याणां मध्ये, नापितः, पक्षिणां मध्ये वायसः काकः, दंष्ट्रिणां जन्तूनां मध्ये शृगालः, तथा तपस्विनां मुनीनां मध्ये, [सर्वत्र निर्द्धारणे षष्ठी]। श्वेतभिक्षुः श्वेताम्बर क्षपणकभेदः, धूर्त्तः; जैनसम्प्रदायेषु श्वेताम्बराः दिगम्बराश्च परिव्राजकभेदाः दृश्यन्ते, तेषां निन्दितत्वेनात्र धूर्त्तत्वमुक्तम्; जिनदत्तसूरिणा जैनं

तदस्यापि वचनं ग्राह्यम्। उक्तञ्च,—

बहुधा बहुभिः सार्द्धं चिन्तिताः सुनिरूपिताः।
कथञ्चिन्न विलीयन्ते विद्वद्भिश्चिन्तिता नयाः॥ ७५॥

अथ वायसः समेत्य तान् आह,—'अहो! किं महाजनसमागमोऽयं परममहोत्सवश्च?' ते प्रोचुः,—'भोः! नास्ति कश्चित् विहङ्गमानां राजा; तदस्य उलूकस्य विहङ्गराज्याभिषेको निरूपितः तिष्ठति समस्तपक्षिभिः; तत् त्वमपि स्वमतं देहि, (व) प्रस्तावे समागतोऽसि'।

अथ असौ काको विहस्य आह,—'अहो! न युक्तमेतत्, यन्मयूर-हंस-कोकिल-चक्रवाक-शुक-कारण्डव-हारीत-सारसादिषु पक्षिप्रधानेषु विद्यमानेषु दिवाऽन्धस्य अस्य (श) करालवक्त्रस्य अभिषेकः क्रियते; तन्न एतत् मम मतम्। यतः,—

वक्रनासं सुजिह्माक्षं क्रूरमप्रियदर्शनम्।
अक्रुद्धस्येदृशं वक्त्रं भवेत् क्रुद्धस्य कीदृशम्?॥ ७६॥

---

मतमित्यमुक्तं, यथा,—"भुङ्क्ते न केवली न स्त्री मोक्षमेति दिगम्बरः। प्राहुरेषामयं भेदो महान् श्वेताम्बरैः सह॥" इति। अपरे तु,—श्वेतभिक्षुः श्वेतः श्वेतवर्णः, भिक्षुः परिव्राजकः, नारद इत्यर्थः, धूर्त्तः; तस्य श्वेतवर्णत्वात्, "मुनिधूर्त्तश्च नारदः" इति पाठान्तराच्च इत्याहुः॥ ७४॥

बहुधेति।—विद्वद्भिः विचक्षणैः जनैः, चिन्तिताः स्वयमवधारिताः सद्भिः तर्किताः, तथा बहुभिः सार्द्धं बहुधा चिन्तिताः भाविताः, अत एव सुनिरूपिताः सुनिर्द्धारिताः, नयाः नीतयः, नीतिप्रयोगा इत्यर्थः, कथञ्चित् न विलीयन्ते न विकृतिं गच्छन्ति, ["लीयन्ते" इति देवादिकस्य लीधातोर्लटि रूपम्]॥ ७५॥

(व) प्रस्तावे—प्रसङ्गे, प्रारम्भे इति यावत्।

(श) करालवक्त्रस्य—भीषणवदनस्य।

वक्रनासमिति।—अक्रुद्धस्य कोपमकुर्वतोऽपि, अस्येति शेषः, वक्त्रं वदनम्, ईदृशम् इत्थं, विकृतमिति शेषः, तथा हि, वक्रा नासा यत्र तथोक्तं, कुटिलनासिकमित्यर्थः, सुजिह्मे अत्यर्थं कुञ्चिते, कोटरप्रविष्टे इत्यर्थः, अक्षिणी नेत्रे यत्र तादृशं, क्रूरं विकटम्,

तथा च,—स्वभावरौद्रमत्युग्रं क्रूरमप्रियवादिनम् ।

उलूकं नृपतिं कृत्वा का नः सिद्धिर्भविष्यति ? ॥ ७७ ॥

अपरं, (घ) वैनतेये स्वामिनि स्थिते किमेषः (ङ) दिवाऽन्धः क्रियते राजा ? तत् यद्यपि गुणवान् भवति, तथाऽपि एकस्मिन् स्वामिनि स्थिते नान्यो भूपः प्रशस्यते,—

एक एव हितार्थाय तेजस्वी पार्थिवो भुवः ।

युगान्त इव भास्वन्तो बहवोऽत्र विपत्तये ॥ ७८ ॥

तत् (च) तस्य नाम्नाऽपि यूयं (छ) परेषाम् अगम्याः भविष्यथ। उक्तञ्च,—गुरूणां नाममात्रेऽपि गृहीते स्वामिसम्भवे ।

दुष्टानां पुरतः क्षेमं तत्क्षणादेव जायते ॥ ७९ ॥

---

अत एव अप्रियदर्शनं विकृताकारम् ; क्रुद्धस्य कुप्यतः सतः, अस्य इति शेषः, मुखं कीदृशं किम्प्रकारं, भवेत ? नूनं तदतिभीषणमिति भावः ॥ ७६ ॥

स्वभावेति।—स्वभावेन रौद्रं भीषणम्, अत्युग्रम् अतिदारुणं, क्रूरं निष्ठुरम्, अप्रियवादिनं कर्कशभाषिणम्, उलूकं पेचकं, नृपतिं कृत्वा नः अस्माकं, का सिद्धिः भविष्यति ? किं फलं भविष्यति ? न काऽपि इति भावः ; "कुलाचारसदाचारैरति-शुद्धः प्रतापवान्। धार्मिको नीतिकुशलः स राजा युज्यते भुवि ॥" इत्युक्तेः, एतादृश-लक्षणाक्रान्तस्यैव राजासनार्हत्वादित्याशयः ॥ ७७ ॥

(घ) वैनतेये—गरुडे [ विनताशब्दात् अपत्यार्थे ढक्प्रत्ययः ]।

(ङ) दिवाऽन्धः,—उलूकः ।

एक इति।—एक एव, न तु द्वौ बहवो वा इत्यर्थः, तेजस्वी विक्रान्तः, पार्थिवः नृपः, भुवः पृथिव्याः, हितार्थाय कल्याणसाधनाय, भवतीति शेषः ; युगान्ते प्रलये, बहवो द्वादशेत्यर्थः, भास्वन्तः सूर्याः इव, अत्र संसारे, बहवो नृपाः, विपत्तये, भवन्तीति शेषः ; बहूनां परस्परद्वेषात्, तैः प्रजानामेव उच्छेदः सम्पद्यते इति भावः ॥ ७८ ॥

(च) तस्य—वैनतेयस्य ।

(छ) परेषां—शत्रूणाम् । अगम्याः,—दुर्धर्षा इत्यर्थः।

गुरूणामिति।—स्वामिसम्भवे स्वामित्वसम्बन्धवति इत्यर्थः, गुरूणां महतां, नाममात्रे गृहीते उच्चारिते, अपि "अमुकस्य महामहिमशालिनः प्रजा वयम्" इति कीर्त्तितेऽपीति भावः, दुष्टानां दुर्जनानां, पुरतः समीपे, तत्क्षणादेव नाममात्रेण

तथा च,—व्यपदेशेन महतां सिद्धिः सञ्जायते परा ।
शशिनो व्यपदेशेन वसन्ति शशकाः सुखम्' ॥ ८० ॥

ते ऊचुः,—'कथमेतत् ?' स आह,—

## कथा २ ।

'कस्मिंश्चित् वने चतुर्दन्तो नाम महागजो यूथाधिपः प्रतिवसति स्म। तत्र कदाचित् महती अनावृष्टिः सञ्जाता (ख) प्रभूतवर्षाणि यावत्,(ग)तया तडागह्रदपल्वलसरांसि शोषमुपगतानि।

अथ तैः समस्तगजैः स गजराजः प्रोक्तः,—'देव ! पिपासाऽऽकुलाः (घ) गजकलभा मृतप्रायाः, अपरे मृताश्च; तत् अन्विष्यतां कश्चित् जलाशयः, यत्र जलपानेन स्वस्थतां व्रजन्ति'। ततश्चिरं ध्यात्वा तेन अभिहितम्,—'अस्ति महान् ह्रदः (ङ) विविक्ते प्रदेशे स्थलमध्यगतः पातालगङ्गाजलेन सदैव पूर्णः; तत् तत्र गम्यताम्' इति। तथाऽनुष्ठिते (च) पञ्चरात्रम्

---

एव, क्षेमं मङ्गलं जायते; ते च नामश्रवणमात्रेण भीता नापकुर्वन्तीति भावः ॥ ७९ ॥

व्यपदेशेनेति।—महतां व्यपदेशेन नामकीर्त्तनेन, परा महती, सिद्धिः सञ्जायते। तथा हि, शशकाः शशिनः चन्द्रस्य, व्यपदेशेन सुखं वसन्ति ॥ ८० ॥

(ख) प्रभूतवर्षाणि—बहून् वत्सरान् व्याप्य, [ अत्यन्तसंयोगे द्वितीया ]।

(ग) तया—अनावृष्ट्या। तडागेति।—तडागः,—सपद्मागाधजलाशयः, ह्रदः,—अगाधजलाशयः, पल्वलं—क्षुद्रजलाशयः, सरः,—सरोवरः, पुष्करिणीत्यर्थः, तानि। शोषमुपगतानि—शुष्काणि।

(घ) गजकलभाः,—करिशावकाः। मृतप्रायाः,—मृततुल्याः, [ प्रायेण मृता इति राजदन्तादिवत् पूर्वनिपातः]। अपरे—अन्ये, कलभव्यतिरिक्ता वृद्धयौवनादय इत्यर्थः।

(ङ) विविक्ते—विजने। पातालगङ्गाजलेन—भोगवतीसलिलेन।

(च) पञ्चरात्रं—पञ्चानां रात्रीणां समाहारः इति समाहारद्विगुः ["अहः-सर्वैक—" ( ५ । ४ । ८७ पा० ) इति अच्प्रत्ययः, अत्यन्तसंयोगे द्वितीया ]; दिवा

उपसर्पद्भिः समासादितः तैः स ह्रदः। तत्र स्वेच्छया जलमवगाह्य (छ) अस्तमनवेलायां निष्क्रान्ताः। तस्य च ह्रदस्य (ज) समन्तात् शशकविलानि असङ्ख्यानि सुकोमलभूमौ तिष्ठन्ति, तानि च समस्तैरपि तैः गजैः इतस्ततो भ्रमद्भिः परि-भग्नानि, बहवः शशका भग्नपादशिरोग्रीवाः (झ) विहिताः, केचिन्मृताः, केचित् (ञ) जीवशेषा जाताः।

अथ गते तस्मिन् गजयूथे, शशकाः सोद्वेगाः (ट) गजपाद-क्षुण्णसमावासाः केचिद्भग्नपादाः, अन्ये जर्जरितकलेवराः (ठ) रुधिरप्लुताः, अन्ये हतशिशवः (ड) वाष्पपिहितलोचनाः समेत्य(ढ)मिथो मन्त्रं चक्रुः,—'अहो! विनष्टा वयम्; नित्यमेव एतद्गजयूथमागमिष्यति, यतो नान्यत्र जलमस्ति; तत् सर्वेषां नाशो भविष्यति। उक्तञ्च,—

स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजङ्गमः।
हसन्नपि नृपो हन्ति मानयन्नपि दुर्जनः॥ ८१॥

---

आतपतापेन गमनस्य अतीवक्लेशकरत्वात् इति भावः। उपसर्पद्भिः,—गच्छद्भिः। समासादितः,—प्राप्तः। तैः,—गजैः।

(छ) अस्तमनवेलायां—सन्ध्यासमये। निष्क्रान्ताः,—ह्रदात् निर्गताः।

(ज) समन्तात्—चतुर्दिक्षु। तानि—विलानि। परिभग्नानि—विदलितानि। इत्यर्थः।

(झ) विहिताः,—कृताः, गजैरिति शेषः।

(ञ) जीवशेषाः,—जीवनमात्रावशिष्टाः, इत्यादिभग्नत्वात् मृतप्राया इति यावत्।

(ट) गजेति।—गजानां पादैः क्षुण्णाः,—दलिताः, समावासाः,—संश्रयाः, वासभवनानि इत्यर्थः, येषां तथाभूताः।

(ठ) रुधिरप्लुताः,—रक्ताभिषिक्तकलेवराः इत्यर्थः।

(ड) वाष्पपिहितलोचनाः,—साश्रुनेत्राः।

(ढ) मिथः,—परस्परम्। मन्त्रं—मन्त्रणाम्।

स्पृशन्निति।—गजः स्पृशन्नपि स्पर्शं कुर्वन्नपि, भुजङ्गमः सर्पः, जिघ्रन्नपि गन्धं गृह्ण-

तच्चिन्त्यतां कश्चिदुपायः'। तत्रैकः प्रोवाच,—'गम्यतां देशत्यागेन, किमन्यत्? उक्तञ्च मनुना व्यासेन च,—

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्॥ ८२॥

क्षेम्यां शस्यप्रदां नित्यं पशुवृद्धिकरीमपि।
परित्यजेन्नृपो भूमिमात्मार्थमविचारयन्॥ ८३॥

आपदर्थे धनं रक्षेद्दारान् रक्षेद्धनैरपि।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि'॥ ८४॥

ततश्च अन्ये प्रोचुः,—'भोः! पितृपैतामहं स्थानं न शक्यते सहसा त्यक्तुम्; तत् क्रियतां(ग)तेषां कृते काचित् विभीषिका,

---

अपि, आघ्राणं कुर्वन्नपीति यावत्, नृपः हसन्नपि स्मेरमुखोऽपीति भावः, दुर्जनः मानयन्नपि सम्मानं दर्शयन्नपि, हन्ति नाशयति॥ ८१॥

त्यजेदिति।—कुलस्य वंशस्य, अर्थे निमित्तम्, एकं, जनमिति शेषः, त्यजेत् एकत्यागे यदि कुलरक्षा स्यात्, तदा तदपि कर्त्तव्यमित्यर्थः; ग्रामस्य अर्थे कुलं त्यजेत् यदि कुले त्यक्ते ग्रामरक्षा स्यात्, तदा तदपि कर्त्तव्यमित्यर्थः; जनपदस्य देशस्य, अर्थे ग्रामं त्यजेत् यदि ग्रामे त्यक्ते देशरक्षा स्यात्, तदा तदपि कर्त्तव्यमित्यर्थः; आत्मार्थे आत्मरक्षार्थे, पृथिवीं पृथिवीस्थनिखिलद्रव्यं, पृथिवीस्थवस्तुमात्रे अत्र पृथिवीशब्दोपचार इति बोध्यं, त्यजेत् यदि पृथिवीस्थसर्वद्रव्यत्यागेऽपि आत्मरक्षा स्यात्, तदा तदपि कार्य्यमित्यर्थः; "सततमेवाऽऽत्मानं गोपायीत" इति श्रुतेरिति भावः॥ ८२॥

क्षेम्यामिति।—नृपः अविचारयन् किमपि विचारमकुर्वन्, हिताहितं अविविच्यैव इत्यर्थः, आत्मार्थं स्वहितार्थं, क्षेम्यां क्षेमङ्करीं, नित्यं शस्यप्रदां बहुशस्यामित्यर्थः, पशुवृद्धिकरीं तृणशस्याद्युत्पादनेन पशून् वर्द्धयन्तीं, सर्वथा सुखकरीमित्यर्थः, भूमिम् अपि, भूमिशब्दोऽत्र सर्वस्ववाची, सर्वस्वमपीत्यर्थः, परित्यजेत्; मयि जीवति कदाचिदपि सकलमेतद्भवितुमर्हतीति मत्वा इति भावः॥ ८३॥

आपदर्थं इति।—आपदर्थं विपन्निवारणार्थे, धनं वित्तं, रक्षेत्; धनैः वित्तैः, सर्वधनव्ययेनापीत्यर्थः, महता आयासेन सञ्चितैः रक्षितैश्चेति भावः, दारान् स्त्रियः, रक्षेत्; दारैरपि धनैरपि सर्वथा आत्मानं स्वं, स्वजीवनमित्यर्थः, सततं रक्षेत्; येन केनाप्युपायेनैव आत्मा रक्षणीय इति भावः॥ ८४॥

(ग) तेषां—शशानाम्। विभीषिका—भयप्रदर्शनोपायः।

( त ) यत् कथमपि ( थ ) दैवात् न ( द ) समायान्ति ।

उक्तञ्च,—

निर्विषेणापि सर्पेण कर्त्तव्या महती फटा ।
विषं भवतु मा वाऽस्तु फटाऽऽटोपो भयङ्करः' ॥ ८५ ॥

अथ अन्ये प्रोचुः,—'यदि एवं, ततः तेषां महद्विभीषिका-स्थानम् अस्ति, येन न आगमिष्यन्ति ; सा च (ध) चतुरदूता-यत्ता विभीषिका । तत्र विजयदत्तो नाम राजा अस्मत्स्वामी शशकः चन्द्रमण्डले निवसति ; तत् प्रेष्यतां कश्चित् मिथ्यादूतो यूथाधिपमकाशं, यत् चन्द्रः त्वाम् अत्र ह्रदे आगच्छन्तं निषेध-यति ; यतः ( न ) अस्मत्परिग्रहोऽस्य समन्तादसति । एवम् अभिहिते ( प ) अश्रद्धेयवचनात् कदाऽपि निवर्त्तते' ।

अथ अन्ये प्रोचुः,—'यदि एवं, तदस्ति लम्बकर्णो नाम शशकः ; स च ( फ ) वचनरचनाचतुरो दूतकर्मज्ञः ; स तत्र प्रेष्यताम् इति । उक्तञ्च,—

---

( त ) यत—येनेत्यर्थकमव्ययं, येन भयप्रदर्शनेन हेतुनेत्यर्थः ।

( थ ) दैवात्— भाग्यात्, अस्माकं भाग्यबलेनेति भावः ।

( द ) समायान्ति—समागच्छन्ति ।

निर्विषेणेति ।—निर्विषेणापि विषशून्येनापि, सर्पेण भुजगेन, महती प्रशस्ता इत्यर्थः, फटा फणा, ("फटायान्तु फणा द्वयोः" इत्यमरः ) कर्त्तव्या क्रियते इति भावः ; विषं भवतु, मा अस्तु वा—न भवतु वा, फटाऽऽटोपः फणाविस्तारः, तस्य इति शेषः, भयङ्करः, भवतीति शेषः ; भयप्रदर्शनेनापि कदाचित् शत्रुभयः स्यादिति भावः ॥८५॥

( ध ) चतुरेति ।—चतुरस्य—विज्ञस्य, दूतस्य—वार्त्तावहस्य, आयत्ता—अधीना, तत्साध्या इत्यर्थः ।

( न ) अस्मत्परिग्रहः,—अस्मत्परिजनः, ( "परिग्रहः परिजने पत्न्यां स्वीकार-मूलयोः" इति मेदिनी ) अस्य—ह्रदस्य ।

( प ) अश्रद्धेयवचनात्—दैवादेशत्वेन समादरयोग्यवाक्यात् ।

( फ ) वचनरचनाचतुरः,—वाक्यविन्यासपटुः । दूतकर्मज्ञः,—वार्त्तावह-कार्य्याभिज्ञः ।

साकारो निःस्पृहो वाग्मी नानाशास्त्रविचक्षणः।
परचित्तावगन्ता च राज्ञो दूतः स इष्यते ॥ ८६ ॥

अन्यच,—यो मूर्खं लौल्यसम्पन्नं राजद्वारिकमाचरेत्।
मिथ्यावादं विशेषेण तस्य कार्य्यं न सिध्यति ॥ ८७ ॥

तदन्विष्यतां यथा अस्मात् (ब) व्यसनात् आत्मनां सुनिर्मुक्तिः'। अथ अन्ये प्रोचुः,—'अहो! युक्तमेतत्, न अन्यः कश्चिदुपायोऽस्माकं जीवितस्य; तथा एव क्रियताम्'।

अथ लम्बकर्णो गजयूथाधिपसमीपे (भ) निरूपितो गतश्च। तथाऽनुष्ठिते लम्बकर्णोऽपि गजमार्गम् आसाद्य अगम्यं स्थलम् आरुह्य तं गजम् उवाच,—'भो भो दुष्टगज! किमेवं लीलया निःशङ्कतया अत्र चन्द्रह्रदे आगच्छसि? तन्न आगन्तव्यं, निवर्त्त्यताम्' इति। तदाकर्ण्य विस्मितमना गज आह,—'भोः! कस्त्वम्?' स आह,—'अहं लम्बकर्णो नाम शशकः, चन्द्रमण्डले वसामि; साम्प्रतं भगवता चन्द्रमसा तव पार्श्वे प्रहितो दूतः; जानाति एव भवान्, यथार्थवादिनो दूतस्य न दोषः करणीयः, दूतमुखाः हि राजानः सर्व एव। उक्तञ्च,—

साकार इति।—अत्र यः इत्यध्याहार्य्यं, तच्छब्देन परामर्शात्। यः साकारः शोभनावयवसम्पन्नः, निःस्पृहः अलुब्धः, वाग्मी वाक्पटुः, नानाशास्त्रेषु विचक्षणः अभिज्ञः, परचित्तावगन्ता परचित्तावबोधक्षमश्च, अन्यहृदयभावाभिज्ञ इत्यर्थः, स तादृशः, राज्ञः दूतः इष्यते काम्यते, अभीष्ट इत्यर्थः ॥ ८६ ॥

य इति।—यः मूर्खं निर्बोधं, लौल्यसम्पन्नं लुब्धं, विशेषेण मिथ्यावादम् अलीकवादरतं, जनम् इति शेषः, राजद्वारिकं राजद्वारे नियुक्तं, दूतमित्यर्थः, आचरेत् कुर्य्यात्, तस्य कार्य्यं न सिध्यति न फलति ॥ ८७ ॥

(ब) व्यसनात्—विपदः। आत्मनां—स्वेषां, शशकानामिति यावत्। सुनिर्मुक्तिः,—सुखेन परित्राणं, भवेदिति शेषः।

(भ) निरूपितः,—शशकाः सर्वैर्निर्द्धारित इत्यर्थः।

उद्यतेष्वपि शस्त्रेषु बन्धुवर्गवधेष्वपि ।
परुषाण्यपि जल्पन्तो वध्या दूता न भूभुजा' ॥ ८८ ॥

तत् श्रुत्वा स आह,—'भोः शशक ! तत्कथय भगवतः चन्द्रमसः सन्देशं, येन सत्वरं क्रियते'। स आह,—'भवता अतीतदिवसे यूथेन सह आगच्छता प्रभूताः शशका निपातिताः; तत् किं न वेत्ति भवान्, यत् मम (म) परिग्रहोऽयम् ? तत् यदि जीवितेन ते प्रयोजनं, तदा केनापि प्रयोजनेन अत्र ह्रदे न आगन्तव्यमिति सन्देशः'। गज आह,—'अथ क्व वर्त्तते भगवान् स्वामी चन्द्रः ?' स आह,—'अत्र ह्रदे साम्प्रतं शशकानां (य) भवद्यूथमथितानां हतशेषाणां समाश्वासनाय समायातः तिष्ठति। अहं पुनः तवान्तिकं प्रेषितः'। गज आह,—'यदि एवं, तद्दर्शय मे तं स्वामिनं, येन प्रणम्य अन्यत्र गच्छामि'। शशक आह,—'भोः ! आगच्छ मया सह (र) एकाकी, येन दर्शयामि'। तथाऽनुष्ठिते शशको निशासमये तं गजं ह्रदतीरे नीत्वा जलमध्ये स्थितं चन्द्रविम्बम् अदर्शयत्, आह च,—'भोः ! एष नः स्वामी जलमध्ये (ल) समाधिस्थः

उद्यतेष्विति ।—शस्त्रेषु उद्यतेषु उत्तोलितेष्वपि, सङ्ग्रामसमारम्भकालेऽपि इति भावः, बन्धुवर्गाणां स्वजनानां, वधेषु अपि सत्सु, स्वजनविनाशानन्तरमपीत्यर्थः, दूताः शत्रुप्रेरिता इति भावः, परुषाणि निष्ठुराणि, जल्पन्तः कथयन्तोऽपि, भूभुजा राज्ञा, न वध्याः न हन्तव्याः ॥ ८८ ॥

(म) परिग्रहः,—परिजनः, आश्रितः इत्यर्थः। अयं—शशकसमूह इत्यर्थः। सन्देशः,—वाचिकादेश इत्यर्थः।

(य) भवद्यूथमथितानां—भवतां गजानामित्यर्थः, यूथेन सङ्घातेन, मथितानां विपर्य्यस्तानाम्। हतशेषाणां—हतावशिष्टानाम्। समाश्वासनाय—सम्यक्सान्त्वनाऽर्थम्।

(र) एकाकी—असहायः, ["एकादाकिनिच् चासहाये" (५।३।५२ पा०), इति एकशब्दात् आकिनिच्प्रत्ययः]।

(ल) समाधिस्थः,—ध्यानस्थः।

तिष्ठति, तत् (व) निभृतं प्रणम्य सत्वरं व्रज, नो चेत् समाधि-भङ्गात् भूयोऽपि प्रभूतं कोपं करिष्यति'।

अथ गजोऽपि त्रस्तमनाः तं प्रणम्य पुनर्गमनाय प्रस्थितः। शशकाश्च तद्दिनात् आरभ्य सपरिवाराः सुखेन स्वेषु स्थानेषु तिष्ठन्ति स्म। अतोऽहं ब्रवीमि,—'व्यपदेशेन महताम्' इत्यादि।

अपि च,—क्षुद्रमलसं कापुरुषं व्यसनिनमकृतज्ञं जीवितकामः।
पृष्ठप्रलपनशीलं स्वामित्वेन नाभियोजयेत्॥ ८९॥
क्षुद्रमर्थपतिं प्राप्य न्यायान्वेषणतत्परौ।
उभावपि क्षयं प्राप्तौ पुरा शश-कपिञ्जलौ'॥ ९०॥

ते प्रोचुः,—'कथमेतत्?' स आह,—

## कथा ३।

'कस्मिंश्चिद्वृक्षे पुरा अहम् अवसम्। तस्य अधस्तात् कोटरे कपिञ्जलो नाम चटकः प्रतिवसति स्म। अथ सदैव अस्त-मनवेलायाम् आगतयोः (श) द्वयोः अनेकसुभाषितगोष्ठ्या देवर्षिब्रह्मर्षिराजर्षिपुराणचरितकीर्त्तनेन च पर्य्यटनदृष्टानेक-

---

(व) निभृतं—निःशब्दम्।

क्षुद्रमिति।—जीवितकामः जीवनार्थी जनः, क्षुद्रं नीचम्, अलसम् आलस्यपरं, कर्मानुत्साहिनमित्यर्थः, कापुरुषं निन्द्यं, [गतिसमासे कोः कादेशः वैभाषिकः] व्यसनिनं मृगयाद्यासक्तम्, अकृतज्ञम् उपकाराविदं, तथा पृष्ठे पश्चात्, असमक्षमित्यर्थः, प्रलपन-शीलं परोक्षे कुत्साकारिणमित्यर्थः, पुरुषमिति शेषः, स्वामित्वेन प्रभुत्वेन, न अभि-योजयेत् न स्वामिनं कुर्य्यादित्यर्थः॥ ८९॥

क्षुद्रमिति।—पुरा पूर्वस्मिन् काले, न्यायान्वेषणतत्परौ न्यायविचारानुसन्धान-परायणौ इत्यर्थः, शशकपिञ्जलौ उभौ अपि, क्षुद्रं नीचान्तःकरणम् इत्यर्थः, अर्थपतिं प्रभुं, विचारकमिति यावत्, प्राप्य क्षयं निधनं, प्राप्तौ गतौ॥ ९०॥

(श) द्वयोः,—मम चटकस्य च इत्यर्थः। अनेकेति।—विविधसदालाप-युक्तसम्मेलनेन। देवर्षीति।—देवर्षिः,—नारदादिः, ब्रह्मर्षिः,—ब्रह्मा—ब्राह्मणः चतुर्मुखतुल्यो वा ऋषिः वशिष्ठादिः, राजर्षिः,—राजा—क्षत्रियः सन् ऋषिः

कौतूहलप्रकथनेन च परमसुखमनुभवतोः कालो व्रजति। अथ कदाचित् कपिञ्जलः प्राणयात्रार्थमन्यैः चटकैः सह अन्यं पक्वशालिप्रायं देशं गतः। ततो यावत् निशासमयेऽपि न आयातः, तावदहं सोद्वेगमनाः तद्वियोगदुःखितः चिन्तितवान्,—'अहो! किमद्य कपिञ्जलो न आयाति? किं केनापि पाशेन बद्धः? उताऽऽहोस्वित् केनापि व्यापादितः? सर्वथा यदि कुशली भवति, तन्मां विना न तिष्ठति' एवं मे चिन्तयतो बहूनि अहानि व्यतिक्रान्तानि। ततश्च तत्र कोटरे कदाचित् शीघ्रगो नाम शशकोऽस्तमनवेलायाम् आगत्य प्रविष्टः। मया अपि कपिञ्जलनिराशत्वेन न निवारितः।

अथ अन्यस्मिन् अहनि कपिञ्जलः शालिभक्षणात् अतीवपीवरतनुः स्वयम् आश्रयं स्मृत्वा भूयोऽपि तत्रैव समायातः। अथवा साधु इदमुच्यते,—

'न तादृक् जायते सौख्यमपि स्वर्गे शरीरिणाम्।
दारिद्र्येऽपि हि यादृक् स्यात् स्वदेशे स्वपुरे गृहे'॥९१॥

अथ असौ (ष)कोटरान्तर्गतं शशकं दृष्ट्वा (स)माक्षेपमाह,—

---

जनकादिः, तेषां यत् पुराणचरितं—पुराणवर्णितचरितं, तस्य कीर्तनेन—वर्णनेन। पर्य्यटनेति।—पर्य्यटनेन—समन्तात् विचरणेन, दृष्टं यत् अनेककौतूहलं—बहुविस्मयकारो व्यापारः, तस्य प्रकथनेन—प्रकृष्टवर्णनेन।

नेति।—स्वदेशे निजजनपदे, स्वपुरे स्वनगरे, गृहे स्वे भवने, स्थितस्य इति शेषः, दारिद्र्येऽपि दरिद्रावस्थायामपि, यादृक् सौख्यं सुखं, स्यात्, स्वर्गेऽपि शरीरिणां देहिनां, तादृक् सौख्यं, न जायते, हि निश्चये; "दिवसस्याष्टमे भागे शाकं पचति यो नरः। अनृणी चाप्रवासी च स मोदते इति कथ्यते॥" इति स्मरणात्। "जननी जन्मभूमिश्च स्वर्गादपि गरीयसी" इति भावः॥ ९१॥

(ष) कोटरान्तर्गतं—वृक्षरन्ध्रमध्यस्थितम्।

(स) साक्षेपं—सभर्त्सनं, सतिरस्कारम् इत्यर्थः, ("आक्षेपो भर्त्सनाऽऽकृष्टिकाव्यालङ्कृतिषु स्मृतः" इति मेदिनी)।

'भोः शशक! न त्वया सुन्दरं कृतं, यत् मम (ह) आवसथस्थाने प्रविष्टोऽसि, तत् शीघ्रं निष्क्रम्यताम्'। शशक आह,—'न तव, इदं गृहं, किन्तु मम एव ; तत् किं मिथ्या (क) परुषाणि जल्पसि ? उक्तञ्च,—

वापीकूपतडागानां देवालयकुजन्मनाम् ।
उत्सर्गात् परतः स्वाम्यमपि कर्त्तुं न शक्यते ॥ ९२ ॥

तथा च,—प्रत्यक्षं यस्य यत् भुक्तं क्षेत्राद्यं दश वत्सरान् ।
तत्र भुक्तिः प्रमाणं स्यान्न साक्षी नाक्षराणि वा ॥ ९३ ॥
मानुषाणामयं न्यायो मुनिभिः परिकीर्त्तितः ।
तिरश्चाञ्च विहङ्गानां यावदेव समाश्रयः ॥ ९४ ॥

---

(ह) आवसथस्थाने—वासस्थाने इत्यर्थः ।

(क) परुषाणि—कर्कशानि, वचनानीति शेषः ।

वापीति ।—वापी दीर्घिका, कूपः प्रसिद्धः, तडागः सपद्मसरोवरः तेषां, तथा देवालयानां, कुजन्मनाञ्च कौ पृथिव्यां, जन्म येषां तेषां, महीरुहाणामित्यर्थः, उत्सर्गात् यागाद्यनुष्ठानपूर्वकं साधारणमुद्दिश्य दानादित्यर्थः, [ अत्र परशब्दयोगेन "अन्यारादितर—" ( २।३।२९ पा० ) इति पञ्चमी ] परतोऽपि अनन्तरमेवेत्यर्थः, स्वाम्यं प्रभुत्वं, स्वाधिकारसंस्थापनमित्यर्थः, कर्त्तुं न शक्यते, केनापीति शेषः ; वाप्यादीनां प्रतिष्ठानन्तरं तत्र सर्वेषां समानाधिकारात् उत्सर्गीकृते अस्मिन् वृक्षे तव एकस्य स्वामित्वाभावादिति भावः ॥९२॥

प्रत्यक्षमिति ।—दश वत्सरान् व्याप्य [ अत्र "कालाध्वनोरत्यन्तसंयोगे" ( २।३।५ पा० ) इति द्वितीया ] यस्य प्रत्यक्षम् अक्ष्णः अभिमुखम्, [ आभिमुख्ये अव्ययीभावसमासः, "प्रतिपर—" ( ग० ) इति टच्प्रत्ययः समासान्तः ] साक्षादित्यर्थः, यत् क्षेत्राद्यं भूम्यादिकं वस्तु, भुक्तं, येनेति शेषः, तत्र भुक्तिः भोगः एव, दशवार्षिकीति भावः, प्रमाणं तस्य स्वत्वनिश्चायिका, स्वत्वकारणमित्यर्थः, न साक्षी साक्षात् द्रष्टा, अक्षराणि लेख्यमित्यर्थः, वा न, प्रमाणमिति शेषः ; साक्षिलेख्यादिभ्योऽपि दशवर्षीया भुक्तिरधिकं स्वत्वे प्रमाणमिति भावः ॥ ९३ ॥

मानुषाणामिति ।—मुनिभिः मानुषाणाम् अयं न्यायः पूर्वोक्ता विवादनिर्णायिका

तन्मम एतत् गृहं, न तव' इति । कपिञ्जल आह,—'भोः ! यदि (ख) स्मृतिं प्रमाणीकरोषि, तदागच्छ मया सह, येन स्मृतिपाठकं पृच्छामि, स यस्य ददाति, स गृह्णातु'। तथाऽनुष्ठिते मया अपि चिन्तितं,—'किमत्र भविष्यति ? मया द्रष्टव्योऽयं (ग) न्यायः'। ततः कौतुकात् अहमपि (घ) तावनु प्रस्थितः। अत्रान्तरे तीक्ष्णदंष्ट्रो नाम आरण्यमार्जारः तयोर्विवादं श्रुत्वा, (ङ) मार्गासन्नं नदीतटम् आसाद्य कृतकुशोपग्रहो निमीलितनयन ऊर्द्ध्वबाहुः अर्द्धपादस्पृष्टभूमिः श्रीसूर्य्याभिमुख इमां (च) धर्मोपदेशनाम् अकरोत्,—'अहो ! असारोऽयं (छ) संसारः, क्षणभङ्गुराः प्राणाः, स्वप्नसदृशः प्रियसमागमः, इन्द्रजालवत्

नीतिरित्यर्थः, परिकीर्त्तितः कथितः ; तिरश्चां पशूनां, [ "तिर्य्यक् तिरोऽर्थे वक्रे च विहङ्गादौ त्वनव्ययम्" इति मेदिनीवचने विहङ्गादौ इत्यत्र आदिपदेन पश्वादीनां प्राप्त्या, "विहङ्गानाम्" इत्यस्य श्लोके पृथगुपादानाच्च पश्वर्थक एव तिर्य्यक्शब्दः इति बोद्धव्यम् ] विहङ्गानाञ्च, यावदेव यावन्ति दिनानि व्याप्येत्यर्थः, समाश्रयः अवस्थितिः, तावदेव तत्र तत्र स्वत्वमिति भावः ॥ ९४ ॥

(ख) स्मृतिं—धर्मशास्त्रं, व्यवहारतत्त्वमित्यर्थः, ("स्मृतिस्तु धर्मसंहिता" इत्यमरः)। प्रमाणीकरोषि—अस्मिन् विषये याथार्थ्यनिर्णायकत्वेन जानासीत्यर्थः। यस्य ददाति—यस्मै अर्पयति, [सम्प्रदाने सम्बन्धविवक्षया षष्ठी ]।

(ग) न्यायः,—विचारः।

(घ) तावनु—तयोः पश्चात्, [ अत्रानुयोगे "लक्षणेत्थम्भूता—" (१।४।९० पा०) इति कर्मप्रवचनीयत्वात् द्वितीया ]।

(ङ) मार्गासन्नं—पथसमीपस्थम्। कृतेति।—कृतः कुशस्य उपग्रहः,—ग्रहणं येन तथोक्तः, दर्भपाणिरित्यर्थः, अतिपवित्रभावज्ञापनार्थमिति भावः। अर्द्धेति।—अर्द्धपादेन—पादार्द्धेन, पादाग्रमात्रेणेत्यर्थः, स्पृष्टा—अवलम्बिता, भूमिः येन सः ; एकचरणस्य अग्रभागमात्रेण धरणीं स्पृशन्नित्यर्थः।

(च) धर्मोपदेशनां—धर्मशास्त्रोपदेशम्।

(छ) संसारः,—जगत्, पुत्रकलत्रादिरूपदृश्यमानवस्तुनिचया इत्यर्थः। क्षणभङ्गुराः,—अचिरविनाशिनः।

(ञ) कुटुम्बपरिग्रहोऽयम्। तत् धर्मं (झ) मुक्त्वा नान्या गतिः अस्ति। उक्तञ्च,—

अनित्यानि शरीराणि विभवो नैव शाश्वतः।
नित्यं सन्निहितो मृत्युः कर्त्तव्यो धर्मसङ्ग्रहः॥ ८५॥

यस्य धर्मविहीनानि दिनान्यायान्ति यान्ति च।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति॥ ८६॥

आच्छादयति कौपीनं यो दंशमशकापहम्।
शुनः पुच्छमिव व्यर्थं पाण्डित्यं धर्मवर्जितम्॥ ८७॥

---

(ञ) कुटुम्बपरिग्रहः,—स्त्रीपुत्रादिपरिजनः।

(झ) मुक्त्वा—विहाय। गतिः,—उपायः।

* अनित्यानीति।—शरीराणि जीवदेहाः, अनित्यानि नश्वराणि, विभवः सम्पत्, नैव शाश्वतः न हि नित्यः, मृत्युः मरणं, यमः वा, नित्यं सततं, सन्निहितः आसन्नः; अत एव धर्मसङ्ग्रहः धर्मस्य उपार्जनं, कर्त्तव्यः; धर्मस्य अविनश्वरत्वात् लोकान्तरेऽपि सुखहेतुत्वाच्च तदालम्बनमेव श्रेय इति भावः॥ ८५॥

यस्येति।—यस्य दिनानि दिवसाः, धर्मविहीनानि धर्मशून्यानि सन्ति, केनापि धर्मकार्य्येण अनुपलक्षितान्येव इत्यर्थः, आयान्ति आगच्छन्ति, यान्ति च, स लोहकारस्य कर्मकारस्य, भस्त्रा चर्मप्रसेविका, अग्न्युद्दीपनार्थं चर्मनिर्मितयन्त्रविशेष इति यावत्, ("भस्त्रा चर्मप्रसेविका" इत्यमरः) सा इव, श्वसन् श्वासं त्यजन्नपि, न जीवति न प्राणिति; धर्मबहिर्भूतस्य जीवनं वृथैव इति भावः॥ ८६॥

आच्छादयतीति।—यो जनः, दंशमशकापहं वनमक्षिका-मशकाद्यक्षुद्रकीट-निवारकं, केवलं दंशादिदंशनेभ्य आत्मरक्षार्थं न धर्मार्थमिति भावः, कौपीनं मुनि-धार्य्यचीरमिति यावत्; आच्छादयति परिदधाति, तत् धर्मवर्जितं पाण्डित्यं वैराग्य-सूचककौपीनधारणेन संसारोऽयमसार इत्यादिज्ञानोत्पत्तिजन्यविद्वत्त्वं, शुनः सारमेयस्य, पुच्छमिव लाङ्गूलमिव, व्यर्थं विफलम्; तथा च यस्य चीरादिधारणं केवलं दंश-मशकादिदंशननिवारणार्थं, न तु जीवक्लेशापनोदनाय, तस्य तद्धारणं दंशनमात्रवारण-प्रयोजनं कुक्कुरलाङ्गूलमिव अकिञ्चित्करत्वेन हेयमेवेति निष्कर्षः; कुक्कुरलाङ्गूलं यथा कुटिलमेव तिष्ठति, न कदाऽपि सरलं जायते, तथा अधार्मिकस्य वैराग्यज्ञापकं कौपीनाचरणं कुटिलताचरणार्थमेव, न सरलव्यवहारार्थमिति भावः॥ ८७॥

अपरञ्च,—पुलाका इव धान्येषु पूतिका इव पक्षिषु ।
मशका इव मर्त्त्येषु येषां धर्मो न कारणम् ॥ ९८ ॥
श्रेयः पुष्पं फलं वृक्षात् दध्नः श्रेयो घृतं स्मृतम् ।
श्रेयस्तैलञ्च पिण्याकात् श्रेयान् धर्मस्तु मानुषात् ॥ ९९ ॥
सृष्टा मूत्रपुरीषार्थमाहाराय च केवलम् ।
धर्महीनाः परार्थाय पुरुषाः पशवो यथा ॥ १०० ॥
स्थैर्य्यं सर्वेषु कृत्येषु शंसन्ति नयपण्डिताः ।
बह्वन्तराययुक्तस्य धर्मस्य त्वरिता गतिः ॥ १०१ ॥

पुलाका इति ।—धर्मः येषां मनुष्याणां न कारणं न प्रमाणमित्यर्थः, संसारस्थिता-विति शेषः, ये धर्मं प्रमाणीकृत्य न व्यवहरन्तीति भावः, ते धान्येषु मध्ये, पुलाका इव अन्तःसारशून्यधान्यविशेषा इव, पक्षिषु पूतिका इव तदाख्यक्षुद्रपक्षिविशेषा इव, मर्त्त्येषु मरणधर्मिषु, प्राणिषु इति यावत्, मशका इव, अतिहीना इति भावः ॥ ९८ ॥

श्रेय इति ।—वृक्षात् पुष्पं फलञ्च श्रेयः श्रेष्ठं, दध्नः घृतं श्रेयः स्मृतं, पिण्याकात् तिलकल्कात्, ("अथ सिह्लके तिलकल्के च पिण्याकः" इत्यमरः ) तैलञ्च श्रेयः, मानुषात् तु धर्म एव श्रेयान् ; [ इह सर्वत्र वृक्षादित्यादौ "पञ्चमी विभक्ते" ( २।३।४० पा० ) इति पञ्चमी ] : यथा हि सारतया वृक्षादिषु फलादीनां श्रेयस्त्वं, मानुषस्यापि तथैव सारत्वेन धर्मस्य श्रेष्ठत्वमिति निष्कर्षः ॥ ९९ ॥

सृष्टा इति ।—ये पुरुषाः, केवलं मूत्रपुरीषार्थं मलमूत्रत्यागार्थं, तथा आहाराय च भोजनार्थञ्च, सृष्टाः निर्मिताः, विधात्रेति शेषः, ते धर्महीनाः पुरुषाः, पशवो यथा गवादय इव, परार्थाय अन्येषां प्रयोजनाय, भवन्तीति शेषः ; जनास्ते नीचोचितं कर्म साधयन्तीत्यर्थः ; उत्तमपुरुषार्थरूपधर्मस्यानपेक्षणात् वृथैव तेषां जन्म इति भावः ॥ १०० ॥

स्थैर्य्यमिति ।—नयपण्डिताः नीतिज्ञा जनाः, सर्वेषु निखिलेषु, कृत्येषु कार्य्येषु, धर्मानुष्ठानव्यतिरिक्तेषु इति भावः, स्थैर्य्यं स्थिरतां, विविच्य करणमित्यर्थः, शंसन्ति प्रशंसन्ति ; विवेकसहकृतकार्य्यस्य नियतफलोत्पादकत्वादिति भावः; किन्तु बह्वन्तराय-युक्तस्य बहुविघ्नसमन्वितस्य, धर्मस्य गतिः त्वरिता सवेगा ; कालविलम्बे सति विघ्ना-ऽऽपातस्य सम्भवात् धर्मः विचारं विनैव त्वरितम् अनुष्ठातव्यः, "शुभस्य शीघ्रम्" इति नीतिस्मरणात् इति भावः ॥ १०१ ॥

सङ्क्षेपात् कथ्यते धर्मो जनाः ! किं विस्तरेण वः ।
परोपकारः पुण्याय पापाय परपीड़नम् ॥ १०२ ॥
श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्य्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत्' ॥ १०३ ॥

अथ तस्य तां धर्मोपदेशनां श्रुत्वा शशक आह,—'भो भोः कपिञ्जल ! एष नदीतीरे तपस्वी धर्मवादी तिष्ठति, तदेनं पृच्छावः'। कपिञ्जल आह,—'ननु स्वभावतोऽस्माकं शत्रुभूतोऽयमस्ति ; तत् दूरे स्थितौ पृच्छावः ; कदाचित् अस्य (ञ) व्रतवैकल्यं सम्पद्यते'। ततो दूरस्थितौ ऊचतुः,—'भो भोः तपस्विन् ! धर्मोपदेशक ! आवयोर्विवादो वर्त्तते ; तत् धर्मशास्त्रद्वारेण अस्य (ट) निर्णयं कुरु ; यो हीनवादी, स ते भक्ष्यः' इति । स आह,—'भद्रौ ! मा मैवं वदतं, निवृत्तोऽहं (ठ) नरकपातकमार्गात्, अहिंसैव धर्ममार्गः । उक्तञ्च,—

---

सङ्क्षेपादिति ।—हे जनाः ! सङ्क्षेपात् वः युष्मभ्यम्, [ अत्र क्रियाग्रहणात् चतुर्थी ] धर्मः कथ्यते, विस्तरेण किम् ? बाहुल्येन न प्रयोजनमित्यर्थः, परोपकारः पुण्याय, परपीड़नं पापाय, भवतीति शेषः ; तथा च परोपकारकरणम् एव जगति मुख्यो धर्मः, परपीड़नन्तु महत् पापम् इति निष्कर्षः ॥ १०२ ॥

श्रूयतामिति ।—धर्मस्य सर्वस्वं सारभूतमित्यर्थः, 'यत्' 'तत्' इति पदद्वयमध्याहरणीयं, श्रूयतां, श्रुत्वा च अवधार्य्यतां निश्चीयताम् ; आत्मनः प्रतिकूलानि विरुद्धानि, स्वस्य क्लेशकराणीत्यर्थः, परेषाम् [अत्र सर्वनामत्वं चिन्त्यं. "पराणाम्" इति तु सम्यक्, व्यवस्थायामेव पूर्वादेः सर्वनामत्वस्वीकारादिति दिक् ] अन्येषां सम्बन्धि, न समाचरेत् न कुर्य्यात्, येन कर्मणा परकृतेन आत्मा क्लिश्यते, तत् कर्म परान् प्रति न प्रयुञ्जीत इति निष्कर्षः ; आत्मवत् सर्वभूतानि द्रष्टव्यानीति भावः ॥ १०३ ॥

(ञ) व्रतवैकल्यं—व्रतभङ्गः, अस्मद्भक्षणलोभादिति भावः ।

(ट) निर्णयं—निश्चयं, विचारद्वारा सत्यमिथ्यानिरूपणमित्यर्थः । हीनवादी—मिथ्यावादीत्यर्थः ।

(ठ) नरकेति ।—नरके पातयतीति नरकपातकः, यः मार्गः,—पन्थाः, तस्मात् । धर्ममार्गः,—धर्मस्य पन्थाः ।

अहिंसापूर्वको धर्मो यस्मात् सद्भिरुदाहृतः।
यूकामत्कुणदंशादींस्तस्मात् तानपि रक्षयेत् ॥ १०४ ॥
हिंसकान्यपि भूतानि यो हिनस्ति स निर्घृणः।
स याति नरकं घोरं किं पुनर्यः शुभानि च ? ॥ १०५ ॥

एतेऽपि ये याज्ञिका यज्ञकर्मणि पशून् व्यापादयन्ति, ते मूर्खाः (ड) परमार्थं श्रुतेः न जानन्ति। तत्र किल एतदुक्तम्,—(ढ) 'अजैः यष्टव्यम्', अजाः,—व्रीहयः तावत् सप्तवार्षिकाः कथ्यन्ते, न पुनः पशुविशेषाः। उक्तञ्च,—

वृक्षांश्छित्त्वा पशून् हत्वा कृत्वा रुधिरकर्दमम्।
यद्येवं गम्यते स्वर्गं नरकं केन गम्यते ? ॥ १०६ ॥

तन्न अहं भक्षयिष्यामि ; परं जयपराजयनिर्णयं करिष्यामि।

अहिंसेति।—यस्मात् सद्भिः साधुभिः, धर्मः अहिंसापूर्वकः अहिंसा पूर्वं प्रधानं यस्य तथाविधः, उदाहृतः उक्तः, 'अहिंसा एव परमो धर्मः' इति कथितः इत्यर्थः, तस्मात् तान् क्षुद्रानिति भावः, यूकामत्कुणदंशादीन् अपि रक्षयेत् [ स्वार्थे णिच् ] न हिंस्यात्, अन्येषां मानवादीनान्तु का कथा इति भावः ॥ १०४ ॥

हिंसकानीति।—यः हिंसकानि हिंसाकारकाणि, प्राणिपीडकानीत्यर्थः, अपि भूतानि प्राणिनः, हिनस्ति, स निर्घृणः निर्दयः, अपि च, स हिंसकहिंसकोऽपीत्यर्थः, घोरं भीषणं, नरकं याति ; यश्च शुभानि अहिंसकानि भूतानि, हिनस्तीति शेषः, तस्य पुनः किम् ? वक्तव्यमिति शेषः, अवश्यमेव तेन अतिघोरे नरके गन्तव्यमिति भावः ॥ १०५ ॥

(ड) परमार्थं—याथार्थ्यम्। श्रुतेः,—वेदस्य।

(ढ) अजैः,—छागैः। यष्टव्यं—यागः कर्त्तव्यः। व्रीहयः,—धान्यानि। सप्तवार्षिकाः,—सप्तवर्षस्थिताः, वर्षसप्तकस्य पुराणानि धान्यानीत्यर्थः।

वृक्षानिति।—वृक्षान् छित्त्वा, यूपार्थमिति भावः, पशून् हत्वा, यागार्थमिति भावः, रुधिरेण तेषां शोणितेन, कर्दमं कृत्वा यदि एवं चेत्, स्वर्गे [ अत्र कर्मणि अधिकरणविवक्षया सप्तमी ] गम्यते, लोकैरिति शेषः, तदा नरकं केन गम्यते ? ते एव नरकगामिनः, न त्वन्ये केऽपीत्यर्थः ; पशुवधादिकं विधाय यत् यज्ञमनुतिष्ठन्ति लोकाः, तत् केवलं नरकायेति भावः ॥ १०६ ॥

किन्तु अहं वृद्धः, दूरात् युवयोः (ण) भाषान्तरं सम्यक् न शृणोमि; एवं ज्ञात्वा मम समीपवर्त्तिनौ भूत्वा मम अग्रे (त) न्यायं वदतं, येन विज्ञाय (थ) विवादपरमार्थं वचो वदतो मे (द) परलोकबाधो न भवति। उक्तञ्च यतः,—

मानाद्वा यदि वा लोभात् क्रोधाद्वा यदि वा भयात्।
यो न्यायमन्यथा ब्रूते स याति नरकं नरः॥ १०७॥

पञ्च पश्वनृते हन्ति दश हन्ति गवानृते।
शतं कन्याऽनृते हन्ति सहस्रं पुरुषानृते॥ १०८॥

(ण) भाषान्तरं—वाक्यभेदम्।

(त) न्यायं—युक्तियुक्तं, सत्यमित्यर्थः।

(थ) विवादपरमार्थं—विवादे—परस्परविरुद्धवादे, व्यवहारकर्मणि इत्यर्थः, परमार्थं—सिद्धान्तानुगुणतया प्रकृतार्थं, कस्य सत्याभियोगः, कस्य वा मिथ्या? इत्थं जयसिद्धमित्यर्थः। वचः,—वाक्यं, जयपराजयसूचकं सिद्धान्तमित्यर्थः।

(द) परलोकबाधः,—स्वर्गप्रतिरोधः, अन्यायविचारकरणादिति भावः।

धर्माधिकरणे विचारार्थमुपगतयोर्वादिप्रतिवादिनोः अन्यतरपक्षपातकरणे प्राड्विवाकानां दोषमाह, मानादिति।—यः नरः, मानात् वा सम्मानलाभाद्वेव इत्यर्थः, अत्र वाशब्दः एवार्थे; बलीयसा जयसम्पादने स्वस्य विशेषसम्मानलाभो भवेदित्याशयेति भावः; यदि वा लोभात् लालसावशात्, धनादीनाम् इति शेषः, वा अथवा, क्रोधात् कोपात्, केनापि कारणेन विचारकस्य क्रोधोत्पत्तेरित्यर्थः, यदि वा अथवा, भयात् त्रासात्, बलवत्परपक्षादित्यर्थः, न्यायं सङ्गतं, सत्यमिति भावः, अन्यथा ब्रूते विरुद्धं वदति, पक्षपातात् असङ्गतं कथयति इति यावत, स नरकं याति॥ १०७॥

मिथ्याकथनस्य विषयभेदेन पापन्यूनाधिक्य दर्शयति, पञ्चेति।—पश्वनृते साधारणपशुविषयकमिथ्याकथने, पञ्च, पुरुषानिति शेषः, हन्ति नरके पातयतीति भावः, गवानृते गोरूपविशेषपशुविषयकमिथ्याकथने, दश, पुरुषान् इति शेषः, हन्ति; कन्याऽनृते कन्याविषयकमिथ्याकथने, शतं हन्ति; पुरुषानृते पुरुषविषयकमिथ्याकथने, सहस्रं, पुरुषान् इति शेषः, हन्ति; अतो न मिथ्या वक्तव्यमिति भावः। (मनुसंहितायां ८म० अ० ९८ श्लोक०)॥ १०८॥

उपविष्टः सभामध्ये यो न वक्ति स्फुटं वचः ।
तस्माद्दूरेण स त्याज्यो न्यायो वा कीर्त्तयेदृतम् ॥ १०९ ॥

तस्मात् (ध) विश्रब्धौ मम (न) कर्णान्तिके स्फुटं निवेदयतम्' । किं बहुना ? तेन (प) क्षुद्रेण तथा (फ) तौ तूर्णं विश्वासितौ; यथा तस्य (ब) उत्सङ्गवर्त्तिनौ सञ्जातौ ; ततश्च तेनापि (भ) समकालम् एव एकः (म) पदान्तेन आक्रान्तः, अन्यः (य) दंष्ट्राक्रकचेन च ; ततो गतप्राणौ भक्षितौ इति । अतोऽहं ब्रवीमि,—'क्षुद्रमर्थपतिं प्राप्य' इत्यादि ।

भवन्तोऽपि एनं दिवाऽन्धं क्षुद्रम् अर्थपतिम् आसाद्य रात्र्यन्धाः सन्तः शश-कपिञ्जलमार्गेण यास्यन्ति । एवं ज्ञात्वा यदुचितं, तद्विधेयम् अतःपरम्' ।

---

मिथ्याभाषणे एवं दोषमुक्त्वा इदानीमर्थिप्रत्यर्थिनौ सत्यं वाचयितुं प्रणोदयति, उपविष्ट इति ।—यः, जन इति शेषः, सभामध्ये धर्माधिकरणे इत्यर्थः, उपविष्टः सन्, स्फुटं विशदं, स्पष्टमित्यर्थः, यथा तथा वचः वाक्यं, सत्यमिति भावः, न वक्ति न भाषते, विशदभावेन तत्त्वार्थं न प्रकाशयति इति भावः, सः अस्फुटभाषी, मिथ्यावादी इति यावत्, तस्मात् अस्फुटकथनात्, यथार्थस्याप्रकाशनादित्याशयः, दूरेण दूरादेव, त्याज्यः परिवर्जनीयः, सभामण्डपात् बहिष्करणीय इत्यर्थः ; न्यायो वा तदभिहिता युक्तिरपीत्यर्थः, दूरेण त्याज्यः इत्यनुषङ्गः, न विश्वसनीय इत्यर्थः ; तर्हि एतादृशवस्तुस्थितौ सत्यां किमु कर्त्तव्यमिति प्रश्ने सामान्यतः फलितमाह, ऋतमिति ।—ऋतं सत्यं, कीर्त्तयेत् कथयेत् ॥ १०९ ॥

(ध) विश्रब्धौ—निःशङ्कौ, विश्वस्तौ वा ।

(न) कर्णान्तिके—कर्णसमीपे । स्फुटं—स्पष्टं, सत्यमित्यर्थः ।

(प) क्षुद्रेण—नीचेन, पापाशयेनेति यावत् ।

(फ) तौ—शशकपिञ्जलौ । तूर्णं—शीघ्रम् ।

(ब) उत्सङ्गवर्त्तिनौ—क्रोडस्थितौ, समीपस्थौ इत्यर्थः ।

(भ) समकालं—युगपत्, एकदा इत्यर्थः ।

(म) पदान्तेन—चरणाग्रेण ।

(य) दंष्ट्राक्रकचेन—दन्तरूपेण करपत्रेण ।

अथ तस्य तत् वचनम् आकर्ण्य 'साधु अनेन अभिहितम्' इति उक्त्वा 'भूयोऽपि पार्थिवार्थं समेत्य मन्त्रयिष्यामहे' इति ब्रुवाणाः सर्वे पक्षिणो यथाऽभिमतं जग्मुः ; केवलम् अवशिष्टः (र) भद्राऽऽसनोपविष्टः अभिषेकाभिमुखो दिवाऽन्धः कृकालिकया सह आस्ते ; आह च,—'कः कोऽत्र भोः ! किमद्यापि न क्रियते मम अभिषेकः ?' इति श्रुत्वा कृकालिकया अभिहितं,—'भद्र ! तव अभिषेके कृतोऽयं विघ्नो वायसेन ; गताश्च सर्वेऽपि विहगाः (ल) यथेप्सितासु दिक्षु, केवलमेकोऽयं वायसोऽवशिष्टः केनापि हेतुना तिष्ठति, तत् त्वरितमुत्तिष्ठ, येन त्वां (व) स्वाश्रयं प्रापयामि'। तत् श्रुत्वा सविषादम् उलूको वायसम् आह,—'भो भो दुष्टात्मन् ! किं मया ते अपकृतं, यत् राज्याभिषेको मे विघ्नितः ? तत् अद्य प्रभृति (श) सान्वयम् आवयोर्वैरं सञ्जातम्। उक्तञ्च,—

रोहति सायकैर्विद्धं छिन्नं रोहति चासिना।
वचो दुरुक्तं बीभत्सं न प्ररोहति वाक्क्षतम्' ॥ ११० ॥

एवमभिधाय कृकालिकया सह स्वाश्रयं गतः।

---

(र) भद्राऽऽसनोपविष्टः,—[ भद्राय लोकक्षेमाय आस्यते अत्रेति व्युत्पत्त्या आसेरधिकरणे ल्युट् ] भद्राऽऽसनं—नृपाऽऽसनं, ( "नृपाऽऽसनं यत्तत् भद्राऽऽसनम्" इत्यमरः ) तत्र उपविष्टः,—आसीनः।

(ल) यथेप्सितासु—यथाऽभिलषितासु, [ अत्र "सुप्सुपा" इति समासः ]।

(व) स्वाश्रयं—स्वस्थानम्।

(श) सान्वयं—सवंशं, कुलानुक्रममित्यर्थः।

रोहतीति।—सायकैः शरैः, विद्धं, वृक्षादिकम् अङ्गं वा इति शेषः, रोहति पुनः पूर्णं भवति, त्वचा मांसेन वा इति भावः, असिना खड्गेन, छिन्नमपि रोहति, किन्तु वाक्क्षतं वाचा जनितं क्षतं, दुर्वाक्यविद्धमित्यर्थः, हृदयमिति शेषः, न प्ररोहति न स्वास्थ्यम् आपद्यते, न पूर्णताम् अधिगच्छतीति भावः ; अतएव प्रयुक्तं दुर्वाक्यं न कदाऽपि विस्मर्यते लोकैरिति तात्पर्यम् ; तस्मात् दुरुक्तं दुष्टं वचः, बीभत्सम् अतीव घृणाकरम् ॥ ११० ॥

अथ भयव्याकुलो वायसो व्यचिन्तयत्,—'अहो ! अकारणं (ष) वैरम् आसादितं मया ; किमिदं (स) व्याहृतम् !! उक्तञ्च,—

अदेशकालज्ञमनायतिक्षमं
यदप्रियं लाघवकारि चात्मनः ।
योऽत्राब्रवीत् कारणवर्जितं वच:
न तद्वचः स्यात् विषमेव तद्वचः ॥ १११ ॥

बलोपपन्नोऽपि हि बुद्धिमान् नरः
परं नयेन्न स्वयमेव वैरिताम् ।
भिषक् ममास्तीति विचिन्त्य भक्षयेत्
अकारणात् को हि विचक्षणो विषम् ? ॥ ११२ ॥

परपरिवादः परिषदि न कथञ्चित् पण्डितेन वक्तव्यः ।
सत्यमपि तन्न वाच्यं यदुक्तमसुखाऽऽवहं भवति ॥११३॥

---

(ष) वैरं—विरोधः, ("वैरं विरोधो विद्वेषः" इत्यमरः)। आसादितं—प्राप्तम् ।

(स) व्याहृतम्—उक्तं, ("व्याहार उक्तिर्लपितम्" इत्यमरः)।

अदेशेति।—अत्र संसारे, यः अदेशकालज्ञं देशकालज्ञानवर्जितं, यत्र देशे यस्मिन् काले वा यत् युक्तं, तद्विपरीतमित्यर्थः, अनायतिक्षमं परिणामविषमम् इत्यर्थः, अप्रियम् अप्रीतिकरं, लोकानामिति शेषः, आत्मनः स्वस्य च, लाघवकारि लघुत्वप्रकाशकं, कारणवर्जितम् अकारणञ्च, निर्हेतुकमित्यर्थः, यत् वचः अब्रवीत्, तस्य तत् वचः, वचः न स्यात् वाक्यमिति संज्ञायोग्यमेव न भवेत्, अपि तु तद्वचः विषमेव, स्यादित्यन्वयः ; विषवत् तत् सदा धीमद्भिरुपेक्ष्यते स्वापकारजननभयादिति भावः । वंशस्थविलं वृत्तम् ॥ १११ ॥

बलोपपन्न इति।—बुद्धिमान् नरः बलोपपन्नोऽपि सबलोऽपि, स्वयम् आत्मना, परम् अन्यं, वैरितां शत्रुतां, न हि नयेत् नैव प्रापयेत् ; तथा हि, विचक्षणः सदसद्विवेचकः, को हि जनः, मम भिषक् चिकित्सकः, विषवेगनिवारणक्षम इति भावः, अस्ति इति विचिन्त्य अकारणात् हेतुं विना, विषं भक्षयेत् ? न कोऽपीत्यर्थः ; प्रथमतो वैरमुत्पाद्य बलेन पश्चात् तदपनयनप्रयासः विषभक्षणानन्तरं चिकित्सकानुसन्धानवत् नितरां हेय इति भावः । वंशस्थविलं वृत्तम् ॥ ११२ ॥

परेति।—पण्डितेन विज्ञेन जनेन, परिषदि सभायां, परपरिवादः परनिन्दा,

सुहृद्भिराप्तैरसकृद्विचारितं
स्वयञ्च बुद्ध्या प्रविचारिताश्रयम्।
करोति कार्य्यं खलु यः स बुद्धिमान्
स एव लक्ष्म्या यशसाञ्च भाजनम्' ॥ ११४ ॥

एवं विचिन्त्य काकोऽपि प्रयातः। तदा प्रभृति अस्माभिः सह (ङ) कौशिकानाम् अन्वयगतं वैरमस्ति"।

मेघवर्ण आह,—"तात! एवं गते अस्माभिः किं कृतम् अस्ति?" स आह,—"वत्स! एवं गतेऽपि (क) षाड्गुण्यात् अपरः स्थूलोऽभिप्रायोऽस्ति, तम् (ख) अङ्गीकृत्य स्वयमेव अहं तद्विजयाय यास्यामि, रिपून् वञ्चयित्वा वधिष्यामि च। उक्तञ्च यतः,—

बहुबुद्धिसमायुक्ताः सुविज्ञाना बलोत्कटान्।
शक्ता वञ्चयितुं धूर्त्ता ब्राह्मणं छागलादिव" ॥ ११५ ॥

कथञ्चित् केनापि प्रकारेण, न वक्तव्यः; यत् उक्तं वचनम्, अमुत्राऽऽयत्याम् अप्रीतिकरं, लोकस्येति शेषः, भवति, तत् सत्यमपि न वाच्यम्; "न ब्रूयात् सत्यमप्रियम्" इति नीतिशास्त्रादिति भावः। आर्य्या वृत्तम् ॥ ११३ ॥

सुहृद्भिरिति।—यः आप्तैः विश्वस्तैः, सुहृद्भिः सह असकृत् पुनः पुनः, विचारितं विशेषेण कर्त्तव्यतया निर्द्धारितं, स्वयञ्च बुद्ध्या निजबुद्ध्यनुसारेणेत्यर्थः, प्रविचारिताश्रयं प्रविचारितः विशेषेण विचार्य्य निर्णीतः, आश्रयः आधारः, कस्मिन् कीदृशं कार्य्यं करणीयमित्येवंरूपः इति भावः, यस्य तथाविधं, प्रकृष्टावधारणसङ्गतम् इत्यर्थः, कार्य्यं करोति, स खलु स एव, बुद्धिमान्, स एव लक्ष्म्याः सम्पदः, यशसाञ्च भाजनं पात्रं, भवतीति शेषः; न कदाचिदप्यसौ विपद्यते इति फलितम् ॥ ११४ ॥

(ङ) कौशिकानां—पेचकानां, ("महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः" इत्यमरः)। अन्वयगतं—वंशपरम्परागतम्।

(क) षाड्गुण्यात्—सन्ध्यादिगुणषट्कात्। अपरः,—अन्यः। स्थूलः,—महान्, अतिसूक्ष्मषाड्गुण्यादिचिन्तायाः बह्वायासकरत्वेन ततः सुकरः तीक्ष्णधीमात्रसाध्योऽर्थसिद्धिकारकः इत्यर्थः। अभिप्रायः,—उपायः, कौशलमिति यावत्।

(ख) अङ्गीकृत्य—अवलम्ब्य।

बह्विति।—बहुबुद्धिसमायुक्ताः विविधविषयेषु तीक्ष्णमतिसम्पन्नाः, सुविज्ञानाः

मेघवर्ण आह,—"कथमेतत् ?" सोऽब्रवीत्,—

## कथा ४ ।

"कस्मिंश्चित् अधिष्ठाने मित्रशर्मा नाम ब्राह्मणः (ग)कृताग्निहोत्रपरिग्रहः प्रतिवसति स्म। तेन कदाचित् माघमासे (घ) सौम्यानिले प्रवाति, मेघाच्छादिते गगने, मन्दं मन्दं प्रवर्षति (ङ) पर्जन्ये, पशुप्रार्थनाय ग्रामान्तरं गत्वा कश्चित् यजमानो याचितः,—'भो यजमान ! आगामिन्याम् अमावस्यायाम् अहं यक्ष्यामि यज्ञम् ; तत् देहि मे पशुम् एकम्' ।

अथ तेन तस्य शास्त्रोक्तः (च) पीवरतनुः पशुः प्रदत्तः। सोऽपि तं (छ) समर्थम् इतश्चेतश्च गच्छन्तं विज्ञाय स्कन्धे कृत्वा सत्वरं स्वपुराभिमुखः प्रतस्थे।

अथ तस्य गच्छतो मार्गे त्रयो धूर्त्ताः क्षुत्क्षामकण्ठाः सम्मुखा बभूवुः। तैश्च तादृशं पीवरतनुं स्कन्धे आरूढम् अवलोक्य मिथोऽभिहितम्,—'अहो ! अस्य पशोः भक्षणात्

---

सुविचक्षणाः, जनाः इति शेषः, धूर्त्ताः वञ्चकाः, ब्राह्मणं छागलादिव, बलोत्कटान् प्रबलान्, अपि शत्रूनिति शेषः, वञ्चयितुं प्रतारयितुं, स्वाधिकारात् च्यावयितुमिति भावः, शक्ताः समर्थाः, भवन्तीति शेषः ॥ ११५ ॥

(ग) कृतेति।—कृतः अग्निहोत्रपरिग्रहः,—अग्निहोत्रस्य—नित्यं गृहस्थापितवैवाहिकसंस्कृताग्नौ होमरूपस्य नियमविशेषस्य, परिग्रहः,—स्वीकारः येन तथोक्तः, अग्निहोत्री, साग्निक इति यावत्।

(घ) सौम्यानिले—शीतलवायौ। प्रवाति—प्रवहति, [ अत्र भावे सप्तमी ]।

(ङ) पर्जन्ये—मेघे। पशुप्रार्थनाय—पशुलाभार्थं, यज्ञीयच्छागयाञ्चार्थमित्यर्थः, ("पशुर्मृगाऽऽदिदेवाजे नाऽव्ययं पशु दर्शने" इति मेदिनी)।

(च) पीवरतनुः,—स्थूलकायः।

(छ) समर्थं—बलवन्तं, यज्ञकर्मप्रयोगयोग्यमिति भावः। इतश्चेतश्च—अस्यां तस्यां दिशि, समन्तादित्यर्थः, [ अत्र सार्वविभक्तिकः तसिल् ]।

(ज) अद्यतनो हिमपातो व्यर्थतां नीयते ; तत् एनं वञ्चयित्वा पशुम् आदाय (झ) शीतत्राणं कुर्मः'।

अथ तेषाम् एकतमो वेशपरिवर्त्तनं विधाय सम्मुखो भूत्वा (ञ) अपमार्गेण तम् (ट) आहिताग्निम् ऊचे,—'भो भोः (ठ) बालाग्निहोत्रिन्! किम् एवं जनविरुद्धं हास्यकार्य्यम् अनुष्ठीयते, यदेषः (ड) सारमेयोऽपवित्रः स्कन्धाधिरूढो नीयते? उक्तञ्च यतः,—

श्वानकुक्कुटचाण्डालाः समस्पर्शाः प्रकीर्त्तिताः।
रासभोष्ट्रौ विशेषेण तस्मात् तान् नैव संस्पृशेत्' ॥ ११६॥

ततश्च तेन कोपाभिभूतेन अभिहितम्,—'अहो! किमन्धो

---

(ज) अद्यतनः,—अद्यभवः। हिमपातः,—शीताऽऽगमः, तुहिनपतनं वा। व्यर्थतां—विफलताम्; मांसभक्षणात् शरीरे उष्णे सञ्जाते शीतनिवृत्तिः भविष्यति इत्याशयः।

(झ) शीतत्राणं—शीतात् त्राणं—रक्षणम्, आत्मन इति शेषः।

(ञ) अपमार्गेण—अपरमार्गेण, येन मार्गेण ब्राह्मण आयाति, तद्विपरीतमार्गेणेत्यर्थः, पश्चाद्भागेन वा, आगत्य इति शेषः।

(ट) आहिताग्निं—कृताग्निहोत्रम्। [अत्र 'अग्न्याहितम्' इत्यपि भवति, "वाऽऽहिताग्न्यादिषु" (२।२।३७ पा०) इति सूत्रात्]।

(ठ) बालाग्निहोत्रिन्।—बालः,—शिशुः, अनभिज्ञ इत्यर्थः, स चासौ अग्निहोत्री चेति तत्सम्बुद्धौ; कदाऽपि प्राक् भवता अग्निहोत्रयागः नानुष्ठित इत्यनुमीयते, अन्यथा कथं सारमेयेण अग्निहोत्रं चिकीर्षुरसि? इत्याशयात् सोल्लुण्ठम् एवमामन्त्रितमिति ज्ञेयम्।

(ड) सारमेयः,—सरमा—कुक्कुरी, तस्या अपत्यं पुमान् सारमेयः [सरमाशब्दादपत्यार्थे ढक् प्रत्ययः]।

श्वानेति।—[श्वा एवेति अण्, न टिलोपः] श्वानाः कुक्कुराः, कुक्कुटाश्च, चाण्डालाश्च ते, विशेषेण रासभोष्ट्रौ गर्द्दभोष्ट्रौ, समस्पर्शाः तुल्यस्पर्शाः, प्रकीर्त्तिताः कथिताः; तस्मात् तान् श्वानादीन्, नैव संस्पृशेत्; एतेषां स्पर्शस्य अपवित्रताकरत्वेन तुल्यपापजनकत्वादिति भावः ॥ ११६ ॥

भवान्, यत् पशुं सारमेयं प्रतिपादयसि ?' सोऽब्रवीत्,—'ब्रह्मन्! कोपः त्वया न कार्य्यः, यथेच्छया गम्यताम्' इति। अथ यावत् किञ्चित् (ढ) अध्वनोऽन्तरं गच्छति, तावत् द्वितीयो धूर्त्तः सम्मुखे समुपेत्य तमुवाच,—'भो ब्रह्मन्! कष्टं कष्टम्!! यद्यपि (ण) वल्लभोऽयं ते (त) मृतवत्सः, तथाऽपि स्कन्धमारोपयितुमयुक्तम्। उक्तञ्च यतः,—

तिर्य्यञ्चं मानुषं वाऽपि यो मृतं संस्पृशेत् कुधीः।
पञ्चगव्येन शुद्धिः स्यात् तस्य चान्द्रायणेन च' ॥ ११७ ॥

अथासौ सकोपमिदमाह,—'भोः! किमन्धो भवान्, यत् पशुं मृतवत्सं वदसि ?' सोऽब्रवीत्,—'भगवन्! मा कोपं कुरु, अज्ञानान्मयाऽभिहितम्; तत् त्वम् (थ) आत्मरुचि समाचर' इति। अथ यावत् (द) स्तोकं वनान्तरं गच्छति, तावत् तृतीयोऽन्यवेशधारो धूर्त्तः सम्मुखे समुपेत्य तमुवाच,—भोः!

(ढ) अध्वनः,—पथः। अन्तरं—दूरम्।

(ण) वल्लभः,—प्रियः।

(त) मृतवत्सः,—मृतो गोशिशुः।

तिर्य्यञ्चमिति।—यः कुधीः दुर्बुद्धिः नरः, मृतं तिर्य्यञ्चं पशुपक्ष्यादिकं, मानुषं वाऽपि संस्पृशेत् परामृशेत्, तस्य मृतस्पृष्टः जनस्य, पञ्चगव्येन पञ्चानां गव्यानां समाहारः पञ्चगव्यम् [इति द्विगुसमासः] तेन दधिदुग्धघृतगोमयगोमूत्ररूपेणेत्यर्थः, भक्षितेनेति शेषः, चान्द्रायणेन च चन्द्रस्य अयनमिव अयनं गतिः यस्य तथाभूतेन; यद्वा,—चान्द्रे चन्द्रलोके, अयनं गतिः, वासः इति यावत्, येन तादृशेन मासमाध्यव्रतविशेषेणेत्यर्थः, कृष्णप्रतिपदम् आरभ्य पौर्णमासीं यावदनुष्ठेयेनेति यावत्, "एकैकं ह्रासयेत् पिण्डं कृष्णे शुक्ले च वर्द्धयेत्" इति शास्त्रादिति भावः; शुद्धिः तज्जनितपापक्षय इत्यर्थः, स्यात् ॥ ११७ ॥

(थ) आत्मरुचि—स्वाभिलषितं यथा तथा।

(द) स्तोकम्—अल्पम्। वनान्तरं—वनावकाशं, वनमध्यमित्यर्थः।

अयुक्तमेतत्, यत् त्वं (ध) रासभं स्कन्धाधिरूढं नयसि ; तत् त्यज्यतामेषः। उक्तञ्च,—

य: स्पृशेद्रासभं मर्त्यो ज्ञानादज्ञानतोऽपि वा ।
सचेलं स्नानमुद्दिष्टं तस्य पापप्रशान्तये ॥ ११८ ॥

तत् त्यजैनं, यावदन्य: कश्चिन्न पश्यति'।

अथासौ तं पशुं रासभं मन्यमानो भयाद्भूमौ प्रक्षिप्य स्व-गृहमुद्दिश्य प्रपलायितः। ततस्ते त्रयो मिलित्वा तं पशुमादाय यथेच्छया भक्षितुमारब्धाः। अतोऽहं ब्रवीमि,—'बहुबुद्धिसमायुक्ताः' इत्यादि।

अथवा साध्विदमुच्यते,—

अभिनवसेवकविनयैः प्राघुणिकोक्तैर्विलासिनीरुदितैः।
धूर्त्तजनवचननिकरैरिह कश्चिदवञ्चितो नास्ति ॥११९॥

किञ्च, दुर्बलैरपि बहुभिः सह विरोधो न युक्तः। उक्तञ्च,—

बहवो न विरोद्धव्या दुर्जया हि महाजनाः।
स्फुरन्तमपि नागेन्द्रं भक्षयन्ति पिपीलिकाः" ॥ १२० ॥

(ध) रासभं—गर्दभम्।

य इति।—य: मर्त्यः ज्ञानात् अज्ञानतो वाऽपि रासभं गर्दभं, स्पृशेत्, तस्य पापप्रशान्तये रासभस्पर्शजनितपातकोपशमायेत्यर्थः, सचेलं स्वपरिधेयोत्तरीयवस्त्र-सहितं, स्नानम् उद्दिष्टं कथितम् ॥ ११८ ॥

अभिनवेति।—इह अस्मिन् जगति, कश्चित् कोऽपि जनः, अभिनवस्य नवा-ऽऽगतस्य, सेवकस्य भृत्यस्य, विनयैः विनीतव्यवहारैः, प्राघुणिकोक्तैः आगन्तुकवचनैः, ("स्यादावेशिक आगन्तुरतिथिर्ना गृहागते। प्राघुणिकः प्राघुणकः" इति कोषः) विलासिनीनां नारीणां, दुष्टानामिति भावः, रुदितैः विलापैः, धूर्त्तजनानां प्रता-रकाणां, वचननिकरैः वाक्प्रपञ्चैः, अवञ्चितः अप्रतारितः, नास्ति ; सर्व एव प्रतारितो भवतीत्यर्थः ; एते स्वकार्यसाधनाय मधुरवचनादिभिः जनान् विश्वास्य प्रतारयन्ति इति निष्कर्षः। आर्य्या वृत्तम् ॥ ११९ ॥

बहव इति।—बहवः सङ्ख्यकाः इत्यर्थः, दुर्बला अपीति शेषः, न विरोद्धव्याः न

मेघवर्ण आह,—"कथमेतत् ?" स्थिरजीवी कथयति,—

## कथा ५।

"अस्ति कस्मिंश्चिद्वल्मीके महाकायः (न) कृष्णसर्पोऽतिदर्पो नाम। स कदाचित् (प) विलानुसारमार्गमुत्सृज्य अन्येन लघुद्वारेण निष्क्रमितुमारब्धः। निष्क्रामतश्च तस्य महाकायत्वात् दैववशतया लघुविवरत्वाच्च शरीरे (फ) व्रणः समुत्पन्नः। अथ व्रणशोणितगन्धानुसारिणीभिः पिपीलिकाभिः सर्वतो व्याप्तो व्याकुलीकृतश्च कति व्यापादयति कति वा ताडयति। अथ प्रभूतत्वात् विस्तारितबहुव्रणः क्षतसर्वाङ्गोऽतिदर्पः पञ्चत्वमुपागतः। अतोऽहं ब्रवीमि,—'बहवो न विरोद्धव्याः' इत्यादि।

तत् अन्यास्ति किञ्चित् मे वक्तव्यं, तदवधार्य यथोक्तम् अनुष्ठीयताम्"। मेघवर्ण आह,—"तत् समादेशय, तवादेशो नान्यथा कर्त्तव्यः"। स्थिरजीवी प्राह,—"वत्स! समाकर्णय तर्हि सामादीनतिक्रम्य यो मया पञ्चम उपायो निरूपितः;—मां (ब) विपक्षभूतं कृत्वा, अतिनिष्ठुरवचनैः निर्भर्त्स्य, यथा (भ) विपक्षप्रणिधीनां प्रत्ययो भवति, तथा (म) समाहृतरुधिरैः

---

विरोधनीयाः, हि यतः, महात्मनाः महान्तः बहवः, समवेता इति भावः, जनाः, दुर्जया जेतुमशक्याः; तथा हि, पिपीलिकाः क्षुद्रा अपि समवेताः इति भावः, स्फुरन्तं दीप्यमानं, गर्जन्तमिति यावत, स्वतेजसेति भावः, नागेन्द्रमपि भुजगेन्द्रमपि, भक्षयन्ति; नातिदुष्करं किञ्चित् सम्भूय कुर्वाद्भः इति निष्कर्षः॥ १२०॥

(न) कृष्णसर्पः,—तीव्रविषधरसर्पविशेषः, [ नित्यसमासः ]।

(प) विलानुसारमार्गं—गर्त्तात् बहिर्निःसरणस्य प्रशस्तं पन्थानम्। निष्क्रमितुं—निर्गन्तुम्।

(फ) व्रणः,—क्षतः, घर्षणादिति भावः।

(ब) विपक्षभूतं—शत्रुभूतम्।

(भ) विपक्षप्रणिधीनां—शत्रुचाराणाम्। प्रत्ययः,—विश्वासः।

(म) समाहृतरुधिरैः,—कुतश्चित् आनीतैः रक्तैः।

आलिङ्ग्य, अस्यैव (य) न्यग्रोधस्य अधस्तात् प्रक्षिप्य मां, गम्यतां पर्वतम् ऋष्यमूकं प्रति; तत्र सपरिवारस्तिष्ठ, यावदहं समस्तान् (र) सपत्नान् सुप्रणीतेन विधिना विश्वास्य अभिमुखान् कृत्वा कृतार्थो ज्ञातदुर्गमध्यः दिवसे तान् अन्धतां प्राप्तान् ज्ञात्वा व्यापादयामि। ज्ञातं मया सम्यक्, नान्यथा अस्माकं (ल) सिद्धिरिति; यतो (व) दुर्गम् एतत् अपसार-रहितं केवलं वधाय भविष्यति। उक्तञ्च यतः,—

अपसारसमायुक्तं नयज्ञैर्दुर्गमुच्यते ।
अपसारपरित्यक्तं दुर्गं व्याजेन बन्धनम् ॥ १२१ ॥

न च त्वया मदर्थं कृपा कार्य्या। उक्तञ्च,—

अपि प्राणसमानिष्टान् पालितान् लालितानपि ।
भृत्यान् युद्धे समुत्पन्ने पश्येच्छुष्कमिवेन्धनम् ॥ १२२ ॥

(य) न्यग्रोधस्य—वटवृक्षस्य।

(र) सपत्नान्—शत्रून्, ("रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः। द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः॥" इत्यमरः)। सुप्रणीतेन—सुकल्पितेन। विधिना—उपायेन। अभिमुखान्—मुखापेक्षिण इत्यर्थः, मां प्रति अनुकूलानिति यावत्।

(ल) सिद्धिः,—फललाभ इत्यर्थः, कार्य्यस्येति शेषः।

(व) दुर्गम् एतत्—अस्माकमावास इति भावः। अपसाररहितं—पलायनोपायशून्यमित्यर्थः, गुप्तद्वारविरहितमिति भावः।

अपसारेति।—नयज्ञैः नीतिकुशलैः जनैः, दुर्गम् अपसारसमायुक्तं पलायनोपायसमन्वितं, गुप्तद्वारविशिष्टमित्यर्थः, कर्त्तव्यमितीति शेषः, उच्यते; अपसारपरित्यक्तं पलायनमार्गरहितं, दुर्गं व्याजेन छलेन, दुर्गरूपेणेत्यर्थः, बन्धनं कारागृहम्, एवेति शेषः॥ १२१ ॥

अपीति।—युद्धे समुत्पन्ने समुपस्थिते सति, प्राणसमान् जीविततुल्यान्, इष्टान् प्रियान् अपि, तथा पालितान् रक्षितान्, लालितान् पोषितान् अपि, भृत्यान् परिजनानित्यर्थः, शुष्कम् इन्धनमिव काष्ठम् इव, पश्येत्; लोको यथा यत्नरक्षितमपि शुष्कं काष्ठं ममताबोधशून्यः सन् अग्नौ क्षिपति, तथा विजिगीषुः तादृशानपि जनान् समरानले आहुतिं दद्यात् इति भावः॥ १२२ ॥

तथा च,—प्राणवद्रक्षयेत् भृत्यान् स्वकायमिव पोषयेत्।
सदैकदिवसस्यार्थे यत्र स्याद्रिपुसङ्गमः ॥ १२३ ॥

तत् त्वया अहं न अत्र विषये (अ) प्रतिषेधनीयः" इत्युक्त्वा तेन सह (ब) शुष्ककलहं कर्त्तुमारब्धः।

अथ अन्ये (स) तस्य भृत्याः चिरञ्जीविनम् उच्छृङ्खलवचनैः जल्पन्तम् अवलोक्य तस्य बधाय उद्यताः मेघवर्णेन अभिहिताः,—"अहो! निवर्त्तध्वं यूयम्; अहमेव अस्य शत्रुपक्षपातिनो दुरात्मनः स्वयं निग्रहं करिष्यामि" इत्यभिधाय तस्योपरि समारुह्य, लघुभिश्चञ्चुप्रहारैस्तं प्रहृत्य, आहृतरुधिरेण प्लावयित्वा, तदुपदिष्टम् ऋष्यमूकपर्वतं सपरिवारो गतः।

एतस्मिन्नन्तरे कृकालिकया (ड) द्विषत्प्रणिधीभूतया तत् सर्वं मेघवर्णस्य अमात्यस्य व्यसनम् उलूकराजस्य निवेदितं यत्,—"तव अरिः सम्प्रति भीतः क्वचित् प्रचलितः सपरिवारः" इति। अथ उलूकाधिपः तदाकर्ण्य अस्तमनवेलायां सामात्यः सपरिजनो वायसबधार्थं प्रचलितः, प्राह च,—"त्वर्य्यतां त्वर्य्यताम्!! भीतः शत्रुः पलायनपरः पुण्यैर्लभ्यते। उक्तञ्च,—

---

प्राणेति।—एकस्य दिवसस्य अर्थं निमित्त, युद्धदिवसमात्रप्रयोजनार्थमित्यर्थः, तदानीन्तनविपदुद्धारार्थमिति भावः, सदा यावज्जीवमित्यर्थः, भृत्यान् प्राणवत् स्वान् प्राणानिव, रक्षयेत्, तथा स्वकायमिव आत्मशरीरमिव, पोषयेत प्रतिपालयेत्। स च दिवसः कः इत्याकाङ्क्षायामाह, यत्रेति।—यत्र यस्मिन् दिवसे, रिपुसङ्गमः शत्रुसम्मेलनं, स्यात् रिपुभिः सह सङ्ग्रामः भवेदित्यर्थः, स्वामिनः कर्त्तव्यमिदं कदाचिदापतिष्यद्विपदः परित्राणार्थं यावज्जीवं भृत्यप्रतिपालनं, भृत्यस्य च समागमिष्यत्-कादाचित्कस्वामिविपदुद्धारणम्, अतोऽनुचरेण मयैतत् कर्त्तव्यमेवेति भावः ॥१२३॥

(अ) प्रतिषेधनीयः,—निवारणीयः।

(ब) शुष्ककलहम्—अनर्थकविवादं, तत्त्वकविवादमित्यर्थः।

(स) तस्य—मेघवर्णस्य। उच्छृङ्खलवचनैः,—अशिष्टवाक्यैः। जल्पन्तं—कथयन्तम्।

(ड) द्विषत्प्रणिधीभूतया—शत्रुपक्षीयचारकर्मणि नियुक्तया।

शत्रोः प्रचलने छिद्रमेकमन्यच्च संश्रयम् ।
कुर्वाणो जायते वश्यो व्ययत्वे राजसेविनाम्" ॥ १२४ ॥

एवं ब्रुवाणः समन्तात् न्यग्रोधपादपमधः परिवेष्ट्य व्यवस्थितः। यावत् न कश्चित् वायसो दृश्यते, तावत् शाखाग्रम् अधिरूढो हृष्टमनाः (क) वन्दिभिः अभिष्टूयमानोऽरिमर्दनः तान् परिजनान् प्रोवाच,—(ख) "अहो! ज्ञायतां तेषां मार्गः, कतमेन मार्गेण प्रनष्टाः काकाः? तत् यावत् न दुर्गं समाश्रयन्ति, तावत् एव (ग) पृष्ठतो गत्वा व्यापादयामि। उक्तञ्च,—

वृतिमप्याश्रितः शत्रुरवध्यः स्याज्जिगीषुणा ।
किं पुनः संश्रितो दुर्गं सामग्र्या परया युतम्?" ॥१२५॥

अथ एतस्मिन् (घ) प्रस्तावे स्थिरजीवो चिन्तयामास—

---

शत्रोरिति।—शत्रोः प्रचलने पलायने, एकं छिद्रं रन्ध्रं, पलायनसाधकमभ्युपायमिति भावः; अन्यच्च संश्रयम् आवासं, पलायितस्य शत्रोरेवेति भावः; राजसेविनां राजभृत्यानां, व्ययत्वे शत्रोश्छिद्रानुसरणावासज्ञानतत्परत्वे; यदि भृत्याः शत्रोश्छिद्रानुसरणार्थमावासज्ञानार्थञ्च तत्परा भवन्ति, तदेति भावः; कुर्वाणः जानन्नित्यर्थः, नृप इति शेषः, वश्यः वशं गतः, तेषामिति शेषः, जायते; स्वप्रियकार्य्यकारिणामेव राजा वश्यतां गच्छतीति भावः; पलायनपरस्य शत्रोः छिद्रमावासञ्च सत्वरमनुसन्धाय यूयं राज्ञः प्रियमनुतिष्ठन्तः राजानं वशीकुर्वन्तु इति सन्दर्भाशयः ॥ १२४ ॥

(क) वन्दिभिः,—स्तावकैः। अभिष्टूयमानः,—सम्यक् स्तुतः।

(ख) अहो!—इति सम्बोधनार्थकमव्ययम्। कतमेन मार्गेण—परिदृश्यमानेषु एतेषु बहुषु पथिषु मध्ये केन पथा। प्रनष्टाः,—पलायिताः।

(ग) पृष्ठतः,—पश्चात्।

वृतिमिति।—वृतिं वेष्टनं, ("बेड़ा" इति बङ्गभाषा) आश्रितोऽपि अवलम्बितोऽपि, युद्धोपकरणसामग्रीहीनः केवलं वृतिमाश्रित्य स्थितोऽपि इत्यर्थः, शत्रुः जिगीषुणा विजयार्थिना, नृपेण इति शेषः, अवध्यः विनाशयितुमशक्यः, स्यात्, परया महत्या, सामग्र्या प्रहरणाद्युपायेन, युतं दुर्गं संश्रितः अवलम्बितः, किं पुनः? वक्तव्यम् इति शेषः; तादृशः शत्रुरजेय एवेति भावः ॥ १२५ ॥

(घ) प्रस्तावे—प्रसङ्गे।

"यत् एते अस्मच्छत्रवः (ङ) अनुपलब्धास्मद्वृत्तान्ता यथाऽऽगतमेव यान्ति ; ततो मया न किञ्चित् कृतं भवति । उक्तञ्च,—

अनारम्भो हि कार्य्याणां प्रथमं बुद्धिलक्षणम् ।
प्रारब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणम् ॥ १२६ ॥

तद्वरम् अनारम्भः, न च प्रारब्धविघातः । तदहमेतान् शब्दं संश्राव्य आत्मानं दर्शयामि" इति विचार्य्य मन्दं मन्दं शब्दमकरोत् । तत् श्रुत्वा ते सकला अपि उलूकाः तद्वधाय प्रजग्मुः । अथ तेनोक्तम्,—"अहो ! अहं स्थिरजीवी नाम मेघवर्णस्य मन्त्री, मेघवर्णेन एव ईदृशीम् अवस्थां नीतः ; तन्निवेदयत आत्मस्वाम्यग्रे, तेन सह बहु वक्तव्यम् अस्ति" । अथ तैः निवेदितः स उलूकराजो विस्मयाविष्टस्तत्क्षणात् तस्य सकाशं गत्वा प्रोवाच,—"भो भोः ! किमेतां दशां गतस्त्वम् ? तत् कथ्यताम्" । स्थिरजीवी प्राह,—"देव ! श्रूयतां मदवस्थाकारणम्—अतीतदिने स दुरात्मा मेघवर्णो युष्मद्व्यापादितप्रभूतवायसानां पीड़या युष्माकम् उपरि कोपशोकग्रस्तो युद्धार्थं प्रचलित आसीत् । ततो मया अभिहितं,—'स्वामिन् ! न युक्तं भवतस्तदुपरि गन्तुम् ; बलवन्त एते, बलहीनाश्च वयम् । उक्तञ्च,—

(ङ) अनुपलब्धेति ।—अनुपलब्धः,—अज्ञातः, अस्माकं वृत्तान्तः,—व्यापारः यैः तथाभूताः, अस्मद्वृत्तान्तमजानन्त इत्यर्थः । यथाऽऽगतं—यत्प्रदेशादागतं तत्रैवेत्यर्थः ।

अनारम्भ इति ।—कार्य्याणां, विघ्नबहुलानामिति भावः, अनारम्भः आरम्भाकरणं, हि, प्रथमम् आद्यं, बुद्धिलक्षणं प्रज्ञाचिह्नम् ; सत्यमेतत्, परन्तु समारब्धे किं करणीयम् ? तदेवाह, प्रारब्धस्येति ।—प्रारब्धस्य कृताऽऽरम्भस्य, अन्तगमनं पारगमनं, सम्यक् कार्य्यस्य साधनम् इत्यर्थः, द्वितीयं बुद्धिलक्षणम् ; विघ्नबाहुल्यशङ्कया तन्नाशभयात् बुद्धिमन्तः प्रथमं कार्य्यं नारभन्ते एव, यदि आरभेरन् तर्हि तत् नूनं निष्पादयेयुरिति भावः ॥ १२६ ॥

बलीयसा हीनबलो विरोधं
न भूतिकामो मनसाऽपि वाञ्छेत्।
न बध्यतेऽत्यन्तबलो हि यस्मात्
व्यक्तं प्रणाशोऽस्ति पतङ्गवृत्तेः॥ १२७॥

तत् तस्य (च) उपायनप्रदानेन सन्धिरेव युक्तः। उक्तञ्च,—

बलवन्तं रिपुं दृष्ट्वा सर्वस्वमपि बुद्धिमान्।
दत्त्वा हि रक्षयेत् प्राणान् रक्षितैस्तैर्धनं पुनः' ॥ १२८॥

तत् श्रुत्वा तेन दुर्जनप्रकोपितेन त्वत्पक्षपातिनं माम् आशङ्कमानेन इमां दशां नीतः। तत् तव पादौ साम्प्रतं मे शरणम्; किं बहुना विज्ञप्तेन, यावत् अहं प्रचलितुं शक्नोमि, तावत् त्वां तस्य आवासे नीत्वा सर्ववायसक्षयं विधास्यामि" इति।

अथ अरिमर्दनः तदाकर्ण्य पितृपितामहक्रमागतमन्त्रिभिः सार्द्धं मन्त्रयाञ्चक्रे। तस्य च पञ्च मन्त्रिणः; तद्यथा,—

---

बलीयसेति।—भूतिकामः सम्पदर्थी, हीनबलः दुर्बलः, जनः इति शेषः, बलीयसा बलवत्तरेण, [अयमनयोरतिशयेन बलवानित्यर्थे बलवत्-शब्दात् "द्विवचनविभज्यो—" (५।३।५७ पा०) इति ईयसुन्प्रत्ययः, ततः "विन्मतोर्लुक्" (५।३।६५ पा०) इति मतुपः लुक्] सह मनसाऽपि विरोधं न वाञ्छेत् नेच्छेत्, न चिन्तयेदित्यर्थः; यस्मात् अत्यन्तबलः अतिप्रबलः, न बध्यते हि नैव जीयते इत्यर्थः, किन्तु पतङ्गस्य शलभस्येव वृत्तिर्यस्य तादृशस्य, दुर्बलस्येत्यर्थः, व्यक्तं निश्चितं, प्रणाशः विनाशः, अस्ति; अग्निना पतङ्गवत् प्रबलेन दुर्बलः प्रणाश्यते इति भावः। उपजातिः वृत्तम्॥ १२७॥

(च) उपायनप्रदानेन—उपहारदानेन।

बलवन्तमिति।—बुद्धिमान् जनः, रिपुं शत्रुं, बलवन्तं प्रबलं, दृष्ट्वा, सर्वस्वमपि प्राणातिरिक्तं सर्वमेव इत्यर्थः, दत्त्वा, तस्मै इति शेषः, प्राणान् रक्षयेत्; हि यतः, तैः प्राणैः, रक्षितैः सद्भिः, पुनः धनं, भवतीति शेषः; प्राणसद्भावे सर्वेषां सद्भावः, स्वजीवनमूलत्वात् सर्वेषां भोग्यवस्तूनाम् इति भावः; "जीवन्नरो भद्रशतानि पश्येत्" इति तात्पर्यम्॥ १२८॥

रक्ताक्षः, क्रूराक्षः, दीप्ताक्षः, वक्रनासः,प्राकारकर्णश्चेति । तत्रादौ रक्ताक्षम् अपृच्छत्,—"भद्र ! एष तावत् तस्य रिपोर्मन्त्री मम हस्तगतः ; तत् किं क्रियताम् ?" इति । रक्ताक्षः आह,—"देव ! किमत्र चिन्त्यते ? (छ) अविचारितमयं हन्तव्यः । यतः,—

हीनः शत्रुर्निहन्तव्यो यावन्न बलवान् भवेत् ।
प्राप्तस्वपौरुषबलः पश्चाद्भवति दुर्जयः ॥ १२९ ॥

किञ्च, स्वयम् (ज) उपागता श्रीस्त्यज्यमाना (झ) शपतीति लोके (ञ) प्रवादः । उक्तञ्च,—

कालो हि सकृदभ्येति यन्नरं कालकाङ्क्षिणम् ।
दुर्लभः स पुनस्तेन कालकर्माचिकीर्षता ॥ १३० ॥

श्रूयते च यथा,—

चितिकां दीपितां पश्य फटां भग्नां ममैव च ।
भिन्नश्लिष्टा तु या प्रीतिर्न सा स्नेहेन वर्द्धते" ॥ १३१ ॥

---

(छ) अविचारितं—विचारम् अकृत्वा, अविविच्यैव इत्यर्थः ।

हीन इति ।—हीनः दुर्बलः, शत्रुः यावत् बलवान् न भवेत्, तावदेव निहन्तव्यः निःशेषेण वध्यः ; यतः प्राप्तस्वपौरुषबलः प्राप्तं स्वं पौरुषं पराक्रमः, बलं सैन्यञ्च,सहायः इत्यर्थः, येन तादृशः सः, पश्चात् परिणामे, दुर्जयः जेतुमशक्यः, भवति ; शत्रुर्हि अप्रबल एव सुजय इति भावः ॥ १२९ ॥

(ज) उपागता—उपस्थिता । श्रीः,—लक्ष्मीः, सम्पदित्यर्थः ।

(झ) शपति—आक्रोशति, अभिसम्पातेन भाविविध्वंससूचकेन योजयतीत्यर्थः ।

(ञ) प्रवादः,—प्रसिद्धिः, ऐतिह्यमित्यर्थः ।

काल इति ।—यत् यतः, कालः समयः, सौभाग्योदयस्येति भावः. कालकाङ्क्षिणं शुभसमयार्थिनं, नरं सकृत् एकवारमेव, अभ्येति प्राप्नोति, न तु प्रतिनियतं, तस्य दुर्लभत्वात् इति भावः ; अतः काले समये, कर्म कार्य्यं, सौभाग्याऽऽपादकमिति भावः, अचिकीर्षता सम्पादयितुमनिच्छता, तेन नरेण, सः कालः, सुसमय इत्यर्थः, पुनर्दुर्लभः दुष्प्रापः ; सुसमये गते पुनस्तत्प्राप्तिर्दुर्घटेति भावः ; अतः स्वप्रहारी भव इत्याशयः ॥ १३० ॥

चितिकामिति ।—[ हे ब्राह्मण ! इति अध्याहार्य्यम् ] दीपितां प्रज्वलितां,

अरिमर्दनः प्राह,—"कथमेतत् ?" रक्ताक्षः कथयति,—

## कथा ६ ।

"अस्ति कस्मिंश्चित् अधिष्ठाने हरिदत्तो नाम ब्राह्मणः, तस्य च कृषिं कुर्वतः सदा एव (ट) निष्फलः कालः (ठ) अतिवर्त्तते । अथ एकस्मिन् दिवसे स ब्राह्मण (ड) उष्णकालावसाने घर्मार्त्तः स्वक्षेत्रमध्ये वृक्षच्छायायां प्रसुप्तः अनतिदूरे वल्मीकोपरि प्रसारितं बृहत्फटायुक्तं भीषणं भुजङ्गमं दृष्ट्वा चिन्तयामास, —'नूनमेषा क्षेत्रदेवता मया कदाचिदपि न पूजिता, तेन इदं मे कृषिकर्म विफलीभवति ; तदस्या अहं पूजाम् अद्य करिष्यामि' इति अवधार्य्य कुतोऽपि क्षीरं याचित्वा, (ढ) शरावे निक्षिप्य वल्मीकान्तिकमुपागम्य उवाच,—'भोः क्षेत्रपाल ! मया (ण) एतावन्तं कालं न ज्ञातं यत्, त्वम् अत्र वससि, तेन पूजा न कृता ; तत् साम्प्रतं क्षमस्व' इत्येवमुक्त्वा दुग्धञ्च

चितिकां चितां, श्मशानाग्निमिति यावत्, तथा मम भग्नां मर्दिताम्, आहतामित्यर्थः, फटां फणाञ्च, पश्य अवलोकय ; तव पुत्रो मां शिरसि आहतवान्, तेन मम फणा भग्ना, तव पुत्रश्चाहं ततो दष्टवानिति स चिताग्नौ दग्ध इति निष्कर्षः ; अतः, भिन्ना आदौ श्लिष्टा चेति तथोक्ता, आदौ खण्डिता पश्चात् पुनर्योजितेत्यर्थः, [ स्नातानुलिप्तवत् पूर्वकाले कर्मधारयः ] या प्रीतिः सा स्नेहेन पुनः प्रदर्शितेन इत्यर्थः, न वर्द्धते एव, न तव प्रीतिर्भवत्येवेति भावः ॥ १३१ ॥

(ट) निष्फलः,—व्यर्थः, कृषेः फलविरहादिति भावः ।

(ठ) अतिवर्त्तते—अतिक्रामति ।

(ड) उष्णकालावसाने—ग्रीष्मस्यापराह्णे, ग्रीष्मर्त्तुशेषे वा इत्यर्थः । घर्मार्त्तः,—ग्रीष्मपीडितः । प्रसुप्तः,—शयितः, ("स्वापः शयननिद्रयोः" इति मेदिनी)। वल्मीकोपरि—वल्मीकम्—"उइ" इति प्रसिद्धकीटविशेषकृतमृत्तिकास्तूपः, तस्योपरि तदूर्द्ध्वदेशे इत्यर्थः ।

(ढ) शरावे—मृत्पात्रविशेषे, "शरा" इति बङ्गभाषायां प्रसिद्धे ।

(ण) एतावन्तं कालमिति—[ "कालाध्वनोरत्यन्तसंयोगे" (२।३।५ पा०) इति व्याप्त्यर्थे द्वितीया ]।

निवेद्य, गृहाभिमुखं प्रायात्। अथ प्रातः यावत् आगत्य पश्यति, तावत् (त) दीनारम् एकं शरावे दृष्टवान्। एवं च प्रतिदिनमेकाकी समागत्य तस्मै क्षीरं ददाति, एकैकञ्च दीनारं गृह्णाति।

अथ एकस्मिन् दिवसे वल्मीके (थ) क्षीरनयनाय पुत्रं निरूप्य ब्राह्मणो ग्रामान्तरं जगाम। पुत्रोऽपि क्षीरं तत्र नीत्वा संस्थाप्य च पुनर्गृहं समायातः। दिनान्तरे तत्र गत्वा दीनारमेकञ्च दृष्ट्वा गृहीत्वा च चिन्तितवान्,—'नूनं सौवर्णदीनारपूर्णोऽयं वल्मीकः; तत् एनं हत्वा सर्वमेकवारं ग्रहीष्यामि' इत्येवं सम्प्रधार्य्य अन्येद्युः क्षीरं ददता ब्राह्मणपुत्रेण सर्पः (द) लगुड़ेन शिरसि ताड़ितः, ततः कथमपि दैववशात् (ध) अमुक्तजीवित एव रोषात् तमेव (न) तीव्रविषदशनैः तथा अदशत्, यथा (प) सद्यः पञ्चत्वमुपागतः, स्वजनैश्च नातिदूरे क्षेत्रस्य (फ) काष्ठसञ्चयैः संस्कृतः। अथ द्वितीय-दिने तस्य पिता समायातः स्वजनेभ्यः सुतविनाशकारणं श्रुत्वा (ब) तथैव समर्थितवान्, अब्रवीच्च,—

(त) दीनारं—स्वर्णमुद्राभेदम्।

(थ) क्षीरनयनाय—दुग्धप्रापणाय। निरूप्य—नियुज्य।

(द) लगुड़ेन—दण्डेन।

(ध) अमुक्तजीवितः,—अत्यक्तप्राणः।

(न) तीव्रविषदशनैः,—तीक्ष्णविषयुक्तदन्तैः।

(प) सद्यः,—तत्क्षणात्, दंशनसमये एव इत्यर्थः। पञ्चत्वमुपागतः,—मृतः।

(फ) काष्ठसञ्चयैः,—काष्ठसमूहैः, प्रज्वलितचिताप्रक्षिप्तैरित्यर्थः। संस्कृतः,—अग्निसंस्कारः कृतः, दग्धः इति यावत्।

(ब) तथैव—सर्पदंशनरूपविनाशकारणस्य याथार्थ्यमेवेत्यर्थः। समर्थितवान्—अनुमोदितवान्, विश्वासघातकस्य अतिलुब्धस्य स्वपुत्रस्य तादृशमृत्युरेव उचितः इति स्वीकृतवानित्यर्थः।

'भूतान् यो नानुगृह्णाति ह्यात्मनः शरणागतान्।
भूतार्थास्तस्य नश्यन्ति हंसाः पद्मवने यथा' ॥ १३२ ॥

पुरुषेणोक्तं,—'कथमेतत् ?' ब्राह्मणः कथयति,—

## कथा ७।

'अस्ति कस्मिंश्चित् (भ) अधिष्ठाने चित्ररथो नाम राजा, तस्य योधैः सुरक्ष्यमाणं पद्मसरो नाम सरस्तिष्ठति। तत्र च (म) प्रभूता जाम्बूनदमया हंसास्तिष्ठन्ति, (य) षण्मासे षण्मासे (र) पिच्छमेकैकं परित्यजन्ति। अथ तत्र सरसि (ल) सौवर्णो बृहत् पक्षी समायातः। (व) तैश्चोक्तः,—'अस्माकं मध्ये त्वया न वस्तव्यम्; येन कारणेन अस्माभिः षण्मासान्ते पिच्छैकैकदानं कृत्वा गृहीतमेतत् सरः'। एवञ्च किं बहुना, परस्परं (श) द्वैधम् उत्पन्नम्। स च राज्ञः शरणं गतोऽब्रवीत्,—'देव! एते पक्षिण एवं वदन्ति यत्,—'अस्माकं राजा किं करिष्यति? न (ष) कस्यापि आवासं दद्मः'। मया च उक्तं,—'न

---

भूतानिति।—यः आत्मनः स्वस्य, शरणागतान् आश्रयप्राप्तान्, भूतान् प्राणिनः, न अनुगृह्णाति न दयते, तस्य भूतार्थाः निश्चितार्थाः, अवधारितविषयाः इत्यर्थः, पद्मवने हंसा यथा हंसा इव, नश्यन्ति हि नाशं प्राप्नुवन्ति एव, दूरं गच्छन्तीत्यर्थः ॥१३२॥

(भ) अधिष्ठाने—पुरे, नगरे इत्यर्थः, ("अधिष्ठानं चक्रपुरप्रभावाध्यासनेष्वपि" इत्यमरः)। योधैः,—सैन्यैः।

(म) प्रभूताः,—बहवः। जाम्बूनदमयाः,—हिरण्मयाः। ("—हिरण्यं हेम हाटकम्।······। जाम्बूनदम्—" इत्यमरः)।

(य) षण्मासे—षष्ठः मासः षण्मासः तस्मिन्, ["वृत्तिविषये सङ्ख्यावाचकशब्दस्य पूरणार्थत्वम्" इति नियमात् पूरणार्थता]।

(र) पिच्छं—बर्हं, पक्षमित्यर्थः, ("पिच्छबर्हे नपुंसके" इत्यमरः)।

(ल) सौवर्णः,—स्वर्णमयः।

(व) तैः,—जाम्बूनदमयैः हंसैः।

(श) द्वैधं—विरोधः।

(ष) कस्यापि इति—[सम्बन्धविवक्षया सम्प्रदाने षष्ठी]।

शोभनं युष्माभिः अभिहितम् ; अहं गत्वा राज्ञे निवेदयिष्यामि'। एवं स्थिते (स) देवः प्रमाणम्'। ततो राजा भृत्यान् अब्रवीत्,—'भो भोः ! गच्छत, सर्वान् पक्षिणः (ह) गतासून् कृत्वा शीघ्रमानयत'। राजादेशानन्तरमेव ( क ) प्रचेलुः ते। अथ लगुड़हस्तान् राजपुरुषान् दृष्ट्वा तत्र एकेन पक्षिणा वृद्धेन उक्तं,—'भोः स्वजनाः ! न (ख) शोभनम् आपतितम् ; (ग) ततः सर्वैः एकमतीभूय शीघ्रम् ( घ ) उत्पतितव्यम्'। तैश्च तथा अनुष्ठितम्। अतोऽहं ब्रवीमि,—'भूतान् यो नानुगृह्णाति' इत्यादि'।

इत्युक्त्वा पुनरपि ब्राह्मणः प्रत्यूषे क्षीरं गृहीत्वा, तत्र गत्वा तारस्वरेण सर्पमस्तौत्। तथा सर्पश्चिरं वल्मीकद्वारान्तर्लीन एव ब्राह्मणं प्रत्युवाच,—'त्वं लोभादत्र आगतः पुत्रशोकमपि विहाय, अतः परं तव मम च प्रीतिर्नोचिता।

चितिकां दीपितां पश्य फटां भग्नां ममैव च।
भिन्नश्लिष्टा तु या प्रीतिर्न सा स्नेहेन वर्द्धते ॥ इति।

तव पुत्रेण यौवनोन्मदेन अहं ताड़ितः, मया स दष्टः ; कथं मया लगुड़प्रहारो विस्मर्त्तव्यः ? त्वया च पुत्रशोकदुःखं कथं विस्मर्त्तव्यम् ?' इत्युक्त्वा बहुमूल्यं हीरकमणिं तस्मै दत्त्वा —'अतः परं पुनस्त्वया न आगन्तव्यम्' इति पुनरुक्त्वा विवरान्तर्गतः। ब्राह्मणश्च मणिं गृहीत्वा पुत्रबुद्धिं निन्दन् स्वगृहम् आगतः। अतोऽहं ब्रवीमि,—'चितिकां दीपितां पश्य' इत्यादि।

---

( स ) देवः प्रमाणं—राजा एव याथार्थ्यनिरूपयिता, भवद्भ्यो यद्रोचते, तत् क्रियताम् इत्यर्थः।

( ह ) गतासून्—गतप्राणान्, निहतानित्यर्थः।

( क ) प्रचेलुः,—प्रस्थिताः। ते—राजभृत्याः।

( ख ) शोभनं—भद्रम्। आपतितम्—उपस्थितम्।

( ग ) ततः,—तस्मात् कारणात्। एकमतीभूय—एकमतमवलम्ब्येत्यर्थः।

( घ ) उत्पतितव्यम्—उड्डयनीयम्।

तदस्मिन् हते यत्नादेव राज्यमकण्टकं भवतो भवति"। तस्य एतद्वचनं श्रुत्वा क्रूराक्षं पप्रच्छ,—"भद्र! त्वन्तु किं मन्यसे?" सोऽब्रवीत्,—"देव! निर्दयम् एतत्, यदनेन अभिहितम्; यत्कारणं शरणागतो न वध्यते; सुष्ठु खलु इदम् आख्यातम्;—

श्रूयते हि कपोतेन शत्रुः शरणमागतः।
पूजितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः" ॥ १३३ ॥

अरिमर्दनोऽब्रवीत्,—"कथमेतत्?" क्रूराक्षः कथयति,—

## कथा ८।

"कश्चित् क्षुद्रसमाचारः प्राणिनां कालसन्निभः।
विचचार महाऽरण्ये घोरः शकुनिलुब्धकः ॥ १३४ ॥
नैव कश्चित् सुहृत् तस्य न सम्बन्धी न बान्धवः।
स तैः सर्वैः परित्यक्तस्तेन रौद्रेण कर्मणा ॥ १३५ ॥

---

श्रूयते इति।—श्रूयते इदानीमप्याकर्ण्यते, पौराणिकात् अस्माभिरिति शेषः, एतस्येतिह्यरूपत्वादित्याशयः, कपोतेन पक्षिविशेषेण, केनचिदिति शेषः, शरणमागतः आश्रयं प्राप्तः, शत्रुः व्याध इत्यर्थः, पक्षिघातकत्वादिति भावः, यथान्यायं यथाऽर्हं, विधिपूर्वकमित्यर्थः, पूजितश्च, स्वैः निजैः, मांसैः निमन्त्रितः तर्पितश्च। हिशब्दोऽवधारणे ॥ १३३ ॥

तत्कथामवतारयति, कश्चिदिति।—क्षुद्रसमाचारः क्षुद्रः नीचः, समाचारः व्यवहारः यस्य तथोक्तः, प्राणिनां भूतानां, कालसन्निभः यमसदृशः, प्राणिसंहारकत्वादिति भावः. घोरः दारुणः, कश्चित् शकुनिलुब्धकः व्याधः, महाऽरण्ये निविड़वने, विचचार बभ्राम ॥ १३४ ॥

नैवेति।—तेन रौद्रेण दारुणेन, प्राणिहिंसारूपेण इत्यर्थः, कर्मणा कार्य्येण हेतुना, कश्चित् जनः, तस्य व्याधस्य, न सुहृत् न मित्रं, न सम्बन्धी न सम्पर्कवान्, न बान्धवः न ज्ञातिः, तत्समीपे आसीदिति शेषः; स व्याधः, तैः सर्वैः सुहृदादिभिः, परित्यक्तः, अभवदिति शेषः; को हि नाम क्रूरकर्मणा दुर्जनेन सह सम्बन्धं स्वीकरोति? इति भावः ॥ १३५ ॥

अथवा,—ये नृशंसा दुरात्मानः प्राणिनां प्राणनाशकाः ।
उद्वेजनीया भूतानां व्याला इव भवन्ति ते ॥ १३६ ॥
स पञ्जरकमादाय पाशञ्च लगुडं तथा ।
नित्यमेव वनं याति सर्वप्राणिविहिंसकः ॥ १३७ ॥
अन्येद्युर्भ्रमतस्तस्य वने काऽपि कपोतिका ।
जाता हस्तगता तां स प्राक्षिपत् पञ्जरान्तरे ॥ १३८ ॥
अथ कृष्णा दिशः सर्वा वनस्थस्याभवन् घनैः ।
वातवृष्टिश्च महती क्षयकाल इवाभवत् ॥ १३९ ॥
ततः सन्त्रस्तहृदयः कम्पमानो मुहुर्मुहुः ।
अन्वेषयन् परित्राणमाससाद वनस्पतिम् ॥ १४० ॥

---

ये इति ।—ये जनाः, नृशंसाः निष्ठुराः, दुरात्मानः दुराचाराः, प्राणिनां प्राणनाशकाः, ते व्याला इव हिंस्रजन्तव इव, भूतानां प्राणिनाम्, उद्वेजनीया भीकम्पजनकाः, भवन्ति, [ उत्पूर्वात् विजतेः कर्त्तरि अनीयर्प्रत्ययः प्रयोगादेव साधुर्बोद्धव्यः, अन्यत्रापि दृश्यते च, यथा—"वास्तव्यः" इत्यत्र वसेः कर्त्तरि तव्यप्रत्ययः ] ॥१३६॥

स इति ।—सर्वप्राणिविहिंसकः सकलभूतहिंसारतः, स व्याधः, पञ्जरकं क्षुद्रपिञ्जरं, ( पिँजरा ) पाशं रज्जुं, तथा लगुडं दण्डञ्च, आदाय गृहीत्वा, नित्यमेव प्रतिदिनमेव, वनं याति ॥ १३७ ॥

अन्येद्युरिति ।—अन्येद्युः [ "सद्यःपरुत्—" ( ५।३।२२ पा० ) इति अन्यशब्दात् एद्युस्प्रत्ययः निपातितः ] अन्यस्मिन् दिने, वने भ्रमतः विचरतः, तस्य व्याधस्य, काऽपि कपोतिका क्षुद्रकपोती हस्तगता हस्तप्राप्ता, जाता, स व्याधः, तां कपोतिकां, पञ्जरान्तरे पञ्जरमध्ये, प्राक्षिपत् निचिक्षेप ॥ १३८ ॥

अथेति ।—वनस्थस्य वने तिष्ठत एव तस्य, वनस्थं तमनादृत्येत्यर्थः, [ "षष्ठी चानादरे" ( २।३।३८ पा० ) इति अनादरे षष्ठी ], सर्वा दिशः, घनैः मेघैः, कृष्णा नीलवर्णाः, आच्छन्ना इत्यर्थः, अभवन् ; तथा क्षयकाल इव प्रलयकाल इव, महती प्रबला, वातवृष्टिः वायुना सह वृष्टिश्च, [ वायुयुक्ता वृष्टिरिति "शाकपार्थिवादीनां—" ( वा० ) इति उत्तरपदलोपी कर्मधारयः ) अभवत् ॥ १३९ ॥

तत इति ।—ततः अनन्तरं, व्याधः इति कर्तृपदमत्र ऊहनीयम् ; सन्त्रस्तं भीतं, हृदयं यस्य तथोक्तः, तथा मुहुः मुहुः पुनः पुनः, कम्पमानः वेपमानकलेवर इत्यर्थः,

मुहूर्त्तं पश्यते यावद्वियत् विमलतारकम् ।
प्राप्य वृक्षं वदत्येव 'योऽत्र तिष्ठति कश्चन ॥ १४१ ॥
तस्याहं शरणं प्राप्तः स परित्रातु मामिति ।
शीतेन भिद्यमानञ्च क्षुधया गतचेतनम्' ॥ १४२ ॥
अथ तस्य तरोः स्कन्धे कपोतः सुचिरोषितः ।
भार्य्याविरहितस्तिष्ठन् विललाप सुदुःखितः ॥ १४३ ॥
'वातवर्षो महानासीन्न चागच्छति मे प्रिया ।
तया विरहितं ह्येतत् शून्यमद्य गृहं मम ॥ १४४ ॥

---

त्रम्, परित्राणम् आत्मरक्षाम्, अन्वेषयन् [स्वार्थे णिचि, अन्वेषं कुर्वन्नित्यर्थे "तत्करोति—" (ग०) इति णिचि वा साध्यं] विचिन्वन्, वनस्पतिम् अपुष्पफलवन्महातरुविशेषम्, ("अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः" इति मनुः) आससाद प्राप ॥ १४० ॥

मुहूर्त्तमित्यादि।—मुहूर्त्तम् अल्पक्षणमात्रेण इत्यर्थः, ["कालाध्वनो—" (२।३।५ पा०) इति द्वितीया] वियत् अन्तरीक्षं, यावत् विमलाः प्रसन्नाः, तारका यत्र तादृशं, तारकाशोभितमित्यर्थः, पश्यते, [अत्र आत्मनेपदमार्षम्] दृष्टवानित्यर्थः, मेघापगमादिति भावः, तावदिति ऊहनीयम्; वृक्षं तं वनस्पतिं, प्राप्यैव वदति उवाच इत्यर्थः, किमित्याह, य इति।—अत्र वनस्पतौ, यः कश्चन, प्राणीति शेषः, तिष्ठति, अहं तस्य शरणम् आश्रयं, प्राप्तः, स शीतेन भिद्यमानम् अत्यर्थं पीड्यमानं, तथा क्षुधया गतचेतनञ्च अचेतनप्रायमित्यर्थः, मां परित्रातु इति रक्षत्विति, शीतात् क्षुधाऽनलाच्चेति भावः ॥ १४१॥१४२ ॥

अथेति।—अथ अनन्तरं, तस्य तरोः वनस्पतेः, स्कन्धे प्रकाण्डे, स्कन्धशाखायामित्यर्थः, सुचिरोषितः सुचिरमुषितः, ["अत्यन्तसंयोगे च" (२।१।२९ पा०) इति द्वितीयासमासः] बहुकालकृतनिवासः इत्यर्थः, कपोतः, कश्चिदिति शेषः, भार्य्याविरहितः प्रागुक्तकपोतिकावियुक्तः, अत एव सुदुःखितः अतिदुःखितः, तिष्ठन् विललाप विलापमकरोत् ॥ १४३ ॥

विलापप्रकारमाह, वातवर्ष इति।—महान् प्रबलः, वातवर्षः वायुना सह वृष्टिः, आसीत्, मे मम, प्रिया भार्य्या, कपोतिका इत्यर्थः, न च आगच्छति, अद्य तया प्रियया, विरहितं त्यक्तं, मम एतत् गृहं, शून्यं हि शून्यमेव, प्रतिभातीति शेषः ॥१४४॥

पतिव्रता पतिप्राणा पत्युः प्रियहिते रता।
यस्य स्यादीदृशी भार्य्या धन्यः स पुरुषो भुवि॥ १४५॥
न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते।
गृहं हि गृहिणीहीनमरण्यसदृशं मतम्'॥ १४६॥
पञ्जरस्था ततः श्रुत्वा भर्त्तुर्दुःखान्वितं वचः।
कपोतिका सुसन्तुष्टा वाक्यमेतदथाऽऽह सा॥ १४७॥
'न सा स्त्रीत्यभिमन्तव्या यस्यां भर्त्ता न तुष्यति।
तुष्टे भर्त्तरि नारीणां तुष्टाः स्युः सर्वदेवताः॥ १४८॥
दावाग्निना विदग्धेव सपुष्पस्तवका लता।
भस्मीभवतु सा नारी यस्यां भर्त्ता न तुष्यति॥ १४९॥

---

पतिव्रतेति।—पतिव्रता पतिप्राणा साध्वीति यावत्, पत्युः प्रियहिते रता, यस्य ईदृशी भार्य्या स्यात्, स पुरुषः भुवि पृथिव्यां, धन्यः प्रशस्यः, सुखी इत्यर्थः, भवतीति शेषः; प्रियायाः प्रियवादित्वात् पत्याः सुखनिदानत्वादित्याशयः॥ १४५॥

प्रीत्यर्थमेव पुनः विशदीकर्तुं व्यनक्ति, नेति।—गृहं निकेतनं, गृहम् इति न आहुः न कथयन्ति, विद्वांस इति शेषः, गृहिणी गृहस्थिता भार्य्या एव, गृहम् उच्यते कथ्यते; हि यतः, गृहिणीहीनं भार्य्याशून्यं, गृहम् अरण्यसदृशं काननतुल्यं, मतम् उक्तं, पण्डितैरिति शेषः; उभयत्रापि सुखराहित्येन साम्यादिति भावः॥ १४६॥

पञ्जरस्थेति।—ततः पञ्जरस्था, व्याधस्येति शेषः, सा कपोतिका भर्त्तुः स्वामिनः, दुःखान्वितं दुःखपूर्णं, वचः वाक्यं, विलापभूयिष्ठमित्यर्थः, श्रुत्वा, सुसन्तुष्टा अतीव प्रीता सती, (अत्र सन्तोषः पत्युः अनुरागपूर्णवाक्यश्रवणजन्यः, न तु तस्य विलापश्रवणजातः, तस्याः पतिव्रतात्वादित्यवधेयम्) इदं वक्ष्यमाणं, वाक्यम् आह च कथयामास च॥ १४७॥

नेति।—यस्यां स्त्रियां, भर्त्ता न तुष्यति न प्रीणाति, सा स्त्री इति न अभिमन्तव्या स्त्रीति न वाच्या इत्यर्थः; भर्त्तरि पत्यौ, तुष्टे प्रीते सति, नारीणां सर्वदेवताः तुष्टाः स्युः भवेयुः; नारीणां पत्युः सर्वदेवमयत्वात् तत्सन्तोषेणैव सकलदेवानां तुष्टत्वाप इति भावः॥ १४८॥

दावेति।—भर्त्ता यस्यां स्त्रियां, न तुष्यति, सा नारी दावाग्निना वनवह्निना,

मितं ददाति हि पिता मितं भ्राता मितं सुतः ।
अमितस्य हि दातारं भर्त्तारं का न पूजयेत् ?' ॥१५०॥

पुनश्च अब्रवीत्,—

'शृणुष्वावहितः कान्त ! यत् ते वक्ष्याम्यहं हितम् ।
प्राणैरपि त्वया नित्यं संरक्ष्यः शरणागतः ॥ १५१ ॥
एष शाकुनिकः शेते तवावासं समाश्रितः ।
शीतार्त्तश्च क्षुधार्त्तश्च पूजामस्मै समाचर ॥ १५२ ॥

श्रूयते च,—यः सायमतिथिं प्राप्तं यथाशक्ति न पूजयेत् ।
तस्यासौ दुष्कृतं दत्त्वा सुकृतञ्चापकर्षति ॥ १५३ ॥

---

विदग्धा विशेषेण दग्धा, सपुष्पस्तबका पुष्पगुच्छवती, लतेव भस्मीभवतु ; भर्त्तुः अप्रियाणां पुत्रादिसमन्वितानामपि रमणीनां मरणमेव श्रेय इति भावः ॥ १४९ ॥

इदानीं भर्त्तुः अन्येभ्यः स्वप्रियजनेभ्यः उत्कर्षमाह, मितमिति ।—पिता मितं हि परिमितमेव, ददाति, कन्यायै इति शेषः, भ्राता मितं ददाति, भगिन्यै इति शेषः, सुतः पुत्रः, मितं ददाति, मात्रे इति शेषः, का नारी, पतिव्रतेत्यर्थः, अमितस्य अपरिमितस्य, धर्मार्थादिपुरुषार्थानिचयस्येति भावः, दातारं भर्त्तारं न पूजयेत् ? सर्वैव पूजयेदित्यर्थः ; स्वामिनः स्त्रीषु अदेयं किमपि नास्ति, अतः सर्वथा स्त्रीणां स्वामी एव परं पूजनीय इति भावः ॥ १५० ॥

शृणुष्वेति ।—हे कान्त ! अहं ते तुभ्यं, [ "हितयोगे च" ( वा० ) इति हितशब्दयोगात् चतुर्थी ] हितं हितकरं, यत् वचनं, वक्ष्यामि, तत् अवहितः एकाग्रचित्तः सन्, शृणुष्व, [ अत्र आत्मनेपदं महाकविप्रयोगात् सोढव्यं ] .त्वया शरणागतः आश्रितः जनः, नित्यं सततं, प्राणैरपि किमुत धनादिभिरिति भावः, संरक्ष्यः परित्रातव्यः ; शरणागतारक्षणं हि महाप्रत्यवायजनकम्, अतः अवश्यमेव आश्रितरक्षणं विधेयमिति भावः ॥ १५१ ॥

एष इति ।—शीतार्त्तश्च हिमपीड़ितश्च, क्षुधार्त्तश्च बुभुक्षितश्च, एषः शाकुनिकः व्याधः, तव आवासम् आलयं, समाश्रितः समागतः, शेते भूमौ लुठति इत्यर्थः, शीतेन क्षुधया च अवसन्नदेहत्वादिति भावः, अस्मै शाकुनिकाय, [ "क्रियया यमभिप्रैति—" ( वा० ) इति चतुर्थी ] पूजां सत्कारं, समाचर विधेहि, कुरु इत्यर्थः ॥ १५२ ॥

य इति ।—यः जनः, सायं प्राप्तं दिवाऽवसानकालोपस्थितं, सायमागतम् अत्या-

मा चास्मै त्वं कृथा द्वेषं बद्धाऽनेनेति मत्प्रिया ।
स्वकृतैरेव बद्धाऽहं प्राक्तनैः कर्मबन्धनैः ॥ १५४ ॥
दारिद्र्यरोगदुःखानि बन्धनव्यसनानि च ।
आत्मापराधवृक्षस्य फलान्येतानि देहिनाम् ॥ १५५ ॥
तस्मात् त्वं द्वेषमुत्सृज्य मद्बन्धनसमुद्भवम् ।
धर्मे मनः समाधाय पूजयैनं यथाविधि' ॥ १५६ ॥

---

व्याधे रात्रौ विविधविपदुपस्थितिसम्भावनया तस्य स्थानान्तरगमने असमर्थत्वादिति भावः ; अतिथिम् अभ्यागतं, यथाशक्ति निजसामर्थ्यानुसारेण, न पूजयेत न सत्कुर्यात्, असौ अतिथिः, तस्य जनस्य, तस्मै जनायेत्यर्थः, [ सम्बन्धविवक्षया षष्ठी ] दुष्कृतं पापं, स्वमिति शेषः, दत्त्वा सुकृतञ्च प्राकृतं पुण्यञ्च, तस्माज्जनादिति शेषः, अपकर्षति आहृत्य गच्छति इत्यर्थः ॥ १५३ ॥

अतिथेः सर्वथा समादरणीयत्वेन इदानीं तव विरागबीजमन्यथा उपपादयति, मेति ।—अनेन व्याधेन, मत्प्रिया मम प्रिया, बद्धा रुद्धा, पञ्जरे इति शेषः, इति हेतोः, त्वम् अस्मै अतिथये, व्याधाय इत्यर्थः, द्वेषं कोपं, मा च कृथाः न कुरु, [“माङि लुङ्” ( ३।३।१७५ पा० ) इति करोतेः लुङ्, “न माङ्योगे” (६।४।७४ पा० ) इत्यडागमप्रतिषेधश्च ]; अहं स्वकृतैरेव निजकृतैः एव, प्राक्तनैः पूर्वकालिकैः, कर्मबन्धनैः बध्यन्ते एभिरिति बन्धनानि, कर्माण्येव बन्धनानि तैः, कर्मपाशैरित्यर्थः, बद्धा संयता, भवामीति शेषः ; निजकर्मफलस्य अवश्यभोक्तव्यत्वादिति भावः ॥ १५४ ॥

दारिद्र्येति ।—दारिद्र्यं निर्धनत्वं, रोगः व्याधिः, दुःखञ्च तानि, तथा बन्धनानि व्यसनानि च विपदः, एतानि देहिनां प्राणिनाम्, आत्मापराधवृक्षस्य आत्मनः स्वस्य, अपराध एव अन्याय्याचरणमेव, वृक्षस्तस्य निजदोषतरोः, फलानि ; प्राक्तनान्यपि स्वकर्मफलानि भुञ्जते प्राणिन इति भावः ॥ १५५ ॥

अथ अतिथिसत्काराय स्वामिनमेवं प्रबोध्य उपसंहरति, तस्मादिति ।—तस्मात् दुःखस्य स्वकर्मफलजन्यत्वात्, त्वं मद्बन्धनसमुद्भवं मम बन्धनसमुत्पन्नं, बन्धनं श्रुत्वा जातमित्यर्थः, द्वेषं कोपम्, उत्सृज्य त्यक्त्वा, धर्मे मनः समाधाय निवेश्य, धर्मार्थी सन् इत्यर्थः, एनं शाकुनिकं, यथाविधि [ विधिमनतिक्रम्य इति अनतिक्रमार्थेऽव्ययीभावः । क्रियाविशेषणञ्चैतत् ] यथाशास्त्रं, पूजय सत्कुरु ; तथाकृते तव धर्मो भविष्यतीति भावः ॥ १५६ ॥

तस्यास्तद्वचनं श्रुत्वा धर्मयुक्तिसमन्वितम् ।
उपगम्य ततोऽधृष्टः कपोतः प्राह लुब्धकम् ॥ १५७ ॥
'भद्र ! सुखाऽऽगतं तेऽस्तु ब्रूहि किं करवाणि ते ।
सन्तापश्च न कर्त्तव्यः स्वगृहे वर्त्तते भवान्' ॥ १५८ ॥
तस्य तद्वचनं श्रुत्वा प्रत्युवाच विहङ्गमम् ।
'कपोत ! खलु शीतं मे हिमत्राणं विधीयताम्' ॥ १५९ ॥
स गत्वाऽङ्गारकं नीत्वा पातयामास पावकम् ।
ततः शुष्केषु पर्णेषु तमाशु समदीपयत् ॥ १६० ॥
सुसन्दीप्तं ततः कृत्वा तमाह शरणागतम् ।

तस्या इति ।—ततः अनन्तरं, कपोतः तस्याः स्वकान्तायाः कपोतिकायाः, तत् धर्मयुक्तिसमन्वितं धर्म्यं युक्तियुक्तञ्च, वचनं श्रुत्वा आकर्ण्य, लुब्धकं व्याधम्, उपगम्य अभ्येत्य, अधृष्टः शालीनः सन्, विनीतः सन्नित्यर्थः, ("स्यादधृष्टे तु शालीनः" इत्यमरः) प्राह ब्रवीति ॥ १५७ ॥

भद्रेति ।—हे भद्र ! ते तव, सुखाऽऽगतं स्वागतं, शुभसम्पादकम् आगमन- मित्यर्थः, अस्तु ; ते तव, किं करवाणि ? किं कार्यं साधयामि ? ब्रूहि कथय ; सन्तापश्च मनःपीडा पुनः, निःसहायतयेति भावः, न कर्त्तव्यः, भवान् स्वगृहे निजालये एव, वर्त्तते ; मदावासे निःसहायावस्थाजनितः कोऽपि क्लेशः ते नैव भविष्यतीति भावः ॥ १५८ ॥

तस्येति ।—तस्य कपोतस्य, तद्वचनं तादृशविनयपूर्णवाक्यमित्यर्थः, श्रुत्वा विहङ्गमं तं कपोतं, प्रत्युवाच, व्याध इति शेषः । किमित्याह, कपोतेति ।—हे कपोत ! मे मम, शीतं खलु अतिमात्रमित्यर्थः, वर्त्तते इति शेषः, ["शीतम्" इत्यत्र "शीघ्रम्" इति पाठान्तरः समीचीनः] तस्मात् हिमत्राणं शीतात् परित्राणं, विधीयतां यथा शीताप- नयनं भवेत्, तथा क्रियताम् इत्यर्थः ॥ १५९ ॥

स इति ।—सः कपोतः, गत्वा, कुत्रचिदिति शेषः, अङ्गारकं ज्वलन्तं दारु- खण्डविशेषं, ("अङ्गारकः कुजेऽपि स्यात् दग्धकाष्ठे कुरुण्टके" इति मेदिनी) नीत्वा, कुतश्चिदिति शेषः, पातयामास स्थापितवान् ; ततः शुष्केषु नीरसेषु, पर्णेषु पत्रेषु, तं पावकम् आनीतं वह्निम्, आशु शीघ्रं, समदीपयत् ज्वालयामास ॥ १६० ॥

सुसन्दीप्तमिति ।—ततः अनन्तरं, सुसन्दीप्तं प्रज्वलितम्, अग्निमिति शेषः,

'सन्तापयस्व विश्रब्धं स्वगात्राण्यत्र निर्भयः ।
न चास्ति विभवः कश्चिन्नाशये येन ते क्षुधम् ॥ १६१ ॥
सहस्रं भरते कश्चिच्छतमन्यो दशापरः ।
मम त्वकृतपुण्यस्य क्षुद्रस्यात्माऽपि दुर्भरः ॥ १६२ ॥
एकस्याप्यतिथेरन्नं यः प्रदातुं न शक्तिमान् ।
तस्यानेकपरिक्लेशे गृहे किं वसतः फलम् ? ॥ १६३ ॥
तत् तथा साधयाम्येतच्छरीरं दुःखजीवितम् ।
यथा भूयो न वक्ष्यामि नास्तीत्यर्थिसमागमे ॥ १६४ ॥

ज्ञात्वा तं शरणागतम् आह.—हे शाकुनिक । इत्यामन्त्रणपदमत्र ऊहनीयम्; निर्भयः सन् अत्र प्रज्वलितेऽग्नौ, स्वगात्राणि निजानि अङ्गानि, विश्रब्धं गाढं यथा तथा, सम्यक् इत्यर्थः, ("विश्रब्धोऽनुद्धटेऽपि स्यात् गाढविश्वस्तयोस्त्रिषु" इति मेदिनी) सन्तापयस्व उष्णीकुरु, त्वामिति शेषः; कश्चित् कोऽपि, विभवः सम्पत्, न चास्ति, ममेति शेषः, येन विभवेन, ते तव, क्षुधं बुभुक्षां, नाशये अपनयामि ॥ १६१ ॥

सहस्रमिति ।—कश्चित् जनः, सहस्रं [ शतसहस्रादयस्तु नित्यमेकवचनान्ताः "विंशत्याद्याः सदैकत्वे" इति अमरकोषदर्शनात् ] जनान्, अन्यः शतं जनान्, अपरः दश जनान्, भरते प्रतिपालयति, अकृतपुण्यस्य सुकृतिरहितस्य, पापकारिण इत्यर्थः, अत एव क्षुद्रस्य नीचस्य, मम ["न लोकाव्यय—" ( २।३।६९ पा० ) इति खलर्थप्रयोगे षष्ठीप्रतिषेधेऽपि "षष्ठी शेषे" ( २।३।५० पा० ) इति षष्ठी] तु आत्माऽपि दुर्भरः भर्तुमशक्यः; अथवा अहम् आत्मानमपि प्रतिपालयितुं न शक्नोमि, किं पुनः भरणे अन्येषामिति भावः ॥ १६२ ॥

एकस्येति ।—यः एकस्यापि अतिथेः आगन्तुकस्य, गृहागतस्य इत्यर्थः, अन्नं प्रदातुं न शक्तिमान् न समर्थः, तस्य अनेकपरिक्लेशे बहुक्लेशसङ्कुले, गृहे वसतः वासं कुर्वतः, किं फलम् ? न किमपि इत्यर्थः । अतिथिसत्कारस्य गृहस्थकर्तव्येषु सारभूततया तदशक्तौ गृहवासः वृथैव इति भावः ॥ १६३ ॥

तदिति ।—तत् तस्मात्, दुःखजीवितं क्लेशबहुलजीवनम्, एतत् शरीरं तथा तादृशं, साधयामि करोमि, यथा अर्थिसमागमे याचकोपस्थितौ, नास्तीति भूयः पुनः, न वक्ष्यामि न कथयिष्यामि; देहं पातयामीति भावः ॥ १६४ ॥

स निनिन्द किलात्मानं न तु तं लुब्धकं पुनः ।
उवाच 'तर्पयिष्ये त्वां मुहूर्त्तं प्रतिपालय' ॥ १६५ ॥

एवमुक्त्वा स धर्मात्मा प्रहृष्टेनान्तरात्मना ।
तमग्निं सम्परिक्रम्य प्रविवेश स्ववेश्मवत् ॥ १६६ ॥

ततस्तं लुब्धको दृष्ट्वा कृपया पीड़ितो भृशम् ।
कपोतमग्नौ पतितं वाक्यमेतदभाषत ॥ १६७ ॥

'यः करोति नरः पापं न तस्यात्मा ध्रुवं प्रियः ।
आत्मना हि कृतं पापमात्मनैव हि भुज्यते ॥ १६८ ॥

सोऽहं पापमतिश्चैव पापकर्मरतः सदा ।
पतिष्यामि महाघोरे नरके नात्र संशयः ॥ १६९ ॥

---

स इति।—स कपोतः, आत्मानं स्वं, निनिन्द तिरस्कृतवान्, किल इति वार्त्तायाम्, ईदृशो एव अनर्थमूर्त्तिरित्यर्थः, तं लुब्धकं व्याधं, पुनः न तु, निनिन्द इत्यनुषङ्गः, आत्मनो बन्धने कृतेऽपीति भावः ; उवाच च,—हे लुब्धक ! इत्यामन्त्रणपदमत्र ऊहनीयम् ; त्वां तर्पयिष्ये तृप्तं कारयिष्ये, आत्ममांसदानेनेति शेषः, मुहूर्त्तं क्षणं, प्रतिपालय अपेक्षस्व ॥ १६५ ॥

एवमिति।—स धर्मात्मा धार्मिकः, कपोतः इति शेषः, एवमुक्त्वा प्रहृष्टेन प्रीतेन, अन्तरात्मना मनसा, तदुपलक्षितः सन्नित्यर्थः, तम् अग्निं सम्परिक्रम्य प्रदक्षिणीकृत्य, स्ववेश्मवत् स्वं गृहमिव, अनायासेन इति भावः, प्रविवेश ॥ १६६ ॥

तत इति।—ततः अनन्तरं, लुब्धकः तं कपोतम् अग्नौ पतितं दृष्ट्वा कृपया भृशम् अतिमात्रं, पीड़ितः आक्रान्तः सन्, एतत् वक्ष्यमाणं,वाक्यम् अभाषत उक्तवान् ॥१६७॥

य इति।—यः नरः पापं दुष्कर्म, करोति, ध्रुवं नूनं, तस्य आत्मा प्रियः प्रीतिकरः, न, भवतीति शेषः, पापस्य दुःखजनकतया आत्मनि दुःखोत्पत्तेरवश्यम्भावित्वादिति भावः ; हि यतः, आत्मना कृतम् अनुष्ठितं, पापम् आत्मना एव स्वयमेव, भुज्यते हि ; नूनं मत्कृतस्य पापकर्मणः फलं मयैव भोक्तव्यमिति भावः ॥ १६८ ॥

स इति।—पापमतिः दुष्टबुद्धिः, सदा पापकर्मरतः दुष्कर्मासक्तश्च, सोऽहं महाघोरे अतिदारुणे, नरके पतिष्यामि एव, अत्र नरकपतने, संशयः सन्देहः, न, अस्तीति शेषः ; पापरतानां नरकपतनस्यावश्यम्भावित्वादिति भावः ॥ १६९ ॥

नूनं मम नृशंसस्य प्रत्यादर्शः सुदर्शितः ।
प्रयच्छता स्वमांसानि कपोतेन महात्मना ॥ १७० ॥
अद्य प्रभृति देहं स्वं सर्वभोगविवर्जितम् ।
तोयं स्वल्पं यथा ग्रीष्मः शोषयिष्याम्यहं पुनः ॥ १७१ ॥
शीतवातातपसहः कृशाङ्गो मलिनस्तथा ।
उपवासैर्बहुविधैश्चरिष्ये धर्ममुत्तमम् ॥ १७२ ॥
ततो यष्टिं शलाकाञ्च जालकं पञ्जरं तथा ।
बभञ्ज लुब्धको दीनां कपोतीञ्च मुमोच ताम् ॥ १७३ ॥

---

नूनमिति।—नूनं निश्चितं, महात्मना कपोतेन स्वमांसानि प्रयच्छता प्रददता सता, नृशंसस्य निर्दयस्य, मम प्रत्यादर्शः प्रति प्रतिरूपः, विपरीत इति यावत्, आदर्शः उदाहरणं, सुदर्शितः सुष्ठु प्रकाशित इत्यर्थः ; पापमतिरहं स्वहितार्थं परान् विनाशयन् नृशंसतायाः प्रकृष्टोदाहरणतां गतः, अयन्तु कपोतः परहितार्थमात्मानं प्रयच्छन् कृपालुतायाः परमदृष्टान्तः सञ्जात इति भावः ॥ १७० ॥

अद्येति।—अहं पुनः अद्य प्रभृति अस्मात् दिनादारभ्य, स्वं देहं सर्वभोगविवर्जितं सर्वेभ्यः भोगेभ्यः सुखादिभ्यः, विवर्जितं विहीनं, कृत्वेति शेषः, ग्रीष्मः निदाघसमयः, स्वल्पं तोयं जलं, यथा, शोषयति इति शेषः, तथा शोषयिष्यामि अनशनेन शुष्कं करिष्यामि ; प्राक्तनपापसङ्क्षयार्थं प्रायोपवेशनं चान्द्रायणव्रतं वा आचरिष्यामीति भावः ॥ १७१ ॥

अथेदानीं स्वपापक्षयकरमुपायं स्वयमेव स्वबुद्ध्या स्थिरीकृत्य व्यनक्ति, शीतेति।—शीतवातातपसहः शीतं शीतलं जलादिकमित्यर्थः, तुषारपतनमित्यर्थो वा, वातं प्रबलं वायुम्, आतपं सूर्य्यातपञ्च, सहते इति तथोक्तः, शीतादिजनितक्लेशसहिष्णुरित्यर्थः ; शरीरशोषकरकर्मरूपे तपसि द्वन्द्वसहिष्णुताया एव सर्वथोपकारकत्वादित्याशयः ; कृशाङ्गः शीर्णदेहः, तथा मलिनः संस्काररहितत्वात् विवर्णशरीरः सन्, बहुविधैः अनेकैः, उपवासैः अनशनैः, उत्तमं धर्मं चरिष्ये [आत्मनेपदमार्षम्] तपश्चरिष्यामि इत्यर्थः ॥ १७२ ॥

तत इति।—ततः अनन्तरं, लुब्धकः व्याधः, यष्टिं लगुडं, शलाकां जालशलाक-द्रव्यविशेषं, तोमरं वा, जालकं पाशं, तथा पञ्जरञ्च बभञ्ज ; तां दीनां कातरां, भर्तृशोकेन व्याकुलामिति भावः, कपोतीं मुमोच तत्याज च ॥ १७३ ॥

लुब्धकेन ततो मुक्ता दृष्ट्वाऽग्नौ पतितं पतिम् ।
कपोती विललापार्त्ता शोकसन्तप्तमानसा ॥ १७४ ॥
'न कार्य्यमद्य मे नाथ ! जीवितेन त्वया विना ।
दीनायाः पतिहीनायाः किं नार्य्या जीविते फलम् ? ॥ १७५ ॥
मनोदर्पस्त्वहङ्कारः कुलपूजा च बन्धुषु ।
दासभृत्यजनेष्वाज्ञा वैधव्येन प्रणश्यति' ॥ १७६ ॥
एवं विलप्य बहुशः कृपणं भृशदुःखिता ।
पतिव्रता सुसन्दीप्तं तमेवाग्निं विवेश सा ॥ १७७ ॥
ततो दिव्याम्बरधरा दिव्याभरणभूषिता ।
भर्त्तारं सा विमानस्थं ददर्श स्वं कपोतिका ॥ १७८ ॥

---

लुब्धकेनेति ।—ततः अनन्तरं, लुब्धकेन व्याधेन, मुक्ता परित्यक्ता, कपोती पतिं कपोतम्, अग्नौ पतितं दृष्ट्वा, आर्त्ता कातरा, तथा शोकसन्तप्तमानसा शोकेन पतिवियोगजनितदुःखेन, सन्तप्तं व्यथितं, मानसं यस्याः तथाभूता सती, विललाप ॥ १७४ ॥

नेति ।—हे नाथ ! अद्य त्वया विना तव विरहेण इत्यर्थः, मे मम, जीवितेन प्राणैः, न कार्य्यं न प्रयोजनं, पतिहीनायाः विधवायाः, अत एव दीनायाः दुःखिन्याः, नार्य्याः जीविते प्राणधारणे, किं फलम् ? न किमपि प्रयोजनम् इत्यर्थः ॥ १७५ ॥

मन इति ।—वैधव्येन पतिवियोगेन, मनोदर्पः मनस ऊष्मा, मानसिकं तेजः इत्यर्थः, तेजस्वितेति यावत्, अहङ्कारः धनरूपादिकृतः गर्वः, कुलपूजा कुले स्वामिनः पितुर्वा गृहे, पूजा समादरः, तथा बन्धुषु ज्ञातिषु, दासभृत्यजनेषु दासेषु किङ्करेषु, भृत्यजनेषु पोष्यवर्गेषु च, भरणीयजनेषु इत्यर्थः, आज्ञा कस्मिन्नपि कार्य्ये नियोगः, प्रणश्यति, नारीणामिति शेषः ; पतिगौरवेणैव नारीणां गौरवं, तदभावे तासां सुखकरं किमपि नास्तीति भावः ॥ १७६ ॥

एवमिति ।—भृशदुःखिता अतिमात्रमार्त्ता, पतिव्रता स्वामिपरायणा, सा कपोती, एवम् उक्तप्रकारेण, बहुशः पुनः पुनः, कृपणं दीनं यथा तथा, विलप्य तमेव पतिदेहदाहकारकमेवेत्यर्थः, सुसन्दीप्तं प्रज्वलितम्, अग्निं विवेश प्रविष्टवती, अन्वारोहणधर्ममनुतस्थौ इति भावः ॥ १७७ ॥

अथ नारीणां सहमरणादिधर्मपालनस्य फलमभिदधाति, तत इति ।—ततः अभि-

सोऽपि दिव्यतनुर्भूत्वा यथार्थमिदमब्रवीत् ।
'अहो ! मामनुगच्छन्त्या कृतं साधु शुभे ! त्वया ॥१७९॥
तिस्रः कोट्योऽर्धकोटी च यानि रोमाणि मानुषे ।
तावत्कालं वसेत् स्वर्गे भर्त्तारं याऽनुगच्छति' ॥ १८० ॥
कपोतदेवः सूर्य्यास्ते प्रत्यहं सुखमन्वभूत् ।
कपोतदेववत् साऽसीत् प्राक्पुण्यप्रभवं हि तत् ॥१८१॥

प्रवेशानन्तरं, सा कपोतिका दिव्याम्बरधरा दिव्यवस्त्रपरिधाना, दिव्याभरणभूषिता रुचिरालङ्कारशोभिता च सती, विमानस्थं देवयानस्थं, स्वं भर्त्तारं पतिं, ददर्श ॥१७८॥

स इति ।—सोऽपि कपोतोऽपि, दिव्यतनुः स्वर्गीयदेहधारी, भूत्वा इदं वक्ष्यमाणं, यथार्थम् उचितं, शास्त्रानुसारि इत्यर्थः, वाक्यमिति शेषः, अब्रवीत् ; अहो शुभे ! भो कल्याणि ! मामनुगच्छन्त्या अनुसरन्त्या, त्वया साधु उत्तमं, कृतम् ; भर्त्तुः अनुगमनस्य पातिव्रत्यधर्मानुपालिकाभिरवश्यमेव अनुष्ठातव्यतया शास्त्रानुमोदितत्वादिति भावः ॥ १७९ ॥

तिस्र इति ।—या नारी, भर्त्तारम् अनुगच्छति अनुम्रियते इत्यर्थः, सा मानुषे मानवशरीरे, यानि तिस्रः कोट्यः अर्द्धकोटी च सार्द्धत्रिकोटीसङ्ख्यकानीत्यर्थः, रोमाणि, सन्तीति शेषः, तावत्कालं तत्परिमितवत्सरानित्यर्थः, स्वर्गे वसेत ॥ १८० ॥

कपोतदेव इति ।—कपोतदेवः यः इदानीमतिथिसपर्य्यया देवत्वमागतः, पुरा च धृतकपोतकायः सः, सूर्य्यास्ते सायंसन्ध्यायां, रात्रावित्यपि ध्वन्यते, अपिरत्राध्याहार्य्यः, सूर्य्यास्तेऽपि, सर्वदैव इत्यर्थः, प्रत्यहं प्रतिदिनं, सुखमन्वभूत सुखं बुभुजे ; देवत्वमाप्तानां सर्वदैव सुखभोग इति भावः ; तिरश्चां रजन्यामापतितायामेव निसर्गतः दर्शनशक्तेर्हानोदयात् कपोतजनुषि तयोः सायं तादृक् सुखोपभोगः नाभूत, इदानीं देवशरीरमासाद्य का कथा दिवसस्य ? सायमपि नितरां सुखं बुभुजे इति सूचयितुमेव सूर्य्यास्तपदमुपात्तमिति वेदितव्यम् । सा कपोती, कपोतदेववत् कपोतरूपपतिर्यथा, तथा आसीत्, पतिरिव दिव्यं वपुरासाद्य अनिशं सुखं भोक्तुमारेभे इत्यर्थः ; हि यतः, तत् तयोः देवशरीरपरिग्रहणं, प्राक्पुण्यप्रभवं पूर्वजन्मकृतकर्मणां फलवशादेव आयातमित्यर्थः ; पूतात्मनां निगृहीतेन्द्रियग्रामाणामपि जीवानां कर्मवैचित्र्यादेव जननवैचित्र्यं दृश्यते, कस्यचित् जन्मान्तरीयकर्मणः विपाकवशेनैव तयोः कपोतयोनित्वलाभः समभूत्, वस्तुतस्तु तौ पूतात्मानौ आस्तामित्यपि व्यज्यते ॥ १८१ ॥

हर्षाविष्टस्ततो व्याधो विवेश च वनं घनम् ।
प्राणिहिंसां परित्यज्य बहुनिर्वेदवान् भृशम् ॥ १८२ ॥
तत्र दावानलं दृष्ट्वा विवेश विरताशयः ।
निर्दग्धकल्मषो भूत्वा स्वर्गसौख्यमवाप्तवान् ॥ १८३ ॥

अतोऽहं ब्रवीमि,—'श्रूयते हि कपोतेन' इत्यादि" ।

तत् श्रुत्वा अरिमर्दनो दीप्ताक्षं पृष्टवान्,—"एवमवस्थिते किं भवान् मन्यते ?" सोऽब्रवीत्,—"देव ! न हन्तव्य एवायम् । यतः,—

या ममोद्विजते नित्यं सा मामद्यावगूहते ।
प्रियकारक ! भद्रं ते यन्ममास्ति हरस्व तत् ॥ १८४ ॥

चौरेण चापि उक्तम्,—

हर्त्तव्यं ते न पश्यामि हर्त्तव्यं चेद्भविष्यति ।
पुनरप्यागमिष्यामि यदीयं नावगूहते" ॥ १८५ ॥

हर्षाविष्ट इति ।—ततः अनन्तरं,बहुनिर्वेदवान् अतिमात्रवैराग्ययुक्तः,व्याधः प्राणिहिंसां परित्यज्य भृशम् अत्यन्तं, हर्षाविष्टः आनन्दितः, हिंसावृत्तिपरित्यागादिति भावः, घनं निबिडं, वनं विवेश, तपश्चरणार्थमिति शेषः ॥१८२॥

तत्रेति ।—विरताशयः विषयवासनाशून्यः, स इति शेषः, तत्र वने, दावानलं दृष्ट्वा विवेश, निर्दग्धकल्मषः निःशेषेण दग्धं, कल्मषं पापं यस्य तथाभूतः, दावानलप्रवेशेन विगतपापः इत्यर्थः, भूत्वा स्वर्गसौख्यं स्वर्गवासजनितमानन्दम्, अवाप्तवान् प्राप ॥१८३॥

येति ।—या, मत्पत्नीति शेषः, नित्यं सततं, मम सम्बन्धे, मां दृष्ट्वा इत्यर्थः, उद्विजते उद्विग्ना भवति, भीता भवति इत्यर्थः, अद्य सा माम् अवगूहते आलिङ्गति, हे प्रियकारक ! प्रियालिङ्गनरूपसुखसाधक ! चौर इति शेषः, ते तव, भद्रं कुशलम्, अस्तु इति शेषः, मम यत् अस्ति, तत् हरस्व सर्वस्वं नय ; सर्वस्वदानेनापि नैतदुपकारस्य प्रतिदानं सम्भवतीति भावः । चौरं प्रति कस्यचित् युवजानेर्वृद्धस्य उक्तिरियम् ॥१८४॥

हर्त्तव्यमिति ।—ते तव, हर्त्तव्यं हरणयोग्यं, धनमिति शेषः, न पश्यामि, चेत् यदि, हर्त्तव्यं भविष्यति, यदि इयं नारी, न अवगूहते नालिङ्गति च, तदा पुनरपि आगमिष्यामि ॥ १८५ ॥

अरिमर्दनः पृष्टवान्,—"का च नावगूहते? कश्च अयं चौरः? इति विस्तरतः श्रोतुमिच्छामि"। दीप्ताक्षः कथयति,—

## कथा ९।

"अस्ति कस्मिंश्चित् अधिष्ठाने कामातुरो नाम वृद्धवणिक्; तेन च कामोपहतचेतसा मृतभार्य्येण काचिन्निर्धनवणिक्सुता प्रभूतं धनं दत्त्वा उद्वाहिता। अथ सा दुःखाभिभूता तं वृद्धवणिजं द्रष्टुमपि न शशाक। युक्तञ्चैतत्,—

> श्वेतं पदं शिरसि यत्तु शिरोरुहाणां
> स्थानं परं परिभवस्य तदेव पुंसाम्।
> आरोपितास्थिशकलं परिहृत्य यान्ति
> चाण्डालकूपमिव दूरतरं तरुण्यः॥ १८६॥

तथा च,—गात्रं सङ्कुचितं गतिर्विगलिता दन्ताश्च नाशं गताः
दृष्टिर्भ्राम्यति रूपमप्युपहतं वक्त्रञ्च लालायते।

श्वेतमिति।—शिरसि मस्तके, शिरोरुहाणां केशानां, यत्तु श्वेतं शुक्लं, पदं चिह्नं, धावल्यम् इत्यर्थः, तदेव पुंसां परिभवस्य तरुणीकृतानादरस्य, परं स्थानम्; तरुण्यः युवत्यः, चाण्डालकूपमिव चाण्डालखातं जलाशयविशेषमिव, तस्य अपेयजलत्वादिति भावः, आरोपितानि आसञ्जितानि, बहिष्कृतानि इत्यर्थः, अस्थ्नां कङ्कालानां, शकलानि खण्डानि यस्य तादृशम्, अस्थिमात्रावशेषमित्यर्थः, वृद्धमिति शेषः, [विशेषणमिदं कूपपक्षेऽपि योजनीयम्; तत्र—आरोपितानि संस्थापितानि, अस्थ्नां शकलानि यत्र तादृशं, निहतपशुमांसानां प्रक्षालनावसरे तद्रुधिरकङ्कालादिभिः निरन्तरं परिपूर्णत्वेन कूपस्य इति भावः] परिहृत्य परित्यज्य, दूरतरम् अतिदूरं, यान्ति गच्छन्ति; वृद्धं पतिं नेच्छन्तीति भावः। वसन्ततिलकं वृत्तम्॥ १८६॥

गात्रमिति।—गात्रं शरीरं, वृद्धस्येति शेषः; सङ्कुचितं सर्वावयवानां शैथिल्यात् सङ्कोचमाप्तं, लुञ्चितचर्म इत्यर्थः, गतिः पादन्यासः, विगलिता स्खलिता, गच्छतः तस्य स्खलनमेव नियतमिति भावः; दन्ताः दशनाश्च नाशं गताः पतिता इत्यर्थः; दृष्टिः नेत्रं, भ्राम्यति भ्रान्ता भवति, क्षीणत्वात् सर्वं यथायथं न पश्यतीत्यर्थः; रूपं सौन्दर्य्यमपि, उपहतं विनष्टम्; वक्त्रं मुखञ्च, लालायते लालामुद्गमतीत्यर्थः, [लालाशब्दादुद्गमने

वाक्यं नैव करोति बान्धवजनः पत्नी न शुश्रूषते
धिक् कष्टं!! जरयाऽभिभूतपुरुषं पुत्रोऽप्यवज्ञायते ॥१८७॥

अथ कदाचित् सा तेन सह एकशयने (ङ) पराङ्मुखी यावत् तिष्ठति, तावत् गृहे चौरः प्रविष्टः। सा अपि तं चौरं दृष्ट्वा भयव्याकुलिता वृद्धमपि तं पतिं गाढं समालिलिङ्ग। सोऽपि विस्मयात् पुलकाञ्चितसर्वगात्रः चिन्तयामास,—'अहो! किम् एषा माम् अद्य अवगूहते !!' यावत् निपुणतया पश्यति, तावत् गृहकोणैकदेशे चौरं दृष्ट्वा व्यचिन्तयत्,—'नूनम् एषा अस्य भयात् माम् आलिङ्गति' इति ज्ञात्वा तं चौरम् आह,—

'या ममोद्विजते नित्यं सा मामद्यावगूहते।
प्रियकारक! भद्रं ते यन्ममास्ति हरस्व तत्' ॥१८८॥

क्यङि लटि च रूपम्; स च "वाष्पोष्मभ्यामुद्वमने" (३।१।२६ पा०) इत्यत्र धूमशब्दाभावेऽपि "दिशो धूमायन्ते" इति महानाटकीयप्रयोगदर्शनात् यथा धूमशब्दात् क्यङ् स्वीकार्य्यः, तथा अत्रापि "नव ज्वालायते फणी" इति भाष्यकृदुक्तिदर्शनात् प्रयोगोऽयं साधुरिति मन्तव्यम् ] बान्धवजनः वाक्यं नैव करोति नाऽऽलपतीत्यर्थः, पत्नी न शुश्रूषते न सेवते, [ "ज्ञाश्रुस्मृदृशां सनः" (१।३।५७ पा०) इति आत्मनेपदम् ] धिक् कष्टं !! पुत्रोऽपि, का कथाऽन्येषामित्यपेरर्थः, जरया अभिभूतम् आक्रान्तं, पुरुषं, वृद्धमित्यर्थः, अवज्ञायते अवमन्यते, [ "अवज्ञायते" इति आर्षप्रयोगः इति केचित्; केचित्तु "कण्ड्वादेराकृतिगणत्वात् यक्" इति कृत्वा 'अवज्ञां करोति' इति व्याख्यानयन्ति; अन्ये तु—"जरयाऽभिभूतपुरुषः पुत्रैरवज्ञायते" इति कर्मणि प्रयोगात्मकं पाठं प्रकल्प्य समादधति ]। यद्वा,—पुत्रोऽपि जरयाऽभिभूतपुरुषं, न शुश्रूषते इति पूर्वानुषङ्गः; अतः अवज्ञायते अवमन्यते, इत्थं सर्वैरेवासाविति शेषः; सर्वकार्य्येषु असामर्थ्यात् गात्रसङ्कोचादिविकृतिदर्शनाच्च इति भावः। अत्यन्तवैकल्येन वार्द्धके सर्वमेव विकलं भवति इति तात्पर्य्यम्। शार्दूलविक्रीडितं वृत्तम् ॥ १८७ ॥

(ङ) पराङ्मुखी—परावृत्तवदना, [ "स्वाङ्गाच्चोपसर्जना—" (४।१।५४ पा०) इति ङीष् ]।

येति।—व्याख्यातोऽयं प्राक् ॥ १८८ ॥

तत् श्रुत्वा चौरोऽपि प्राह,—

'हन्तव्यं ते न पश्यामि हन्तव्यं चेद्भविष्यति।
पुनरप्यागमिष्यामि यदीयं नावगृह्यते' ॥ १८९ ॥

तस्मात् चौरस्यापि उपकारिणः (च)श्रेयः चिन्त्यते, किं पुनर्नः शरणागतस्य ? अपि च, अयं ( छ ) तैः विप्रकृतोऽस्माकमेव ( ज ) पुष्टये भविष्यति, तदीयरन्ध्रदर्शनाय चेति, अनेन कारणेन अयम् अवध्यः" इति। एतदाकर्ण्य अरिमर्दनोऽन्यं सचिवं वक्रनासं पप्रच्छ,—"भद्र ! साम्प्रतमेवंस्थिते किं कर्त्तव्यम् ?" सोऽब्रवीत्,—"देव ! अवध्योऽयम्। यतः,—

शत्रवोऽपि हितायैव विवदन्तः परस्परम्।
चौरेण जीवितं दत्तं राक्षसेन तु गोयुगम्" ॥ १९० ॥

अरिमर्दनः प्राह,—"कथमेतत् ?" वक्रनासः कथयति,—

## कथा १०।

"अस्ति कस्मिंश्चित् अधिष्ठाने दरिद्रो द्रोणनामा ब्राह्मणः (झ) प्रतिग्रहधनः, सततं विशिष्टवस्त्रानुलेपनगन्धमाल्यालङ्कार-

हन्तव्यमिति।—व्याख्यातोऽयं प्राक् ॥ १८९ ॥

( च ) श्रेयः,—मङ्गलम्।

( छ ) तैः,—वायसैः। विप्रकृतः,—अवमानितः, ताडित इति यावत्।

( ज ) पुष्टये—वृद्धये। तदीयरन्ध्रदर्शनाय—तदीयानां—वायससम्बन्धिनां, रन्ध्राणां—छिद्राणां, राज्याङ्गविषयकन्यूनतानामित्यर्थः, दर्शनाय।

शत्रव इति।—परस्परं विवदन्तः विरुद्धोक्तिरूपं मृषा विवादं कुर्वन्तः, [ वि-पूर्वक-वदधातोः विरुद्धोक्तिरूपविवादार्थे "विभाषा विप्रलापे" ( १।३।५० पा० ) इति आत्मनेपदस्य वैभाषिकत्वेन व्यवस्थितत्वात् शतृप्रत्ययः] शत्रवोऽपि हितायैव, भवन्तीति शेषः, तथा हि, चौरेण जीवितं प्राणाः, दत्तं, राक्षसेन तु गोयुगं गोद्वयं, दत्तमित्यनुषङ्गः ॥ १९० ॥

( झ ) प्रतिग्रहधनः,—दानग्रहणमात्रजीवी इत्यर्थः।

ताम्बूलादिभोगपरिवर्जितः, (ञ) प्ररूढकेशश्मश्रुनखरोमोपचितः, शीतोष्णवातवर्षादिभिः परिशोषितशरीरः। तस्य च केनापि यजमानेन (ट) अनुकम्पया शिशुगोयुगं दत्तम्; ब्राह्मणेन च (ठ) बालभावात् आरभ्य (ड) याचितघृततैलयवसादिभिः संवर्द्ध्य सुपुष्टं कृतम्। तच्च दृष्ट्वा सहसा एव कश्चित् चौरः चिन्तितवान्,—'अहमस्य ब्राह्मणस्य गोयुगमिदम् अपहरिष्यामि' इति निश्चित्य निशायां (ढ) बन्धनपाशं गृहीत्वा यावत् प्रस्थितः, तावत् अर्द्धमार्गे (ण) प्रविरलतीक्ष्णदन्तपङ्क्तिः, उन्नतनासावंशः, प्रकटरक्तान्तनयनः, अपचितस्नायुसन्ततिः, नतगात्रः, शुष्ककपोलः, सुहुतहुतवहपिङ्गलश्मश्रुकेशशरीरः कश्चित् दृष्टः। दृष्ट्वा च तं तीव्रभयत्रस्तोऽपि चौरोऽब्रवीत्,—'को भवान्?' इति। स आह,—

(ञ) प्ररूढेति।—प्ररूढैः,—प्रकर्षेण वृद्धिं गतैरित्यर्थः, केशैः, श्मश्रुभिः, नखैः,—कररुहैः, रोमभिः,—तनूरुहैश्च, उपचितः,—व्याप्तः, अर्थविरहेण चौरकर्माभावादिति भावः।

(ट) अनुकम्पया—दयया। शिशुगोयुगं—गोवत्सद्वयम्।

(ठ) बालभावात्—तयोः वत्सयोः शैशवात्।

(ड) याचितेति।—याचितैः,—भिक्षितैः, घृतैः, तैलैः, यवसादिभिः,—घासादिभिश्च।

(ढ) बन्धनपाशं—बन्धनरज्जुम्।

(ण) प्रविरलेति।—प्रविरला—अल्पाल्पा, दूरे दूरे अवस्थिता इत्यर्थः, तीक्ष्णा—कराला च, दन्तपङ्क्तिर्यस्य तथोक्तः। उन्नतनासावंशः,—उत्तुङ्गनासिकादण्डः। प्रकटेति।—प्रकटे—उज्ज्वले, रक्तान्ते—लोहितप्रान्ते, नयने—नेत्रे यस्य सः। अपचितेति।—अपचिता—कृशत्वात् बहिर्निःसृता, स्नायुसन्ततिः,—धमनीसमूहो यस्य तथाभूतः। नतगात्रः,—न्युब्जदेहः। शुष्ककपोलः,—शीर्णगण्डः, कृशत्वादिति भावः। सुहुतेति।—सुष्ठु हुतः,—कृतहोमः, ऋत्विग्भिरिति शेषः, तथाविधः यः हुतवहः,—वह्निः, तद्वत् पिङ्गलं—कपिशं, श्मश्रुकेशशरीरं यस्य तथाविधः।

(त) 'सत्यवचनोऽहं ब्रह्मराक्षसः, भवान् अपि आत्मानं निवेदयतु'। सोऽब्रवीत्,—'अहं (थ) क्रूरकर्मा चौरः, दरिद्रब्राह्मणस्य गोयुगं हर्त्तुं प्रस्थितोऽस्मि'। अथ (द) जातप्रत्ययो राक्षसोऽब्रवीत्—'भद्र ! षष्ठाह्नकालिकोऽहम्, अतः तमेव ब्राह्मणम् अद्य भक्षयिष्यामि ; तत् सुन्दरमिदम् ; (ध) एककार्य्यौ एव आवाम्'।

अथ तौ तत्र गत्वा (न) एकान्ते कालम् (प) अन्वेषयन्तौ स्थितौ ; प्रसुप्ते च ब्राह्मणे तद्भक्षणार्थं प्रस्थितं राक्षसं दृष्ट्वा चौरोऽब्रवीत्,—'भद्र ! नैषः (फ) न्यायः, यतो गोयुगे मया अपहृते पश्चात् त्वम् एनं ब्राह्मणं भक्षय'। सोऽब्रवीत्,—'कदाचित् अयं ब्राह्मणो गोशब्देन (ब) बुध्येत, तदा अनर्थकोऽयं मम (भ) आरम्भः स्यात्'। चौरोऽपि अब्रवीत्—

---

(त) सत्यवचनः,—यथार्थवाक्, सत्यं ब्रवीमि इत्यर्थः, अथवा तन्नाम्ना प्रसिद्धः।

(थ) क्रूरकर्मा—निष्ठुरकार्य्यकारकः।

(द) जातप्रत्ययः,—विश्वस्तः। षष्ठाह्नकालिकः,—अह्नः षष्ठो भागः षष्ठाह्नः, [ षष्ठमहः इति विग्रहे "राजाहःसखिभ्यः—" (५।४।९१ पा०) इति टच्प्रत्ययः, ततः "अह्नोऽह्न एतेभ्यः" (५।४।८८ पा०) इति अहन्शब्दस्याह्नादेशः ] स एव कालः षष्ठाह्नकालः, तत्र भुङ्क्ते इति षष्ठाह्नकालिकः [ भुक्त्यर्थे ठञ्प्रत्ययः ]; दिवसस्य षष्ठे यामार्द्धे एव कृतनियतभोजनः, दिवसम् अष्टभिः यामार्द्धैः विभज्य तस्य षष्ठे एव यामार्द्धे अपराह्णसमयरूपे यः सततमेव भुङ्क्ते तथाभूत इत्यर्थः, अपराह्णसमयस्यैव राक्षसानां भोजनकालत्वेनावधारितत्वात् इति निष्कर्षः।

(ध) एककार्य्यौ—एकं—तुल्यं, द्वयोरेवापहरणकर्मणि नियुक्ततया एकविधमित्यर्थः, कार्य्यं—गोहरणब्राह्मणप्राणहरणरूपं कर्म इत्यर्थः, ययोस्तौ।

(न) एकान्ते—निर्जने। कालं—समयम्, अवसरमिति यावत्।

(प) अन्वेषयन्तौ—अपेक्षमाणौ।

(फ) न्यायः,—नीतिः, औचित्यमिति यावत्।

(ब) बुध्येत—जागृयात्।

(भ) आरम्भः,—उपक्रमः, प्रयासमात्ररूप इत्यर्थः।

'तवापि यदि भक्षणाय उपस्थितस्य (म) अन्तरे एकोऽपि अन्तरायः स्यात्, तदाऽहमपि न शक्नोमि गोयुगम् अपहर्त्तुम्; अतः प्रथमं मया अपहृते गोयुगे, पश्चात् त्वया ब्राह्मणो भक्षयितव्यः'। इत्थञ्च (य) अहम्पूर्विकया तयोर्विवदतोः समुत्पन्ने (र) द्वैधे प्रतिरववशात् ब्राह्मणो जजागार। अथ तं चौरोऽब्रवीत्,—'ब्राह्मण! त्वामेव अयं राक्षसो भक्षयितुमिच्छति'। राक्षसोऽपि आह,—'ब्राह्मण! चौरोऽयं गोयुगं ते अपहर्त्तुमिच्छति'। एवं श्रुत्वा उत्थाय ब्राह्मणः सावधानो भूत्वा (ल) इष्टदेवतामन्त्राध्यायेन आत्मानं राक्षसात्, (व) उद्गूर्णलगुडेन च चौरात् गोयुगं ररक्ष। अतोऽहं ब्रवीमि,—'शत्रवोऽपि हितायैव' इत्यादि"।

अथ तस्य वचनम् अवधार्य्य अरिमर्दनः पुनरपि प्राकारकर्णम् अपृच्छत्,—"कथय, किमत्र मन्यते भवान्?" सोऽब्रवीत्,—"देव! अवध्य एवायं, यतो रक्षितेन अनेन कदाचित् परस्परप्रीत्या कालः सुखेन गच्छति। उक्तञ्च,—

> परस्परस्य मर्माणि ये न रक्षन्ति जन्तवः।
> त एव निधनं यान्ति वल्मीकोदरसर्पवत्" ॥ १८१ ॥

(म) अन्तरे—मध्ये। अन्तरायः,—विघ्नः।

(य) अहम्पूर्विकया—अहमेवाग्रे चोरयिष्यामि, अहमेवाग्रे भक्षयिष्यामि इत्येवंरूपयेत्यर्थः, ("अहं पूर्वमहं पूर्वमित्यहम्पूर्विका स्त्रियाम्" इत्यमरः)।

(र) द्वैधे—द्वन्द्वे, कलहे इत्यर्थः। प्रतिरववशात्—प्रतिकूलशब्दस्य जायमानत्वात्, कलहजनितकलरवादित्यर्थः, [हेत्वर्थे पञ्चमी]।

(ल) इष्टेति।—इष्टाया देवतायाः मन्त्राध्यायेन मन्त्रोच्चारणेन इत्यर्थः।

(व) उद्गूर्णलगुडेन—उद्गूर्णेन—उत्क्षिप्तेन, उद्यतेनेत्यर्थः, ("उद्गूर्णोद्यते" इत्यमरः) लगुडेन—दण्डेन।

परस्परस्येति।—ये जन्तवः प्राणिनः, परस्परस्य अन्योऽन्यस्य, ["कर्मव्यतिहारे—" (वा०) इति परशब्दस्य द्वित्वे, "असमासवद्भावे—" (वा०) इति सूत्रे च,

अरिमर्दनोऽब्रवीत्,—"कथमेतत् ?" प्राकारकर्णः कथयति,—

## कथा ११।

"अस्ति कस्मिंश्चित् नगरे देवशक्तिर्नाम राजा, तस्य च पुत्त्रः (अ) जठराश्रयेण उरगेण प्रतिदिनं प्रत्यङ्गं (ब) क्षीयते; अनेकोपचारैः सद्वैद्यैः सच्छास्त्रोपदिष्टौषधयुक्त्याऽपि चिकित्स्यमानो न स्वास्थ्यमाप्नोति। अथ असौ राजपुत्त्रः (स) निर्वेदात् देशान्तरं गतः कस्मिंश्चित् नगरे (ह) भिक्षाऽटनं कृत्वा महति देवालये कालं यापयति।

अथ तत्र नगरे बलिर्नाम राजा आस्ते, तस्य च द्वे दुहितरौ (क) यौवनस्थे तिष्ठतः; ते च प्रतिदिवसमादित्योदये पितुः (ख) पादान्तिकमागत्य नमस्कारं चक्रतुः। तत्र च एका

---

दित्वात् विसर्गस्य सः ] मर्माणि आन्तररहस्यानि, गोप्यविषयानित्यर्थः, न रक्षन्ति, त एव वल्मीकोदरसर्पवत् वल्मीकोदरयोः वल्मीके उदरे च स्थितौ सर्पौ इव, ["न लिङ्गवचने भिन्ने न हीनाधिकताऽपि वा। उपमादूषणायालं यत्रोद्वेगो न धीमताम्॥" इति नियमात् अत्रोपमानोपमेययोः भिन्नवचनप्रयोगो न दोषायेति सुधीभिर्विभाव्यम् ] निधनं यान्ति म्रियन्ते इत्यर्थः॥ १९१॥

(अ) जठरेति।—जठरमुदरमेव, आश्रयो यस्य तेन, उदरस्थेन इत्यर्थः। उरगेण—सर्पेण। प्रत्यङ्गं—प्रत्यवयवं, हस्तपादादिषु अवयवेषु इत्यर्थः; [अङ्गमङ्गं प्रति इति विग्रहे वीप्साऽर्थे अव्ययीभावः ]।

(ब) क्षीयते—क्षीणीभवति, कार्श्यमापद्यते इत्यर्थः, [ क्षीयते इति पदं कर्मकर्त्तरि साधु, तथा च वामनः,—"क्षीयते इति कर्मकर्त्तरि" ( ५ अधि० २ अ० ५ सू० ]। अनेकोपचारैः,—नानाविधाभिः प्रक्रियाभिः। सद्वैद्यैः,—सुचिकित्सकैः। सच्छास्त्रेति।—सच्छास्त्रेषु—उत्कृष्टशास्त्रेषु, आयुर्वेदादिष्वित्यर्थः, उपदिष्टानि—निर्णीतानि, यानि औषधानि—भेषजानि, तेषां युक्त्या—प्रयोगेण।

(स) निर्वेदात्—वैराग्यात्।

(ह) भिक्षाऽटनं—भिक्षार्थं पर्य्यटनम्।

(क) यौवनस्थे—युवत्यौ इत्यर्थः।

(ख) पादान्तिकं—चरणसमीपम्।

अब्रवीत्,—'विजयस्व महाराज! यस्य प्रसादात् सर्वं सुखं लभ्यते'। द्वितीया तु—(ग) 'विहितं भुङ्क्ष्व महाराज!' इति ब्रवीति। तत् श्रुत्वा प्रकुपितो राजा अब्रवीत्,—'भो मन्त्रिणः! एनां (घ) दुष्टभाषिणीं कुमारिकां कस्यचित् (ङ) वैदेशिकस्य प्रयच्छत, येन (च) निजविहितम् इयमेव भुङ्क्ते'। अथ 'तथा' इति (छ) प्रतिपद्य, अल्पपरिवारा सा कुमारिका मन्त्रिभिः तस्य (ज) देवकुलाश्रितराजपुत्रस्य प्रतिपादिता। सा अपि (झ) प्रहृष्टमानसा तं पतिं देववत् (ञ) प्रतिपद्य आदाय च अन्यविषयं गता।

ततः कस्मिंश्चित् दूरतरनगरप्रदेशे (ट) तड़ागतटे राजपुत्रम् आवासरक्षायै (ठ) निरूप्य, स्वयञ्च घृततैललवणतण्डुलादि-क्रयनिमित्तं सपरिवारा गता। कृत्वा च क्रयविक्रयं यावत्

---

(ग) विहितं—स्वकर्मोपार्जितम्।

(घ) दुष्टभाषिणीम्—अप्रियवादिनीम्।

(ङ) वैदेशिकस्य—[विदेशे वसतीति ठक्, तस्य] विदेशीयजनस्य, [सम्बन्ध-विवक्षया सम्प्रदाने षष्ठी]। प्रयच्छत—प्रदत्त।

(च) निजविहितं—स्वकृतं, कर्मफलमिति भावः।

(छ) प्रतिपद्य—स्वीकृत्य। अल्पपरिवारा—अल्पमात्रानुचरी।

(ज) देवेति।—देवकुलं—देवभवनं, देवालयमित्यर्थः, ("कुलं जनपदे गोत्रे.........। भवने च तनौ क्लीवम्" इति मेदिनी) आश्रितस्य—तत्रावस्थितस्य, ["द्वितीया श्रितातीत—" (२।१।२४ पा०) इति द्वितीयासमासः] राजपुत्रस्य। प्रतिपादिता—अर्पिता।

(झ) प्रहृष्टमानसा—आनन्दितचित्ता।

(ञ) प्रतिपद्य—स्वीकृत्य, मत्वा इत्यर्थः। अन्यविषयं—भिन्नदेशं, देशान्तर-मित्यर्थः, ("विषयो गोचरे देशे तथा जनपदेऽपि च" इति मेदिनी)।

(ट) तड़ागतटे—जलाशयतीरे।

(ठ) निरूप्य—नियुज्य।

आगच्छति, तावत् स राजपुत्रो वल्मीकोपरि कृतमूर्द्धा प्रसुप्तः। तस्य च मुखात् भुजगः फणां निष्क्रम्य वायुमश्नाति। तत्र एव च वल्मीकेऽपरः सर्पो निष्क्रम्य तथा एव आसीत्। अथ तयोः परस्परदर्शनेन क्रोधसंरक्तलोचनयोः मध्यात् वल्मीकस्थेन सर्पेण उक्तं,—'भो भो दुरात्मन्! कथं सुन्दर-सर्वाङ्गं राजपुत्रमित्थं (ड) कदर्थयसि?' मुखस्थोऽहिरब्रवीत्,—'भो भोः! त्वया अपि दुरात्मना अस्य वल्मीकस्य मध्ये कथमिदं दूषितं (ढ) हाटकपूर्णं कलसयुगलम्?' इति। एवं तौ परस्परस्य (ण) मर्माणि उद्घाटितवन्तौ। पुनः वल्मीकस्थोऽहिरब्रवीत्,—'भो दुरात्मन्! (त) भेषजमिदं ते किं कोऽपि न जानाति यत्, (थ) जीर्णोत्फालितकाञ्जिकराजिकापानेन भवान् विनाशम् उपयाति?' अथ उदरस्थोऽहिरब्रवीत्,—'तवापि एतत् भेषजं कश्चिदपि न वेत्ति यत्, उष्णतैलेन वा महोष्णोदकेन तव विनाशः स्यात्?' इति।

एवञ्च सा राजकन्या (द) विटपान्तरिता तयोः परस्परालापान् (ध) मर्ममयान् आकर्ण्य तथा एव

(ड) कदर्थयसि—क्लेशयसि।

(ढ) हाटकपूर्णं—सुवर्णपूर्णम्; ("स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्" इत्यमरः)। कलसयुगलं—कुम्भद्वयम्।

(ण) मर्माणि—रहस्यानि इत्यर्थः। उद्घाटितवन्तौ—प्रकाशितवन्तौ।

(त) भेषजम्—औषधम्।

(थ) जीर्णेति।—जीर्णयोः,—पुरातन्योः, उत्फालितयोः,—आलोड़ितयोः, काञ्जिकराजिकयोः,—काञ्जिकं—"काँजी" इति प्रसिद्धं, राजिका—राजसर्षपः, "राइ" इति प्रसिद्धः, तयोः पानेन, ("राजिकाऽपि च केदारे राजसर्षपरेखयोः" इति मेदिनी)।

(द) विटपान्तरिता—वृक्षशाखाऽन्तरालस्थिता।

(ध) मर्ममयान्—रहस्यपूर्णान् इत्यर्थः।

(न) अनुष्ठितवती, विधाय अव्यङ्गं नीरोगं भर्त्तारं, (प) निधिञ्च परमम् आसाद्य स्वदेशाभिमुखं प्रायात्। तत्र च पितृमातृ-स्वजनैः (फ) प्रतिपूजिता विहितोपभोगं प्राप्य सुखेन अव-स्थिता। अतोऽहं ब्रवीमि,—'परस्परस्य मर्माणि' इत्यादि"।

तच्च श्रुत्वा स्वयम् अरिमर्दनोऽपि एवं (ब) समर्थितवान्। तथा च (भ) अनुष्ठितं दृष्ट्वा (म) अन्तर्लीनं विहस्य रक्ताक्षः पुन-रब्रवीत्,—"कष्टम्!! विनाशितोऽयं भवद्भिः अन्याय्येन स्वामी। उक्तञ्च,—अपूज्या यत्र पूज्यन्ते पूज्यानाञ्च विमानना।

त्रीणि तत्र प्रवर्त्तन्ते दुर्भिक्षं मरणं भयम्॥ १८२॥

तथा च,—प्रत्यक्षेऽपि कृते पापे मूर्खः साम्ना प्रशाम्यति।

रथकारः स्वकां भार्य्यां सजारां शिरसाऽवहत्"॥१८३॥

(न) अनुष्ठितवती—कृतवती सती। विधाय—कृत्वा। अव्यङ्गम्—अविगलिताङ्गं, परिपुष्टशरीरमित्यर्थः।

(प) निधिं—वल्मीकाभ्यन्तरस्थितं सुवर्णपूर्णकलसम् इत्यर्थः।

(फ) प्रतिपूजिता—प्रत्यभिनन्दिता, आदृता इत्यर्थः। विहितोपभोगं—भाग्य-लब्धमैश्वर्य्यम्।

(ब) समर्थितवान्—शरणागतस्य शत्रोः रक्षणं कर्त्तव्यमिति स्थिरीचकार इत्यर्थः।

(भ) अनुष्ठितम्—अनुष्ठानं, शरणागतं काकं रक्षितुं परिगृहीतं व्यापार-मिति भावः।

(म) अन्तर्लीनम्—अन्तर्निगूढम्, अस्पष्टम् इत्यर्थः।

अपूज्या इति।—यत्र देशे, अपूज्या अपूजनीयाः, पूजाऽनर्हा इत्यर्थः, नीचा इति यावत्, जनाः इति शेषः, पूज्यन्ते सत्क्रियन्ते, पूज्यानाञ्च पूजार्हाणाञ्च, विमानना अवमानना, क्रियते इति शेषः, तत्र दुर्भिक्षं भिक्षाऽभावः, शस्यहानिरिति यावत्, मरणं मृत्युः, भयञ्च, रोगादिजनितमिति भावः, नराणामिति शेषः, एतानि त्रीणि प्रवर्त्तन्ते सम्भवन्ति; "प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः" इति स्मरणात् अकार्य्यकरणेन तस्मिन् राष्ट्रे नियतम् अमङ्गलमेव जायते इति भावः॥ १८२॥

प्रत्यक्षे इति।—मूर्खो बुद्धिहीनः, जनः इति शेषः, प्रत्यक्षे साक्षात्, पापे कृतेऽपि साम्ना सन्तोषजनकवाक्येनेत्यर्थः,* पापकारिण इति शेषः, प्रशाम्यति प्रसीदति इत्यर्थः;

मन्त्रिणः प्राहुः,—"कथमेतत् ?" रक्ताक्षः कथयति,—

## कथा १२ ।

"अस्ति कस्मिंश्चित् अधिष्ठाने वीरधरो नाम रथकारः, तस्य भार्य्या कामदमनी, सा च (य) पुंश्चलीति जनापवादसंयुक्ता । सोऽपि तस्याः परीक्षणार्थं व्यचिन्तयत्,—'अथ मया अस्याः परीक्षणं कर्त्तव्यम् । उक्तञ्च यतः,—

यदि स्यात् पावकः शीतः प्रोष्णो वा शशलाञ्छनः ।
स्त्रीणां तदा सतीत्वं स्यात् यदि स्यात् दुर्जनो हितः ॥१८४॥

जानामि च एनां लोकवचनात् असतीम् । उक्तञ्च,—

यच्च वेदेषु शास्त्रेषु न दृष्टं न च संश्रुतम् ।
तत् सर्वं वेत्ति लोकोऽयं यत् स्यात् ब्रह्माण्डमध्यगम्' ॥१८५॥

एवं सम्प्रधार्य्य भार्य्याम् अवोचत्,—'प्रिये ! प्रभातेऽहं ग्रामान्तरं यास्यामि, तत्र कतिचिद्दिनानि लगिष्यन्ति, तत् त्वया

---

तथा हि, रथकारः सूत्रधरः, सजारां सोपपतिकां, स्वकां निजां, ["स्वकाम्" इत्यत्र "भस्त्रैषा" (७।३।४७ पा०) इति सूत्रेण वैकल्पिके इकारे कृते "स्विकाम्" इत्यपि भवति] भार्य्यां शिरसा अवहत् वहति स्म ॥ १८३ ॥

(य) पुंश्चली—असती, परपुरुषगामिनीत्यर्थः, भ्रष्टा इति यावत्, ("पुंश्चली धर्षिणी बन्धक्यसती कुलटेत्वरी" इत्यमरः)। जनापवादसंयुक्ता—लोकनिन्दायुता।

यदीति।—यदि पावकः अग्निः, शीतः शीतलः, वा अथवा, शशलाञ्छनः चन्द्रः, प्रोष्णः प्रकर्षेण उष्णः, स्यात्, यदि दुर्जनः हितः हितकरः, सुजनः इत्यर्थः, स्यात्, तदा स्त्रीणां सतीत्वं स्यात्; यथा एते असम्भवाः भावाः कदाचिदपि न सम्भवन्ति, तथा नारीणामपि सतीत्वं न सम्भवति इति निष्कर्षः; चपलाः स्त्रियः प्रायेणासत्य इति भावः ॥ १८४ ॥

यच्चेति।—वेदेषु सामादिषु, शास्त्रेषु पुराणादिषु, च यत् न दृष्टं, न च संश्रुतं, ब्रह्माण्डमध्यगं जगतीस्थं, यत् स्यात्, अयं लोकः सांसारिकजनः, तत् सर्वं वेत्ति जानाति; लोकेषु किमपि गुप्तं न तिष्ठति इति भावः; अतः सर्वविदां तेषां वाक्यस्य नावज्ञेयतया परीक्षणमवश्यमेव विधेयमित्याशयः ॥ १८५ ॥

किमपि पाथेयं मम योग्यं विधेयम्'। साऽपि तद्वचनं श्रुत्वा (र) हर्षितचित्ता, औत्सुक्यात् सर्वकार्य्याणि सन्त्यज्य, सिद्धमन्नं घृतशर्कराप्रायमकरोत्। अथवा साधु इदमुच्यते,—

दुर्दिवसे घनतिमिरे वर्षति जलदे महाऽटवीप्रभृतौ।
पत्युर्विदेशगमने परमसुखं जघनचपलायाः॥ १९६॥

अथ असौ प्रत्यूषे उत्थाय स्वगृहात् निर्गतः। साऽपि तं प्रस्थितं विज्ञाय प्रहसितवदना (ल) अङ्गसंस्कारं कुर्वाणा कथञ्चित् तद्दिवसम् (व) अत्यवाहयत्। अथ (श) पूर्वपरिचितविटगृहे गत्वा तं प्रत्युक्तवती,—'स दुरात्मा मे पतिर्ग्रामान्तरं गतः; तत् त्वया अस्मद्गृहे प्रसुप्ते जने समागन्तव्यम्'। (ष) तथाऽनुष्ठिते स रथकारोऽरण्ये दिनम् (स) अतिवाह्य, प्रदोषे स्वगृहे (ह) अपरद्वारेण प्रविश्य शय्याऽधस्तले निभृतो भूत्वा स्थितः।

---

(र) [हर्षितेत्यत्र तारकादित्वादितच्]। औत्सुक्यात्—उत्कण्ठावशात्, उपनायकार्थमिति भावः। घृतशर्कराप्रायं—घृतमिश्रितशर्कराबहुलम्।

दुर्दिवसे इति।—घनतिमिरे सान्द्रतमसि, गाढान्धकारे इत्यर्थः, दुर्दिवसे मेघाच्छन्नदिने, जलदे मेघे, वर्षति, महाऽटवीप्रभृतौ महाऽरण्यप्रभृतिप्रदेशे, तथा पत्युर्विदेशगमने जघनचपलायाः कामुक्याः, भ्रष्टाया इत्यर्थः, परमसुखं महती प्रीतिः, भवतीति शेषः; दुर्दिनादौ च अन्यैः ज्ञातुमशक्यत्वात्, पत्युर्विदेशगमने च गृहेऽपि सर्वथा विघ्नाभावादिति भावः। जघनचपलानाम आर्य्या वृत्तम्॥ १९६॥

(ल) अङ्गसंस्कारं—शरीरशोधनपूर्वकमङ्गरागादिधारणम्।

(व) अत्यवाहयत्—यापयामास।

(श) पूर्वेति।—पूर्वपरिचितस्य—प्राक् संस्तुतस्य, ("संस्तवः स्यात् परिचयः" इत्यमरः) विटस्य—जारस्य इत्यर्थः, गृहे।

(ष) तथाऽनुष्ठिते—तथा—तादृशे व्यापारे, आगमसङ्केतरूपे इत्यर्थः, अनुष्ठिते—कृते, व्यवस्थापिते इति भावः, तया कुलटयेति शेषः।

(स) अतिवाह्य—गमयित्वा। प्रदोषे—रजनीमुखे।

(ह) अपरद्वारेण—पश्चाद्वारेण इत्यर्थः, खिड्की" इति बङ्गभाषया प्रसिद्धेन। निभृतः,—प्रच्छन्न इत्यर्थः।

एतस्मिन्नन्तरे सः ( क ) देवदत्तः समागत्य तत्र ( ख ) शरणे उपविष्टः। तं दृष्ट्वा रोषाविष्टचित्तो रथकारो व्यचिन्तयत्,—'किम् एनम् उत्थाय हन्मि ? अथवा ( ग ) हेलया एव प्रसुप्तौ द्वौ अपि एतौ व्यापादयामि ? परं पश्यामि तावदस्याः (घ) चेष्टितं, शृणोमि च अनेन सह आलापान्'। अत्रान्तरे (ङ) सा गृहद्वारं निभृतं विधाय शयनतलम् आरूढा।

अथ तस्याः तत्र आरोहन्त्या रथकारशरीरे पादो विलग्नः। ततः सा व्यचिन्तयत्,—'नूनम् एतेन दुरात्मना रथकारेण मत्परीक्षणार्थं ( च ) भाव्यम् ; ततः ( छ ) स्त्रीचरित्रविज्ञानं किमपि करोमि'। एवं तस्याः चिन्तयन्त्याः स देवदत्तः स्पर्शोत्सुको बभूव। अथ तया ( ज ) कृताञ्जलिपुटया अभिहितं,—'भो महाऽनुभव ! न मे शरीरं त्वया स्पर्शनीयं,यतोऽहं पतिव्रता महासती च ; न चेत्, शापं दत्त्वा त्वां भस्मसात् करिष्यामि'। स आह,—'यदि एवं, तर्हि त्वया किमहम् आहूतः ?' सा अब्रवीत्,—'भोः ! शृणुष्व एकाग्रमनाः, अहमद्य प्रत्यूषे देवतादर्शनार्थं (झ) चण्डिकाऽऽयतनं गता, तत्र अकस्मात् खे वाणी

( क ) देवदत्तः,—तदाख्यो विटः।

( ख ) शरणे—गृहे, ( "शरणं गृहरक्षित्रोर्वधरक्षणयोरपि" इति मेदिनी )।

( ग ) हेलया—अनायासेन, प्रसुप्तत्वादिति भावः।

( घ ) चेष्टितं—व्यवहारम्।

( ङ ) सा—रथकारजाया। निभृतं—बद्धमित्यर्थः।

( च ) भाव्यं—भवितव्यम्।

( छ ) स्त्रीति।—स्त्रीणां चरित्रस्य विज्ञानं—विशेषेण ज्ञानं, ज्ञानोपायम् इत्यर्थः, अशिक्षितपटूनां स्त्रीणां स्वाभाविकबुद्धिविकाशस्य किञ्चित् परिचयमस्मै ददामीति यावत्।

( ज ) कृताञ्जलिपुटया—कृतः अञ्जलिपुटः,—बद्धकरः यया तया, करयुग्ममेकीकृत्य इत्यर्थः, ("द्वौ युतावञ्जलिः पुमान्" इत्यमरः)।

( झ ) चण्डिकाऽऽयतनं—चण्डीमन्दिरम्। खे वाणी—आकाशवाणी इत्यर्थः।

सञ्जाता, 'पुत्रि ! किं करोमि ? भक्ताऽसि मे त्वं, परं षण्मासा-भ्यन्तरे (ञ) विधिनियोगात् विधवा भविष्यसि'। ततो मया अभिहितं,—'भगवति ! यथा त्वम् आपदं वेत्सि, तथा तत्प्रती-कारमपि जानासि ; तत् अस्ति कश्चित् उपायः, येन मे पतिः शतसंवत्सरजीवी भवति ?' ततः तया अभिहितं—'वत्से ! (ट) सन्नपि नास्ति, यतः तव (ठ) आयत्तः स प्रतीकारः'। तत् श्रुत्वा मया अभिहितं,—'देवि ! यदि तत् मम प्राणैर्भवति, तत् आदिश, येन करोमि'। अथ देव्या अभिहितं,—'यदि अद्यदिने परपुरुषेण सह एकस्मिन् शयने समारुह्य आलिङ्गनं करोषि, तत् तव (ड) भर्तृसक्तोऽपमृत्युः (ढ) तस्य सञ्चरति, भर्त्ताऽपि पुनः वर्षशतं जीवति'। तेन त्वं मया (ण) अभ्यर्थितः ; तत् यत् किञ्चित् कर्त्तुमनाः तत् कुरुष्व, न हि देवतावचनम् अन्यथा भविष्यति इति निश्चयः'। ततः (त) अन्तर्हास-विकाशमुखः स तदुचितम् आचचार। सोऽपि रथकारो मूर्खः तस्याः तद्वचनमाकर्ण्य (थ) पुलकाञ्चिततनुः शय्याऽधः-स्तलात् निष्क्रम्य तामुवाच,—'साधु पतिव्रते ! साधु

(ञ) विधिनियोगात—दैवनिर्बन्धात।

(ट) सन् अपि—विद्यमानोऽपि, प्रतीकार इति शेषः।

(ठ) आयत्तः,—अधीनः।

(ड) भर्तृसक्तः,—पतिगतः, पत्यौ अवश्यमेव समापतिष्यन् इत्यर्थः।

(ढ) तस्य—परपुरुषस्य, सञ्चरति—समापतति, संलगति इत्यर्थः, तव भर्त्तु-रपमृत्युस्तस्मिन् परपुरुषे सङ्क्रामति इति भावः।

(ण) अभ्यर्थितः,—याचितः।

(त) अन्तर्हासेति।—प्रच्छन्नहास्येन प्रफुल्लवदनः, स्मेरानन इत्यर्थः।

(थ) पुलकेति।—पुलकैः,—रोमाञ्चैः, अञ्चिता—चिह्निता, व्याप्ता इत्यर्थः, तनुः,—शरीरं यस्य तथाभूतः, कण्टकितकलेवर इत्यर्थः।

(द) कुलनन्दिनि! अहं (ध) दुर्जनवचनशङ्कितहृदयः त्वत्परीक्षानिमित्तं (न) ग्रामान्तरव्याजं कृत्वा अत्र खट्वाऽधस्तले (प) निभृतं लीनः ; तत् एहि, आलिङ्गय माम् ; त्वं (फ) स्वभर्तृभक्तानां मुख्या नारीणां, यत् एवं ब्रह्मव्रतं परसङ्गेऽपि पालितवती, (ब) मदायुर्वृद्धिकृते अपमृत्युविनाशार्थञ्च त्वमेवं कृतवती'। तामेवमुक्त्वा सस्नेहम् आलिङ्गितवान्, ततः स्वस्कन्धे ताम् आरोप्य, तमपि देवदत्तम् उवाच,—'भो महाऽनुभव! मत्पुण्यैः त्वमिह आगतः, त्वत्प्रसादात् मया प्राप्तं वर्षशतप्रमाणमायुः, तत् त्वमपि माम् आलिङ्ग्य मत्स्कन्धे समारोह'। इति जल्पन् अनिच्छन्तमपि देवदत्तमालिङ्ग्य बलात् स्वकीयस्कन्धे आरोपितवान्। ततश्च नृत्यं कृत्वा,—'हे ब्रह्मव्रतधराणां (भ) धुरीण! त्वयाऽपि मयि उपकृतम्' इत्यादि उक्त्वा स्कन्धात् उत्तार्य्य, यत्र यत्र स्वजनगृहद्वारादिषु बभ्राम, तत्र तत्र तयोः उभयोरपि तद्गुणवर्णनम् अकरोत्। अतोऽहं ब्रवीमि,—'प्रत्यक्षेऽपि कृते पापे' इत्यादि।

(द) कुलनन्दिनि।—वंशानन्ददायिनि! सत्कुलप्रसूते! इत्यर्थो वा।

(ध) दुर्जनेति।—दुष्टजनवाक्येन सन्दिग्धचित्तः।

(न) ग्रामान्तरव्याजं—ग्रामान्तरगमनरूपं छलम्।

(प) निभृतं—प्रच्छन्नम्। लीनः,—स्थितः।

(फ) स्वभर्तृभक्तानां—पतिपरायणानाम्। मुख्या—श्रेष्ठा। ब्रह्मव्रतं—तपोरूपनियमम्; यद्वा,—ब्रह्मव्रताख्यव्रतविशेषतुल्यं कष्टसाध्यं नियमविशेषमित्यर्थः; यथोक्तं पद्मपुराणे,—"ब्रह्माणं काञ्चनं कृत्वा तिलराशिसमन्वितम्।……॥ सम्पूज्य विप्रदम्पत्यं माल्यवस्त्रविभूषितम्।……॥ एतद्ब्रह्मव्रतं नाम निर्वाणफलदं नृणाम्॥" इति। परसङ्गे—परपुरुषसङ्गमात्रे। पालितवती—रक्षितवती।

(ब) मदिति।—मम आयुषः वृद्धिकृते—मदीयजीवनकालवर्द्धनाय इत्यर्थः।

(भ) धुरीण!—अग्रणीः!

तत् सर्वथा (म) मूलोत्खाता वयं विनष्टाः स्मः। सुष्ठु खलु इदमुच्यते,—

मित्ररूपा हि रिपवः सम्भाव्यन्ते विचक्षणैः।
ये हितं वाक्यमुत्सृज्य विपरीतोपसेविनः ॥ १८७ ॥

तथा च,—सन्तोऽप्यर्था विनश्यन्ति देशकालविरोधिनः।
अप्राज्ञान् मन्त्रिणः प्राप्य तमः सूर्य्योदये यथा" ॥१८८॥

ततः तद्वचोऽनादृत्य सर्वे ते स्थिरजीविनम् (य) उत्क्षिप्य स्वदुर्गमानेतुमारब्धाः।

अथ आनीयमानः स्थिरजीवी आह,—"देव ! अद्य (र) अकिञ्चित्करेण एतदवस्थेन किं मया (ल) उपसङ्गृहीतेन ?

(म) मूलोत्खाताः,—मूलम् उत्खातम्—उन्मूलितं येषां ते तथोक्ताः, मूलेन सह उन्मूलिताः इत्यर्थः।

मित्रेति।—ये जनाः, हितं हितकरं, वाक्यं वचनम्, उत्सृज्य परित्यज्य, अनभिधाय इत्यर्थः, विपरीतोपसेविनः विपरीतम् अहितम्, उपसेवन्ते अभिदधति इति तथोक्ताः, भवन्तीति शेषः, अन्याय्यमुपदिशन्ति इत्यर्थः, विचक्षणैः विद्वद्भिः, ते मित्ररूपा बन्धुरूपधारिणः, रिपवः हि शत्रवः एव, सम्भाव्यन्ते मन्यन्ते; अहितोपदेष्टार एव शत्रवः, हितोपदेष्टार एव मित्राणीति फलितम् ॥ १८७ ॥

सन्त इति।—सूर्य्योदये तमः यथा अन्धकारमिव, अन्धकारं यथा विनश्यति, तथा इत्यर्थः, देशकालविरोधिनः यस्मिन् देशे काले वा यत्कर्त्तव्यं, तद्विपरीतमाचरतः, देशकालविरुद्धबुद्धीनित्यर्थः, अत एव अप्राज्ञान् अविचक्षणान्, मूर्खानित्यर्थः, मन्त्रिणः प्राप्य लब्ध्वा, तद्वशमागत्य इत्यर्थः, सन्तोऽपि समीचीनाः अपि, अव्यर्थफलप्रसवोन्मुखा अपीत्यर्थः, अर्था वस्तूनि, राज्ञ इति शेषः, विनश्यन्ति विनाशं यान्ति; मन्त्रिबुद्धिकौशलमेव कार्य्यसिद्धौ हेतुरिति भावः ॥ १८८ ॥

(य) उत्क्षिप्य—उत्तोल्य।

(र) अकिञ्चित्करेण—किमपि कर्त्तुमक्षमेण इत्यर्थः। एतदवस्थेन—एतामवस्थां प्राप्तेन।

(ल) उपसङ्गृहीतेन—सयत्नं गृहीतेन।

(ब) यत्कारणमिच्छामि दीप्तं वह्निमनुवेष्टुम्; तत् अर्हसि मामग्निप्रदानेन (भ) समुद्धर्त्तुम्"। अथ रक्ताक्षः तस्य अन्तर्गतभावं ज्ञात्वा अब्रवीत्,—"किमर्थम् अग्निपतनमिच्छसि?" सोऽब्रवीत्,—"अहं तावत् युष्मदर्थे इमाम् आपदं मेघवर्णेन प्रापितः; (म) तदिच्छामि तेषां वैरयातनार्थम् उलूकत्वम्" इति। तच्च श्रुत्वा राजनीतिकुशलो रक्ताक्षः प्राह,—"भद्र! कुटिलस्त्वं, (य) कृतकवचनचतुरश्च, उलूकयोनित्वाभावेऽपि तव स्वकीया एव वायसयोनिः श्लाघ्या। श्रूयते च एतत् (र) आख्यानकम्;—

> सूर्य्यं भर्त्तारमुत्सृज्य पर्जन्यं मारुतं गिरिम्।
> स्वजातिं मूषिका प्राप्ता स्वजातिर्दुरतिक्रमा" ॥ १९९॥

मन्त्रिणः प्रोचुः,—"कथमेतत्?" रक्ताक्षः कथयति,—

## कथा १३।

"अस्ति (क) विषमशिलातल-स्खलिताम्बुनिर्घोष-श्रवण-सन्त्रस्तमत्स्यपरिवर्त्तनसञ्जनितश्वेतफेनशबलतरङ्गाया गङ्गायाः

---

(ब) यत्कारणं—यदर्थमतो हेतोरित्यर्थः। दीप्तं—प्रज्वलितम्। अनुवेष्टुं—प्रवेष्टुम्।

(भ) समुद्धर्त्तुं—सम्यक् परित्रातुम् इत्यर्थः, मरणे सर्वयन्त्रणानिवारणादिति भावः।

(म) तदिति।—तत्—अत एव, उलूकत्वं—पेचकत्वम्, इच्छामि—अभिलषामि, अतः अहम् उलूकीभूय स्ववैरिणः निर्य्यातयितुमभिलषामि इत्यर्थः।

(य) कृतकेति।—कृत्रिमवाक्यविन्यासपटुः, चाटुवचनरचनानिपुण इत्यर्थः।

(र) आख्यानकम्—इतिहासम्।

सूर्य्यमिति।—मूषिका उन्दुरी, सूर्य्यं पर्जन्यं मेघं, मारुतं वायुं, गिरिं पर्वतं, भर्त्तारं पतिम्, उत्सृज्य विहाय, स्वजातिं निजजातीयं, भर्त्तारमित्यनुषङ्गः, प्राप्ता, अतः स्वजातिः दुरतिक्रमा दुस्त्यजा, नैव स्वजात्यनुरागस्त्यक्तुं शक्यते इत्यर्थः ॥१९९॥

(क) विषमेति।—विषमेषु—उन्नतानतेषु, शिलातलेषु—उपलखण्डेषु,

तटे (ख) जपनियमतपःस्वाध्यायोपवासयोगक्रियानुष्ठानपरायणैः, परिपूतपरिमितजलजिघृक्षुभिः, (ग) कन्दमूलफलशैवलाभ्यवहारकदर्थितशरीरैः, (घ) वल्कलकृतकौपीनमात्रप्रच्छादनैः तपस्विभिः (ङ) आकीर्णमाश्रमपदम्। तत्र याज्ञवल्क्यो नाम (च) कुलपतिः आसीत्। तस्य (छ) जाह्नव्यां स्नात्वा (ज) उपस्प्रष्टुम् आरब्धस्य करतले, (झ) श्येनमुखात् परिभ्रष्टा मूषिका पतिता।

---

स्खलितानां—पतितानां, प्रतिहतानामित्यर्थः, अम्बूनां—जलानां, निर्घोषस्य—कलकलरवस्य, श्रवणात्, सन्त्रस्ताः,—सम्यक् भीताः, ये मत्स्याः, तेषां यत् परिवर्त्तनम्—उद्रम्फणप्रोल्लोठनरूपमित्यर्थः, तेन सञ्जनिताः,—जाताः, ये श्वेताः,—शुक्लाः, फेनाः,—डिण्डीराः, तैः शबलाः,—चित्रिताः, मिश्रिता इत्यर्थः, तरङ्गा यस्याः तथाभूतायाः।

(ख) जपेति।—जपः,—निःशब्दमव्यक्तं मन्त्रोच्चारणं, नियमः,—इन्द्रियनिग्रहः, तपः,—चान्द्रायणादि, स्वाध्यायः,—वेदपाठः, उपवासः,—अहोरात्राभोजनरूपः, अनशनमित्यर्थः, योगः,—समाधिः, जीवब्रह्मणोरैक्यचिन्तनमित्यर्थः, क्रिया—होमादिका, एतासाम् अनुष्ठानम्—आचरणं, परं—श्रेष्ठम्, एकमात्रमिति यावत्, अयनम्—आश्रयः, कर्त्तव्यमित्यर्थः, येषां तैः, जपादिषु एकान्तासक्तैरित्यर्थः। परिपूतेति।—परिपूतानि—विशुद्धानि, पवित्रताकराणि इत्यर्थः, परिमितानि—अल्पानि, जलानि—सलिलानि, जिघृक्षुभिः,—ग्रहीतुमिच्छुभिः; आवश्यकानुरूपजलमात्रादित्सुभिरिति भावः।

(ग) कन्देति।—कन्दानां—मूलावशेषाणां, मूलानां—शिफानां, फलानां—कदल्यादीनां, शैवलानां—जलनीलीनाञ्च, अभ्यवहारेण—भोजनेन, कदर्थितानि—क्लेशितानि, शरीराणि यैः तथाभूतैः।

(घ) वल्कलेति।—वल्कलेन—तरुत्वचा, कृतं—विहितं, यत् कौपीनं—चीरखण्डं, तन्मात्रं—तदेव, प्रच्छादनम्—आच्छादनं, वसनमित्यर्थः, येषां तथोक्तैः।

(ङ) आकीर्णं—व्याप्तम्। आश्रमपदं—तपोवनम् इत्यर्थः।

(च) कुलपतिः,—"मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात्। अध्यापयति विप्रर्षिः स वै कुलपतिः स्मृतः॥" इत्येतल्लक्षणः।

(छ) जाह्नव्यां—गङ्गायाम्।

(ज) उपस्प्रष्टुम्—आचमितुम्। आरब्धस्य—उपक्रान्तस्य।

(झ) श्येनमुखात्—श्येनस्य—तदाख्यपक्षिविशेषस्य, मुखात्—चञ्चुपुटादित्यर्थः।

तां दृष्ट्वा (ञ) न्यग्रोधपत्रेऽवस्थाप्य, पुनः स्नात्वा उपस्पृश्य च, (ट) प्रायश्चित्तादिक्रियां कृत्वा च, मूषिकां तां स्वतपोबलेन कन्यकां कृत्वा समादाय स्वाश्रमम् आनिनाय; (ठ) अनपत्याञ्च जायामाह,—'भद्रे! गृह्यतामियं, तव दुहितोत्पन्ना, प्रयत्नेन संवर्द्धनीया' इति। ततः (ड) तया संवर्द्धिता लालिता पालिता च यावत् द्वादशवर्षा संजज्ञे। अथ विवाहयोग्यां तां दृष्ट्वा भर्त्तारमेवं जाया उवाच,—'भो भर्त्तः! किमिदं न अवबुध्यसे, यथा अस्याः स्वदुहितुर्विवाहसमयातिक्रमो भवति?' असौ आह,—'साधु उक्तम्। उक्तञ्च,—

स्त्रियः पूर्वं सुरैर्भुक्ताः सोमगन्धर्ववह्निभिः।
भुञ्जते मानुषाः पश्चात् तस्माद्दोषो न विद्यते॥ २००॥
सोमस्तासां ददौ शौचं गन्धर्वाः शिक्षितां गिरम्।
पावकः सर्वमेध्यत्वं तस्मान्निष्कल्मषाः स्त्रियः॥ २०१॥

(ञ) न्यग्रोधपत्रे—वटपत्रे। अवस्थाप्य—संस्थाप्य।

(ट) प्रायश्चित्तादिक्रियाम्—अपवित्रस्पर्शजनितदुरदृष्टनाशकादिव्यापारम्।

(ठ) अनपत्यां—निःसन्तानाम्।

(ड) तया—याज्ञवल्क्यपत्न्या। संजज्ञे—सञ्जाता।

स्त्रिय इति।—स्त्रियः, पूर्वं प्राक्, सोमगन्धर्ववह्निभिः सुरैः देवैः, भुक्ताः, पश्चात् अनन्तरं, मानुषाः भुञ्जते, [ अत्र "स्त्रियः" इति पदस्य "भुक्ताः" इत्यस्य कर्मत्वे प्रथमाबहुवचनान्तत्वं, मानुषा भुञ्जते इत्यस्य कर्मत्वे द्वितीयाबहुवचनान्तत्वेनानुषङ्ग इति ज्ञातव्यम् ] तस्मात् भोगहेतोरित्यर्थः, दोषः भोगजनित इति भावः, तासामिति शेषः, न विद्यते॥ २००॥

सोम इति।—सोमश्चन्द्रः, तासां भुक्तानां स्त्रीणामित्यर्थः, शौचं शुद्धिं, पवित्रतामित्यर्थः, ददौ, भोगेन प्रीतः सन् 'यूयं पवित्रा भवत' इति वरमदादित्यर्थः; अतः स्त्रियः सर्वाः पवित्रा इति भावः; गन्धर्वाः तासां शिक्षितां स्वभावतः कृतशिक्षामिवेत्यर्थः, सुसंस्कृतामिति यावत्, गिरं वाक्यं, भोगसन्तुष्टतया वरत्वेन ददुरिति विभक्तिविपरिणामेन योजनीयम्; पावकः अग्निः, सर्वमेध्यत्वं सर्वाङ्गेषु पवित्रत्वं,

असम्प्राप्तरजा गौरी प्राप्ते रजसि रोहिणी।
अव्यञ्जना भवेत् कन्या कुचहीना च नग्निका ॥ २०२ ॥
व्यञ्जनैस्तु समुत्पन्नैः सोमो भुङ्क्ते हि कन्यकाम्।
पयोधराभ्यां गन्धर्वा रजस्यग्निः प्रतिष्ठितः ॥ २०३ ॥
तस्माद्विवाहयेत् कन्यां यावन्नर्तुमती भवेत्।
विवाहस्त्वष्टवर्षायाः कन्यायास्तु प्रशस्यते ॥ २०४ ॥
व्यञ्जनं हन्ति वै पूर्वं परस्त्वेव पयोधरौ।
रतिरिष्टांस्तथा लोकान् हन्याच्च पितरं रजः ॥ २०५ ॥

भोगप्रीततया वरत्वेन ददौ इत्यनुपज्यते, तस्मात् स्त्रियः निष्कल्मषा निष्पापाः, भवन्ति इति शेषः ॥ २०१ ॥

असम्प्राप्तेति।—असम्प्राप्तम् अनागतं, रजः आर्तवं यस्याः सा, ("रजो रेणौ परागे स्यादार्तवे च गुणान्तरे" इति मेदिनी) गौरी तदाख्या इत्यर्थः; रजसि प्राप्ते आगते, जाते इत्यर्थः, रोहिणी; अव्यञ्जना—न व्यञ्जनम् ईषदुद्भिन्नयौवनचिह्न कुचोद्गमादि यस्याः तादृशी, ("व्यञ्जनं तेमने चिह्ने श्मश्रुण्यवयवेऽपि" इति मेदिनी) कन्या, कुचहीना च अनुदितस्तना चेत्यर्थः, नग्निका भवेत्, स्तनोद्गमात् प्राक् नग्निकासंज्ञा इत्यर्थः ॥ २०२ ॥

व्यञ्जनैरिति।—सोमश्चन्द्रः, समुत्पन्नैः समुद्गतैः, व्यञ्जनैः चिह्नैः,कुचादिभिरित्यर्थः, उपलक्षितामिति शेषः, ईषदुद्भिन्नस्तनीमिति यावत्, कन्यकां भुङ्क्ते हि साम्प्रतमपि भुङ्क्ते इत्यर्थः; गन्धर्वाः पयोधराभ्यां स्तनाभ्याम्, उपलक्षितां, भुञ्जते इति शेषः; रजसि, जाते इति शेषः, अग्निः प्रतिष्ठितः भोक्तुं प्रवृत्तः, भवतीति शेषः ॥ २०३ ॥

तस्मादिति।—तस्मात् यावत् यत्कालपर्यन्तम्, ऋतुमती रजस्वला, न भवेत्, तावत् तत्कालमध्ये, ऋतुप्रकाशात् प्रागेवेत्यर्थः, कन्यां विवाहयेत् उद्वाहयेत्; अष्टवर्षायास्तु कन्यायाः गौर्या इत्यर्थः, असञ्जातरजस्काया इति भावः, विवाहः प्रशस्यते प्रशस्त इत्यर्थः। तुशब्दोऽवधारणार्थः ॥ २०४ ॥

व्यञ्जनमिति।—व्यञ्जनम् ईषत्प्रकटितस्त्रीचिह्नविशेषः, अनूढायाः कन्याया इति भावः, पूर्वं प्राक्तनं, पित्रोः पुण्यमिति भावः, हन्ति नाशयति, पयोधरौ स्तनौ, उद्गतौ इति शेषः, परं परत्र जन्मनि लभ्यं, पित्रोः पुण्यमिति भावः, हत इति शेषः, रतिः सुरतम्, अविवाहितायाः इति भावः, इष्टान् प्रियान्, लोकान् स्वर्गादीन्,

ऋतुमत्यान्तु तिष्ठन्त्यां स्वेच्छादानं विधीयते।
तस्मादुद्वाहयेन्नग्नां मनुः स्वायम्भुवोऽब्रवीत्॥ २०६॥
पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता।
अविवाह्या तु सा कन्या जघन्या वृषली स्मृता॥ २०७॥
श्रेष्ठेभ्यः सदृशेभ्यश्च जघन्येभ्यो रजस्वला।
पित्रा देया विनिश्चित्य यतो दोषो न विद्यते॥ २०८॥

अतोऽहमेनां सदृशाय प्रयच्छामि, न अन्यस्मै। उक्तञ्च,—

ययोरेव समं वित्तं ययोरेव समं कुलम्।
तयोर्विवाहः सख्यञ्च न तु पुष्टविपुष्टयोः॥ २०९॥

पित्रोरिति शेषः, तथा रजः आर्त्तवञ्च, पितरं हन्यात् पातयेदित्यर्थः; यौवनचिह्नादीनां सम्भवात् प्राक् कन्यादानं कर्त्तव्यमिति भावः॥ २०५॥

ऋतुमत्यामिति।—ऋतुमत्यां रजस्वलायां, कन्यायामिति शेषः, तिष्ठन्त्यां सत्यां, स्वेच्छादानं कन्याया इच्छानुसारेण दानं, विधीयते, न तदानीं पित्रादीनां पात्रापात्रपरीक्षणं कर्त्तव्यम्; कन्या यमभिलषेत्, तस्मै एव सा दातव्येति भावः; तस्मात् नग्नाम् अनागतार्त्तवाम्, अरजस्कामित्यर्थः; ( "नग्निकाऽनागतार्त्तवा" इत्यमरः ) उद्वाहयेत्, स्वायम्भुवः ब्रह्मसुतः, मनुः अब्रवीत् बभाषे॥ २०६॥

पितृवेश्मनीति।—या कन्या पितृवेश्मनि पितृगृहे, स्थितेति शेषः, असंस्कृता अविवाहिता एव, रजः आर्त्तवं, पश्यति ऋतुमती भवति इत्यर्थः, जघन्या अधमा, तथा वृषली शूद्रा, शूद्रतुल्या सा कन्या अविवाह्या तु नैव उद्वाह्या, स्मृता; यद्वा,—वृषली तत्संज्ञाविशिष्टा, "पितुर्गेहे च या नारी रजः पश्यत्यसंस्कृता। भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता॥" इति स्मरणात्॥ २०७॥

श्रेष्ठेभ्य इति।—यतो यस्मात् कारणात्, दोषः तादृश्यामवस्थायां नीचपात्रेऽपि कन्यादानरूपः इत्यर्थः, न विद्यते न भवति, तस्मात् पित्रा विनिश्चित्य विचार्य्य, रजस्वला ऋतुमती, [ रजस्शब्दात् "रजःकृष्या—" ( ५। २। ११२ पा० ) इति मत्वर्थे वलच्प्रत्ययः ] श्रेष्ठेभ्यः स्वस्मात् प्रकृष्टेभ्यः, सदृशेभ्यः स्वसमानान्वयगुणेभ्यः, तथा जघन्येभ्यश्च अधमेभ्यो वा, अत्र चकारो वार्थे; देया; यस्मै कस्मैचित् दातव्या इत्यर्थः; कन्यायाम् ऋतुमत्यां पात्रापात्रविचारो न कर्त्तव्य इति भावः॥ २०८॥

ययोरिति।—ययोः, अनयोरिति शेषः, वित्तं धनं, समं तुल्यं, ययोरेव कुलं

तथाच,—कुलञ्च शीलञ्च सनाथता च
विद्या च वित्तञ्च वपुर्वयश्च।
एतान् गुणान् सप्त विचिन्त्य देया
कन्या बुधैः शेषमचिन्तनीयम्॥ २१०॥

तत् यदि अस्यै रोचते, तदा भगवन्तम् आदित्यमाहूय तस्मै प्रयच्छामि'। सा प्राह,—'इह को दोषः? क्रियताम् एतत्'। अथ मुनिना रविराहूतः। (ढ) वेदमन्त्रामन्त्रणप्रभावात् तत्क्षणादेवाभ्युपगम्यादित्यः प्रोवाच,—'भगवन्! किमहम् आहूतः?' सोऽब्रवीत्,—'एषा मदीया कन्यका तिष्ठति, यदि एषा त्वां वृणोति, तर्हि उद्वहस्व' इति। एवमुक्त्वा स्वदुहितरम् उवाच,—'पुत्रि! किं (ण) तव रोचते एष भगवान् त्रैलोक्यदीपको भानुः?' पुत्रिका अब्रवीत्,—'तात! अतिदहनात्मकोऽयं, न अहमेनम् अभिलषामि। तदस्मात् अन्यः

वंशः, सख्यं, तयोरेव विवाहः परिणयः, सख्यं मैत्री च, शस्तमिति शेषः; पुष्टविपुष्टयोः सधननिर्धनयोः, न तु नैव, शस्तमिति शेषः; तादृशपरिणयादिकं परिणामे दुःखावहमेव भवेदिति भावः॥ २०९॥

कुलञ्चेति।—बुधैः विद्वद्भिः; कुलञ्च वंशश्च, शीलञ्च चरित्रञ्च, सनाथता च सहायवत्त्वञ्च, विद्या च, वित्तञ्च धनञ्च, वपुः शरीरं, सौष्ठवान्वितमिति भावः, वयश्च यौवनञ्च, एतान् सप्त गुणान् विचिन्त्य विचार्य्य, कन्या देया, पूर्वोक्तगुणसप्तकशालिने वराय दातव्येत्यर्थः, शेषम् अतः परम्, अचिन्तनीयं न चिन्तनीयं, चिन्ताया आवश्यकं नास्तीत्यर्थः; यत् भवितव्यं तदवश्यमेव भवति, भाग्यायत्तत्वात् सर्वस्येति भावः। उपजातिः वृत्तम्॥ २१०॥

(ढ) वेदमन्त्रेति।—वेदमन्त्रेण यत् आमन्त्रणम्—आह्वानं, तस्य प्रभावात्—सामर्थ्यात्।

(ण) तव—तुभ्यमित्यर्थः, ["रुच्यर्थानां प्रीयमाणः" (१।४।३३ पा०) इति सूत्रेण चतुर्थीप्राप्तौ सत्यामपि सम्बन्धविवक्षया षष्ठी]। त्रैलोक्यदीपकः,—त्रिलोकीप्रकाशक इत्यर्थः। भानुः,—सूर्य्यः।

(त) प्रकृष्टतरः कश्चित् आहूयताम्'। अथ तस्याः तद्वचनं श्रुत्वा मुनिः भास्करमुवाच,—'भगवन्! त्वत्तः (थ) अधिकोऽस्ति कश्चित्?' भास्करः प्राह,—'अस्ति मत्तोऽपि अधिको मेघः, येन आच्छादितोऽहमदृश्यो भवामि'। अथ मुनिना मेघमपि आहूय कन्या अभिहिता,—'पुत्रिके! अस्मै त्वां प्रयच्छामि?' सा प्राह,—'कृष्णवर्णोऽयं (द) जड़ात्मा च; तदस्मात् (ध) अन्यस्य प्रधानस्य कस्यचित् मां प्रयच्छ'। अथ मुनिना मेघोऽपि पृष्टः,—'भो भो मेघ! त्वत्तोऽपि अधिकोऽस्ति कश्चित्?' मेघेनोक्तं,—'मत्तोऽपि अधिकोऽस्ति वायुः, वायुना (न) हतोऽहं सहस्रधा यामि'। तत् श्रुत्वा मुनिना वायुराहूतः, आह च,—'पुत्रिके! किम् एष वायुस्ते विवाहाय उत्तमः प्रतिभाति?' सा अब्रवीत्,—'तात! (प) अति-चपलोऽयं, तदस्मादपि अधिकः कश्चित् आनीयताम्'। मुनिः आह,—'वायो! त्वत्तोऽपि अधिकोऽस्ति कश्चित्?' पवनेन उक्तं,—'मत्तोऽपि अधिकोऽस्ति पर्वतः, (फ) येन संस्तभ्य बल-वानपि अहं ध्रिये'। अथ मुनिः पर्वतमाहूय कन्यामुवाच,—'पुत्रिके! त्वाम् अस्मै प्रयच्छामि?' सा प्राह,—'तात! (ब) कठिनात्मकोऽयं स्तब्धश्च, तत् अन्यस्मै देहि माम्'। मुनिना

---

(त) प्रकृष्टतरः,—अत्युत्कृष्टः।

(थ) अधिकः,—अधिकशक्तिमान्।

(द) जड़ात्मा—डलयोरैकत्वात् जलात्मा, जलमयतया अतिशीतलः इत्यर्थः; यद्वा,—जड़ः,—इष्टानिष्टज्ञानरहितः, आत्मा यस्य तादृशः, मूर्खः इति यावत्।

(ध) अन्यस्येति।—[सम्बन्धविवक्षया सम्प्रदाने षष्ठी]।

(न) हतः,—ताड़ितः। सहस्रधा—सहस्रभागेन।

(प) अतिचपलः,—अतिचञ्चलस्वभावः।

(फ) येन—पर्वतेन। संस्तभ्य—सन्निरुध्य, बाधां प्राप्येत्यर्थः।

(ब) कठिनात्मकः,—कठोरशरीरः, निर्दय इति भावः। स्तब्धः,—निश्चलः।

पर्वतः पृष्टः,—'भोः पर्वतराज! त्वत्तोऽपि अधिकोऽस्ति कश्चित्?' गिरिणा उक्तं,—'मत्तोऽपि अधिकाः सन्ति मूषिकाः, ये मच्छरीरं बलात् विदारयन्ति'। ततो मुनिः मूषिकमाहूय तस्या अदर्शयत्, आह च,—'पुत्रिके! त्वाम् अस्मै प्रयच्छामि, किम् एष प्रतिभाति ते मूषिकराजः?' साऽपि तं दृष्ट्वा स्वजातीय एष इति मन्यमाना (भ) पुलकोद्भूषितशरीरोवाच,—'तात! मां मूषिकां कृत्वा अस्मै प्रयच्छ, येन (म) स्वजातिविहितं गृहधर्मम् अनुतिष्ठामि'। ततः सोऽपि स्वतपोबलेन तां मूषिकां कृत्वा तस्मै प्रादात्। अतोऽहं ब्रवीमि,—'सूर्यं भर्त्तारमुत्सृज्य' इत्यादि"।

अथ रक्ताक्षवचनम् अनादृत्य तैः स्ववंशविनाशाय स स्वदुर्गम् उपनीतः। नीयमानश्च अन्तर्लीनमवहस्य स्थिरजीवी व्यचिन्तयत्—

"हन्यतामिति येनोक्तं स्वामिनो हितवादिना।
स एवैकोऽत्र सर्वेषां नीतिशास्त्रार्थतत्त्ववित्॥ २११॥

तत् यदि तस्य वचनम् अकरिष्यन् एते, ततो न स्वल्पोऽपि अनर्थोऽभविष्यत् एतेषाम्"। अथ दुर्गद्वारं प्राप्य अरिमर्दनोऽब्रवीत्,—"भो भोः! हितैषिणोऽस्य स्थिरजीविनो यथासमीहितं स्थानं प्रयच्छत"। तच्च श्रुत्वा स्थिरजीवी अचिन्तयत्,—

(भ) पुलकेति।—पुलकेन—आनन्दजनितरोमाञ्चेन, उद्भूषितम्—अलङ्कृतं, शरीरं यस्याः तथाभूता।

(म) स्वजातिविहितं—मूषिकजात्यनुरूपम्। गृहधर्मं—गृहकार्य्यम्।

हन्यतामिति।—स्वामिनः प्रभोः, हितवादिना येन रक्ताक्षेण, हन्यताम् इति उक्तम्, अत्र सर्वेषाम् उलूकानां मध्ये, [इति निर्द्धारे षष्ठी] स एव एकः केवलः, नान्य इति भावः, ("एकः सङ्ख्याऽन्तरे श्रेष्ठे केवलेतरयोस्त्रिषु" इति मेदिनी) नीतिशास्त्रार्थतत्त्ववित् नीतिशास्त्रार्थस्य तत्त्वं याथार्थ्यं, वेत्तीति तथोक्तः, भवतीति शेषः॥ २११॥

"मया तावत् एतेषां वधोपायः चिन्तनीयः ; स च मया (य) मध्यस्थेन न साध्यते, यतो मदीयम् ( र ) इङ्गिताकारं विचारयन्तः तेऽपि सावधाना भविष्यन्ति। तत् दुर्गद्वारम् (ल) अधिष्ठितोऽभिप्रेतं साधयामि" इति निश्चित्य उलूकपतिमाह,—"देव ! युक्तमिदं यत् स्वामिना प्रोक्तम्; परमहमपि नीतिज्ञस्ते (व) अहितश्च ; यद्यपि (श) अनुरक्तः शुचिः, तथाऽपि दुर्गमध्ये (ष) आवासो न अर्हः ; तत् अहमत्र एव दुर्गद्वारस्थः प्रत्यहं भवत्पादपद्मरजःपवित्रीकृततनुः सेवां करिष्यामि"। "तथा" इति ( स ) प्रतिपन्ने प्रतिदिनम् उलूकपतिसेवकास्ते प्रकाममाहारं कृत्वा उलूकराजादेशात् प्रकृष्टमांसाहारं स्थिरजीविने प्रयच्छन्ति। अथ कतिपयैः एव ( ह ) अहोभिः मयूर इव स बलवान् संवृत्तः।

अथ रक्ताक्षः स्थिरजीविनं ( क ) पोष्यमाणं दृष्ट्वा सविस्मयो मन्त्रिजनं राजानञ्च प्रत्याह,—"अहो ! मूर्खोऽयं मन्त्रिजनो भवांश्च, इत्येवमहम् अवगच्छामि। उक्तञ्च,—

( य ) मध्यस्थेन—दुर्गमध्यस्थितेन। न साध्यते—न कर्त्तुं शक्यते।

( र ) इङ्गिताकारं—इङ्गितचेष्टादिकम्। विचारयन्तः,—विवेचयन्तः।

( ल ) अधिष्ठितः,—अवलम्बितः।

( व ) अहितः,—शत्रुः, स्वभावशत्रुरित्यर्थः।

( श ) अनुरक्तः,—भक्तः। शुचिः,—निर्दोषः, अहमिति शेषः।

( ष ) आवासः,—अवस्थानं, ममेति शेषः। न अर्हः,—न योग्यः, अनुचितः इत्यर्थः।

( स ) प्रतिपन्ने—अङ्गीकृतवति इत्यर्थे, उलूकराजे इति शेषः। प्रकामं—यथेष्टम्।

( ह ) अहोभिः इति।—["अपवर्गे तृतीया" (२।३।६ पा०) इति तृतीया ]।

( क ) पोष्यमाणं—पीवरतां नीयमानमित्यर्थः, ( पुष्यतेः णिचि कर्मणि शानचि रूपं, वर्द्धमानमित्यर्थः. )।

पूर्वं तावदहं मूर्खो द्वितीयः पाशबन्धकः ।
ततो राजा च मन्त्री च सर्वं वै मूर्खमण्डलम्" ॥२१२॥

इति प्राह,—"कथमेतत् ?" रक्ताक्षः कथयति,—

## कथा १४ ।

"अस्ति कस्मिंश्चित् पर्वतैकदेशे महान् वृक्षः, तत्र च सिन्धुकनामा कोऽपि पक्षी प्रतिवसति स्म। तस्य (ख) पुरीषे सुवर्णमुत्पद्यते। अथ कदाचित् तमुद्दिश्य व्याधः कोऽपि समाययौ। स च पक्षी तदग्रत एव पुरीषम् (ग) उत्ससर्ज। अथ (घ) पातसमकालमेव तत् सुवर्णीभूतं दृष्ट्वा व्याधो विस्मयम् अगमत्—'अहो ! मम शिशुकालात् आरभ्य (ङ) शकुनिबन्धव्यसनिनः अशीतिवर्षाणि समभूवन् ; न च कदाचित् अपि पक्षिपुरीषे सुवर्णं दृष्टम्' इति विचिन्त्य तत्र वृक्षे पाशं बबन्ध। अथ असौ अपि पक्षी मूर्खस्तत्रैव (च) विश्वस्तचित्तो यथापूर्वम् उपविष्टः, (छ) तत्कालमेव पाशेन बद्धः। व्याधस्तु

पूर्वमिति।—अहं तावत् पूर्वं प्रथमं, मूर्खः, भवामीति शेषः, पाशेन बध्नातीति पाशबन्धकः व्याधः, द्वितीयः, मूर्खं इत्यनुषङ्गः, भवतीति शेषः ; ततः अनन्तरं, राजा च, मन्त्री च, मूर्खं इति पूर्वानुषङ्गः ; अतः सर्वं वै सर्वमेव, [ विधेयप्राधान्यात् क्लीबत्वं ] मूर्खमण्डलं मूर्खाणां समष्टिः इत्यर्थः ॥ २१२ ॥

(ख) पुरीषे—विष्ठायाम्।

(ग) उत्ससर्ज—तत्याज।

(घ) पातसमकालमेव—पतनमात्रमेव, पतनक्षण एवेत्यर्थः। तत्—पुरीषमित्यर्थः। सुवर्णीभूतम्—असुवर्णं सुवर्णं भूतमिति तथोक्तं, [ "कृभ्वस्तियोगे—" (५।४।५० पा०) इति अभूततद्भावे च्विप्रत्ययः ]।

(ङ) शकुनिबन्धव्यसनिनः,—पक्षिबन्धनासक्तस्य। पाशं—जालम्।

(च) विश्वस्तचित्तः,—निःशङ्कमनाः। यथापूर्वं—पूर्ववत्। [ पूर्वम् अनतिक्रम्य इति अनतिक्रमार्थे अव्ययीभावसमासः ]।

(छ) तत्कालमेव—उपवेशनसमकालमेव।

तं पाशात् (ज) उन्मुच्य पञ्जरके संस्थाप्य निजावासं नीतवान्। अथ चिन्तयामास,—'किमनेन (झ) सापायेन पक्षिणा अहं करिष्यामि? यदि कदाचित् कोऽपि अमुमीदृशं ज्ञात्वा राज्ञे निवेदयति, तत् नूनं प्राणसंशयो मे भवेत्; अतः स्वयमेव पक्षिणं राज्ञे निवेदयामि' इति विचार्य्य तथैव अनुष्ठितवान्।

अथ राजाऽपि तं पक्षिणं दृष्ट्वा विकसितनयनवदनकमलः परां तुष्टिमुपागतः, प्राह च एवं, (ञ)—'हंहो! रक्षापुरुषाः! एनं पक्षिणं यत्नेन रक्षत, अशनपानादिकञ्च अस्य यथेच्छं प्रयच्छत'। अथ मन्त्रिणा अभिहितं,—'किमनेन (ट) अश्रद्धेय-व्याधवचनप्रत्ययमात्रपरिगृहीतेन अण्डजेन? किं कदाचित् पक्षिपुरीषे सुवर्णं सम्भवति? तन्मुच्यतां पञ्जरबन्धनादयं पक्षी' इति मन्त्रिवचनात् राज्ञा मोचितोऽसौ पक्षी (ठ) उन्नतद्वार-तोरणे समुपविश्य सुवर्णमयीं विष्ठां विधाय,—'पूर्वं तावदहं मूर्खः' इति श्लोकं पठित्वा यथासुखम् आकाशमार्गेण (ड)प्रायात्। अतोऽहं ब्रवीमि,—'पूर्वं तावदहं मूर्खः' इत्यादि"।

---

(ज) उन्मुच्य—मोचयित्वा, निःसार्य्य इत्यर्थः।

(झ) सापायेन—सविपदा, विपत्तिजनकेनेत्यर्थः; लुब्धस्य राज्ञः कोपोत्पादकत्वादेतस्येति भावः। अमुं—पक्षिणम्। ईदृशं—सुवर्णमयपुरीषमित्यर्थः।

(ञ) हंहो!—भोः! रक्षापुरुषाः,—रक्षिजनाः। अस्य—पक्षिणः इत्यर्थः; [सम्बन्धविवक्षया सम्प्रदाने षष्ठी]।

(ट) अश्रद्धेयेति।—अश्रद्धेयम—अविश्वसनीयं, यत् व्याधस्य वचनं, तस्मिन् प्रत्ययमात्रेण परिगृहीतः तेन। अण्डजेन—पक्षिणा, ("शकुन्तपक्षिशकुनि......। ......पतत्पत्ररथाण्डजाः॥" इत्यमरः)।

(ठ) उन्नतेति।—उन्नतम्—उच्चैः, द्वारं—बहिर्निर्गमनस्थानं यस्य तादृशं यत् तोरणं तस्मिन्, बहिर्द्वारप्रदेशे इत्यर्थः, ("तोरणोऽस्त्री बहिर्द्वारम्" इत्यमरः)। विधाय—कृत्वा, उत्सृज्य इत्यर्थः।

(ड) प्रायात्—प्रस्थितः।

अथ ते पुनरपि (ढ) प्रतिकूलदैवतया हितमपि रक्ताक्ष-वचनम् अनादृत्य, (ण) भूयस्तं (त) प्रभूतमांसादिविविधाहारेण पोषयामासुः। अथ रक्ताक्षः (थ) स्ववर्गमाहूय रहः प्रोवाच,—"अहो! एतावत् एव अस्मद्भूपतेः कुशलं दुर्गञ्च; तदुपदिष्टं मया यत् कुलक्रमागतः सचिवोऽभिधत्ते; तत् वयमन्यत् पर्वत-दुर्गं सम्प्रति समाश्रयामः। उक्तञ्च यतः,—

> अनागतं यः कुरुते स शोभते
> स शोच्यते यो न करोत्यनागतम्।
> वनेऽत्र संस्थस्य समागता जरा
> बिलस्य वाणी न कदाऽपि मे श्रुता" ॥ २१३ ॥

ते प्रोचुः,—"कथमेतत्?" रक्ताक्षः कथयति,—

## कथा १५।

"कस्मिंश्चित् वनोद्देशे (द) खरनखरो नाम सिंहः प्रतिवसति

---

(ढ) प्रतिकूलदैवतया—विमुखभागधेयतया, दुर्भाग्यतयेत्यर्थः।

(ण) भूयः,—पुनः। तं—स्थिरजीविनम्।

(त) प्रभूतेति।—प्रचुरपिशितप्रभृतिबहुविधभोजनदानेन।

(थ) स्ववर्गेण—आत्मपक्षपातिनं स्वजातीयसमूहमित्यर्थः। रहः,—एकान्ते। तदिति।—कुलक्रमागतः,—वंशपरम्परागतः। सचिवः,—मन्त्री, यत् अभिधत्ते—वदति, तत् मया उपदिष्टं—तथा उपदेशो दत्त इत्यर्थः।

अनागतमिति।—यः जनः, अनागतम् अनुपस्थितं, कुरुते भाविविपदमाशङ्क्य उपायं करोति इत्यर्थः, स शोभते सुखेन वर्त्तते इत्यर्थः, यः अनागतं न करोति, स शोच्यते, मृत्योरिति शेषः, विपन्नस्य तस्य बन्धुभिः तदर्थे शोकः क्रियते इत्यर्थः; अत्र वने संस्थस्य स्थितस्य, मम इति शेषः, जरा वार्द्धकं, समागता उपस्थिता, किन्तु कदाऽपि बिलस्य गह्वरस्य, वाणी वचनं, मे मया इत्यर्थः, [मयेत्यर्थे मे इति शब्दः निपातेषु द्रष्टव्यः, "तं मे शब्दो निपातेषु" (प्रथ अधि० २य अ० १० सू०) इति वामनः] न श्रुता न आकर्णिता। वंशस्थविलं वृत्तम् ॥ २१३ ॥

(द) खरनखरः,—खराः,—तीक्ष्णाः, नखराः यस्य सः।

स्म। स कदाचित् इतश्चेतश्च परिभ्रमन् (ख) क्षुत्क्षामकण्ठो न किञ्चिदपि (ग) सत्त्वम् आससाद। ततश्च (प) अस्तमनसमये महतीं गिरिगुहाम् आसाद्य प्रविष्टः चिन्तयामास,—(फ)'नूनम् एतस्यां गुहायां रात्रौ केनापि सत्त्वेन आगन्तव्यम्; तत् (ब) निभृतो भूत्वा तिष्ठामि'। एतस्मिन्नन्तरे (भ) तत्स्वामी दधिपुच्छो नाम शृगालः समायातः। स च यावत् पश्यति, तावत् (म) सिंहपदपद्धतिर्गुहायां प्रविष्टा, न च निष्क्रमणं गता इति दृष्टवान्। ततश्च अचिन्तयत्,—'अहो! विनष्टोऽस्मि! नूनमस्याम् (य) अन्तर्गतेन सिंहेन भाव्यम्; तत् किं करोमि? कथं ज्ञास्यामि?' एवं विचिन्त्य द्वारस्थः (र) फूत्कर्त्तुम् आरब्धः,—'अहो बिल! अहो बिल!' इत्युक्त्वा (ल) तूष्णीम्भूय भूयोऽपि तथा एव प्रत्यभाषत,—'भोः! किं न स्मरसि, यत् मया त्वया सह (व) समयः कृतोऽस्ति, यत् 'मया बाह्यात् समागतेन त्वं (श) वक्तव्यः, त्वया च अहम् आकारणीय

(ख) क्षुदिति।—क्षुधा—बुभुक्षया, क्षामः,—शुष्कः, कण्ठो यस्य तादृशः।

(ग) सत्त्वं—प्राणिनम्। आससाद—प्राप।

(प) अस्तमनसमये—सायङ्काले।

(फ) नूनं—निश्चितम्। सत्त्वेन—जीवेन। आगन्तव्यम्—आगत्य स्थातव्यमित्यर्थः।

(ब) निभृतः,—निःशब्दः।

(भ) तत्स्वामी—गुहाधिकारी।

(म) सिंहेति।—सिंहस्य पदपद्धतिः,—पदक्षेपचिह्नम्।

(य) अन्तर्गतेन—अन्तः,—मध्यं, गतेन—प्राप्तेन, तत्र स्थितेन इत्यर्थः।

(र) फूत्कर्त्तुं—फीत्कर्त्तुम्, आह्वातुम् इत्यर्थः।

(ल) तूष्णीम्भूय—मौनी भूत्वा। तथा एव—फूत्कृत्य एवेत्यर्थः।

(व) समयः,—नियमः। बाह्यात्—बहिर्देशात्।

(श) वक्तव्यः,—आह्वातव्यः इत्यर्थः। आकारणीयः,—आमन्त्रणीयः.

इति ? तत् यदि मां न आह्वयसि, ततोऽहं द्वितीयं बिलं यास्यामि'। अथ तत् श्रुत्वा सिंहः चिन्तितवान्,—'नूनम् एषा गुहा अस्य समागतस्य सदा समाह्वानं करोति, परम् अद्य मद्भयात् न किञ्चित् ब्रूते। अथवा साधु इदमुच्यते,—

भयसन्त्रस्तमनसां हस्तपादादिकक्रियाः।
प्रवर्त्तन्ते न वाणी च वेपथुश्चाधिको भवेत्॥ २१४॥

तत् अहमस्य आह्वानं करोमि, येन तदनुसारेण प्रविष्टोऽयं मे भोज्यतां यास्यति'। एवं सम्प्रधार्य्य सिंहः तस्याह्वानम् अकरोत्। अथ सिंहशब्देन सा गुहा (घ) प्रतिरवसम्पूर्णा अन्यान् अपि दूरस्थान् आरण्यजीवान् त्रासयामास। शृगालोऽपि पलायमान इमं श्लोकम् अपठत्,—

'अनागतं यः कुरुते स शोभते
स शोच्यते यो न करोत्यनागतम्।
वनेऽत्र संस्थस्य समागता जरा
बिलस्य वाणी न कदाऽपि मे श्रुता' ॥२१५॥

तदेवं मत्वा युष्माभिर्मया सह गन्तव्यम्" इति।

---

भयेति।—भयेन सन्त्रस्तं व्याकुलम्, अतिभयाकुलमित्यर्थः, मनो येषां तथा-भूतानां, जनानामिति शेषः, हस्तपादादिकक्रियाः हस्तौ च पादौ च हस्तपादं, ["द्वन्द्वश्च प्राणितूर्य्यसेनाङ्गानाम्" (२।४।२ पा०) इत्येकवद्भावः] तदादि येषां ते तेषां हस्त-पादादिकानां, क्रियाः व्यापाराः, न प्रवर्त्तन्ते न भवन्तीत्यर्थः, ते करचरणसञ्चालनादिक-मपि कर्त्तुं न प्रभवन्ति इति निष्कर्षः; तथा वाणी च वाक् च, न प्रवर्त्तते इति शेषः, वेपथुः [ वेपधातोः "ट्वितोऽथुच्" (३।३।८९ पा०) इति भावे अथुच्प्रत्यये सिद्धम् ] कम्पश्च, अधिकः अतिशयः, भवेत्॥ २१४॥

(घ) प्रतिरवसम्पूर्णा—प्रतिध्वनिपूरिता। दूरस्थान्—दूरस्थितान्। आरण्य-जीवान्—वन्यजन्तून्, ["गतिबुद्धि—" (१।४।५२ पा०) इति अणिकर्त्तुः कर्मत्वम् ]।

अनागतमिति।—व्याख्यातं प्राक्॥ २१५॥

एवमभिधाय ( ख ) आत्मानुयायिपरिवारानुगतो दूरदेशान्तरं रक्ताक्षो जगाम ।

अथ रक्ताक्षे गते स्थिरजीवी अतिहृष्टमना व्यचिन्तयत्,—"अहो ! कल्याणमस्माकम् उपस्थितं, यत् रक्ताक्षो गतः ; यतः स दीर्घदर्शी, एते च ( ङ ) मूढमनसः, ततो मम सुखघात्याः सञ्जाताः । उक्तञ्च यतः,—

न दीर्घदर्शिनो यस्य मन्त्रिणः स्युर्महीपतेः ।
क्रमायाता ध्रुवं तस्य न चिरात् स्यात् परिक्षयः ॥ २१६ ॥

अथवा साधु इदमुच्यते,—

मन्त्रिरूपा हि रिपवः सम्भाव्यन्ते विचक्षणैः ।
ये सन्तं नयमुत्सृज्य सेवन्ते प्रतिलोमतः" ॥ २१७ ॥

एवं विचिन्त्य ( क ) स्वकुलाये एकैकां वनकाष्ठिकां

---

( ख ) आत्मानुयायीति ।—स्वानुचरपरिजनवर्गयुक्तः ।

( ङ ) मूढमनसः,—अविवेकिचित्ताः, अज्ञाना इत्यर्थः । सुखघात्याः,—सुखेन विनाश्याः ; [ घात्याः इति हनधातोः "ऋहलोर्ण्यत्" (३।१।१२४ पा० ) इति ण्यत्, "हनस्तोऽचिण्णलोः" ( ७।३।३२ पा० ) इति तत्वं, "हो हन्तेः—" ( ७।३।५४ पा० ) इति कुत्वम् ; अनुपसर्गे सुप्युपपदे तु "हनस्त च" ( ३।१।१०८ पा० ) इत्यनेन क्यप्-प्रत्ययो भवति, यथा ब्रह्मणो हननं ब्रह्महत्येति ] ।

नेति ।—यस्य महीपतेः राज्ञः, मन्त्रिणः सचिवाः, क्रमायाताः कुलक्रमागताः, तथा दीर्घदर्शिनः भविष्यदर्थदर्शनशीलाः, दूरदृष्टयः इत्यर्थः, न स्युः, तस्य न चिरात् अविलम्बेनैव, ध्रुवं निश्चितं, परिक्षयः विनाशः, स्यात् ; मन्त्रिणः वैचक्षण्यमेव राज्ञः साम्राज्यहक्षेः निदानमिति भावः ॥ २१६ ॥

मन्त्रिरूपा इति ।—ये सन्तं शोभनं, नयं नीतिमार्गम्, उत्सृज्य विहाय, प्रतिलोमतः प्रतिकूलेन नयेन, दुर्नयेनेत्यर्थः, सेवन्ते, प्रभुमिति शेषः, विचक्षणैः विद्वद्भिः, ते मन्त्रि-रूपाः अमात्यव्यपदेशिनः, रिपवः शत्रवः, सम्भाव्यन्ते हि मन्यन्ते एव ; तृणाच्छादित-कूपवत् विपरीतनीतिप्रस्थितः सचिवः नियतमनर्थमुत्पादयतीति भावः ॥२१७॥

( क ) स्वकुलाये—निजनीड़े । वनकाष्ठिकां—वनस्य क्षुद्रं काष्ठमित्यर्थः, [ क्षुद्रं काष्ठमित्यर्थे "ह्रस्वे" ( ५।३।८६ पा० ) इति कनि, "प्रत्ययस्थात् कात्—"

गुहादीपनार्थं दिने दिने प्रक्षिपति। न च ते मूर्खा उलूका विजानन्ति यत्, एष कुलायम् अस्मद्दाहाय वृद्धिं नयति। अथवा साधु इदमुच्यते,—

> अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च।
> शुभं वेत्त्यशुभं पापं भद्रं दैवहतो नरः॥ २१८॥

अथ (ख) कुलायव्याजेन दुर्गद्वारे कृते काष्ठनिचये, सञ्जाते सूर्य्योदयेऽन्धतां प्राप्तेषु उलूकेषु सत्सु, स्थिरजीवी शीघ्रं गत्वा मेघवर्णमाह,—"स्वामिन्! (ग) दाहसाध्या कृता रिपुगुहा; तत् सपरिवारः समेत्य एकैकां वनकाष्ठिकां ज्वलन्तीं गृहीत्वा गुहाद्वारे अस्मत्कुलाये प्रक्षिप, येन सर्वे शत्रवः (घ) कुम्भीपाकनरकप्रायेण दुःखेन म्रियन्ते"। तत् श्रुत्वा प्रहृष्टो मेघवर्ण आह,—"तात! कथय आत्मवृत्तान्तं, चिरात् अद्य दृष्टोऽसि"। स आह,—"वत्स! नायं कथनस्य कालः, यतः कदाचित् तस्य रिपोः कश्चित् (ङ) प्रणिधिर्मम इह आगमनं

(७।१।४४ पा०) इति भकारस्य इत्वम्]। गुहादीपनार्थं—दुर्गप्रज्वालनार्थम्। दिने दिने—प्रतिदिनम्।

अमित्रमिति।—दैवहतः दैवेन दुर्भाग्येन, हतो विनाशितः, प्रतिकूलदैव इत्यर्थः, नरः अमित्रं शत्रुं मित्रं कुरुते, तस्मिन् मित्रबुद्धिं विदधातीत्यर्थः, मित्रं सुहृदं, द्वेष्टि तदुद्दिश्य द्वेषं करोति, हिनस्ति पीडयति च, शुभम् अशुभं तथा पापम् अमङ्गलं, भद्रं मङ्गलं, वेत्ति बुध्यते च, दैवे प्रतिकूले बुद्ध्यादिकं सर्वमेव विपर्य्येति इति भावः॥ २१८॥

(ख) कुलायव्याजेन—नीडनिर्माणच्छलेन।

(ग) दाहसाध्या—दाहस्य योग्या, भस्मीकरणार्हा इत्यर्थः

(घ) कुम्भीपाकेति।—कुम्भीपाकाख्यनरकभोगजन्यदुःखसदृशेन। म्रियन्ते—निधनं यान्ति, यथा कुम्भीपाकाख्ये नरके नारकिणः पच्यन्ते, तथा रिपवोऽपि अग्निना दग्धा भविष्यन्तीत्यर्थः।

(ङ) प्रणिधिः,—चारः।

निवेदयिष्यति, तज्ज्ञानात् अन्योऽन्यत्र (च) अपसरणं करिष्यति ; तत् त्वर्य्यताम् !! उक्तञ्च,—

शीघ्रकृत्येषु कार्य्येषु विलम्बयति यो नरः ।
तत्कृत्यं देवतास्तस्य कोपाद्विघ्नन्त्यसंशयम् ॥ २१९ ॥

तथा च,—यस्य यस्य हि कार्य्यस्य फलितस्य विशेषतः ।
क्षिप्रमक्रियमाणस्य कालः पिबति तत्फलम् ॥ २२० ॥

तत् गुहायाम् (छ) आयातस्य ते हतशत्रोः सर्वं सविस्तरं निर्व्याकुलतया कथयिष्यामि" ।

अथ असौ तद्वचनम् आकर्ण्य सपरिजन एकैकां ज्वलन्तीं वनकाष्ठिकां चञ्चुग्रेण गृहीत्वा तद्गुहाद्वारं प्राप्य स्थिरजीविकुलाये प्राक्षिपत् । ततः सर्वे ते दिवाऽन्धा रक्ताक्षवाक्यानि स्मरन्तो द्वारस्य (ज) आवृतत्वात् अनिःसरन्तो गुहामध्ये कुम्भीपाकन्यायम् आपन्नाः मृताश्च । एवं शत्रून् निःशेषतां नीत्वा भूयो-

(च) अपसरणं—पलायनम् । त्वर्य्यतां—त्वरा क्रियताम् ।

शीघ्रेति ।—यो नरः शीघ्रकृत्येषु अविलम्बेन करणीयेषु, कार्य्येषु विलम्बयति चिरयति, [ विलम्बं करोतीत्यर्थे "तत्करोति—" (ग०) इति णिचि लटि रूपम् ] देवताः कोपात् तं प्रति क्रोधात्, तस्य तत् कृत्यं कार्य्यम्, असंशयं निःसन्देहं, विघ्नन्ति विनाशयन्ति ; अलसस्य कार्य्यविघातः अवश्यम्भावीति भावः ॥ २१९ ॥

यस्येति ।—यस्य यस्य विशेषतः फलितस्य फलोन्मुखस्य, कार्य्यस्य क्षिप्रं शीघ्रम्, अक्रियमाणत्वम् अननुष्ठीयमानत्वं, विलम्बेन अनुष्ठानम् इत्यर्थः, स्यादिति शेषः, कालः विलम्बरूपः इत्यर्थः, अचिरानुष्ठानोपलक्षितः समयः इति भावः, तस्य कार्य्यस्य, फलं पिबति ग्रसति, विफलयति इत्यर्थः ; विलम्बे कार्य्यहानिसम्भावना, अतस्त्वया शीघ्रमागन्तव्यमिति तात्पर्य्यम् ॥ २२० ॥

(छ) आयातस्य,—आगतस्य । हतशत्रोः,—निहतवैरिणः । निर्व्याकुलतया—निःशङ्कतया ।

(ज) आवृतत्वात्—रुद्धत्वात् । अनिःसरन्तः,—निर्गन्तुमशक्नुवन्तः । कुम्भीपाकन्यायं—कुम्भीपाकाख्यनरकपचनतुल्यदुःखमित्यर्थः । आपन्नाः,—प्राप्ताः, तत्रैव दग्धा इति भावः ।

ऽपि मेघवर्णः तमेव न्यग्रोधपादपदुर्गं जगाम। ततः सिंहासनस्थो भूत्वा सभामध्ये (झ) प्रमुदितमनाः स्थिरजीविनम् अपृच्छत्,—"तात! कथं त्वया शत्रुमध्ये गतेन एतावत्पर्य्यन्तं कालो नीतः? तदत्र कौतुकम् अस्माकं वर्त्तते, तत् कथ्यताम्। यतः,—

वरमग्नौ प्रदीप्ते तु प्रपातः पुण्यकर्मणाम्।
न चारिजनसंसर्गो मुहूर्त्तमपि सेवितः" ॥ २२१ ॥

तत् आकर्ण्य स्थिरजीवी आह,—"भद्र! (ञ) आगामिफलवाञ्छया कष्टमपि सेवको न जानाति। उक्तञ्च यतः,—

उपनतभयैर्यो यो मार्गो हितार्थकरो भवेत्
स स निपुणया बुद्ध्या सेव्यो महान् कृपणोऽपि वा।

---

(झ) प्रमुदितमनाः,—हृष्टान्तःकरणः।

वरमिति।—पुण्यकर्मणां पुण्यं पूतं, कर्म क्रिया येषां तेषां, पवित्रचरित्राणामित्यर्थः, जनानामिति शेषः, [अत्र हि विशेषणमात्रप्रयोगात् जनानामिति विशेष्यस्यापि प्रतीतिः, तथा च वामनः,—"विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ" (५म अधि० १म अ० १० सू०) इति] प्रदीप्ते प्रज्वलिते, अग्नौ अनले, प्रपातस्तु प्रपतनमपि, वरं मनाक्प्रियः, न किन्तु, मुहूर्त्तमपि क्षणमपि, ["कालाध्वनोरत्यन्तसंयोगे" (२।३।५ पा०) इति द्वितीया], सेवितः कृतः इत्यर्थः, अरिजनसंसर्गः शत्रुलोकमध्यवासः, न, वरमित्यनुषङ्गः; अनलदाहादपि अधिकमनस्तापकरः शत्रुसंसर्गः इति भावः ॥ २२१ ॥

(ञ) आगामीति।—आगामिनः,—भाविनः, फलस्य—कार्य्यस्य, शुभफलस्येत्यर्थः, वाञ्छया—प्रत्याशया। जानाति—बुध्यते, गणयति इत्यर्थः।

अत्र षड्भिः श्लोकैः पञ्चानां पाण्डवानां द्रौपद्याश्च अज्ञातवासकालिकाचारवर्णनमुखेन स्वकार्य्योद्धरणाय क्लेशकरः नीचजनाचारोऽपि सेवनीय इत्याह, उपनतेति।—उपनतम् उपस्थितं, भयं येषां तैः विपन्नैरित्यर्थः, जनैः इति शेषः, यो यो मार्गः पन्थाः, उपाय इत्यर्थः, हितार्थकरः हितकार्य्यसाधकः; यद्वा,—हितस्य क्षेमस्य, अर्थस्य धनस्य च, करः प्रदायक इत्यर्थः, भवेत्; निपुणया शोभनया, चतुरया इत्यर्थः, बुद्ध्या महान् उत्कृष्टः, कृपणोऽपि वा अधमोऽपि वा, निकृष्टोऽपि वा इत्यर्थः, स स मार्गः, सेव्यः

करिकरनिभौ ज्याऽऽघाताङ्कौ महाऽर्थविशारदौ
रचितवलयैः स्त्रीवद् बद्धौ करौ हि किरीटिना ॥ २२२॥
शक्तेनापि सदा नरेन्द्र ! विदुषा कालान्तरापेक्षिणा
वस्तव्यं खलु वाक्यवज्रविषमे क्षुद्रेऽपि पापे जने ।
दर्वीव्यग्रकरेण धूममलिनेनायासयुक्तेन च
भीमेनातिबलेन मत्स्यभवने किं नोषितं सूदवत् ?॥२२३॥

आश्रयणीयः । पोक्तमेवार्थमुदाहरणप्रदर्शनेन विशदीकरोति, करावित्यादिना ।—कि तथा हि, किरीटिना अर्जुनेन, करिकरनिभौ हस्तिशुण्डसदृशौ, ज्याऽऽघाताङ्कौ मौर्वी-किणचिह्नितौ, महाऽर्थविशारदौ विपुलार्थसाधने अभिज्ञौ इत्यर्थः, करौ बाहू, स्त्रीवत् नारीवत्, रचितवलयैः कृत्रिमकङ्कणैः, कपटेन परिहितैः वलयैः इति यावत्, बद्धौ योजितौ, अलङ्कृतौ इत्यर्थः, अज्ञातवासे विराटालये स्त्रीवेशधारिणा बभूवे इत्यर्थः ; पुरा वीरप्रधानस्य अर्जुनस्य तुच्छस्त्रीवेशधारणं युज्यत एव विपत्प्रतिकारार्थमिति भावः । अत्र सामान्यस्य भीतपुरुषसततमहत्कृपणान्यतरमार्गसेवनस्य विशेषेण किरीटिनस्त्रीजनो-चितकरबन्धनेन सोपपत्तिकत्वकरणात् विशेषेण सामान्यसमर्थनरूपोऽयमर्थान्तरन्यासः । हरिणी वृत्तम् ॥ २२२ ॥

शक्तेनेति ।—हे नरेन्द्र ! राजन् ! विदुषा विज्ञेन, शक्तेनापि समर्थेनापि, का कथा असमर्थानामित्यपिकारार्थः, कालान्तरापेक्षिणा शुभसमयप्रतीक्षमाणेन, परिणाम-हितार्थिना इत्यर्थः, तादृशेन सता, वाक्यमेव वज्रम् अतिकठोरत्वात् कुलिशोपम-मित्यर्थः, तेन विषमे दुःसहे, दुर्वाक्यप्रयोगकारिणि इत्यर्थः, क्षुद्रे नीचे, पापे दुराचारे, जनेऽपि, दुर्जनसमीपेऽपि इत्यर्थः, सदा वस्तव्यं खलु, वासः कर्त्तव्यः एव, आ-त्मकार्य-समुद्धारादिति भावः । एतदेव सोपपत्तीकरोति, दर्वीत्यादिना ।—तथा हि, अति-बलेन महाबलशालिना, भीमेन, मत्स्यभवने विराटगृहे, दर्वीव्यग्रकरेण दर्वी पाक-साधनद्रव्यविशेषः, ("हाता" इति बङ्गभाषा) तस्यां तद्ग्रहणे इति भावः, व्यग्रः व्यासक्तः, करो यस्य तादृशेन, धूममलिनेन धूमक्लिष्टेन इत्यर्थः, पाकार्थं सततं रन्धनशालाया-मवस्थानादिति भावः, आयासयुक्तेन क्लेशसहेन च सता, सूदवत् पाचकवत्, किं न उषितम् ? न स्थितम् ? अपि तु स्थितमेव इत्यर्थः ; कार्यार्थिना नीचसंसर्गोऽपि न गणनीय इति भावः । पूर्ववत् विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः । शार्दूलविक्रीडितं वृत्तम् ॥ २२३ ॥

यद्वा तद्वा विषमपतितः साधु वा गर्हितं वा
कालापेक्षी हृदयनिहितं बुद्धिमान् कर्म कुर्य्यात्।
किं गाण्डीवस्फुरदुरुघनास्फालनक्रूरपाणिः
नासील्लीलानटनविलसन् मेखली सव्यसाची? ॥२२४॥
सिद्धिं प्रार्थयता जनेन विदुषा तेजो निगृह्य स्वकं
सत्त्वोत्साहवताऽपि दैवविधिषु स्थैर्य्यं प्रकार्य्यं क्रमात्।
देवेन्द्रद्रविणेश्वरान्तकसमैरप्यन्विता भ्रातृभिः
किं क्लिष्टः सुचिरं त्रिदण्डमवहत् श्रीमान्न धर्मात्मजः? ॥२२५॥

---

प्रोक्तमेव वस्तु अपृथग्भूतेनैवार्थान्तरोपन्यसनेन भङ्ग्या सोपपत्तीकरोति, यद्वेति।—विषमे विपदि, पतितः अत एव कालापेक्षी समयं प्रतीक्षमाणः, बुद्धिमान्, जनः इति शेषः, साधु वा सतां सम्मतं वा, गर्हितम् असाधु वा, यद्वा तद्वा यत्तदेव कर्मास्तु समीचीनमसमीचीनं, हीनमहीनं वेत्यर्थः, हृदयनिहितं हृदय मनसि, निहितम् अवस्थितं, सङ्कल्पितमित्यर्थः, कर्म कुर्य्यात्; तदा सदसतोः विचारं न कुर्य्यात् इत्यर्थः। तथा हि, सव्यसाची अर्जुनः, गाण्डीवस्य स्वधनुषः, स्फुरता प्रसरता, उरुणा महता, घनेन सान्द्रेण, गम्भीरेणेत्यर्थः, आस्फालनेन अनवरतटङ्कारेण, मौर्वीयोजनेन इषुसन्धानेन च इत्यर्थः, क्रूरौ कठिनौ, पाणी यस्य तथाभूतोऽपि, मेखली काञ्चीधारी सन्, स्त्रीवेशं धृत्वा इत्यर्थः, लीलया विलासेन, यत् नटनं नर्त्तनं, ("ताण्डवं नटनं नाट्यं लास्यं नृत्यञ्च नर्त्तने" इत्यमरः) तेन विलसन् विहरन्, न आसीत्? अपि तु आसीदेव इत्यर्थः। विशेषेण सामान्यसमर्थनरूपोऽयमपि अर्थान्तरन्यासः। मन्दाक्रान्ता वृत्तम् ॥२२४॥

सिद्धिमिति।—विदुषा विचक्षणेन, सिद्धिं साफल्यं, कार्य्यस्येति शेषः, प्रार्थयता अभिलषता, [अर्थयतेः चौरादिकस्य आत्मनेपदत्वेनात्र प्रार्थयमानेनेति प्रयोगस्यैव साधुत्वं, शत्रन्तप्रयोगस्तु महाकविप्रयोगात् सहनीय एवेति] जनेन, सत्त्वोत्साहवताऽपि बलवता उत्साहिनाऽपि च इत्यर्थः, स्वकं स्वीयं, तेजः प्रभावं, निगृह्य नियम्य, अप्रकाश्य इत्यर्थः, दैवविधिषु दुर्दैवघटनासु इत्यर्थः, क्रमात् स्थैर्य्यं धैर्य्यम् इत्यर्थः, प्रकार्य्यम् आश्रयणीयम्। तथा हि,—श्रीमान् साम्राज्यलक्ष्मीसम्पन्नः, धर्मात्मजः युधिष्ठिरः, देवेन्द्रद्रविणेश्वरान्तकसमैः इन्द्रकुबेरयमतुल्यैः, विक्रमशालिभिरित्यर्थः, भ्रातृभिः भीमादिभिरित्यर्थः, अन्वितोऽपि परिवृतोऽपि, सुचिरं दीर्घकालं, क्लिष्टः विपदि

रूपाभिजनसम्पन्नौ कुन्तीपुत्रौ बलान्वितौ।
गोकर्मरक्षाव्यापारे विराटप्रेष्यतां गतौ ॥ २२६ ॥

रूपेणाप्रतिमेन यौवनगुणैः श्रेष्ठे कुले जन्मना
कान्त्या श्रीरिव याऽत्र साऽपि विदशां कालक्रमादागता।
सैरन्ध्रीति सगर्वितं युवतिभिः साक्षेपमाज्ञातया
द्रौपद्या ननु मत्स्यराजभवने घृष्टं न किं चन्दनम् ?" ॥२२७॥

पतितः सन्, त्रिदण्डं त्रयाणां दण्डानां वाङ्मनःकायसम्भूतानां क्लेशानां समाहारः त्रिदण्डं त्रिविधं दुःखमित्यर्थः, यद्वा,—त्रयाणां दण्डानां पापफलरूपाणां समाहारः त्रिदण्डं, मत्स्यराजभवने वर्षमेकमुषित्वा पापफलमित्यर्थः, किं न अवहत्? अपि तु ब्राह्मणाक्षक्रीडाकरव्याजेन स्वमाहात्म्ये प्रभावं प्रच्छाद्य विराटराजभवने अवसत् इत्यर्थः। अत्रापि अर्थान्तरन्यासोऽलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥२२५॥

रूपेति।—रूपाभिजनसम्पन्नौ परमरूपवन्तौ महाकुलप्रसूतौ च, बलान्वितौ महाबलौ, कुन्तीपुत्रौ नकुलसहदेवौ, [ माद्रीपुत्राविति च पाठः ] गोकर्मरक्षाव्यापारे गवां पशूनां, ("स्वर्गेषुपशुवाग्वज्र·········। रश्म्यदृष्ट्या स्त्रियां पुंसि गौः॥" इत्यमरः) कर्मणि गोपालकाश्वपालकसाध्ये सेवाकार्ये, तथा रक्षाव्यापारे तेषां पालनकर्मणि च, तेभ्यः यथेच्छं भोजनादिकं दत्त्वा, तान् सततं विघ्नेभ्यः संरक्ष्य चेत्यर्थः; ( यद्यपि विराटराजभवने माद्रीसुतौ सौरभेयीणां रक्षणे अश्वसंरक्षणे च पृथक्तया नियुक्तौ आस्तां, तथाऽप्यत्र गोशब्दस्य पशुमात्रवाचकत्वेन वस्तुगतिमनुसृत्य यथास्थिते भारतनिर्दिष्टे कर्मण्येव तौ नियुक्तावभवतामित्येवार्थोऽस्तीति ज्ञेयम् ) विराटस्य प्रेष्यतां दासत्वं, गतौ प्राप्तौ; विपत्प्रतिकारेच्छुभिः किमपि अकार्यं न गणनीयम् इति भावः। पथ्यावक्त्रं वृत्तम्;—"युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्तितम्" इति लक्षणात् ॥ २२६ ॥

रूपेणेति।—अत्र जगति, या अप्रतिमेन निरुपमेण, रूपेण, यौवनगुणैः यौवनेन चिरस्थिरेणेति भावः, गुणैर्दयादाक्षिण्यादिभिश्च, श्रेष्ठे महति, कुले वंशे, जन्मना उत्पत्त्या, तथा कान्त्या लावण्येन च, एतैः करणैरित्यर्थः, श्रीरिव लक्ष्मीरिव, आसीदिति शेषः, सा द्रौपद्यपीत्यर्थः, तादृग्रूपादिसम्पन्नाऽपि वर्तमानाऽपीति भावः, कालक्रमात् दुःसमयवशात्, विदशां विपरीतावस्थाम्, आगता प्राप्ता। एतदेव स्पष्टीकर्तुं पुनराह, सैरन्ध्रीति।—ननु तदा हि, युवतिभिः कामिनीभिः, मत्स्यराजाङ्गनाभिः इत्यर्थः,

मेघवर्ण आह,—"तात! (ट) असिधाराव्रतमिदं मन्ये, यत् अरिणा सह संवासः"। सोऽब्रवीत्,—"देव! एवमेतत्; परं न तादृमूर्खसमागमः क्वापि मया दृष्टः; न च (ठ) महाप्राज्ञम् अनेकशास्त्रेषु अप्रतिमबुद्धिं रक्ताक्षं विना धीमान्; यत्कारणं, तेन मदीयं यथाऽवस्थितं चित्तं ज्ञातम्। ये पुनः अन्ये मन्त्रिणः, ते महामूर्खाः (ड) मन्त्रिमात्रव्यपदेशोपजीविनोऽतत्त्वकुशलाः, यैः इदमपि न ज्ञातम्। यतः,—

अरितोऽभ्यागतो भृत्यो दुष्टस्तत्सङ्गतत्परः।
अपसर्प्य सधर्मत्वान्नित्योद्वेगी च दूषितः॥ २२८॥

सैरिन्ध्रीति परगृहस्था स्वाधीना शिल्पकारिणीति, ("सैरिन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका" इत्यमरः) सगर्वितं साहङ्कारं, साक्षेपं सतिरस्कारं, वचनम् उक्त्वा इति शेषः, अज्ञातया प्रच्छन्नया, द्रौपद्या द्रुपदराजतनयया, मत्स्यराजभवने मत्स्यराजस्य विराटस्य, भवने गृहे, चन्दनं किं न घृष्टम्? न मर्दितम्? अपि तु घृष्टमेवेत्यर्थः; दुर्दैववशात् महाकुलप्रसूता रूपगुणशालिनी मनस्विनी अपि विपन्ना भूत्वा नीचकर्म आश्रयति इति भावः। शार्दूलविक्रीडितं वृत्तम्॥ २२७॥

(ट) असिधाराव्रतम्—असिधारोपरि स्थितावस्थमेव यथा शरीरच्छेदः सञ्जायते इति निश्चयः, तथैव शत्रुसहवासे मृत्युः सुनिश्चितः, सावधानावस्थितावपि शरीरकर्त्तनवत् मृत्युः कथमपि परिहर्त्तुमशक्य एवेति भावः; यद्वा,—तदाख्यं यत् व्रतं नियमः; तद्यथा,—"युवा युवत्या सार्द्धं यन्मुग्धभर्तृवदाचरेत्। अन्तर्निवृत्तसङ्गः स्यादसिधाराव्रतं हि तत्॥" इति। घोरविकृतिकारणे सत्यपि अविकृतभावेन स्थितिरिति फलितार्थः।

(ठ) महाप्राज्ञं—सुपण्डितम्। अप्रतिमबुद्धिम्—अतुलनीयज्ञानम्, अकुण्ठितधियमित्यर्थः। धीमान्—बुद्धिमान्, दृष्ट इति पूर्वेणान्वयः।

(ड) मन्त्रीति।—मन्त्रिमात्रमेव व्यपदेशः,—आख्या, तेन उपजीवन्ति इति तथोक्ताः, नाममात्रेण मन्त्रिण इत्यर्थः। अतत्त्वकुशलाः,—अतत्त्वविदः, नीतिशास्त्रस्य मर्मानभिज्ञा इत्यर्थः।

इदानीं भृत्यानां दूषकतामभिधत्ते, अरित इति।—अपसर्प्यं गूढं चारकर्म कीदृश इत्यर्थः, अरितः शत्रुसकाशात्, अभ्यागतः उपस्थितः, तथा तत्सङ्गतत्परः तस्य

आसने शयने याने पानभोजनवस्तुषु ।
दृष्टादृष्टप्रमत्तेषु प्रहरन्त्यरयोऽरिषु ॥ २२९ ॥
तस्मात् सर्वप्रयत्नेन त्रिवर्गनिलयं बुधः ।
आत्मानमादृतो रक्षेत् प्रमादाद्धि विनश्यति ॥ २३० ॥

साधु चेदमुच्यते,—

सन्तापयन्ति कमपथ्यभुजं न रोगाः ?
दुर्मन्त्रिणं कमुपयान्ति न नीतिदोषाः ? ।

---

शठः, सङ्गे सहवासे, तत्परः तत्कोटाभिलाषी, तत्सहवाससुखमाकाङ्क्षन् इत्यर्थः, भृत्यः भृत्योचितं कर्म कर्तुं सततमीहमानः अनुचर इत्यर्थः, न तु तात्त्विकः भृत्य इति भावः, दुष्टः दुर्जनः, तथा सधर्मत्वात् समानो धर्मः येषां तेषां भावः तस्मात्, भार्यया तुल्यधर्मवत्त्वादित्यर्थः, गृहप्रविष्टवत् कार्यकरणादिति भावः, नित्योद्वेगी च सततम् उद्वेगकारकः, नियतं भीतिजनकः इति भावः; मन्तव्य इति शेषः, अतः तथाविधः भृत्यः दूषितः निन्दितः, नीतिविद्भिरिति शेषः, सुगमं चारकर्म कर्तुं शत्रु-सकाशादुपस्थिताः तथा तत्सङ्गकाङ्क्षिणश्च भृत्या दुष्टा नित्योद्वेगकराश्च, यत एते भृत्यपाशाः चारसधर्माण एव, ततः न कदाचिदेते विश्वासभूमयः इति भावः ॥२२८॥

कदा ते भृत्यपाशाः स्वप्रभुकार्य्यं साधयन्ति, तदेवाह, आसने इति ।—अरयः शत्रवः, आसने अवस्थानसमये, शयने निद्रावस्थायां, याने गमने, पानभोजनवस्तुषु पानभोजनव्यापारेषु, दृष्टादृष्टप्रमत्तेषु दृष्टेषु अदृष्टेषु प्रमत्तेषु अनवहितेषु च इत्यर्थः, अरिषु शत्रुषु, प्रहरन्ति; तद्भृत्यसाहाय्येन इति शेषः, शत्रुनिर्यातनस्य येन केनाप्युपायेन सर्वथा कर्त्तव्यत्वात्, ते हि नानाविधच्छलेन नानासमये स्वभृत्यैः गुप्तहत्यां समाचरन्तीति भावः ॥ २२९ ॥

एवञ्च सति कथमात्मा संरक्षणीयः ? इत्याशङ्कायां तत्प्रतीकारमुपदिशति, तस्मादिति ।—तस्मात् कारणात्, बुधः पण्डितः, आदृतः [आदृतम् आदरः अस्यास्तीति "अर्श आदिभ्यः अच्" ( ५।२।१२७ पा० ) इत्यच्प्रत्यये रूपम् ] यत्नवान् सन्, अवहितः सन् इत्यर्थः, त्रिवर्गनिलयं धर्मार्थकामाश्रयम्, आत्मानं स्वं, सर्वप्रयत्नेन सर्वप्रकारेण, रक्षेत्; हि यतः, प्रमादात् अनवधानात्, विनश्यति विनाशं प्राप्नोति, आत्मा इति शेषः; सर्वात्मना प्रमादो हातव्य इति भावः ॥ २३० ॥

सन्तापयन्तीति ।—रोगाः व्याधयः, कम् अपथ्यभुजं पथ्योऽनपेतं पथ्यं, ["धर्म-

कं श्रीर्न दर्पयति ? कं न निहन्ति मृत्युः ?
कं स्त्रीकृता न विषयाः परिपीडयन्ति ? ॥ २११ ॥
लुब्धस्य नश्यति यशः पिशुनस्य मैत्री
नष्टक्रियस्य कुलमर्थपरस्य धर्मः ।
विद्याफलं व्यसनिनः कृपणस्य सौख्यं
राज्यं प्रमत्तसचिवस्य नराधिपस्य ॥ २१२ ॥

पथ्यर्थन्यायादनपेते" ( ४।४।९२ पा० ) इति सूत्रेण यत्प्रत्ययः ] न पथ्यम् अपथ्यं, तत् भुङ्क्ते इति अपथ्यभुक् तम् अपथ्यसेविनं, न सन्तापयन्ति ? न पीडयन्ति ? अपि तु सर्वमेव इत्यर्थः ; अपथ्याशिनः खलु सततमेव रोगैः सन्तप्ता भवन्तीति भावः ; नीतिदोषाः दुर्नीतयः, कं दुर्मन्त्रिणं कुत्सितः मन्त्री तादृशं, न तपयन्ति ? न प्राप्नुवन्ति ? अपि तु सर्वमेव इत्यर्थः ; कुसचिवाः खलु सततं दुर्नीतिपरायणा भवन्ति इति भावः ; श्रीर्लक्ष्मीः, सम्पदित्यर्थः, कं जनं, न दर्पयति ? साहङ्कारं न करोति ? [ दर्पयतीति दर्पशब्दात् मतुप्, ततो दर्पवन्तं करोतीति णिच्, णाविष्ठवद्भावे "विन्मतोर्लुक्" ( ५।३।६५ पा०) इति सूत्रेण मतुपो लोपेन सिद्धम् ] यद्वा,—दर्पयति ? अहङ्कारयति, अहङ्कृतं कारयतीत्यर्थः ; [ दृप्यतेः णिचि लटि रूपम्, अकर्मकधातुयोगात् "कम्" इत्यस्य अणिकर्तुः "गतिबुद्धि—" ( १।४।५२ पा० ) इति कर्मत्वञ्चेति ज्ञेयम् ] अपि तु सर्वमेव दर्पयति इत्यर्थः ; गर्वितानि भवन्ति खलु चेतांसि ऐश्वर्यमदमत्तानामिति भावः ; मृत्युः अन्तकः, कं जनं, न निहन्ति ? न नाशयति ? अपि तु सर्वमेव इत्यर्थः ; सर्वेषां मरणम् अवश्यम्भावीति भावः ; स्त्रीकृताः स्त्रीघटिताः, विषयाः व्यापाराः, कं जनं, न परिपीडयन्ति ? न व्यथयन्ति ? अपि तु सर्वे एव स्त्रीभोगासक्ताः सन्तापिन एव इति भावः । वसन्ततिलकं वृत्तम् ॥ २११ ॥

लुब्धस्येति ।—लुब्धस्य लोभपरस्य, जनस्य इति शेषः, यशः कीर्तिः, नश्यति विलुप्तं भवति, पिशुनस्य खलस्य, दुर्जनस्य इत्यर्थः, मैत्री प्रणय इत्यर्थः, नश्यतीति पूर्वेणान्वयः ; एवं सर्वत्र ; नष्टक्रियस्य भ्रष्टाचारस्य, कुलं वंशः ; अर्थपरस्य सततं धनचिन्तापरायणस्य, धर्मः ; व्यसनिनः कामाद्यासक्तस्य, विद्याफलम् ; कृपणस्य व्ययकुण्ठस्य जनस्य, सौख्यम् ; तथा प्रमत्ता अनवहिताः, सचिवाः अमात्याः यस्य तथाविधस्य, नराधिपस्य राज्ञः, राज्यं राष्ट्रं, नश्यतीति पूर्वेणान्वयः ; न खलु लुब्धादिभिः यश आदि लब्धुं शक्यते, अनुदारादिप्रकृतिकत्वात् इति भावः । वसन्ततिलकं वृत्तम् ॥ २१२ ॥

तत् राजन्! असिधाराव्रतं मया (ढ) आचरितम् परिसंसर्गात्, इति यद्भवता उक्तं, तन्मया साक्षात् एवानुभूतम्। उक्तञ्च,—

> अपमानं पुरस्कृत्य मानं कृत्वा तु पृष्ठतः।
> स्वार्थमभ्युद्धरेत् प्राज्ञः स्वार्थभ्रंशो हि मूर्खता ॥ २१३ ॥
> स्कन्धेनापि वहेच्छत्रुं कालमासाद्य बुद्धिमान्।
> महता कृष्णसर्पेण मण्डूका बहवो हताः" ॥ २१४ ॥

मेघवर्ण आह,—"कथमेतत्?" स्थिरजीवी कथयति,—

## कथा १६।

"अस्ति वरुणाद्रिसमीपे एकस्मिन् प्रदेशे (ण) परिणतवयाः मन्दविषो नाम कृष्णसर्पः। स एवं चित्ते सञ्चिन्तितवान्,—'कथं नाम मया (त) सुखोपायवृत्त्या वर्त्तितव्यम्?' इति।

---

(ढ) आचरितम्—अनुष्ठितम्। परिसंसर्गात्—शत्रुसम्पर्कात्। साक्षात् एव अनुभूतं—स्वयमेवानुभूतम् इत्यर्थः।

अपमानमिति।—प्राज्ञः पण्डितो जनः, अपमानम् अवज्ञां, निन्दामित्यर्थः, पुरस्कृत्य अग्रतः कृत्वा, स्वीकृत्येति यावत्, मानं सम्मानं, तु पृष्ठतः पश्चात्, कृत्वा न स्वीकृत्य इत्यर्थः, मानापमाने अविगणय्येति भावः, स्वार्थं स्वकार्य्यम्, अभ्युद्धरेत् साधयेत्; हि यतः, स्वार्थभ्रंशः स्वकार्य्यहानिः, मूर्खता अविवेकसूचिका वालिशता इत्यर्थः ॥ २१३ ॥

स्कन्धेनेति।—बुद्धिमान् विचक्षणः जनः, कालं दुःसमयमिति यावत्, आसाद्य प्राप्य, विपन्नो भूत्वा इत्यर्थः, स्कन्धेनापि अंसेनापि, शत्रुं वहेत् नयेत्; विपत्तावशेभिर्नत सुसमयं समपेक्ष्येति भावः। अत्रानुरूपमुदाहरणं प्रदर्शयितुमुपाख्यानान्तरं प्रस्तौति, महतेति।—महता विशालेन, कृष्णसर्पेण कालाहिना, तीव्रविषधरेण इत्यर्थः, बहवः मण्डूकाः भेकाः, हताः मारिताः। ["हताः" इत्यत्र "यथा" इति पाठान्तरम्] ॥२१४॥

(ण) परिणतवयाः,—स्थविरः।

(त) सुखोपायवृत्त्या—अनायासलभ्यजीविकया। वर्त्तितव्यं—स्थातव्यं, जीवितव्यम् इत्यर्थः।

ततो बहुमण्डूकं ह्रदम् उपगम्य (थ) धृतिपरीतमिव आत्मानं दर्शितवान्। अथ तथा स्थिते तस्मिन्, उदकप्रान्तगतेन एकेन मण्डूकेन पृष्टः,—(द) 'माम! किमद्य यथापूर्वम् आहारार्थं न विहरसि?' सोऽब्रवीत्—'भद्र! कुतो मे मन्दभाग्यस्य आहाराभिलाषः? यत्कारणम्, अद्य (ध) प्रदोषे एव मया आहारार्थं (न) विहरमाणेन दृष्ट एको मण्डूकः, तद्ग्रहणार्थं मया क्रमः सज्जितः। सोऽपि मां दृष्ट्वा मृत्युभयेन (प) स्वाध्यायप्रसक्तानां ब्राह्मणानाम् अन्तरमपक्रान्तः, न विभावितो मया क्वापि गतः। (फ) तत्सदृशमोहितचित्तेन मया कस्यचित् ब्राह्मणस्य सूनोः ह्रदतटजलान्तःस्थोऽङ्गुष्ठो दष्टः। ततोऽसौ (ब) सपदि पञ्चत्वमुपागतः। अथ तस्य पित्रा दुःखितेन अहं (भ) शप्तः, यथा,—'दुरात्मन्! त्वया निरपराधो मत्सुतो दष्टः, तत् अनेन दोषेण त्वं मण्डूकानां वाहनं भविष्यसि, तत्प्रसादलब्धजीविकया

---

(थ) धृतिपरीतमिव—धैर्यावष्टब्धमिव, वैराग्यापन्नमिवेत्यर्थः।

(द) माम!—मातुल!।

(ध) प्रदोषे—सायंसन्ध्यायां, रजनीमुखे इत्यर्थः।

(न) विहरमाणेन—विचरता। क्रमः,—परिकरः, आक्रमणोपक्रम इत्यर्थः। सज्जितः,—बद्धः, कृतः इत्यर्थः।

(प) स्वाध्यायप्रसक्तानां—वेदपाठरतानां, सन्ध्यासमुपासनाप्रवृत्तानामित्यर्थः। अन्तरमपक्रान्तः,—अभ्यन्तरं प्रविष्टः, मध्ये पलायित इत्यर्थः। विभावितः,—लक्षितः।

(फ) तदिति।—तस्य—मण्डूकस्य, सदृशे—अनुरूपे, ब्राह्मणसूनोरङ्गुष्ठे इत्यर्थः, मोहितं—भ्रान्तिं गतं, मण्डूकभिन्नेऽपि तस्मिन् मण्डूकबुद्धिमागतमित्यर्थः, चित्तं यस्य तादृशेन। सूनोः,—पुत्रस्य, सन्ध्यासमुपासनारतस्य इति यावत्। ह्रदतटेति।—कासारतीरसमीपजलमध्यवर्ती।

(ब) सपदि—तत्क्षणात्, दंशनमात्रेण इत्यर्थः, [अव्ययमेतत्]।

(भ) शप्तः,—आक्रुष्टः, अभिशापेन योजितः इत्यर्थः।

(म)वर्त्तिष्यसे' इति। ततोऽहं युष्माकं वाहनार्थम् आगतोऽस्मि'। तेन च सर्वमण्डूकानाम् इदमावेदितम्। ततः तैः प्रहृष्टमनोभिः सर्वैरेव गत्वा जलपादनाम्नः(य)दर्दुरराजस्य विज्ञप्तम्। अथ असौ अपि मन्त्रिपरिवृतः 'अत्यद्भुतम् इदम्' इति मन्यमानः, (र) ससम्भ्रमं ह्रदात् उत्तीर्य्य मन्दविषस्य फणिनः फणाप्रदेशम् अधिरूढः। शेषा अपि (ल) यथाज्येष्ठं तत्पृष्ठोपरि समारुरुहुः; किं बहुना? तदुपरि स्थानमप्राप्नुवन्तः तस्य (व) अनुपदं धावन्ति। मन्दविषोऽपि तेषां तुष्ट्यर्थम् अनेकप्रकारान् गतिविशेषान् अदर्शयत्। अथ जलपादो लब्धतदङ्गसंस्पर्शसुखः तमाह,—

'न तथा करिणा यानं तुरगेण रथेन वा।
नरयानेन वा यानं यथा मन्दविषेण मे' ॥ २१५ ॥

अथ अन्येद्युः मन्दविषः (श) छद्मना मन्दं मन्दं विसर्पति। तञ्च दृष्ट्वा जलपादोऽब्रवीत्,—'भद्र मन्दविष! यथापूर्वं

(म) वर्त्तिष्यसे—जीविष्यसि [ परस्मैपदे तु "वर्त्स्यसि" इत्यपि। "वृत्तिर्वर्त्तनजीवने" इत्यमरः ]।

(य) दर्दुरराजस्य—मण्डूकाधिपतेः, [दर्दुराणां राजा इति समासे "राजाहःसखिभ्यष्टच्" (५।४।९१ पा०) इति टच्प्रत्ययः]। विज्ञप्तं—विशेषेण निवेदितम्; [ ज्ञाधातोः णिचि क्तप्रत्यये "वा दान्तशान्त" (७।२।२७ पा०) इत्यनेन निपातनात् विज्ञप्तमिति सिद्धम्; पक्षे च विज्ञापितमिति ]।

(र) ससम्भ्रमं—सत्वरं, ("सम्भ्रमस्त्वरा" इत्यमरः)।

(ल) यथाज्येष्ठं—यथाप्रधानं, प्रधानानुक्रमेण इत्यर्थः।

(व) अनुपदं—पदस्य पश्चात्, पृष्ठत इत्यर्थः।

नेति।—मन्दविषेण तदाश्लेषेण सर्पणेनैव, यथा यादृशं, सुखकरमिति भावः, मे मम, यानं गमनं, भवतीति शेषः, करिणा हस्तिना, तुरगेण अश्वेन, रथेन वा शकटेनापि, नरयानेन वा शिविकया च, तथा यानं गमनं, न, भवतीति शेषः, अनल्पसुखसमेतम् यानम् इत्यर्थः॥ २१५॥

(श) छद्मना—छलेन। विसर्पति—गच्छति।

किम् अद्य साधु न वह्यते ?' मन्दविषोऽब्रवीत्—'देव ! अद्य (घ) आहारवैकल्यात् न मे वोढुं शक्तिरस्ति'। अथ असौ अब्रवीत्,—'भद्र ! भक्षय क्षुद्रमण्डूकान्'। तत् श्रुत्वा (ङ) प्रहर्षितसर्वगात्रो मन्दविषः ससम्भ्रमम् अब्रवीत्,—'मम अयमेव विप्रशापोऽस्ति। तत् तव अनेन (च) अनुज्ञावचनेन प्रीतोऽस्मि'। ततोऽसौ (छ) नैरन्तर्य्येण मण्डूकान् भक्षयन् कतिपयैः एवाहोभिः बलवान् संवृत्तः; प्रहृष्टश्च अन्तर्लीनम् अवहस्य इदमब्रवीत्,—

'मण्डूका विविधा ह्येते छलपूर्वोपसाधिताः।
कियन्तं कालमक्षीणा भवेयुः खादिता मया ?' ॥ २२६ ॥

जलपादोऽपि मन्दविषेण (ज) कृतकवचनव्यामोहितचित्तः किमपि न अवबुध्यते। अत्रान्तरेऽन्यो महाकायः कृष्णसर्पः तमुद्देशं समायातः। तञ्च मण्डूकैः वाह्यमानं दृष्ट्वा विस्मयम्

(घ) आहारवैकल्यात्—भोजनव्याघातात्, भोजनाभावात् इत्यर्थः। वोढुं—वहनं कर्तुम्।

(ङ) प्रहर्षितेति।—उत्फुल्लसर्वाङ्गः।

(च) अनुज्ञावचनेन—आदेशवाक्येन।

(छ) नैरन्तर्य्येण—सततमित्यर्थः। अन्तर्लीनं—निगूढम्, अप्रकाशमित्यर्थः। अवहस्य—मृदु हसित्वा।

मण्डूका इति।—छलपूर्वोपसाधिताः छलपूर्वं चापल्येन इत्यर्थः, उपसाधिताः वशीकृताः, मिथ्याशापवृत्तान्तवर्णनेन स्वपृष्ठमारोपिता इति भावः, मयेति शेषः, विविधाः बहुप्रकाराः, एते मण्डूकाः भेकाः, मया खादिताः भक्षिताः, कियन्तं कालं कियत्कालं व्याप्य, [अत्यन्तसंयोगे द्वितीया], अक्षीणाः अपरिक्षिताः, भवेयुः किं ? तिष्ठेयुः ? नैव बहुदिनम् अक्षीणास्तिष्ठेयुरित्यर्थः, सत्वरमेव एते क्षयं गमिष्यन्तीति भावः ॥२२६॥

(ज) कृतकेति।—कृतकं—कपटं, यत् वचनं, तेन व्यामोहितं—विमुग्धं, अमोपहितमित्यर्थः, चित्तं यस्य तथाभूतः।

अगमत्, प्राह च,—'वयस्य! यत् अस्माकम् (ग) अशनं, तैः कथं वाह्यसे? विरुद्धमेतत्'। मन्दविषोऽब्रवीत्,—

'सर्वमेतद्विजानामि यथा वाह्योऽस्मि दर्दुरैः।
किञ्चित् कालं प्रतीक्ष्योऽहं घृतान्धो ब्राह्मणो यथा' ॥२१७॥

सोऽब्रवीत्,—'कथमेतत्?' मन्दविषः कथयति,—

## कथा १७।

'अस्ति कस्मिंश्चित् अधिष्ठाने यज्ञदत्तो नाम ब्राह्मणः। तस्य भार्य्या (घ) पुंश्चली अन्यासक्तमना अजस्रं विटाय सखण्डघृतान् घृतपूरान् कृत्वा भर्त्तुश्चौरिकया प्रयच्छति।

---

(ग) अशनं—भोजनं, खाद्यमित्यर्थः।

सर्वमिति।—दर्दुरैः भेकैः, अस्मद्भक्ष्यभूतैरिति भावः, यथा येनैव हेतुना, वाह्यः नीयमानः, भेकानां वाहनभूतः इत्यर्थः, जातः भवामि, अहमिति शेषः, यथा अहं भेकान् वहामीदानीमित्यर्थः, एतत् सर्वं विजानामि विशेषेण वेद्मि; कालक्रमानतिक्रमणीयत्वात् सर्वमधुना सहे इति भावः; किन्तु घृतान्धः घृतेन घृतसंस्कृतद्रव्यभक्षणेन, अन्धः नेत्राभ्यां हीनः, छलेन आत्मानम् अन्धवत् प्रकाशमान इति यावत्, ब्राह्मणः यथा किञ्चित् कालम् अपेक्षिष्ट इति शेषः, अहं तथा प्रतीक्ष्यः प्रतिपालनीयः, अपेक्षणीय इत्यर्थः, त्वयेति शेषः; कथमहमीदृक् गर्हितमाचरामि, तत्तु कियत्कालानन्तरमेव व्यक्तीभविष्यतीति भावः॥ २१७ ॥

(घ) पुंश्चली—[ पुंसः पत्युः सकाशात्, चलति पुरुषान्तरार्थं गच्छति वा इति व्युत्पत्त्या, पुंसः चलतेः कर्त्तरि अच् प्रत्ययः ङीष् च, ] कुलटा इत्यर्थः। अन्यासक्तमनाः,—अन्यस्मिन् पुरुषे अनुरक्तचित्ता। अजस्रं—निरन्तरम्। विटाय—जाराय। सखण्डघृतान्—गुड़घृतसहितान्। घृतपूरान्—तदाख्यपिष्टकविशेषान्। भर्त्तुः,—भर्त्तारमनादृत्य इत्यर्थः, [ अनादरे षष्ठी ] भर्त्तारमप्यदत्त्वेति फलितार्थः। चौरिकया—तस्करसुलभक्रियया, सततं गोपायित्वा इत्यर्थः, भर्त्तुरसमक्षमेवेति यावत्; यद्वा—भर्त्तुः चौरिकया भर्त्तुरपह्नुत्य, भर्त्ता यथा तं न पश्यति, तथा कृत्वेति यावत्, ["अन्तर्द्धौ—" ( १।४।२८ पा० ) इत्यात्मादर्शनकर्त्तृत्वेनेष्टस्य भर्त्तुरपादानत्वात् पञ्चमी ]।

अथ कदाचित् भर्त्ता दृष्ट्वा अब्रवीत्,—'भद्रे ! किमेतत् परिदृश्यते ? कुत्र वा अजस्रं नयसि इदम् ? कथय सत्यम्'। सा च (ङ) उत्पन्नप्रतिभा कृतकवचनैः भर्त्तारम् अब्रवीत्,—'अस्ति अत्र नातिदूरे भगवत्या देव्या आयतनं, तत्र अहमुपोषिता सती बलिं भक्ष्यविशेषांश्च अपूर्वान् नयामि'। अथ (च) तस्य पश्यतो गृहीत्वा तत् सकलं देव्यायतनाभिमुखी प्रतस्थे, यत्कारणं, देव्या निवेदितेन अनेन मदीयो भर्त्तैवं मंस्यते यत्, 'मम ब्राह्मणी भगवत्याः कृते भक्ष्यविशेषान् नित्यमेव नयति' इति। अथ देव्यायतने गत्वा स्नानार्थं नद्याम् अवतीर्य्य यावत् स्नानक्रियां करोति, तावत् भर्त्ता मार्गान्तरेण आगत्य देव्याः पृष्ठतोऽदृश्यः (छ) अवतस्थे।

अथ सा ब्राह्मणी स्नात्वा देव्यायतनम् आगत्य स्नानानुलेपनमाल्यधूपबलिक्रियादिकं कृत्वा देवीं प्रणम्य व्यजिज्ञपत्,—'भगवति ! केन प्रकारेण मम भर्त्ता अन्धो भविष्यति ?' तत् श्रुत्वा (ज) स्वरभेदेन देवीपृष्ठस्थितो ब्राह्मणो जगाद,—'यदि त्वम् अजस्रं घृतपूरादिभक्ष्यं तस्मै भर्त्त्रे प्रयच्छसि, ततः शीघ्रमन्धो भविष्यति'। सा तु (झ) बन्धकी कृतकवचनवञ्चितमानसा तस्मै ब्राह्मणाय तदेव नित्यं प्रददौ। अथ अन्येद्युः

(ङ) उत्पन्नप्रतिभा—प्रत्युत्पन्नमतिः, समयोचितसुविशदबुद्धिरित्यर्थः। कृतकवचनैः—कृत्रिमवाक्यैः, कल्पितवचोभिरिति यावत्। अपूर्वान्—अभिनवान्।

(च) तस्य पश्यतः,—पश्यन्तं तं पतिमनादृत्य इत्यर्थः, ["षष्ठी चानादरे" (२।३।३८ पा०) इति षष्ठी]। मंस्यते—भोत्स्यते, अवगमिष्यति इत्यर्थः।

(छ) अवतस्थे—स्थितः, ["समवप्रविभ्यः स्थः" (१।३।२२ पा०) इत्यात्मनेपदम्]।

(ज) स्वरभेदेन—भिन्नस्वरं विधाय, स्वं स्वरं विकृत्य इत्यर्थः।

(झ) बन्धकी—कुलटा।

ब्राह्मणेन अभिहितं,—'भद्रे ! नाहं (ञ) सुतरां पश्यामि'। तत् श्रुत्वा चिन्तितम् अनया,—'दैव्याः प्रसादोऽयं प्राप्तः' इति।

अथ तस्याः (ट) हृदयवल्लभो विटस्तत्सकाशम् 'अन्धीभूतोऽयं ब्राह्मणः किं मम करिष्यति ?' इति निःशङ्कः प्रतिदिवसमभ्येति। अथ अन्येद्युस्तं प्रविशन्तम् (ठ) अभ्यासगतं दृष्ट्वा केशेषु गृहीत्वा लगुड़पार्ष्णिप्रभृतिप्रहारैः तावत् अताड़यत्, यावत् असौ पञ्चत्वमाप; तामपि दुष्टपत्नीं छिन्ननासिकां कृत्वा विससर्ज। अतोऽहं ब्रवीमि,—'सर्वमेतद्विजानामि' इत्यादि'।

अथ मन्दविषोऽन्तर्लीनम् अवहस्य पुनरपि 'मण्डूका विविधा ह्येते' इति तमेवम् अब्रवीत्। अथ जलपादः तत् श्रुत्वा सुतरां (ड) व्यग्रहृदयः 'किमनेन अभिहितम् ?' इति सम्यक् नावगम्य तम् अपृच्छत्,—'भद्र ! किं त्वया अभिहितम् इदं विरुद्धं वचः ?' अथ असौ (ढ) आकारप्रच्छादनार्थं 'न किञ्चित्' इति अब्रवीत्। तथैव कृतकवचनव्यामोहितचित्तो जलपादः तस्य (ण) दुष्टाभिसन्धिं न अवबुध्यते; किं बहुना ? तथा तेन सर्वेऽपि भक्षिताः, यथा बीजमात्रमपि न अवशिष्टम्। अतोऽहं ब्रवीमि,—'स्कन्धेनापि वहेच्छत्रुम्' इत्यादि।

(ञ) सुतराम्—अतिमात्रम्।

(ट) हृदयवल्लभः,—मनःप्रियः।

(ठ) अभ्यासगत—समीपस्थम्; ("समीपे निकटासन्न···। सदेशाभ्यास···॥" इत्यमरः)। केशेषु इति—[ अवच्छेदे सप्तमी ]। गृहीत्वा—बलवदाकृष्येत्यर्थः। लगुड़ेति।—लगुडः,—दण्डः, पार्ष्णिः,—गुल्फस्य अधोभागः, ("गोड़ालि" इति बङ्गभाषा) तौ एव प्रभृती—आदिभूतौ येषां तैः ये प्रहाराः,—ताड़नानि तैरित्यर्थः।

(ड) व्यग्रहृदयः,—व्याकुलाऽऽत्मा, व्यस्तचित्त इत्यर्थः। अभिहितम्—उक्तम्।

(ढ) आकारप्रच्छादनार्थं—भावगोपनार्थम्।

(ण) दुष्टाभिसन्धिं—दुष्टमाशयम्। बीजमात्रम्—अङ्कुरकारणं, पुनरुत्पत्तिसम्भावनाऽपीत्यर्थः।

अथ राजन्! यथा मन्दविषेण बुद्धिबलेन मण्डूका निहताः, तथा मयाऽपि सर्वे वैरिण इति। साधु चेदमुच्यते,—

वने प्रज्वलितो वह्निर्दहन् मूलानि रक्षति।
स मूलोन्मूलनं कुर्याद्वायुर्यो मृदुशीतलः" ॥ २२८ ॥

मेघवर्ण आह,—"तात! सत्यमेवैतत्, ये महात्मानो भवन्ति, ते महासत्त्वा आपद्गता अपि (त) प्रारब्धं न सर्जन्ति। उक्तञ्च यतः,—

महत्त्वमेतन्महतां नयालङ्कारधारिणाम्।
न मुञ्चन्ति यदारब्धं कृच्छ्रेऽपि व्यसनोदये ॥ २२९ ॥

तथा च,—प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः।

प्रायशः सर्वत्र सुतीक्ष्णभावात् मार्दवमेव कार्यसाधकम् इत्यावेदयितुमनुरूपमुदाहरणमाह, वने इति।—वने प्रज्वलितः प्रदीप्तः, वह्निः अनलः, दहन्, अपिकारोऽत्र अध्याहरणीयः, वनमिति शेषः, मूलानि, वृक्षाणामिति शेषः, रक्षति, दग्धानां वृक्षाणां मूलानि नाशयितुं न शक्नोतीति भावः; किन्तु यः वायुः मृदुशीतलः मन्दवहनशीलः अनुष्णश्च, सः, अपिरत्राप्यध्याहार्यः, सोऽपीत्यर्थः, मूलोन्मूलनं मूलोत्पाटनं, वृक्षाणामिति शेषः, कुर्यात्, येन पुनर्न प्ररोहेदिति भावः ॥२२८॥

(त) प्रारब्धम्—आरब्धकार्यम्। सर्जन्ति—सृजन्ति, त्यजन्ति इत्यर्थः, [धातूनामनेकार्थत्वात् अर्जनार्थस्यापि भौवादिकस्य सर्जधातोः त्यागार्थत्वम् अवधेयम्]।

महापुरुषाध्यवसायमाह, महत्त्वमिति।—नयः नीतिः एव, अलङ्कारः भूषणं, तं धरन्तीति तथोक्तानां नीतिविदामित्यर्थः, महतां महात्मनाम्, एतत् एव महत्त्वं महिमा, यत् कृच्छ्रे अतिकष्टजनके, व्यसनोदये विपदागमे सत्यपि, आरब्धम् उपक्रान्तं, कार्यमिति शेषः, न मुञ्चन्ति न त्यजन्ति, आ फलोदयात् ते हि कर्म कुर्वन्ति इत्याशयः; स्थिरसङ्कल्पा हि महान्तः इति भावः ॥ २२९ ॥

उत्तममध्यमाधमानां तारतम्यं प्रदर्शयति, प्रारभ्यते इति।—नीचैः क्षुद्रैः, हीनस्वभावैः जनैरित्यर्थः, विघ्नभयेन अन्तरा कार्यविघातमाशङ्क्य इत्यर्थः, न खलु नैव, प्रारभ्यते कार्यारम्भः क्रियते; नीचस्वभावाः खलु 'कार्ये विघ्नसम्भावना अस्ति' इति मत्वा प्रायेण ततो निवर्तन्ते इत्यर्थः; मध्या मध्यविधाः, किञ्चिदुन्नतस्वभावा जनाः

विघ्नैः सहस्रगुणितैरपि हन्यमानाः
प्रारब्धमुत्तमगुणा न परित्यजन्ति ॥ २४० ॥

तत् कृतं निष्कण्टकं मम राज्यं शत्रून् निःशेषतां नयता त्वया ; अथवा—युक्तमेतत् नयवेदिनाम्। उक्तञ्च यतः,—

"ऋणशेषञ्चाग्निशेषं शत्रुशेषं तथैव च।
व्याधिशेषञ्च निःशेषं कृत्वा प्राज्ञो न सीदति" ॥ २४१॥

सोऽब्रवीत्,—"देव! भाग्यवान् त्वमेवासि, यस्य प्रारब्धं सर्वमेव संसिध्यति ; तन्न केवलं शौर्यं कृत्यं साधयति ; किन्तु प्रज्ञया यत् क्रियते, तदेव विजयाय भवति। उक्तञ्च,—

शस्त्रैर्हता न हि हता रिपवो भवन्ति
प्रज्ञाहतास्तु रिपवः सुहता भवन्ति।

इत्यर्थः, प्रारभ्य उपक्रम्य, कार्य्यमिति भावः, विघ्नेन अन्तरायेण, विहताः प्रतिबद्धाः सन्तः, विरमन्ति निवर्त्तन्ते, ["व्याङ्परिभ्यो रमः" (१।३।८३ पा०) इति परस्मैपदम्] कार्य्यस्य कियदंशं प्रसाध्य अन्तरा विघ्निताः ततो निवर्त्तन्ते इत्यर्थः ; उत्तमगुणा महान्तस्तु, सहस्रगुणितैः बहुभिरिति भावः, विघ्नैः प्रत्यूहैः, हन्यमाना अपि प्रतिबध्यमाना अपि, प्रारब्धं प्रक्रान्तं, न परित्यजन्ति न विजहति ; अमोघारम्भाः खलु महान्तः इति भावः। ["विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः" इति पाठान्तरं दृश्यते, अयमपि अर्थतः तुल्यमेवेति]। वसन्ततिलकं वृत्तम् ॥ २४० ॥

समूलमुन्मूलीयात् तथा उन्मूलनं फलत्वाह, ऋणशेषमिति।—प्राज्ञः विद्वान् जनः, ऋणशेषम् अग्निशेषं शत्रुशेषं तथा व्याधिशेषञ्च निःशेषं शेषरहितं, सम्यक् समूलं विनष्टमिति यावत्, कृत्वा विधाय, न सीदति न विपन्नो भवति ; अनिःशेषितेषु एतेषु पुनरभ्युत्थानसम्भवेन तेषां भूयोऽपि कष्टप्रदत्वादिति भावः ॥ २४१ ॥

भाग्यवन्त एव कदाचित् शौर्य्यपूर्व्विकया क्रियया फलं लभन्ते, न तु सर्वे, बुद्धिपूर्व्वकक्रियाकारिणां फलं सुनियतमेवेत्याह, शस्त्रैरिति।—शस्त्रैः प्रहरणैः, हताः समुत्खाताः, युद्धे विजिता इत्यर्थः, रिपवः शत्रवः, न हि हता नूनं न विनष्टाः, भवन्ति, पुनरुत्थानसम्भवादिति भावः ; प्रज्ञया बुद्धिबलेन, हतास्तु विनाशितास्तु, रिपवः सुहताः सम्यक् हताः, भवन्ति ; समूलमुत्खननात् तेषां पुनरुत्थानासम्भवादिति

शस्त्रं निहन्ति पुरुषस्य शरीरमेकं
प्रज्ञा कुलञ्च विभवञ्च यशश्च हन्ति ॥ २४२ ॥

तदेवं प्रज्ञापुरुषकाराभ्यां युक्तस्य प्रयत्नेन कार्य्यसिद्धयः सम्भवन्ति । उक्तञ्च,—

प्रसरति मतिः कार्य्यारम्भे दृढीभवति स्मृतिः
स्वयमुपनयन्नर्थान् मन्त्रो न गच्छति विप्लवम् ।
स्फुरति सफलस्तर्कश्चित्तं समुन्नतिमश्नुते
भवति च रतिः श्लाघ्ये कृत्ये नरस्य भविष्यतः ॥ १४३ ॥

तथा च, ( च ) नयत्यागशौर्य्यसम्पन्ने पुरुषे राज्यमिति । उक्तञ्च,—त्यागिनि शूरे विदुषि च संसर्गरुचिर्जनो गुणी भवति ।
गुणवति धनं धनाच्छ्रीः श्रीमत्याज्ञा ततो राज्यम्" ॥२४४॥

---

भावः । कथमेवमभिमन्यसे इत्याशङ्कायामत्र युक्तिं प्रदर्शयति, शस्त्रमिति ।—शस्त्रं पुरुषस्य एकं केवलं, शरीरं निहन्ति, प्रज्ञा बुद्धिः, कुलञ्च वंशञ्च, विभवञ्च सम्पदञ्च, यशश्च कीर्त्तिञ्च, हन्ति, एतत् सर्व्वमेव विनाशयतीत्यर्थः ; समूलोन्मूलनकारी खलु महतां प्रज्ञा इति भावः । वसन्ततिलकं वृत्तम् ॥ २४२ ॥

प्रज्ञापूर्व्वकपौरुषानुष्ठानस्य गुणमाह, प्रसरतीति ।—भविष्यतः अभ्युदयमापत्स्यमानस्य इत्यर्थः, प्रज्ञापुरुषकाराभ्यां युक्तस्य इति भावः, नरस्य, कार्य्यारम्भे कार्य्यारम्भविषये, मतिः प्रसरति प्रवर्त्तते, स्मृतिर्मेधा, दृढीभवति अचलिता वर्त्तते, मन्त्रः स्वयम् अर्थान् कृत्यवस्तूनि, उपनयन् उद्भावयन्, हृदये उपस्थापयन् इत्यर्थः, विप्लवं वैपरीत्यं, न गच्छति, अविकृतो वर्त्तते इत्यर्थः; तर्कः विचारशक्तिरित्यर्थः, सफलः सन् स्फुरति प्रसरति, चित्तं मनः, समुन्नतिम् उदारतां, निर्म्मलतामिति यावत्, अश्नुते भजते, तथा श्लाघ्ये प्रशंसनीये, कृत्ये कार्य्ये, रतिः अनुरागश्च भवति ; प्रज्ञापौरुषवतः यथा कार्य्याणि सिध्यन्ति, न तथा बुद्धिप्रभावहीनानामिति हृदयम् । हरिणी वृत्तम् ॥ २४३ ॥

( च ) नयेति ।—नयश्च त्यागश्च शौर्य्यञ्च तैः सम्पन्ने नीतिसम्पन्ने त्यागशीले शूरे च इत्यर्थः ।

नयादिसम्पन्ने राज्यमिति यदुक्तं, तदेव सयुक्तिकमाह, त्यागिनीति ।—त्यागिनि वदान्ये, शूरे विक्रमवति, पौरुषनिष्ठे इत्यर्थः, तथा विदुषि च विद्यावति, नीतिज्ञे

मेघवर्ण आह,—"नूनं सद्यःफलानि नीतिशास्त्राणि, यत् त्वया (द) अनुकूल्येन अनुप्रविश्य अरिमर्दनः सपरिजनो निःशेषितः"। स्थिरजीवी आह,—

"तीक्ष्णोपायप्राप्तिगम्योऽपि योऽर्थः
तस्याप्यादौ संश्रयः साधुयुक्तः।
उत्तुङ्गाग्रः सारभूतो वनानाम्
मान्याभ्यर्च्यश्छिद्यते पादपेन्द्रः॥ २४५॥

स्र जने इत्यर्थः, एतस्मिनयवति महापुरुषे इत्याशयः, संसर्गरुचिः सम्पर्काभिलाषी, अनुरागी इत्यर्थः, जनः गुणी गुणवान्, भवति; संसर्गजा दोषगुणाः भवन्तीति भावः; गुणवति सद्गुणसम्पन्ने, जने इति शेषः, धनं वित्तं, धनात् श्रीलक्ष्मीः, श्रीमति जने, आज्ञा अप्रतिहतादेशः, ततः आज्ञावति जने इत्यर्थः, राज्यं, सर्वत्र तिष्ठतीति शेषः; नीतिमवलम्ब्य दानं गुरुत्वमवाप्तमस्य राज्यमूलमिति भावः। आर्या वृत्तम्॥ २४४॥

(द) अनुकूल्येन—मतवर्त्तिना, मीत्या तन्मतानुकरणेन वा इत्यर्थः। अनुप्रविश्य—अभ्यन्तरीभूय।

दण्डसाध्येऽपि विषये प्राक् सामप्रयोगप्रशंसामाह, तीक्ष्णोपायेति।—तीक्ष्णैर्दारुणैः, उपायैः साधनैः, सामादिषु चतुर्षु दण्डरूपैः उपायैरित्यर्थः, या प्राप्तिः स्वीकरणमिति यावत्, तया गम्योऽपि लभ्योऽपीत्यर्थः, यः अर्थः वस्तु, अरिविजयरूप इति भावः, तस्यापि आदौ अग्रतः, संश्रयः समाश्रयः, चातुर्ण्यप्रयोगेषु पक्षः सामपूर्वकं अनुकूलतास्वीकारः इत्यर्थः, साधुयुक्तः युक्तियुक्तः, समीचीन एवेत्यर्थः,—"साम्ना दानेन भेदेन समस्तैरथवा पृथक्। विजेतुं प्रयतेतारीन् न दण्डेन कदाचन॥" इति भगवन्मनूक्तेरित्याशयः, अतिदुष्करार्थसाधनेऽपि प्रथमं सान्त्वेनैव प्रवर्त्तितव्यमिति भावः; "चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया" इत्युक्तिस्तु चोलश्रितादिविजृम्भितमेवेति बोध्यम्। अत्र योग्यं लौकिकमुदाहरणमुपन्यस्यति, उत्तुङ्गेति।—उत्तुङ्गम् अत्युन्नतम्, अग्रं यस्य तथाविधः, वनानां सारभूतः श्रेष्ठ इत्यर्थः, पादपेन्द्रः वनस्पतिः, मान्याभ्यर्च्यः आदौ मानितः, अभ्यर्चितश्च सन्, छिद्यते, जनैरिति शेषः; यथा इह लोके वनस्पतिच्छेदे कर्त्तव्ये प्रथमं तस्यमानसत्कारौ प्रयुज्यते, तथा महारिपुसाधने कर्त्तव्ये प्रथमं सान्त्वेनैव तदन्तः प्रवेष्टव्यमिति तात्पर्य्यम्। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः। शालिनी वृत्तम्॥ २४५॥

अथवा स्वामिन्! किं तेन अभिहितेन, यत् अनन्तरकाले क्रियारहितम् असुखसाध्यं वा भवति? साधु चेदमुच्यते,—

अनिश्चितैरध्यवसायभीरुभिः
पदे पदे दोषशतानुदर्शिभिः।
फलैर्विसंवादमुपागता गिरः
प्रयान्ति लोके परिहासवस्तुताम्॥ २४६॥

न च लघुषु अपि कर्त्तव्येषु धीमद्भिः (अ) अनादरः। यतः,—

शक्यामि कर्त्तुमिदमल्पमयत्नसाध्यम्
अत्रादरः कः? इति कृत्यमुपेक्षमाणाः।
केचित् प्रमत्तमनसः परितापदुःखम्
आपत्प्रसङ्गसुलभं पुरुषाः प्रयान्ति॥ २४७॥

---

अनिश्चितैरिति।—अनिश्चितैः संशयापन्नैः, सन्दिग्धैरित्यर्थः, अध्यवसायभीरुभिः उद्यमभीतैः, उत्साहशून्यैः इति यावत्, पदे पदे प्रतिपदं, सर्वत्र इति यावत्, दोषशतानुदर्शिभिः, छिद्रानुसन्धानतत्परैः, अन्यैः कर्त्तृभिः प्रयुक्ताः इति शेषः, गिरः वाक्यानि, फलैः विसंवादं वैपरीत्यम्, अनैक्यमित्यर्थः, उपागताः प्राप्ताः, विरुद्धफलभाजः सत्य इति भावः, लोके जगति, परिहासवस्तुताम् उपहासास्पदतां, प्रयान्ति; विफलवागाडम्बरेण ते केवलमात्मनो लाघवं प्रकाशयन्ते, तस्मात् तैरलमिति भावः। वंशस्थविलं वृत्तम्॥ २४६॥

(अ) अनादरः,—अवहेला।

शक्यामीति।—केचित् पुरुषाः इदं कार्य्यम्, अल्पं लघु, अयत्नसाध्यञ्च यत्नं विना निष्पाद्यञ्च, अत एव कर्त्तुं शक्यामि सम्पादयितुं शक्तो भविष्यामि, अत्र अस्मिन् कार्य्यसाधने, आदरः यत्नः, कः? कर्त्तव्य इति शेषः; न कोऽपीत्यर्थः, इति एवं विचिन्त्य इत्यर्थः, कृत्यं तत् कार्य्यम्, उपेक्षमाणाः हेलया परित्यजन्तः, अत एव प्रमत्तम् अनवहितं, मनो येषां तादृशाः सन्तः, आपदां प्रसङ्गेन समागमेन, सुलभं सुप्रापं, परितापदुःखम् अनुतापकष्टम्, उपेक्षया कार्य्यनाशादिति भावः, प्रयान्ति प्राप्नुवन्ति। "हेलयाऽकुर्वतां शक्ये पश्चात्तापो भवेत् ध्रुवम्" इति भावः। वसन्ततिलकं वृत्तम्॥ २४७॥

तत् अद्य (क) जितारेः मद्विभोः यथापूर्वं निद्रालाभो भविष्यति । उक्तं चैतत्,—

निःसर्पे बद्धसर्पे वा भवने सुप्यते सुखम् ।
सदादृष्टभुजङ्गे तु निद्रा दुःखेन लभ्यते ॥ २४८ ॥

तथा च,—

विस्तीर्णव्यवसायसाध्यमहतां स्निग्धोपभुक्ताशिषां
कार्याणां नयसाहसोन्नतिमतामिच्छापदारोहिणाम् ।
मानोत्सेकपराक्रमव्यसनिनः पारं न यावद्गताः
सामर्षे हृदयेऽवकाशविषया तावत् कथं निर्वृतिः ? ॥ २४९ ॥

(क) जितारेः,—पराजितशत्रोः । यथापूर्वं—पूर्ववत्, [ पूर्वम् अनतिक्रम्य इति अनतिक्रमार्थे अव्ययीभावः ] ।

निःसर्पे इति ।—निःसर्पे सर्परहिते, बद्धसर्पे धृतसर्पे वा, भवने गृहे, सुखम् अनायासेन, निःशङ्कं यथा तथेत्यर्थः, सुप्यते निद्रायते, जनेन इति शेषः, सदा दृष्टा भुजङ्गा यत्र तादृशे तु सर्पयुक्ते तु इत्यर्थः, भवने इति पूर्वेणान्वयः, निद्रा संवेशः, दुःखेन कष्टेन, लभ्यते ; सर्पदंशनभयात् नैव लभ्यते इति भावः ; कुटिलमतिशत्रूणां विनाशात् इदानीं सुखसुप्तिर्भवतो भविष्यति इति निष्कृष्टार्थः ॥ २४८ ॥

का कथा सुखसुप्तेः ? असमाप्तजिगीषस्य कुत्रापि कियत्यपि शान्तिर्नास्तीत्याह, विस्तीर्णेति ।—मानोत्सेकपराक्रमव्यसनिनः मानस्य गर्वस्य, उत्सेकः उद्रेकः, पराक्रमश्च, तत्र व्यसनिनः अत्यासक्ताः, अभिमानवन्तः विपुलपराक्रमाश्च, सन्तः इति शेषः, विस्तीर्णैः विपुलैः, व्यवसायैः उद्योगैः, साध्यानि निष्पाद्यानि, अत एव महान्ति प्रभूतानि, दुष्पारतया आयाससाध्यानीति यावत्, तेषां, तथा स्निग्धैः बन्धुभिः, उपभुक्ताः सततमनुध्यायमानाः, आशिषो मङ्गलाशंसाः येषु तेषां, प्रीतिस्निग्धैः बन्धुभिः सततमेव सिद्ध्यर्थं चिन्त्यमानानाम् इत्यर्थः, नयः नीतिः, साहसम् उत्साहः, उन्नतिः आत्मनः अभ्युदयश्च, एताः विद्यन्ते येषु तथोक्तानां, नीत्युत्साहाभ्यामुन्नतिसम्पन्नानामित्यर्थः, इच्छापदम् अभीष्टरूपं स्थानम्, आरोहन्तीति तथोक्तानाम्, अभिलषितानामिति भावः ; कार्याणां पारम् अन्तं, यावत् न गताः न कृतकार्या इत्यर्थः, तावत् सामर्षे अमर्षपरीते, अतिव्याकुले इत्यर्थः, हृदये, अवकाशविषया अवकाशः कुत्रचित्स्थितियोग्यस्थानमेव, विषयः निर्वृतावस्थितिरूपव्यापारः यस्याः तथाविधा, पदार्थो-

तत् (प) अवसितकार्य्यारम्भस्य विश्राम्यतीव मे हृदयम्। तत् इदम् अधुना ( फ ) निहतकण्टकं राज्यं प्रजापालनतत्परो भूत्वा पुत्रपौत्रादिक्रमेण (ब) अचलच्छत्रासनश्रीः चिरं भुङ्क्ष्व।

अपि च,—प्रजा न रञ्जयेत् यस्तु राजा रक्षादिभिर्गुणैः।

अजागलस्तनस्येव तस्य राज्यं निरर्थकम् ॥ २५० ॥

गुणेषु रागो व्यसनेष्वनादरो

रतिः सुभृत्येषु च यस्य भूपतेः।

...रानासक्तमानसैकस्थायिनी इत्यर्थः, निर्वृतिः सौख्यं, कथम्? नैव निर्वृतिर्लभ्यते इत्यर्थः; अकृतकार्य्याणां महामहिमशालिनां हृदयं सर्वदा औत्सुक्येन त्वरापूरितं सदैव वर्त्तते, अतः सुखानि तत्र न स्थातुमर्हन्ति, स्थानाभावात्; एकस्थानपूरणे कथम् अपरस्य तत्र स्थानमिति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ २४९ ॥

( प ) अवसितकार्य्यारम्भस्य—समाप्तारब्धकर्मणः, कृतकार्य्यस्य इत्यर्थः।

( फ ) निहतकण्टकं—विनाशितक्षुद्रशत्रुम्। ("कण्टको ना स्त्रियां क्षुद्रशत्रौ मत्स्यादिकीकसे" इति मेदिनी )।

( ब ) अचलेति।—अचलाः,—स्थिराः, छत्रासनश्रियः,—छत्रं—नृपचिह्नम् आतपत्रम्, आसनं—सिंहासनं, श्रीः,—राजलक्ष्मीश्च यस्य तादृशः, स्थिराधिपत्ये स्थितः सन्नित्यर्थः।

प्रजा इति।—यस्तु राजा रक्षादिभिः पालनादिभिः, गुणैः तत्तत्कर्मजन्यैरित्यर्थः, प्रजा न रञ्जयेत् न सन्तोषयेत्, अजागलस्तनस्येव छागीविशेषकण्ठस्थकुचस्येव, तस्य राज्ञः, राज्यं [ राज्ञः भावः कर्म वा इत्यर्थे राजशब्दात् "राजाऽसे" इति गण-सूत्रेण राजशब्दाद्यक् ] राजकर्म, प्रजापालनादिरूपमित्यर्थः, निरर्थकं विफलं, भवतीति शेषः, पालनाद्यकरणादिति भावः; पक्षान्तरे,—तस्य राज्यं राजपद-व्यपदेशवशेनैव वर्त्तितं निखिलराजकर्मभूतमिति यावत्, निरर्थकम् अर्थहीनं, व्युत्पत्तिहीनमित्यर्थः; "राजा प्रकृतिरञ्जनात्" इत्यर्थमुपजीव्य रञ्ज्धातुनैव राजशब्दस्य व्युत्पादितत्वादिति भावः; वस्तुतस्तु राजतेः कनिनि सिद्धत्वादिति ज्ञेयम् ॥ २५० ॥

अथाऽपि नृपश्रीः कीदृशे राजनि अचञ्चला तिष्ठति, तदेवाह, गुणेष्विति।—यस्य भूपतेः नृपस्य, गुणेषु दयादाक्षिण्यादिषु, रागः अनुरागः, व्यसनेषु मृगयादिषु, अनादरः अनास्था, अनासक्तिरित्यर्थः, सुभृत्येषु च सत्सचिवादिषु च, रतिः प्रीतिः,

चिरं स भुङ्क्ते चलचामरांशुकां
सितातपत्राभरणां नृपश्रियम् ॥ २५१ ॥

न च त्वया "प्राप्तराज्योऽहम्" इति मत्वा (भ) श्रीमदेन आत्मा व्यंसयितव्यः, यत् कारणं, चला हि राज्ञो विभूतयः, (म) वंशारोहणवत् राजलक्ष्मीः दुरारोहा, (य) क्षणविनिपातरता, प्रयत्नशतैरपि धार्य्यमाणा दुर्द्धरा, (र) प्रशस्ताराधिताऽपि अन्ते (ल) विप्रलम्भिनी, वानरजातिरिव (व) विद्रुतानेकचित्ता, पद्मपत्रोदकम् इव (श) अघटितसंश्लेषा, पवनगतिः इव अतिचपला, (ष) अनार्य्यसङ्गतमिव अस्थिरा, आशीविष इव दुरुपचारा, सन्ध्याऽभ्रलेखेव मुहूर्त्तरागा, जलबुद्बुदावलीव

---

[illegible] इत्यर्थः, स नृपः, चलं चञ्चलं, चामरमेव बालव्यजनमेव, अंशुकं वस्त्रं यस्याः तादृशीं, तथा सितं शुभ्रम्, आतपत्रं छत्रम् एव, आभरणं यस्याः तथाभूतां, नृपश्रियं राजलक्ष्मीं, चिरं दीर्घकालं, भुङ्क्ते ["भुजोऽनवने" (१।३।६६ पा०) इत्यनेनात्मनेपदम्]; चिरस्थायिनी भवति तस्य राजश्रीरिति भावः। वंशस्थविलं वृत्तम् ॥२५१॥

(भ) श्रीमदेन—विभवगर्वेण। व्यंसयितव्यः,—प्रतारयितव्यः।

(म) वंशारोहणवत्—यथा वंशे—वेणुविशेषे, आरोहणं दुःसाध्यं, तद्वदिति भावः।

(य) क्षणेति।—क्षणेन विनिपातः,—विध्वंसनं, तत्र रता—तदासक्ता, क्षणविनाशिनी इत्यर्थः।

(र) प्रशस्तेति।—प्रशस्तं—सुष्ठु यथा स्यात् तथा, अतिनिपुणतयेति यावत्, आराधिताऽपि—सेविताऽपि।

(ल) विप्रलम्भिनी—प्रतारणाकारिणी।

(व) विद्रुतेति।—विद्रुतं—व्याकुलीकृतं, धनमदेनेति भावः, अनेकेषां चित्तं यया तादृशी; वानरपक्षे,—विद्रुतं—चञ्चलम्, अत एव अनेकम्—अनेकविधं, चित्तं यस्याः तादृशी।

(श) अघटितेति।—अप्राप्तसम्बन्धा, असम्पृक्ता इत्यर्थः।

(ष) अनार्य्येति।—अनार्य्याणाम्—असाधूनां, सङ्गतमिव—सख्यमिव, अस्थिरा—अनवस्थायिनी। आशीविष इव—सर्प इव। दुरुपचारा—दुःसेव्या। सन्ध्याऽभ्रेति।—सन्ध्यायां या अभ्रलेखा—मेघराजिः सेव, मुहूर्त्तं—क्षणं, रागः,—अनुरागः;

स्वभावभङ्गुरा ; (ख) नीचप्रकृतिरिव कृतघ्ना, स्वल्पद्रव्यराशि-रिव (ग) क्षणदृष्टनष्टा । अपि च,—

यदैव राज्ये क्रियतेऽभिषेकः
तदैव बुद्धिर्व्यसनेषु योज्या ।
घटा हि राज्ञामभिषेककाले
सहाम्भसैवापदमुद्गिरन्ति ॥ २५२ ॥

न च कश्चित् (क) अनधिगमनीयो नाम अस्ति आपदाम् ।

अन्यच्च,—श्रीर्हित्यं यस्याः तथाविधा । जलबुद्बुदावलीव—जलानां—तोयानां, यानि बुद्बुदानि—स्फोटाः, विम्बानीति यावत्, तेषाम् आवलीव—श्रेणिरिव, स्वभावभङ्गुरा—प्रकृत्यैव अपगमनशीला ; अन्यच्च,—असारत्वात् स्वभावत एव विलयनशीला ।

(ख) नीचप्रकृतिरिव—खलस्वभाव इव, कृतघ्ना—कृतोपकारस्यापि पुरुषस्य उपकारं विस्मृत्य अपकारपरायणेत्यर्थः ; अन्यच्च,—कष्टेनैव अत्याधिक्यजननाय पुनः कर्षणेन पूर्वकर्षणाचरणविलोपकारिणीति भावः ।

(ग) क्षणदृष्टनष्टा—क्षणेन दृष्टा क्षणेन नष्टा च, अचिरस्थायिनीत्यर्थः ; आगमन-निर्गमनयोः क्षणेनैव सम्भवादिति भावः, [ लिङ्गविपरिणामोऽत्र कर्त्तव्यः ] ।

यदैवेति ।—यदैव राज्ये अभिषेकः क्रियते, तदैव बुद्धिः, राज्ञामिति शेषः, व्यसनेषु विपत्सु, योज्या योजनीया ; राज्यलिप्सया बहूनां शत्रूणां सद्भावात् "अभिषेकसमय एव मम विपत्तिः भवितव्यम्" इति सततमेव प्रत्यर्थिसंहारजनसमाकर्षणैः नृपतिभिः मन्तव्यम् इति भावः ; अथवा,—व्यसनेषु कामादिषु, योज्या आसञ्जनीया, भवतीति शेषः, मदान्धाः नृपतयः व्यसनेषु आसक्ता भवन्तीत्यर्थः ; अतुलविभवमधिगत्य नृपतयः प्रायशः एव विवेकरहिताः मदोद्धताश्च सन्तः स्वेच्छाचारिणः भवन्तीति भावः । हि यस्मात् हि, राज्ञामभिषेककाले घटाः अभिषेकार्थं तीर्थोदकपरिपूर्णाः कुम्भाः, अम्भसा जलेन, सह आपदम् उद्गिरन्ति इव वमन्ति इव, तच्छिरसि पातयन्तीवेत्यर्थः ; नृपतयः अभिषेकसमकालमेव विपन्ना भवन्तीति भावः । [ अत्र द्वितीयपादे,—"तदैव याति व्यसनेषु बुद्धिः" इति पाठे तु—तदैव व्यसनेषु मृगयादिष्वष्टादशसु दोषेषु, बुद्धिर्याति आपतति ; तदा अनवधानात् कर्त्तव्यज्ञानशून्या भवन्ति राजानः इति भावः । उत्प्रेक्षाऽलङ्कारः ] । उपजातिः वृत्तम् ॥ २५२ ॥

(क) अनधिगमनीय इति ।—अनधिगमनीयः,—अधर्षणीयः, अविषयीभूतः इत्यर्थः ; अपि तु सर्वे एव आपदा आक्रम्यन्ते इति भावः ।

अन्यच्च,—रामस्य व्रजनं, बलेर्नियमनं, पाण्डोः सुतानां वनं,
वृष्णीनां निधनं, नलस्य नृपतेः राज्यात् परिभ्रंशनम्।
नाट्याचार्य्यकमर्जुनस्य, पतनं सञ्चिन्त्य लङ्केश्वरे
सर्वं कालवशाज्जनोऽत्र सहते, कः कं परित्रायते?॥२५३॥

क्व स दशरथः स्वर्गे भूत्वा महेन्द्रसुहृत् गतः?
क्व स जलनिधेर्वेलां बद्ध्वा नृपः सगरस्तथा?।
क्व स करतलाज्जातो वैण्यः? क्व सूर्यतनुर्मनुः?
ननु बलवता कालेनैते प्रबोध्य निमीलिताः॥ २५४ ॥

---

रामस्येति।—रामस्य राघवस्य, व्रजनम् अरण्यगमनं, बलेः दैत्यराजस्य, नियमनं बन्धनं, पाण्डोः सुतानां युधिष्ठिरादीनां, वनं वनवासं, वृष्णीनां यदूनां, निधनं ध्वंसं, नलस्य नृपतेः राज्यात् परिभ्रंशनं च्युतिम्, अर्जुनस्य नाट्याचार्य्यकं नाट्याचार्य्यपद-स्वीकरणं, विराटभवने अज्ञातवासे बालिकानां नृत्यविद्यादानमित्यर्थः, तथा लङ्केश्वरे रावणे, त्रिभुवनजयिनि इति भावः, पतनं, सञ्चिन्त्य विचार्य्य, अत्र संसारे, जनः कालवशात् सर्वं सहते, को जनः, कं परित्रायते? न कोऽपि कम् इत्यर्थः; यदि ईदृशानां भूरिधाम्नां महीयसामेतादृशी गतिः, तदा अल्पीयोभिरन्यपरिरक्षणं सुतरामेव दुष्करमिति भावः। शार्दूलविक्रीडितं वृत्तम्॥ २५३॥

क्वेति।—यः महेन्द्रस्य देवराजस्य, सुहृत् सखा, भूत्वा स्वर्गे अमरलोके, मानुष-दुर्गमे इत्यर्थः, गतः, स दशरथः क्व? तथा, जलनिधेः समुद्रस्य, वेलां तीरभूमिं, बद्ध्वा, लोकं पालयन्निति शेषः, समुद्रवेलामपि नियम्य सागरपरिवृतां भूमिं शासदित्यर्थः, स नृपः सगरः क्व? करतलात् वेणनृपतेः करतलमन्थनादित्यर्थः, जातः अयोनिसम्भव इत्यर्थः, स वैण्यः पृथुः, क्व? (पुरा किल दुर्दान्तं यज्ञदेवद्विजद्वेषिणं पापीयांसमुत्पथं गतं वेणं महीभुजम् अच्युतनिन्दया प्रागेव हतप्रायं कुकृतेः विनाश्य महर्षयः महीमिमां शासकरहितां दस्युपरीतामवलोक्य कृपया तस्य हतस्य राज्ञः दक्षिणं करं मथित्वा पृथुमुत्पादयामासुरिति श्रीमद्भागवतचतुर्थस्कन्धीय-चतुर्दशाध्यायस्य वार्त्ताऽत्रानुसन्धेया) तथा स सूर्यतनुः सूर्य एव तनुः पितृत्वसम्बन्धात् शरीरभूतः यस्य तथोक्तः, सूर्यस्य पुत्र इत्यर्थः, ["आत्मा वै जायते पुत्रः" इति श्रुतेः; "सूर्याज्जज्ञे समाख्यातः सावर्णिर्भविता मनुः" इति च देवीमाहात्म्यम्। "सूर्यसुतः" इति क्वचित्कः पाठः] मनुः आदिराजः, क्व? ननु भोः! बलवता प्रबलेन, कालेन एते दशरथादयः,

मान्धाता क्व गतस्त्रिलोकविजयी राजा ? क्व सत्यव्रतः ?
देवानां नृपतिर्गतः क्व नहुषः ? सच्छास्त्रवान् केशवः ? ।
मन्यन्ते सरथाः सकुञ्जरवराः शक्रासनाध्यासिनः
कालेनैव महात्मना त्वनुकृताः कालेन निर्वासिताः ॥ २५५ ॥

अपि च,—

स च नृपतिस्ते सचिवास्ताः प्रमदास्तानि काननवनानि ।
स च ते च ताश्च तानि च कृतान्तदृष्टानि नष्टानि ॥ २५६ ॥

एवं मत्तकरिकर्णचञ्चलां राज्यलक्ष्मीम् अवाप्य नात्यैकनिष्ठो भूत्वा उपभुङ्क्ष्व" ।

इति श्रीविष्णुशर्मविरचिते पञ्चतन्त्रे काकोलूकीयं नाम तृतीयं तन्त्रम् ॥ ३ ॥

---

प्रबोध्य आविर्भाव्य, उत्पाद्य इत्यर्थः, निमीलिताः निधनं नीताः ; कालो हि बलवत्तरः इति भावः ॥ २५४ ॥

मान्धातेति ।—त्रिलोकविजयी राजा मान्धाता क्व गतः ? सत्यव्रतः भीष्मः, क्व ? गतः इति पूर्वान्वयः ; देवानां नृपतिः इन्द्रत्वपदमापन्नः इत्यर्थः, नहुषः क्व गतः ? तथा सच्छास्त्रवान् गीतोपनिषदादिसच्छास्त्रोपदेष्टा, केशवः कृष्णश्च, क्व गतः ? इति शेषः, महात्मना प्रबलेन, कालेनैव सरथाः सकुञ्जरवराः सवाहना इत्यर्थः, शक्रासनाध्यासिनः इन्द्रेण सह एकासनस्थायिनः, एते इति शेषः, अनुकृताः निर्मिताः, तु पुनः, कालेन निर्वासिताः ध्वंसिताश्च, मन्यन्ते, जनैरिति शेषः ; "कालो हि दुरतिक्रमः" इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ २५५ ॥

स चेति ।—स च नृपतिः राजा, ते सचिवाः मन्त्रिणः, ताः प्रमदाः कान्ताः, तानि काननवनानि उपवनानि, विविधानि तरुगुल्मलतादिपूर्णानि विपिनानि वा इत्यर्थः, स च ते च ताश्च तानि च सर्वाणि, कृतान्तेन कालेन, दैवेन वा, दृष्टानि अवलोकितानि, ग्रस्तानीति यावत्, [ दष्टानीति वा पाठः ] नष्टानि हतानि च ; "कालो हि जगदाधारः कालाधारो न विद्यते" इति न्यायप्रवादात् सर्वं कालेनैव जायते, कालेनैव विलीयते इति भावः ॥ २५६ ॥

# अथ लब्धप्रणाशं नाम चतुर्थं तन्त्रम्।

अथ इदम् आरभ्यते लब्धप्रणाशं (क) नाम चतुर्थं तन्त्रं, यस्य अयम् आदिमः श्लोकः,—

"समुत्पन्नेषु कार्य्येषु बुद्धिर्यस्य न क्षीयते।
स एव दुर्गं तरति जलस्थो वानरो यथा" ॥ १ ॥

तत् यथा अनुश्रूयते,—

अस्ति कस्मिंश्चित् (ख) समुद्रोपकण्ठे महान् जम्बूपादपः सदाफलः ; तत्र च रक्तमुखो नाम वानरः प्रतिवसति स्म। तत्र च तस्य तरोरधः कदाचित्(ग) करालमुखो नाम मकरः समुद्र-सलिलात् निष्क्रम्य (घ) सुकोमलवालुकासनाथे तीरोपान्ते

---

(क) लब्धप्रणाशं—लब्धस्य—प्राप्तस्य, प्रणाशो यत्र तन्त्रे तथाविधम् ; प्राप्तमपि वस्तु कथं प्रणश्यति, इत्येतद्विषयकम् इत्यर्थः, तथाविधादनिष्टोत्पादात् सावहितभव-नोपदेशविधायकमेतत् तन्त्रमिति यावत्। आदिमः,—प्रथमः, [आदिशब्दात् "अयादिपश्चाड्डिमच्" इति वार्त्तिकसूत्रेण डिमच्प्रत्ययः]।

समुत्पन्नेष्विति।—कार्य्येषु करणीयवस्तुषु, विपत्सङ्कुलव्यापारेष्विति यावत्, समुत्पन्नेषु उपस्थितेषु सत्सु, यस्य बुद्धिः मतिः, न क्षीयते [क्षिधातोः कर्मकर्त्तरि लट्, कर्मवद्भावात् आत्मनेपदं यक् च] न क्षयं गच्छति, प्रत्युत प्रस्फुरतीति भावः, स एव जलस्थः जलमध्यस्थितः, वानरो यथा वानर इव, दुर्गं [दुःखेन गच्छत्यत्र इत्यधि-करणे दुरुपपदात् गमधातोः "सुदुरोरधिकरणे" इति वार्त्तिकसूत्रेण डप्रत्ययः, कर्मणि तु खल् एव, यथा दुःखेन गम्यते इति दुर्गमः पन्थाः] सङ्कटं, तरति विपदस्त्राणं प्राप्नोति इत्यर्थः ; प्रत्युत्पन्नमतेः सर्वत्रैव विजयलाभः इति भावः ॥ १ ॥

(ख) समुद्रोपकण्ठे—सागरसमीपे। सदाफलः,—अविरतफलः, सर्वस्मिन्नेव काले फलभरावनतः इत्यर्थः।

(ग) करालमुखः,—करालं—विकटं, मुखं यस्य तथाविधः।

(घ) सुकोमलवालुकासनाथे—मृदुलसिकतासमन्विते।

(ङ) न्यविशत । ततश्च रक्तमुखेन स प्रोक्तः,—"भोः! भवान् समभ्यागतोऽतिथिः ; तत् भक्षयतु मया दत्तानि अमृततुल्यानि जम्बूफलानि । उक्तञ्च,—

> प्रियो वा यदि वा द्वेष्यो मूर्खो वा यदि पण्डितः ।
> वैश्वदेवान्तमापन्नः सोऽतिथिः स्वर्गसङ्क्रमः ॥ २ ॥
> न पृच्छेत् चरणं गोत्रं न च विद्यां कुलं न च ।
> अतिथिं वैश्वदेवान्ते श्राद्धे च मनुरब्रवीत् ॥ ३ ॥
> दूरमार्गश्रमश्रान्तं वैश्वदेवान्तमागतम् ।
> अतिथिं पूजयेत् यस्तु स याति परमां गतिम् ॥ ४ ॥

---

(ङ) न्यविशत—उपाविशत, विश्रामजसुखोपभुक्तये तत्तीरभूमिमधितष्ठौ इत्यर्थः, [निपूर्वकात् विशतेः "नेर्विशः" (१।३।१७ पा॰) इति सूत्रेण आत्मनेपदम्]।

प्रिय इति ।—प्रियो वा अनुरागभाजनं वा, द्वेष्यो यदि वा विरागभाजनं वा, मूर्खो वा अज्ञानोपहतविवेकः वा, यदि वा पण्डितः ज्ञानी वा, भवतु इति शेषः, वैश्वदेवान्तं विश्वेभ्यो देवेभ्यो देयः बलिः वैश्वदेवः, तस्य अन्तम् अवसानं; [विश्वदेवशब्दात् अपि रूपम्] गृहस्थैः नित्यमनुष्ठीयमानात् वैश्वदेवाख्यबलिकर्मणः परम् इत्यर्थः, आपन्नः उपस्थितः, भगवता मनुना एष एव कालः अतिथीनां विहितः इति वेदितव्यम् ; सः अज्ञातप्रियादिरूपः, अतिथिः गृहागतः, [अतति गच्छति, न तिष्ठति इत्यर्थे, अततधातोः इथिन्प्रत्ययः] "एकरात्रं हि निवसन् अतिथिर्ब्राह्मणः स्मृतः । अनित्यं हि स्थितिर्यस्मात् तस्मादतिथिरुच्यते ॥" इत्युक्तलक्षणे ब्राह्मणशब्दः सामान्यवाची ; स्वर्गसङ्क्रमः दुर्गमस्वर्गमार्गे सञ्चरणोपायभूतः, स्वर्गस्य अधिरोहणीभूत इत्यर्थः ; ("सङ्क्रमो दुर्गसञ्चरः" इत्यमरः) भवतीति शेषः ; तादृशातिथिसत्कारात् स्वर्गलाभो जायते इति भावः ॥२॥

नेति ।—वैश्वदेवान्ते वैश्वदेवबलिकर्मसमापनानन्तरं, तथा श्राद्धे पितृकृत्ये च, उपस्थितमिति शेषः, अतिथिम् अभ्यागतं, चरणं गृहं, न, गोत्रं पित्रादिकं, च न, विद्यां तथा कुलञ्च वंशञ्च, न पृच्छेत्, जिज्ञासामन्तरेणैवासौ सत्कर्तव्य इति भावः, एवं मनुरब्रवीत् ॥ ३ ॥

दूरेति ।—यस्तु दूरेण मार्गेण दीर्घाध्वपर्यटनेन, यः श्रमः, तेन श्रान्तं क्लान्तं, वैश्वदेवान्तं गृहस्थैः यथाविधि तत्कर्मसमापनानन्तरम्, आगतम् अतिथिं पूजयेत् भोजनदानादिना तोषयेदित्यर्थः, स परमां गतिं मुक्तिमित्यर्थः, याति प्राप्नोति ॥ ४ ॥

अपूजितोऽतिथिर्यस्य गृहात् याति विनिःश्वसन् ।
गच्छन्ति विमुखास्तस्य पितृभिः सह देवताः" ॥ ५ ॥

एवम् उक्त्वा तस्मै जम्बूफलानि ददौ । सोऽपि तानि भक्षयित्वा तेन सह चिरं गोष्ठीसुखम् अनुभूय भूयोऽपि स्वभवनम् अगात् । एवं नित्यमेव तौ वानर-मकरौ जम्बूच्छायास्थितौ विविधशास्त्रगोष्ठ्या कालं नयन्तौ सुखेन तिष्ठतः । सोऽपि मकरो भक्षितशेषाणि जम्बूफलानि गृहं गत्वा स्वपत्न्याः प्रयच्छति ।

अथ अन्यतमे दिवसे तया स पृष्टः,—"नाथ ! क्व एवंविधानि अमृतफलानि प्राप्नोषि ?" स आह,—"भद्रे ! मम अस्ति परमसुहृत् रक्तमुखो नाम वानरः, स प्रीतिपूर्वम् इमानि फलानि प्रयच्छति" । अथ तया अभिहितं,—"यः सदा एव (च) अमृतप्रायाणि ईदृशानि फलानि भक्षयति, तस्य हृदयम् अमृतमयं भविष्यति !! तत् यदि मया भार्य्यया ते प्रयोजनं, ततः तस्य हृदयं मह्यं प्रयच्छ, येन तद्भक्षयित्वा जरामरणरहिता त्वया सह भोगान् भुनज्मि" । स आह,—"भद्रे ! मा मा एवं वद !! यतः स (छ) प्रतिपन्नोऽस्माकं भ्राता, अपरं

---

अपूजित इति ।—अतिथिः अपूजितः असत्कृतः, अत एव विनिःश्वसन् मर्म-पीडिततया दीर्घं निःश्वसन्, यस्य गृहात् भवनात्, याति प्रतिनिवर्त्तते, तस्य देवताः, गृहस्था इति शेषः, पितृभिः पितृलोकैः सह, विमुखाः पराङ्मुखाः, रुष्टाः सत्यः इत्यर्थः, गच्छन्ति तद्गृहं त्यजन्तीत्यर्थः; इतोऽपि अतिथिः सत्कार्य्य इति भावः ॥ ५ ॥

(च) अमृतप्रायाणि—अमृततुल्यानि, [ प्रायेणामृतानि इति "राजदन्तादित्वात् पूर्वनिपातः ] । भुनज्मि—उपभोगं करोमि [ भुजेः उपभोगार्थत्वात् अत्र भुञ्जे इति प्रयोगस्यैव साधुत्वम्, अतः परस्मैपदं चिन्त्यम् ] ।

(छ) प्रतिपन्नः,—अङ्गीकृतः ।

फलदाता, ततो व्यापादयितुं न शक्यते; तत् त्यज एनं (ज) मिथ्याग्रहम्। उक्तञ्च,—

एकं प्रसूयते माता द्वितीयं वाक् प्रसूयते।
वाग्जातमधिकं प्रोचुः सोदर्य्यादपि बन्धुवत्" ॥ ६ ॥

अथ मकरी आह,—"त्वया कदाचित् अपि मम वचनं न अन्यथा कृतम्; तत् (झ) नूनं सा वानरी भविष्यति, यतः तस्या अनुरागतः सकलमपि दिनं तत्र गमयसि, तत् त्वं ज्ञातो मया सम्यक्। यतः,—

साह्लादं वचनं प्रयच्छसि न मे, नो वाञ्छितं किञ्चन,
प्रायः प्रोच्छ्वसिषि द्रुतं हुतवहज्वालासमं रात्रिषु।
कण्ठाश्लेषपरिग्रहे शिथिलता, यन्नादराच्चुम्बसे
तत्ते धूर्त्त! हृदि स्थिता प्रियतमा काचिन्ममैवापरा"॥७॥

---

(ज) मिथ्याग्रहं—निष्फलनिर्बन्धम्, अयुक्ताग्रहमित्यर्थः, ("निर्बन्धोपरागार्काद्यो ग्रहाः" इत्यमरः)

एकेति।—माता जननी, एकं, सोदरमिति शेषः, प्रसूयते जनयति, वाक् वाणी, द्वितीयं, भ्रातरमिति शेषः, प्रसूयते, (तत्र) वाग्जातं, भ्रातरमिति भावः, सोदर्य्यादपि सहोदराद्भ्रातुरपि, बन्धुवत् मित्रमिव, अधिकं श्रेष्ठं, प्रियमिति भावः, प्रोचुः, पण्डिता इति शेषः ॥ ६ ॥

(झ) नूनं—निश्चितम्। सा—तव प्रियतमा, वानरी, न तु वानर इति भावः।

साह्लादमिति।—हे धूर्त्त! मे मम, साह्लादं सानन्दं, सादरमिति यावत्, वचनं वाक्यं, न, तथा किञ्चन वाञ्छितम् अभिलषितं, नो प्रयच्छसि प्रददासि, त्वमिति शेषः; रात्रिषु प्रायः बाहुल्येन, हुतवहज्वालासमम् अग्निशिखासदृशम्, उष्णमिति भावः, द्रुतं पुनः पुनः, प्रोच्छ्वसिषि निश्वासं त्यजसि; कण्ठे यः आश्लेषः आलिङ्गनं, तस्य परिग्रहे स्वीकरणे, कण्ठग्रहणपूर्वकमालिङ्गने इत्यर्थः, शिथिलता शैथिल्यम्, अनास्था इत्यर्थः, तवेति शेषः, यत्र आदरात् आग्रहातिशयात्, न चुम्बसे न चुम्बनं करोषि, [अत्रात्मनेपदं मृग्यं, परन्तु "प्रियामुखं किम्पुरुषश्चुचुम्बे" इतिवत् कर्मव्यतीहारे क्वचित् आत्मनेपदं भवितुमर्हतीति विभाव्यम्] तत् तस्मात्, ममैव मदपेक्षयापीत्यर्थः,

सोऽपि पत्न्याः (ञ) पादोपसङ्ग्रहं कृत्वा अङ्कोपरि निधाय तस्याः ( ट ) कोपकोटिमापन्नायाः ( ठ ) सुदीनम् उवाच,—

"मयि ते पादपतिते किङ्करत्वमुपागते ।
त्वं प्राणवल्लभे ! कस्मात् कोपने ! कोपमेष्यसि ?" ॥८॥

सा अपि तद्वचनम् आकर्ण्य (ड) अश्रुप्लुतमुखी तमुवाच,—

"सार्द्धं मनोरथशतैस्तव धूर्त्त ! कान्ता
सैव स्थिता मनसि कृत्रिमभावरम्या ।
अस्माकमस्ति न कथञ्चिदिहावकाशः
तस्मात् कृतं चरणपातविडम्बनाभिः !! ॥ ९ ॥

---

प्रियतमा अतिशयेन प्रिया, काचित् अपरा नारी, ते हृदि स्थिता, इति मन्ये इति अध्याहार्य्यम् । शार्दूलविक्रीडितं वृत्तम् ॥ ७ ॥

( ञ ) पादोपसङ्ग्रहं—चरणधारणम् ।

( ट ) कोपकोटिं—क्रोधप्रकर्षं, कोपस्य परां काष्ठामित्यर्थः, ( "कोटिः स्त्री धनुषोऽग्रेऽस्त्री सङ्ख्याभेदप्रकर्षयोः" इति मेदिनी ) आपन्नायाः,—प्राप्तायाः, अतिक्रुद्धाया इत्यर्थः ।

( ठ ) सुदीनम्—अतिकातरम् ।

मयीति ।—हे कोपने ! हे मानिनि ! कोपनस्वभावे ! इत्यर्थः, अल्पेनैव कारणेन कोपकरणादिति भावः, प्राणवल्लभे ! जीवितेश्वरि ! मम जीवनादपि अधिकप्रियत्वात् विरूपायां त्वयि न जीवितुमपि शक्नोमि इति भावः ; ते तव, पादपतिते किङ्करत्वं दासत्वम्, उपागते प्राप्ते, मयि त्वं कस्मात् कोपम् एष्यसि प्राप्स्यसि ? कस्मात् कुप्यसि इत्यर्थः ; चरणनिपतिते भृत्ये कोपो न युज्यते इति भावः ॥ ८ ॥

( ड ) अश्रुप्लुतमुखी—नेत्रजलसिक्तवदना ।

सार्द्धमिति ।—हे धूर्त्त ! मनोरथशतैः अभीष्टसमूहैः, 'तया सह एवं वसामि' तथा 'इत्थमात्मानं विनोदयामि' इत्याद्यसङ्ख्यैः कल्पनाजातैरित्यर्थः, सार्द्धं सह, कृत्रिमेण क्रियया निर्वृत्तं कृत्रिमं तेन, [ कृधातोः "ड्वितः क्त्रिः" (३।३।८८ पा०) इति क्त्रिप्रत्ययः, ततः "क्त्रेर्मम्नित्यम्" ( ४।४।२० पा० ) इति मप्प्रत्ययः ] व्याजेनेत्यर्थः, कपटेन इत्यर्थः, न तु वास्तवेन इति भावः, भावेन विलासविशेषेण, रम्या मनोहारिणी, सैव कान्ता प्रिया, तव मनसि चेतसि, स्थिता वर्त्तते, तस्यां तव नितरामनुरागात् इति भावः ;

अपरं, सा यदि तव वल्लभा न भवति, तत् किं मया अर्थितोऽपि तां न व्यापादयसि ? अथ यदि (ढ) स वानरः, तत् कः तेन सह तव स्नेहः ? तत् किं बहुना ? यदि तस्य हृदयं न भक्षयामि, तर्हि मया प्रायोपवेशनं कृतं विद्धि"। एवं तस्याः तं निश्चयं ज्ञात्वा चिन्ताव्याकुलितहृदयः स प्रोवाच,—"अहो ! साधु इदमुच्यते,—

वज्रलेपस्य मूर्खस्य नारीणां कर्कटस्य च ।
एको ग्रहस्तु मीनानां नीलीमद्यपयोस्तथा" ॥१०॥ इति ।

"तत् किं करोमि ? कथं स मे वध्यो भवति ?" इति विचिन्त्य वानरपार्श्वम् अगमत्। वानरोऽपि चिरेणायान्तं तं सोद्वेगम् अवलोक्य प्रोवाच,—"भो मित्र ! किम् अद्य (ण) चिरवेलायां समायातोऽसि ? कस्मात् साह्लादं न आलपसि ? न वा सुभाषितानि पठसि ?" स आह,—"मित्र ! अहं तव (त) भ्रातृजायया निष्ठुरतरैर्वाक्यैः अभिहितः,—'भोः

इह तव मनसि इत्यर्थः, अस्माकं कथञ्चित् केनापि प्रकारेणेत्यर्थः, अवकाशः स्थानं, नास्ति, तस्मात् चरणपातविडम्बनाभिः पादपतनरूपप्रतारणाभिः, कृतम् अलम्, न किमपि प्रयोजनम् इत्यर्थः; यदा ते मनसि मदीयं स्थानं नास्ति, तदा बाह्यप्रणयप्रदर्शनार्थं चरणपतनमनावश्यकमेव इति भावः। वसन्ततिलकं वृत्तम् ॥ ९ ॥

(ढ) सः,—तव प्रियजनः, वानरः,—पुंस्त्वोपलक्षितः कश्चित् मर्कटः, तत्—तदा, तेन—पुंवानरेण सह, तव—पुरुषस्य इति भावः, कः स्नेहः ?—कः प्रणयः ? पुरुषेण सह पुरुषस्य तादृशप्रेमासम्भवात् नूनं सा स्त्रीत्ववतीति भावः। प्रायोपवेशनम्—'अनशनेन प्राणान् त्यक्ष्यामि' इति सङ्कल्पस्य अनशनव्रतग्रहणम्।

वज्रलेपस्येति।—अनुर्विंशत्यधिकशततमे पृष्ठे, २८२ संख्यके श्लोके, प्रथमे तन्त्रे उत्पलकथायां श्लोकोऽयं व्याख्यातः ॥ १० ॥

(ण) चिरवेलायाम्—अधिकवेलायाम्।

(त) भ्रातृजायया—त्वत्पत्न्या इति भावः। निष्ठुरतरैः,—अतिनिष्ठुरैः।

(थ) कृतघ्न! मा मे त्वं स्वमुखं दर्शय, यतः त्वं प्रतिदिनं मित्रम् (द) उपजीवसि, न च तस्य पुनः प्रत्युपकारं (ध) गृहदर्शनमात्रेण अपि करोषि ; तत् ते (न) प्रायश्चित्तम् अपि नास्ति। उक्तञ्च,—

> ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते शठे।
> निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः॥ ११॥

तत् त्वं मम देवरं गृहीत्वा अद्य प्रत्युपकारार्थं गृहम् आनय, नो चेत् त्वया सह मे (प) परलोके दर्शनम्'। अतः अहं तया एवं प्रोक्तः तव सकाशम् आगतः। तत् अद्य तया

---

(थ) कृतघ्न!—उपकारविस्मर्त्तः!

(द) उपजीवसि—उपकारकत्वेन आश्रयसि, मित्रात् उपकारं प्राप्नोषि इत्यर्थः।

(ध) गृहदर्शनमात्रेण—[ दृश्यते इति दर्शनं, णिजन्तात् दर्शिधातोः भावे ल्युट् ], गृहस्य दर्शनं गृहदर्शनं, तदेव इति [ स्वार्थे मात्रच् ], तेन।

(न) प्रायश्चित्तं—पापक्षयमात्रसाधनत्वेन विधिबोधितं कर्म।

ब्रह्मघ्ने इति।—ब्रह्मघ्ने [ ब्रह्म हन्ति इति वाक्यार्थे ब्रह्मकर्मकहन्धातोः "ब्रह्म-भ्रूणवृत्रेषु क्विप्" (३।२।८७ पा०) इत्यनेन क्विपो विधानात् ब्रह्महा इत्येव भवितुम् अर्हति, "ब्रह्मादिष्वेव, क्विबेव" इति द्विविधनियमस्य भाष्यकारोक्तत्वेऽपि, अभिधाना-देव मूलविभुजादित्वात् कप्रत्यये सिद्धम् ] ब्रह्मघातिनि, सुरापे मद्यपायिनि, चौरे तस्करे, भग्नव्रते भ्रष्टनियमे, तथा शठे धूर्त्ते, प्रतारके इत्यर्थः, सद्भिः साधुभिः, धर्मशास्त्र-कर्त्तृभिरित्यर्थः, निष्कृतिः प्रायश्चित्तं, विहिता निरूपिता, किन्तु कृतघ्ने उपकारास्वीकर्त्तरि, अथवा अकृतज्ञे जने इत्यर्थः, [ कृतं हन्ति इति कृतघ्नः, कृतोपपदात् हन्तेः "कप्रकरणे मूलविभुजादिभ्य उपसङ्ख्यानम्" (वा०) इति सूत्रेण कप्रत्ययः, न तु टक्प्रत्ययः मनुष्यकर्त्तृकत्वात् ; तथा हि टग्विधौ "अमनुष्यकर्त्तृके च" (३।२।५३ पा०) इत्यत्र पतिघ्नी पाणिरेखा, पित्तघ्नं घृतं, मनुष्यकर्त्तृके कर्मण्युपपदे च अणेव, आखुघातः शूद्रः, इत्यादिकं दर्शितम् ] निष्कृतिः नास्ति ; सर्वेभ्यः अधिकपापहेतुः हि कृतघ्नत्वमिति भावः॥ ११॥

(प) परलोके—लोकान्तरे, दर्शनं, भविष्यतीति शेषः, अहं मरिष्यामीति भावः।

अद्य त्वदर्थं ( फ ) कलहायतो मम इयती वेला (ब) विलग्ना ; तत् आगच्छ मे गृहम्। तव भ्रातृपत्नी ( भ ) रचितचतुष्का प्रगुणितवस्त्रमणिमाणिक्याद्युचिताभरणा द्वारदेशबद्धवन्दनमाला सोत्कण्ठा तिष्ठति"। मर्कट आह,—"भो मित्र! युक्तम् अभिहितं मद्भ्रातृपत्न्या। उक्तञ्च,—

वर्जयेत् कौलिकाकारं मित्रं प्राज्ञतरो नरः।
आत्मनः सम्मुखं नित्यं य आकर्षति लोलुपः॥ १२॥

तथा च,—ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति।
भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम्॥ १३॥

( फ ) कलहायतः,—कलहं कुर्वतः, [ कलहशब्दात् "शब्दवैरकलहाभ्र—" ( ३।१।१७ पा० ) इत्यादिना क्यङ्, ततः लटः शतृप्रत्ययः। कलहायमानस्येति साधु, क्यङन्तस्याऽऽत्मनेपदित्वात् ; कलहयतः इत्यपि वा पाठः ]।

( ब ) विलग्ना—अज्ञाता इत्यर्थः।

( भ ) रचितचतुष्का—रचितं—कल्पितं, मार्जितं वा, चतुष्कं—चतुःस्तम्भयुक्तमण्डपं यया तादृशी, अतिथिरुपवेशनार्थमिति भावः ; यद्वा,—गुम्फितचतुर्यष्टिमालिका, "चार नरी माला" इति वङ्गभाषा। प्रगुणितेति।—प्रगुणितानि—प्रकृष्टगुणानि, महार्हाणीत्यर्थः, यानि वस्त्रमणिमाणिक्यादीनि, तान्येव उचितानि—न्यस्तानि, अङ्गे धृतानीत्यर्थः ; यद्वा,—उचितानि—समञ्जसानि, उपयुक्तानीत्यर्थः, ("उचितन्तु अभ्यस्ते मिते ज्ञाते समञ्जसे" इति मेदिनी ) आभरणानि—अलङ्काराः यया यस्या वा तादृशी, यथोचितनानाऽलङ्कारभूषिता इत्यर्थः। द्वारेति।—द्वारदेशे बद्धा—लम्बीकृता, सज्जीकरणार्थम् इत्यर्थः, वन्दनमाला—वन्दनयोग्यपुष्पमाला यया सा।

वर्जयेदिति।—यः कपटसुहृदिति भावः, लोलुपः लुब्धः सन्, नित्यं सततम्, आत्मनः सम्मुखम् अभिमुखम्, आकर्षति, मित्रं वञ्चयित्वा सर्वाणि स्वायत्तीकर्त्तुमेव इच्छति इत्यर्थः, प्राज्ञतरः अतिप्रज्ञावान्, नरः कौलिकाकारं तन्तुवायसधर्माणं, स्वार्थपरमिति यावत्, यथा तन्तुवायः वस्त्रवयनार्थं सूत्राणि प्रगुणीकृत्य यन्त्रेण आत्माभिमुखमेव आकर्षति, तद्वत् इति भावः, मित्रं वर्जयेत् त्यजेत् ; स्वार्थतत्परः सुहृत् पयोमुखविषकुम्भसदृशः हेयः इति निष्कर्षः॥ १२॥

ददातीति।—प्रीतेः प्रणयस्य, लक्षणं चिह्नं, षड्विधमेव,—ददाति,

परं, वयं वनचराः, युष्मदीयञ्च (म) जलान्ते गृहं, तत् कथं शक्यते तत्र गन्तुम्? तस्मात् तामपि मे भ्रातृपत्नीम् अत्र आनय, येन प्रणम्य तस्या आशीर्वादं गृह्णामि"। स आह,—"भो मित्र! अस्ति (य) समुद्रान्तरे सुरम्ये (र) पुलिनदेशेऽस्मद्गृहम्। तत् मम पृष्ठम् आरूढः सुखेन अकृतभयो गच्छ"। सोऽपि तत् श्रुत्वा सानन्दम् आह,—"भद्र! यदि एवं, तत् किं विलम्ब्यते? त्वर्य्यताम्; एषोऽहं तव पृष्ठम् आरूढः"। तथाऽनुष्ठिते (ल) अगाधे जलधौ गच्छन्तं मकरम् आलोक्य भयत्रस्तमना वानरः प्रोवाच,—"भ्रातः! शनैः शनैः गम्यताम्; (व) जलकल्लोलैः प्लाव्यते मे शरीरम्"। तत् आकर्ण्य मकरः चिन्तयामास,—"असौ अगाधं जलं प्राप्तो मे वशः सञ्जातः, मत्पृष्ठगतः तिलमात्रमपि चलितुं न शक्नोति; तस्मात् कथयामि अस्य निजाभिप्रायं, येन अभीष्टदेवतास्मरणं करोति"। आह च,—"मित्र! त्वं मया वधाय समानीतो भार्य्यावाक्येन

यति शेषः, प्रतिगृह्णाति, प्रीतिपात्रादिति शेषः, गुह्यं रहस्यम्, आख्याति आलपति, प्रीतिपात्रेण सहेति शेषः, पृच्छति, प्रीतिपात्रं गुह्यमेवेति शेषः, भुङ्क्ते, प्रणयिगृहे इति शेषः, ["भुजोऽनवने" (१।३।६६ पा०) इत्यात्मनेपदम्, अवने तु भुनक्ति महीं राजा इति परस्मैपदमेव] भोजयते च भक्ष्यं कारयति च, प्रणयिनमिति शेषः, [भुज्धातोः "हेतुमति च" (३।१।२६ पा०) इति णिच्, "णिचश्च" (१।३।७४ पा०) इति कर्त्तृगे क्रियाफले णिजन्तत्वादात्मनेपदम्]; दानं, ग्रहणं, रहस्यकथनं, रहस्यप्रश्नः, भोजनं, भोजनदानञ्च एतत् षट्कं प्रीतिलक्षणमिति ॥ १२ ॥

(म) जलान्ते—जलमध्ये।

(य) समुद्रान्तरे—समुद्रव्यवधाने, समुद्रमध्ये वा।

(र) पुलिनदेशे—जलोत्थितभूमौ, ("चड़ा" इति वङ्गभाषा)।

(ल) अगाधे—अतलस्पर्शे। जलधौ—समुद्रे। भयत्रस्तमनाः,—भयेन त्रस्तं—, समाकुलं, मनः यस्य सः।

(व) जलकल्लोलैः,—जलस्य कल्लोलैः,—महोर्म्मिभिः, प्रचण्डतरङ्गैरित्यर्थः, ("महोर्म्मिषु। तरङ्गोल्लोलकल्लोलौ" इत्यमरः)। प्लाव्यते—समन्तात् आर्द्रीक्रियते इत्यर्थः।

विश्वास्य ; तत् स्मर्य्यताम् अभीष्टदेवता"। स आह,—"भ्रातः ! किं मया तस्याः तवापि च अपकृतं, येन मे वधोपायः चिन्तितः ?" मकर आह,—"भोः ! तस्याः तावत् तव हृदयस्य (श) अमृतमयफलरसास्वादनमृष्टस्य भक्षणे (ष) दोहदः सञ्जातः, तेन एतदनुष्ठितम्"। प्रत्युत्पन्नमतिः वानरः आह,—"भद्र ! यदि एवं, तत् किं त्वया मम तत्र एव न (स) व्याहृतम् ? येन स्वहृदयं (ह) जम्बूकोटरे सदा एव मया (क) सुगुप्तं कृतं, तत् (ख) भ्रातृपत्न्या अर्पयामि। त्वया अहं शून्यहृदयोऽत्र कस्मात् आनीतः ?" तदाकर्ण्य मकरः सानन्दमाह,—"भद्र ! यदि एवं, तदर्पय मे हृदयं, येन सा दुष्टपत्नी तद्भक्षयित्वा (ग) अनशनात् उत्तिष्ठति। अहं त्वां तमेव जम्बूपादपं प्रापयामि"। एवमुक्त्वा निवर्त्त्य जम्बूतलम् अगात्। वानरोऽपि कथमपि (घ) जल्पितविविधदेवतोपचारपूजः

(श) अमृतमयेति।—अमृतमयम्—अमृततुल्यं, यत् फलं—जम्बूफलमित्यर्थः, तस्य रसास्वादनं—रसानुभवः, तेन मृष्टस्य—शुद्धस्य, मधुरास्वादस्य इत्यर्थः।

(ष) दोहदः,—लालसा, आत्यन्तिकी भोगकामना इत्यर्थः।

(स) व्याहृतम्—उक्तम्।

(ह) जम्बूकोटरे—जम्बूवृक्षगर्भे।

(क) सुगुप्तं—सुरक्षितम्।

(ख) भ्रातृपत्न्यै—भ्रातृजायायै, [भ्रातृपत्न्या अर्पयामि इति सन्धौ यकारलोपः ; केचित्तु "भ्रातृपत्न्याः" इति विवक्षया षष्ठीमपि वदन्ति]।

(ग) अनशनात्—प्रायोपवेशनरूपम् अनशनव्रतं परित्यज्य इत्यर्थः, ["ल्यब्लोपे कर्मण्यधिकरणे च" (वा०) इति ल्यब्लोपे पञ्चमी]।

(घ) जल्पितेति।—जल्पिताः,—"यदि अहम् अस्मात् सङ्कटात् उत्तीर्णो भवेयं तदा एवमेवंरूपेण देवतामर्चयामि" इति मनसीकृताः, विविधानां—बहूनां, देवतानाम् उपचारैः,—उपकरणैः, षोडशरूपैः दशरूपैः वा इत्यर्थः, पूजा येन तथोक्तः।

तीरमासादितवान्; ततश्च (ङ) दीर्घतरचङ्क्रमणेन तमेव जम्बूपादपमारूढः चिन्तयामास,—"अहो ! लब्धाः तावत् प्राणाः । अथवा साधु इदमुच्यते,—

न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ १४ ॥

तन्मम एतदद्य पुनर्जन्मदिनमिव सञ्जातम्" इति चिन्त्यमानं मकर आह,—"भो मित्र ! अर्पय तत् हृदयं, यत् ते भ्रातृपत्नी भक्षयित्वा अनशनात् उत्तिष्ठति"। अथ विहस्य निर्भर्त्सयन् वानरः तमाह,—"धिक् धिक् मूर्ख ! विश्वासघातक ! किं कस्यचित् हृदयद्वयं भवति ? तदाशु गम्यतां जम्बूवृक्षस्य अधस्तात्, न भूयोऽपि त्वया अत्र आगन्तव्यम् । उक्तञ्च यतः,—

सकृद्दुष्टञ्च यो मित्रं पुनः सन्धातुमिच्छति ।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा" ॥ १५ ॥

---

(ङ) दीर्घतरचङ्क्रमणेन—सुदीर्घकुटिलगत्या, भ्रमणम् उत्प्लवनेन इत्यर्थः; [कुटिलं क्रमणमित्यर्थे "नित्यं कौटिल्ये गतौ" (३।१।२३ पा०) इति यङ्, ततः "यङोऽचि च" (२।४।७४ पा०) इति तस्य लुकि ल्युट्प्रत्यये चङ्क्रमणमिति सिद्धम्] ।

नेति।—अविश्वस्ते विश्वासस्य अभाजने जने, न विश्वसेत्, ["विश्वसेत्" इत्यत्र आदादिकस्यापि श्वसधातोः गणव्यत्यासात् भ्वादित्वं, तत्र क्त्वा वेट्कत्वञ्च; वस्तुतस्तु श्वादित्वादपि स इव आचरतीति क्वौ साध्यमिति तु कविकल्पद्रुमटीकायां दुर्गादासः] विश्वस्ते विश्वासभाजनेऽपि जने, न अतिविश्वसेत् न दृढप्रत्ययं कुर्य्यात्; विश्वासात् उत्पन्नं जातं, भयं मूलानि अपि निकृन्तति निःशेषेण छिनत्ति; विश्वस्तत्वेन अनवहिततया अवधानाभावादिति भावः। साकल्येन मनुजहृदयमजानद्भिः पुरुषैः सततमेव सावहितैः भवितव्यमिति तात्पर्य्यम् ॥ १४ ॥

सकृदिति।—यः सकृत् एकवारं, दुष्टं दोषयुक्तं, विश्वासहननरूपापराधेनापराद्धमित्यर्थः, मित्रं पुनः सन्धातुं संश्लेषयितुं, मित्ररूपेण पुनर्ग्रहीतुमित्यर्थः, इच्छति, सः अश्वतरी गर्भं यथा गर्भमिव, मृत्युम् उपगृह्णाति आश्रयति; "मित्रस्य वैरमापन्नं प्रसृतोऽपि सुदारुणम्" इति भावः ॥ १५ ॥

तत् श्रुत्वा मकरः (च) सविलक्षं चिन्तितवान्,—"अहो! मया अतिमूढ़ेन किमस्य स्वचित्ताभिप्रायो निवेदितः!! तत् यदि असौ पुनरपि कथञ्चिद्विश्वासं गच्छति, तद्भूयोऽपि विश्वासयामि"; आह च,—"मित्र! (छ) हास्येन मया तेऽभिप्रायो लब्धः, तस्या न किञ्चित् तव हृदयेन प्रयोजनम्; तत् आगच्छ (ज) प्राघुणिकन्यायेन अस्मद्गृहम्; तव भ्रातृपत्नी सोत्कण्ठा वर्त्तते"। वानर आह,—"भो दुष्ट! गम्यताम् अधुना, नाहम् आगमिष्यामि। उक्तञ्च,—

> बुभुक्षितः किं न करोति पापं
> क्षीणा जना निष्करुणा भवन्ति।
> आख्याहि भद्रे! प्रियदर्शनस्य
> न गङ्गदत्तः पुनरेति कूपम्"॥ १६॥

मकर आह,—"कथमेतत्?" स आह,—

(च) सविलक्षं—सविस्मयम्।

(छ) हास्येन—उपहासच्छलेन इत्यर्थः। अभिप्रायः,—ममोपरि ते कीदृशः आशयः, विश्वस्तः अविश्वस्तः वा अहं ते, इत्याकारकः हृद्गतो भाव इत्यर्थः। लब्धः,—ज्ञात इत्यर्थः।

(ज) प्राघुणिकन्यायेन—अतिथिरूपेण।

बुभुक्षित इति।—बुभुक्षितः क्षुधितः जनः, [बुभुक्षा अस्य सञ्जाता इत्यर्थे "तदस्य सञ्जातं तारकादिभ्यः—" (५।२।३६ पा०) इत्यादिना इतच्] किं पापं न करोति? बुभुक्षानिवारणार्थं सर्वमेव पापं करोति इत्यर्थः; क्षीणाः क्षयमापन्नाः, भोज्याद्यभावादिति भावः, [क्षीणाः इति क्षिधातोरकर्मकत्वात् कर्त्तरि क्ते "निष्ठायामण्यदर्थे (६।४।६० पा०) इति दीर्घः, ततः "क्षियो दीर्घात्" (८।२।४६ पा०) इति निष्ठातस्य नकारः, भावकर्मणोस्तु क्षितः कामो मया इत्यादिकं स्यात्] जनाः लोकाः, निष्करुणा निर्दयाः, भवन्ति, हे भद्रे! प्रियदर्शनस्य तन्नाम्नः सर्पस्य, [सम्बन्धविवक्षया षष्ठी] आख्याहि कथय, गङ्गदत्तः तन्नामको भेकविशेषः, पुनः कूपं न एति न आगच्छति। उपजातिः वृत्तम्॥ १६॥

## कथा १।

"कस्मिंश्चित् कूपे गङ्गदत्तो नाम मण्डूकराजः प्रतिवसति स्म। स कदाचित् (झ) दायादैः उद्वेजितोऽरघट्टघटीम् आरुह्य (ञ) निष्क्रान्तः। अथ तेन चिन्तितं यत्,—'कथं तेषां दायादानां मया (ट) प्रत्यपकारः कर्त्तव्यः? उक्तञ्च,—

आपदि येनापकृतं येन च हसितं दशासु विषमासु।
अपकृत्य तयोरुभयोः पुनरपि जातं नरं मन्ये' ॥ १७ ॥

एवं चिन्तयन् बिले प्रविशन्तं कृष्णसर्पम् अपश्यत्। तं दृष्ट्वा भूयोऽपि अचिन्तयत् यत्,—'एनं तत्र कूपे नीत्वा सकलदायादानाम् उच्छेदं करोमि। उक्तञ्च,—

शत्रुभिर्योजयेच्छत्रुं बलिभिर्बलवत्तरम्।
स्वकार्य्याय यतो न स्यात् काचित् पीड़ाऽत्र तत्क्षये ॥१८॥

---

(झ) दायादैः,—दायं—पैतृकधनम्, आददते—गृह्णन्ति ये ते तैः, ज्ञातिभिः। उद्वेजितः,—विरक्तीकृतः। अरघट्टघटीं—महाकूपस्योपरि निबद्धस्य जलोत्तोलनसाधनीभूतदृढ़काष्ठदण्डसंलग्नरज्ज्वा निबद्धं क्षुद्रघटम्।

(ञ) निष्क्रान्तः,—कूपात् निर्गतः।

(ट) प्रत्यपकारः,—अपकार-प्रतीकार इत्यर्थः।

आपदीति।—येन जनेन, आपदि विपत्तिसमये, अपकृतम् अनिष्टं कृतं, येन च विषमासु प्रतिकूलासु, दशासु अवस्थासु, हसितं हास्यं कृतं, तयोरुभयोः [ विषयाधिकरणे सप्तमी ] यो हि छिद्रमनुसन्धाय तत्रातिकठोरं पीडयति, यश्च स्वयमनिष्टं कर्त्तुमसमर्थतया अन्यकृतमपकारमवलोक्य हर्षेण हसति, द्वयोरेतयोः इत्यर्थः, अपकृत्य अपकारं कृत्वा, स्थितमिति शेषः, नरं पुनरपि जातं मन्ये विवेचयामि; एतयोः द्वयोरेव समत्वादित्याशयः। आर्य्या वृत्तम् ॥ १७ ॥

शत्रुभिरिति।—स्वकार्य्याय स्वं कार्य्यं साधयितुं, बलिभिः प्रबलैः, शत्रुभिः रिपुभिः सह, बलवत्तरम् अतिप्रबलं, प्रबलरिपुभ्योऽपीति भावः, शत्रुं योजयेत् सङ्गमयेत्; द्वयोरेकतरविनाशेऽपि स्वार्थसिद्धिसम्भवादिति भावः; यतः अत्र संसारे, तत्क्षये तयोः शत्र्वोः क्षये, काचित् पीड़ा न स्यात्, प्रत्युत सुखमेव स्यादिति भावः ॥ १८ ॥

तथा च,—अरिमुन्मूलयेत् प्राज्ञस्तीक्ष्णं तीक्ष्णेन शत्रुणा ।
व्यथाकरं सुखार्थाय कण्टकेनेव कण्टकम्' ॥ १९ ॥

एवं स विभाव्य बिलद्वारं गत्वा तम् आहूतवान्,—'एहि एहि (ठ) प्रियदर्शन ! एहि'। तत् श्रुत्वा सर्पः चिन्तयामास,—'य एष माम् आह्वयति, स स्वजातीयो न भवति, यतो नैषा सर्पवाणी, अन्येन केनापि सह मम मर्त्यलोके (ड) सन्धानं नास्ति ; तदत्र एव दुर्गे स्थितः तावत् वेद्मि कोऽयं भविष्यति । उक्तञ्च,—

यस्य न ज्ञायते शीलं न कुलं न च संश्रयः ।
न तेन सङ्गतिं कुर्य्यादित्युवाच बृहस्पतिः ॥ २० ॥

कदाचित् कोऽपि (ढ) मन्त्रवादी औषधचतुरो वा माम् आहूय बन्धने क्षिपति ? अथवा कश्चित् पुरुषो वैरमाश्रित्य कस्यचिद्भक्षणार्थे मामाह्वयति ?' आह च,—'भोः ! को भवान् ?' स आह,—'अहं गङ्गदत्तो नाम मण्डूकाधिपतिः, त्वत्सकाशे मैत्र्यर्थम् अभ्यागतः'। तत् श्रुत्वा सर्प आह,—

अरिमिति ।—प्राज्ञः बुद्धिमान् जनः, तीक्ष्णेन दारुणेन, अतीव बलवता इत्यर्थः, स्वशत्रोः प्रबलतरेणेति यावत्, कण्टकपक्षे—तीक्ष्णाग्रेण ; शत्रुणा रिपुणा, तीक्ष्णं दारुणं, कण्टकपक्षे—सूक्ष्माग्रं, अरिं व्यथाकरं क्लेशप्रदं, कण्टकम्, अङ्गविद्धमिति शेषः, कण्टकेनेव सुदृढेनेति भावः, सुखार्थाय सौख्यनिमित्तं, भाविसुखोपभोगाय इत्यर्थः, अव्याहतं सुखं सेवितुमिति यावत् ; एकत्र,—शत्रुविनाशात्, अन्यत्र,—शरीरस्थकण्टकापसरणादिति भावः ; उन्मूलयेत् उत्पाटयेत्, समूलमेव तमुत्पाटयितुं यतेत इत्यर्थः ॥ १९ ॥

(ठ) प्रियदर्शन !—प्रियं दर्शनं यस्य तत्सम्बुद्धौ, सौम्यमूर्त्ते ! इत्यर्थः ।

(ड) सन्धानं—सम्मेलनं, सख्यम् इत्यर्थः ।

यस्येति ।—यस्य जनस्य, शीलं चरितं न, कुलं वंशः न, संश्रयः आवासश्च, न ज्ञायते, तेन जनेन, सङ्गतिं सम्मेलनं, न कुर्य्यादिति बृहस्पतिः उवाच ॥ २० ॥

(ढ) मन्त्रवादी—सर्पमन्त्रोच्चारणकुशलः । औषधचतुरः,—औषधाभिज्ञः ।

'भोः! (ण) अश्रद्धेयमेतत्, यत् तृणानां वह्निना सह (त) सङ्गमः। उक्तञ्च,—

> यो यस्य जायते वध्यः स स्वप्नेऽपि कथञ्चन।
> न तत्समीपमभ्येति तत् किमेवं प्रजल्पसि?' ॥ २१ ॥

गङ्गदत्त आह,—'भोः! सत्यमेतत्, स्वभाववैरी त्वम् अस्माकम्; परं परपरिभवात् प्राप्तोऽहं ते सकाशम्। उक्तञ्च,—

> सर्वनाशे च सञ्जाते प्राणानामपि संशये।
> अतिशत्रुं प्रणम्यापि रक्षेत् प्राणान् धनानि च' ॥ २२ ॥

सर्प आह,—'कथय कस्मात् ते परिभवः?' स आह,—'दायादेभ्यः'। सोऽपि आह,—'क्व ते (थ) आश्रयः? वाप्यां कूपे तड़ागे ह्रदे वा?' तेनोक्तं,—(द) 'पाषाणचयनिबद्धे

---

(ण) अश्रद्धेयम्—अनादरणीयम्, अविश्वास्यम् इति यावत्।

(त) सङ्गमः,—मेलनम्।

य इति।—यः यस्य जनस्य, ["कृत्यानां कर्त्तरि वा" (२। ३। ७१ पा०) इति कर्त्तरि षष्ठी] वध्यः हन्तव्यः, [हनधातोः "हनो वा यत् वधश्च वक्तव्यः" (वा०) इति वार्त्तिकसूत्रेण यत्प्रत्ययः वधादेशश्च, पक्षे तु—ण्यत्‌ऽपि, यथा घात्य इति] जायते भवति, स स्वप्नेऽपि कथञ्चन तत्समीपं न अभ्येति न गच्छति, वैरिसमीपे कदाऽपि न गन्तव्यमित्यर्थः, "आत्मानं सततं गोपायीत" इति श्रुतेरिति भावः; तत् तस्मात्, किं कथम्, एवं प्रजल्पसि? प्रलपसि? अहं तव सहजवैरी, त्वयि मत्समीपमागच्छति एव मया वध्यसे, तथाऽपि किमर्थं त्वमेवं मामाह्वयसीति भावः ॥ २१ ॥

सर्वनाशे इति।—सर्वनाशे धनजनादीनां ध्वंसे, तथा प्राणानामपि च संशये सङ्कटे इत्यर्थः, सञ्जाते उपस्थिते सति, अतिशत्रुं प्रबलरिपुमपि, प्रणम्य शरणं प्रपद्य इत्यर्थः, प्राणान् धनानि च रक्षेत्; प्राणधनरक्षार्थं लाघवकरकार्य्यमपि कर्त्तव्यमिति भावः ॥ २२ ॥

(थ) आश्रयः,—आवासः। वाप्यां—दीर्घिकायाम्। कूपे—क्षुद्रजलाधारे। तड़ागे—पुष्करिण्याम्। ह्रदे—अगाधजलाशये।

(द) पाषाणचयनिबद्धे—प्रस्तरसमूहरचिते।

कूपे'। सर्प आह,—'अहो! (ध) अपदा वयं, तन्नास्ति तत्र मे प्रवेशः, प्रविष्टस्य च स्थानं नास्ति, यत्र स्थितः तव दायादान् व्यापादयामि; तत् गम्यताम्। उक्तञ्च,—

यत् शक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत्।
हितञ्च परिणामे यत् तदाद्यं भूतिमिच्छता' ॥ २३ ॥

गङ्गदत्त आह,—'भोः! समागच्छ त्वम्, अहं सुखोपायेन तत्र तव प्रवेशं कारयिष्यामि; तथा, तस्य मध्ये जलोपान्ते रम्यतरं कोटरम् अस्ति, तत्र स्थितः त्वं (न) लीलया दायादान् व्यापादयिष्यसि'। तत् श्रुत्वा सर्पो व्यचिन्तयत्—'अहं तावत् (प) परिणतवयाः, कदाचित् कथञ्चित् मूषकमेकं प्राप्नोमि, सुखावहश्च जीवनोपायोऽयमनेन (फ) कुलाङ्गारेण मे दर्शितः; तत् गत्वा तान् मण्डूकान् भक्षयामि इति। अथवा साधु इदमुच्यते,—

यो हि प्राणपरिक्षीणः सहायपरिवर्जितः।
स हि सर्वसुखोपायां वृत्तिमारचयेत् बुधः' ॥ २४ ॥

---

(ध) अपदाः,—चरणरहिताः।

यदिति।—यत् वस्तु, ग्रसितुं भक्षयितुं, शक्यं समर्थं, [शकधातोः "शकिसहोश्च" (३।१।९९ पा०) इति यति रूपम्] तथा ग्रस्यं भक्षितव्यं, यत् ग्रस्तं प्रग्रस्तं, सुखं यथा तथेत्यर्थः, परिणमेत् परिपाकं गच्छेत्, यच्च परिणामे परिपाके, हितं हितकरं, स्यादिति शेषः, भूतिमिच्छता अभ्युदयार्थिना, तत् आद्यं भक्षणीयम् [अदधातोः ण्यति रूपम्] ॥ २३ ॥

(न) लीलया—अनायासेन। दायादान्—ज्ञातीन्।

(प) परिणतवयाः,—स्थविरः।

(फ) कुलाङ्गारेण—कुलेषु अङ्गार इव, वंशदूषकत्वादिति भावः, तेन, पापाचारिणा इत्यर्थः, वंशनाशकारिणेति भावः।

य इति।—यः जनः, प्राणैः बलैः, ("प्राणो हृन्मारुते बोले काव्यजीवेऽनिले बले। पुंलिङ्गः पूरिते वाच्य-लिङ्गः पुं भूम्नि चासुषु॥" इति मेदिनी) परिक्षीणः दुर्बलः, सर्वं मन्तुमुद्यत इति वा भावः, तथा सहायैः परिवर्जितः विहीनः, स हि बुधः विज्ञः,

एवं विचिन्त्य तमाह,—'भो गङ्गदत्त! यदि एवं, तदग्रे भव, येन तत्र गच्छावः'। गङ्गदत्त आह,—'भोः प्रियदर्शन! अहं त्वां सुखोपायेन तत्र नेष्यामि, स्थानञ्च दर्शयिष्यामि; परं त्वया अस्मत्परिजनो रक्षणीयः; केवलं यानहं तव दर्शयिष्यामि, ते एव भक्षणीयाः' इति। सर्प आह,—'साम्प्रतं त्वं मे मित्रं जातं, तन्न भेतव्यम्; तव वचनेन भक्षणीयाः ते दायादाः'। एवमुक्त्वा बिलात् निष्क्रम्य तम् आलिङ्ग्य च तेनैव सह प्रस्थितः

अथ कूपम् आसाद्य अरघट्टघटिकामार्गेण सर्पः तेन (व) आत्मना स्वालयं नीतः। ततश्च गङ्गदत्तेन कृष्णसर्प कोटरे धृत्वा दर्शिताः ते दायादाः। ते च तेन शनैः शनैः भक्षिताः। अथ मण्डूकाभावे सर्पेण अभिहितं,—'भद्र! निःशेषिताः ते रिपवः, तत् प्रयच्छ अन्यत् मे किञ्चित् भोजनं, यतोऽहं त्वया अत्र आनीतः'। गङ्गदत्त आह,—'भद्र! कृतं त्वया मित्रकृत्यम्; तत् साम्प्रतम् अनेन एव घटिकायन्त्रमार्गेण गम्यताम्' इति। सर्प आह,—'भो गङ्गदत्त! न सम्यगभिहितं त्वया; कथमहं तत्र गच्छामि? (भ) मदीयबिलदुर्गम् अन्येन रुद्धं भविष्यति; तस्मात् अत्रस्थस्य मे मण्डूकम् एकैकं (म) स्ववर्गीयं प्रयच्छ, नो चेत् सर्वानपि भक्षयिष्यामि' इति। तत् श्रुत्वा गङ्गदत्तो व्याकुलमना व्यचिन्तयत्,—'अहो!

---

स्यादिति शेषः, तदा सर्वसुखोपायां सर्वप्रकारेण सुखकरीम्, अनायासलभ्यामित्यर्थः, वृत्तिं जीविकाम्, आरचयेत् विदध्यात्; बलसहायहीनानां हि यया वृत्त्या सुखेन प्राणयात्रा भवेत्, सा एव अवलम्बनीया इत्यर्थः, तत् एतत्प्रदर्शितः मण्डूकभक्षणरूपोऽयं सुखावहः जीवनोपायः अवश्यमेव मया अवलम्बनीय इति भावः॥ २४॥

(व) आत्मना—स्वयम्।

(भ) मदीयबिलदुर्गं—मम गर्तरूपः कोटः, आवासगर्त्तः इत्यर्थः। रुद्धम्—आवृतम्, अधिकृतमित्यर्थः, तदेदानीं मत्प्रवेशाधिकारो नास्तीति भावः।

(म) स्ववर्गीयम्—आत्मपक्षीयम्, आत्मसजातीयमित्यर्थः।

किमेतत् मया कृतं सर्पमानयता !! तत् यदि निषेधयिष्यामि, तदा सर्वानपि भक्षयिष्यति । अथवा युक्तमुच्यते,—

योऽमित्रं कुरुते मित्रं वीर्य्याभ्यधिकमात्मनः ।
स करोति न सन्देहः स्वयं हि विषभक्षणम् ॥ २५ ॥

तत् प्रयच्छामि अस्य एकं प्रतिदिनं सुहृदम् । उक्तञ्च,—

सर्वस्वहरणे युक्तं शत्रुं बुद्धियुता नराः ।
तोषयन्त्यल्पदानेन बाडवं सागरो यथा ॥ २६ ॥

तथा च,— यो दुर्बलोऽणूनपि याच्यमानो
बलीयसा यच्छति नैव साम्ना ।
प्रयच्छते नैव च दर्श्यमानं
खारीं स चूर्णस्य पुनर्ददाति ॥ २७ ॥

---

य इति ।—यः जनः, आत्मनः स्वस्मात्, वीर्य्येण अभ्यधिकम् अधिकबलम् इत्यर्थः, अमित्रं शत्रुं, मित्रं कुरुते, स स्वयं हि आत्मनैव, विषभक्षणं करोति, अत्र सन्देहः न ; स्वदेशबुद्धिनाशार्थं प्रबलेन रिपुणा सह मित्रत्वसम्पादनस्य स्वयं विषभक्षणमिव अवश्य-मृत्युजनकत्वम्, अत्र संशयो नास्ति इति निष्कर्षितार्थः ; अत एव सम्बन्धवस्तुनोरेतयोः अमित्रमैत्रीकरणविषभक्षणयोः बिम्बप्रतिबिम्बभावबोधात् निदर्शनाऽलङ्कारः ॥ २५ ॥

सर्वस्वेति ।—बुद्धियुताः बुद्धिमन्तः, नराः सागरः बाडवं यथा बाडवानलम् इव, यथा हि समुद्रः अपां विशोषकं बाडवानलं गर्भैकदेशमधितिष्ठन्तं प्रभुभूतं प्रीणयितुं किञ्चित् सलिलं समर्प्य आत्मानं संरक्षति, तद्वदित्यर्थः, सर्वस्वहरणे युक्तम् उद्यत-मित्यर्थः, शत्रुम् अल्पदानेन किञ्चिन्मात्रदानेन, तोषयन्ति प्रीणयन्ति ; "सर्वनाशे समुत्पन्ने किञ्चित् त्यक्त्वाऽपि रक्षयेत्" इति भावः ॥ २६ ॥

य इति ।—यः दुर्बलः बलीयसा प्रबलेन, याच्यमानः अभ्यर्थ्यमानः, साम्ना सान्त्वेन, अणूनपि अल्पानपि, चूर्णानिति शेषः, नैव यच्छति न ददाति, तथा दर्श्यमानश्च एतत् दंष्ट्रीति दृष्टिविषयीक्रियमाणमपि शीघ्रं वस्तु इति यावत्, बलीयसेत्यनुषङ्गः, नैव प्रयच्छते [अत्र आत्मनेपदम् अनुसन्धेयम्] न ददाति, स पुनः बलीयसा आक्रमणात् परमित्यर्थः, चूर्णस्य सुधायाः, भारविशेषस्येत्यर्थः, खारीम्, अपिरत्र अध्याहार्य्यः, तदाख्यपरिमाण-विशिष्टमपि, द्विनवत्यधिकशतद्वयप्रमितमपीति यावत्, अष्टाविंशत्यधिकशतद्वयप्रमितमपीति वा,

तथा च,—'सर्वनाशे समुत्पन्ने अर्द्धं त्यजति पण्डितः ।
अर्द्धेन कुरुते कार्य्यं सर्वनाशो हि दुस्तरः ॥ २८ ॥
न स्वल्पस्य कृते भूरि नाशयेन्मतिमान् नरः ।
एतदेव हि पाण्डित्यं यत् स्वल्पात् भूरिरक्षणम्' ॥ २९ ॥

एवं निश्चित्य स नित्यमेकैकं मण्डूकं तम् (ग) आदिशति । सोऽपि तं भक्षयित्वा तस्य परोक्षेऽन्यानपि भक्षयति । अथवा साधु इदमुच्यते,—

यथा हि मलिनैर्वस्त्रैर्यत्र तत्रोपविश्यते ।
एवं चलितवित्तस्तु वित्तशेषं न रक्षति ॥ ३० ॥

अथ अन्यदिने तेन अपरान् मण्डूकान् भक्षयित्वा गङ्ग-

---

ददाति ; बलवद्भिर्विरोधस्य दुरुदर्कतया ते सद्य्रैव तोषणीया इति भावः, अतः का कथा महार्घाणाम्, अतितुच्छानामपि वस्तूनामप्रदानजनितमानभङ्गं बलिनः मानिनः न सहन्ते, तेन हि स्तोकमपि चूर्णं याचितो जनः तददाने तैराक्रान्तः चूर्णराशिं दत्त्वा पश्चात् तान् सान्त्वयति इत्याशयः । उपजातिः वृत्तम् ॥ २७ ॥

सर्वेति ।—पण्डितो जनः, सर्वनाशे सर्वस्वक्षये, समुत्पन्ने समुपस्थिते सति, अर्द्धं त्यजति, अर्द्धेन त्यक्तावशिष्टेनेति भावः, कार्य्यं, स्वमिति शेषः, कुरुते ; हि यतः, सर्वनाशः सर्वेषां नाशः, दुस्तरः दुःसह इत्यर्थः, सर्वैरिति शेषः ॥ २८ ॥

नेति ।—मतिमान् नरः स्वल्पस्य कृते निमित्तं, भूरि प्रभूतं, बहु इत्यर्थः, न नाशयेत् ; स्वल्पात् स्वल्पव्ययात्, स्वल्पं दत्त्वेत्यर्थः, [ "ल्यब्लोपे कर्मण्यधिकरणे च" इति वार्त्तिकसूत्रेण पञ्चमी ] यत् भूरिरक्षणं बहुरक्षणम्, एतदेव पाण्डित्यं हि चातुर्य्यम् इत्यर्थः ॥ २९ ॥

( ग ) आदिशति—आज्ञापयति, भक्षयितुं ददातीत्यर्थः ।

यथेति ।—मलिनैः वस्त्रैः उपलक्षितैः [ इति उपलक्षणे करणे वा तृतीया ] मलिनवसनैर्जनैरित्यर्थः, यथा यत्र तत्र उपविश्यते, अतः एव मलिनतया तेषां वस्त्रस्य पुनः मालिन्यसम्भावनाविरहादिति भावः, एवं तथा, चलितवित्तः व्ययितधनः, जनः इति शेषः, वित्तशेषं धनावशेषं, किञ्चिन्मात्रावशिष्टं धनमित्यर्थः, न रक्षति, यत् प्राप्नोति तदेव व्ययं करोति इत्यर्थः ; सर्वधननाशानन्तरं किञ्चिन्मात्ररक्षणे सुखसम्भावनाभावतया आग्रहातिशयविरहादिति भावः ॥ ३० ॥

इत्तसुतो यमुनादत्तो भक्षितः। तं भक्षितं मत्वा गङ्गदत्तः तारस्वरेण 'धिक्!! धिक्!!' इति प्रलापपरः कथञ्चिदपि न विरराम। ततः स्वपत्न्या अभिहितः,—

'किं क्रन्दसि ? दुराक्रन्द ! स्वपक्षक्षयकारक !।
स्वपक्षस्य क्षये जाते को नस्त्राता भविष्यति ? ॥ २१ ॥

तत् अद्यापि विचिन्त्यताम् आत्मनः (र) निष्क्रमणम्, अस्य वधोपायश्च'।

अथ गच्छता कालेन सकलमपि ( ल ) कवलितं मण्डूककुलं, केवलमेको गङ्गदत्तः तिष्ठति। ततः प्रियदर्शनेन भणितं,—'भो गङ्गदत्त! बुभुक्षितोऽहम्; निःशेषिताः सर्वे मण्डूकाः; तद्दीयतां मे किञ्चित् भोजनं, यतोऽहं त्वया अत्र आनीतः'। स आह,—'भो मित्र! न त्वया अत्र विषये मयि अवस्थिते काऽपि चिन्ता कार्य्या; तत् यदि मां प्रेषयसि, तदा अन्यकूपस्थान् अपि मण्डूकान् विश्वास्य अत्र आनयामि'। स आह,—'मम तावत् त्वम् अभक्ष्यो भ्रातृस्थाने; तत् यदि एवं करोषि, तदा साम्प्रतं पितृस्थाने भवसि; तदेवं क्रियताम्' इति। सोऽपि तत् आकर्ण्य अरघट्टघटिकाम् आश्रित्य (व) विविधदेवतोपकल्पितपूजोपयाचितः तस्मात् कूपात् विनि-

---

किमिति।—हे दुराक्रन्द! दुष्टरोदन! वृथारोदिन्! इत्यर्थः, स्वपक्षक्षयकारक! स्ववर्गध्वंसिन्! किं व्यर्थं, क्रन्दसि ? रोदिषि ? स्वपक्षस्य स्वगणस्य, क्षये विनाशे, जाते सति, कः जनः, नः अस्माकं, त्राता रक्षिता, भविष्यति ? न कोऽपि इत्यर्थः; स्वकीय स्वजन एव रक्षकः भवति, अद्यपि रक्षितारं भवन्तमप्यनेन रक्षणमिति भावः ॥ २१ ॥

( र ) निष्क्रमणं—निर्गमनम्।

( ल ) कवलितं—भक्षितम्।

( व ) विविधेति।—विविधाभ्यः बह्वीभ्यः, देवताभ्यः उपकल्पितया—सङ्कल्पितया, प्रभाविता बहु द्रव्येण; इष्टत्वेन मननीकृतया इति भावः, ("नानाविध"

ष्क्रान्तः। प्रियदर्शनोऽपि (श) तदाकाङ्क्षया तत्रस्थः प्रतीक्ष-
माणः तिष्ठति। अथ चिरात् अनागते गङ्गदत्ते प्रियदर्शनः
(ष) अन्धकोटरनिवासिनीं गोधाम् उवाच,—'भद्रे! क्रियतां
(स) स्तोकं साहाय्यम्; यतः चिरपरिचितः ते गङ्गदत्तः;
तत् गत्वा कुत्रचित् जलाशये तम् अन्विष्य मम (ह) सन्देशं
कथय यत्,—'आगम्यताम् एकाकिना अपि भवता द्रुततरं,
यदि अन्ये मण्डूका न आगच्छन्ति; अहं त्वया विना नात्र
वस्तुं शक्नोमि। तथा, यदि अहं तव विरुद्धम् आचरामि,
(क) तत् सुकृतम् अन्तरे मया विधृतम्' इति'। गोधा अपि
तद्वचनात् गङ्गदत्तं द्रुततरम् अन्विष्य आह,—'भद्र गङ्गदत्त!
स तव सुहृत् प्रियदर्शनः तव मार्गं (ख) समीक्षमाणः तिष्ठति;
तत् शीघ्रम् आगम्यताम्। अपरञ्च, तेन तव (ग) विरूपकरणे

---

इति वङ्गभाषा) पूजया उपयाचितं प्रार्थितं, सर्पादात्मपरित्राणमित्यर्थः, येन तथोक्तः, स्वजीवनरक्षणाय देवेभ्यः सङ्कल्पितविविधपूजोपचारः इत्यर्थः।

(श) तदाकाङ्क्षया—तेषाम्—अन्धकूपस्थितानां मण्डूकानाम्, आकाङ्क्षया—भक्षणलालसया।

(ष) अन्धकोटरनिवासिनीं—गर्तान्तरवासिनीम्। गोधां—गोधिकाम्; "गोसाप" इति वङ्गभाषा।

(स) स्तोकम्—अल्पम्।

(ह) सन्देशं—वाचिकम्। एकाकिना—असहायेन, [ "एकादाकिनिच्चा-सहाये" (५।३।५२ पा०) इत्याकिनिच्प्रत्ययः ]।

(क) तदिति।—तत्—तदा, सुकृतं—पुण्यं, धर्म इत्यर्थः, मदीयमिति भावः, अन्तरे—आवयोर्मध्ये इत्यर्थः, विधृतं—साक्षिभूतत्वेन स्थापितम् इत्यर्थः; मम धर्म एवात्र प्रतिभूरस्ति इति भावः; अथवा,—सुकृतं—पुण्यम्, अन्तरे—दूरे, विधृतं—स्थापितम्; यद्यहं त्वयि अन्याय्यमाचरेयं, तदा मया पुण्यं परित्यक्तं भवेत्, सर्वथा पापीयसा मया भाव्यम् इति भावः।

(ख) समीक्षमाणः—प्रतीक्षमाणः।

(ग) विरूपकरणे—विरुद्धाचरणे।

सुप्ततमन्तरे हृतम्; तत् निःशङ्केन मनसा समागम्यताम्' इति। तत् आकर्ण्य गङ्गदत्त आह,—

'बुभुक्षितः किं न करोति पापम् ?
क्षीणा नरा निष्करुणा भवन्ति ।
आख्याहि भद्रे ! प्रियदर्शनस्य
न गङ्गदत्तः पुनरेति कूपम्' ॥ २२ ॥

एवमुक्त्वा स तां विसर्जयामास। तत् भो दुष्टजलचर ! अहमपि गङ्गदत्त इव त्वद्गृहे न कथञ्चित् अपि यास्यामि"। तत् श्रुत्वा मकर आह,—"भो मित्र ! न एतत् युज्यते; सर्वथा एव मे (घ) कृतघ्नतादोषम् अपनय मद्गृहागमनेन; अन्यथा, अत्र अहम् (ङ) अनशनात् प्राणत्यागं तव उपरि करिष्यामि"। वानर आह,—"मूढ ! किम् अहं लम्बकर्णो मूर्खः यत् (च) दृष्टापायोऽपि स्वयमेव तत्र गत्वा आत्मानं व्यापादयामि ?—

आगतश्च गतश्चैव दृष्ट्वा सिंहपराक्रमम् ।
अकर्णहृदयो मूर्खो यो गत्वा पुनरागतः" ॥ २३ ॥

बुभुक्षित इति।—४५० पृष्ठे पूर्वं व्याख्यातम् ॥ २२ ॥

(घ) कृतघ्नतादोषम्—अकृतज्ञताऽपराधम्। अपनय—नाशय।

(ङ) अनशनात्—अनाहारात्। तव उपरि—त्वन्निमित्तमित्यर्थः।

(च) दृष्टापायोऽपि—दृष्टः अपायः,—आसन्नविपत्तिः येन तथाभूतः, विनाशोपक्रमं दृष्ट्वाऽपि इत्यर्थः।

आगत इति।—आगतः लोभमोहितः सन् पूर्वं सिंहसमीपं समागतः, पश्चाच्च सिंहपराक्रमं सिंहस्य विक्रमं, तद्धननाय सिंहस्य तथाविधं क्रममित्यर्थः, दृष्ट्वैव स्वयं स्वचक्षुषा सम्यक् अवलोक्यैव, गतश्च पलायितोऽपि, मूर्खः मूढः, सर्वं दृष्ट्वाऽपि किमपि निर्णेतुमक्षम इत्यर्थः, यः, रासभ इति शेषः, गत्वा प्राणभयात् पलाय्य; "गत्वा" इत्यत्र "तत्र" इति पाठस्तत्र सङ्गतम्; पुनः भूयः, आगतः स्वप्राणहन्तारं सिंहं निकषा समुपस्थितः, अत एव अकर्णहृदयः कर्णौ च हृदयञ्चेति ["हृदय—"

मकर आह,—"भद्र! स को लम्बकर्णः? कथं दृष्टापायोऽपि मृतः? तत् मे निवेद्यताम्"। वानर आह,—

## कथा २।

"कस्मिंश्चित् वनोद्देशे (छ) करालकेशरो नाम सिंहः प्रतिवसति स्म। तस्य च धूसरको नाम शृगालः सदा एव (ज) अनुयायी परिचारकोऽस्ति। अथ कदाचित् तस्य हस्तिना सह (झ) युध्यमानस्य शरीरे गुरुतराः (ञ) प्रहाराः सञ्जाताः, यैः पदमेकमपि चलितुं न शक्नोति। तस्य (ट) अचलनाच्च धूसरकः क्षुत्क्षामकण्ठो दौर्बल्यं गतः। अन्यस्मिन् अहनि शृगालः तम् अवोचत्,—'स्वामिन्! बुभुक्षया पीड़ितोऽहं पदात् पदमपि चलितुं न शक्नोमि; तत् कथं ते शुश्रूषां करोमि?' सिंह आह,—'भोः! गच्छ, अन्वेषय किञ्चित् सत्त्वं, येन इमाम् अवस्थां गतोऽपि व्यापादयामि'। तदाकर्ण्य शृगालोऽन्वेषयन् कञ्चित् समीपवर्त्तिनं ग्रामम् आसादितवान्। तत्र लम्बकर्णो नाम गर्दभः (ठ) तड़ागोपान्ते प्रविरलदूर्वाङ्कुरान् कृच्छ्रात्

---

(२।४।२ पा०) इति एकत्वं] तत्र अपगतं यस्य सः, असम्यक्श्रोटेन्द्रियमानस-शालीत्यर्थः, दीर्घकर्णहृदयवत्त्वेऽपि शृगालवचसा सिंहसमीपे पुनर्गमनेन तच्छून्यत्वेन परिचायितः इति भावः, "किमहं लम्बकर्णो मूर्खः?" इति पूर्वेणान्वयः ॥ ३२ ॥

(छ) करालेति।—करालाः,—उत्कटाः, भीतिप्रदा इत्यर्थः, केशराः,—जटाः यस्य तथोक्तः, यस्य जटादर्शनेनैव भयं जायते इति भावः।

(ज) अनुयायी—अनुगतः। परिचारकः,—सेवकः।

(झ) युध्यमानस्य—सङ्ग्रामं कुर्वतः।

(ञ) प्रहाराः,—आघाताः, [ प्रक्रियते इति भावे घञ् ] यद्वा,—प्रहाराः,—सुतीव्राः वेदनाः इत्यर्थः, [ प्रक्रियते अस्मै इति सम्प्रदाने घञि रूपम् ]।

(ट) अचलनात्—गमनाभावात्, मृगयार्थमिति शेषः।

(ठ) तड़ागोपान्ते—सरसीसमीपे। प्रविरलेति।—प्रविरलाः,—अल्पाः, दूर्वाणाम् अङ्कुराः,—प्ररोहाः ताम्।

( ङ ) आस्वादयन् दृष्टः। ततश्च समीपवर्त्तिना भूत्वा तेन अभिहितः,—'माम ! नमस्कारोऽयं मदीयः (ढ) सम्भाव्यताम् ; चिरात् दृष्टोऽसि !! तत् कथय, किमेवं दुर्बलतां गतः ?' स आह,—'भो भगिनीपुत्र ! किं कथयामि !! रजकोऽतिनिर्दयोऽतिभारेण मां पीडयति, (ण) घासमुष्टिम् अपि न प्रयच्छति ; केवलं दूर्वाङ्कुरान् धूलिमिश्रितान् भक्षयामि, तत् कुतो मे शरीरे पुष्टिः ?' शृगाल आह,—'माम ! यदि एवं, तदस्ति ( त ) मरकतसदृशशष्पप्रायो नदीसनाथो रमणीयतरः प्रदेशः, तत्र आगत्य मया सह सुभाषितगोष्ठीसुखम् अनुभवन् तिष्ठ'। लम्बकर्ण आह,—'भो भगिनीसुत ! युक्तमुक्तं भवता ; परं वयं ग्राम्याः पशवोऽरण्यचारिणां बध्याः, तत् किं तेन ( थ ) भव्यप्रदेशेन ?' शृगाल आह,—'माम ! मैवं वद, मद्भुजपञ्जरपरिरक्षितः स देशः ; तन्नास्ति कस्यचित् अपरस्य तत्र प्रवेशः। परमनेन एव दोषेण ( द ) रजककदर्थिताः तत्र तिस्रो रासभ्यः ( ध ) अनाथाः सन्ति ; ताश्च ( न ) पुष्टिमापन्ना यौवनोत्कटा इदं माम् ऊचुः,—'यदि त्वम् अस्माकं सत्यो मातुलः, तदा

( ङ ) आस्वादयन्—भक्षयन्।

( ढ ) सम्भाव्यतां—गृह्यताम्, अनुमोद्यतामित्यर्थः।

( ण ) घासमुष्टिं—मुष्टिमितघासम्।

( त ) मरकतेति।—मरकतैः,—हरिन्मणिभिः, तत्कान्तिरित्यर्थः, सदृशानि यानि शष्पाणि—बालतृणानि, तत्प्रायः,—तद्बहुलः। नदीसनाथः,—नदीयुक्तः, नदीसमीपस्थित इत्यर्थः। रमणीयतरः,—सुरम्यः, पानीयस्यापि सौलभ्यादिति भावः।

( थ ) भव्यप्रदेशेन—उत्कृष्टस्थानेन।

( द ) रजककदर्थिताः,—रजकेन क्लेशिताः।

( ध ) अनाथाः,—अस्वामिकाः।

( न ) पुष्टिमापन्नाः,—परिपुष्टशरीराः। यौवनोत्कटाः,—उद्दामयौवनसम्पन्नाः, परिपूर्णयौवनेन रम्याः इत्यर्थः।

किञ्चित् ग्रामान्तरं गत्वा अस्मद्योग्यं कञ्चित् पतिमानय' तदर्थं त्वामहं तत्र नयामि'। अथ शृगालवचनानि श्रुत्वा कामपीडिताङ्गः तम् अवोचत्,—'भद्र! यदि एवं, तदग्रे भव, येन आगच्छामि'। अथवा साधु इदमुच्यते,—

नामृतं न विषं किञ्चिदेकां मुक्त्वा नितम्बिनीम्।
यस्याः सङ्गेन जीव्येत म्रियेत च वियोगतः॥ २४॥

तथा च,—यासां नाम्नाऽपि कामः स्यात् सङ्गमं दर्शनं विना।
तासां दृक्सङ्गमं प्राप्य यन्न द्रवति कौतुकम्॥ २५॥

तथाऽनुष्ठिते शृगालेन सह गर्दभः सिंहान्तिकमागतः। सिंहोऽपि व्यथाकुलितस्तं दृष्ट्वा यावत् समुत्तिष्ठति, तावत् रासभः पलायितुम् आरब्धवान्। अथ तस्य पलायमानस्य सिंहेन (प) तलप्रहारो दत्तः; (फ) स च मन्दभाग्यस्य व्यवसाय इव व्यर्थतां गतः। अत्रान्तरे शृगालः कोपाविष्टस्तम् उवाच,

---

नात।—एका केवला, नितम्बिनी रमणी, मुक्त्वा विहाय, किञ्चिदपि वस्तु, अमृतं न, विषञ्च न, रमण्येव एकाधारेण अमृतरूपिणी विषरूपिणी चेत्यर्थः, तत्संयोगस्य स्वर्गसुखोपमपरमप्रीतिजनकत्वात्, वियोगस्य च मृत्युक्लेशतुल्यक्लेशप्रदत्वादिति भावः। एतदेव उपपादयितुमाह, यस्या इति।—यस्याः नितम्बिन्याः, सङ्गेन सम्मेलनेन, जीव्येत प्राण्येत, वियोगतः विच्छेदेन, म्रियेत च नश्येत च, जनेन इति शेषः। एकैव रमणी संयोगवियोगजनितकालविशेषवशेन अमृतविषोभयरूपा भवतीति भावः॥२४॥

यासामिति।—यासां सङ्गमं मेलनम्, अथ वा दर्शनं विनाऽपि नाम्नाऽपि नाममात्रेणैव, कामः मदनोद्रेकः, स्यात्, तासां नारीणां, दृक्सङ्गमं नेत्रसङ्गं, दृष्टिपातम् इत्यर्थः, प्राप्य, यत् न द्रवति आर्द्रीभवति, जीवजातम् इति शेषः, तत् कौतुकम् आश्चर्यकरम्, ते जीवाः प्रस्तरवदतिकठिनहृदया इति भावः॥ २५॥

(प) तलप्रहारः,—चपेटाघातः।

(फ) स इति।—स च—तलप्रहारः इत्यर्थः, मन्दभाग्यस्य—मन्दं भाग्यं यस्य तस्य, दुर्भाग्यस्य इत्यर्थः, व्यवसाय इव—चेष्टितमिव, पुरुषकार इवेत्यर्थः, व्यर्थतां गतः,—निष्फलोऽभवत् इत्यर्थः; तेन तलप्रहारेण रासभस्य न किमपि अनिष्टं जात-मिति भावः।

—'भोः ! किमेवंविधः प्रहारस्ते, यत् गर्दभोऽपि तव पुरतो बलात् गच्छति, तत् कथं गजेन सह युद्धं करिष्यसि ? तत् दृष्टं ते बलम्'। अथ (ब) विलक्षस्मितं सिंह आह,—'भोः ! किम् अहं करोमि !! मया न क्रमः सज्जीकृत आसीत् ; अन्यथा, गजोऽपि मत्क्रमाक्रान्तो न गच्छति'। शृगाल आह,—'अहं पुनरपि एकवारं तवान्तिके तमानेष्यामि ; परं त्वया सज्जीकृतक्रमेण स्थातव्यम्'। सिंह आह,—'भद्र ! यो मां प्रत्यक्षं दृष्ट्वा गतः, स पुनः कथम् अत्र आगमिष्यति ? तदन्यत् किमपि सत्त्वम् अन्विष्यताम्'। शृगाल आह,—'किं तव अनेन ( भ ) व्यापारेण ? त्वं केवलं सज्जितक्रमः तिष्ठ'।

तथा अनुष्ठिते शृगालो यावत् रासभमार्गेण गच्छति, तावत् तत्रैव स्थाने ( म ) चरन् सः दृष्टः। अथ शृगालं दृष्ट्वा रासभः प्राह,—'भो भगिनीसुत ! शोभनस्थाने त्वया अहं नीतः, यत् (य) द्राक् मृत्युवशं गतः !! तत् कथय किं तत् सत्त्वं, यस्य अतिरौद्रवज्रसदृशकरप्रहारात् अहं मुक्तः ?' तत् श्रुत्वा प्रहसन् शृगाल आह,—'भद्र ! रासभी त्वाम् ( र ) आयान्तं दृष्ट्वा सानुरागम्

---

( ब ) विलक्षस्मितं—सविस्मयहास्यम्, ईषत् विस्मयेन हसन् सन्नित्यर्थः। क्रमः,—परिकरबन्धः, आक्रमणार्थमवस्थानपरिपाटी इत्यर्थः, ("क्रोत् पाता" इति वङ्गभाषा )। सज्जीकृतः,—असज्जः सज्जः कृतः तथोक्तः, [ अभूततद्भावे च्विप्रत्ययः ]। मदिति।—मम क्रमेण—आक्रमणेन, रिपुविनाशार्थमनुष्ठीयमानोद्लम्फनविशेषेणेत्यर्थः, "झाँप" इति वङ्गभाषा, ("क्रमस्त्वनुक्रमे शक्तौ कल्पे चाक्रमणेऽपि च" इति मेदिनी), आक्रान्तः,—अभिभूतः।

( भ ) व्यापारेण—पर्यालोचनया इत्यर्थः।

( म ) चरन्—भ्रमन्। सः,—रासभः।

( य ) द्राक्—झटिति, सपदि वा। अतीति।—अतिरौद्रः,—अतिदारुणः, असदृशः यः करः तस्य प्रहारात्—आघातात्।

( र ) आयान्तम्—आगच्छन्तम्। सानुरागं—सप्रणयम्।

आलिङ्गितुं समुत्थिता । त्वञ्च कातरत्वात् (ख) नष्टः, सा पुनर्न शक्ता त्वां विना स्थातुम् ; तया तु नश्यतः ते अवलम्बनार्थं हस्तः क्षिप्तः, न अन्यकारणेन ; तत् आगच्छ, सा त्वत्कृते प्रायोपवेशना उपविष्टा तिष्ठति । एतत् वदति यत्,—'लम्ब-कर्णो यदि मे भर्त्ता न भवति, तत् अहमग्नौ जले वा प्रविशामि, न पुनस्तस्य वियोगं सोढुं शक्नोमि' । तत् प्रसादं कृत्वा तत्र आगम्यतां, नो चेत् तव स्त्रीहत्यापातकं भविष्यति । अपरं, भगवान् कामः कोपं तव उपरि करिष्यति । उक्तञ्च,—

'स्त्रीमुद्रां मकरध्वजस्य जयिनीं सर्वार्थसम्पत्करीं
ये मूढाः प्रविहाय यान्ति कुधियो मिथ्याफलान्वेषिणः ।
ते तेनैव निहत्य निर्दयतरं नग्नीकृता मुण्डिताः
केचिद्रक्तपटीकृताश्च जटिलाः कापालिकाश्चापरे' ॥२६॥

(ख) नष्टः,—पलायितः । नश्यतः,—पलायमानस्य । अवलम्बनार्थं—धारणार्थम् । क्षिप्तः,—प्रसारितः । त्वत्कृते—तव निमित्तम् । प्रायोपवेशना—अनशनव्रतधारिणी ।

स्त्रीमुद्रामिति ।—ये मूढाः मूर्खाः. कुधियः दुर्बुद्धयः. मकरध्वजस्य कामस्य, जयिनीं जयसाधनीं. त्रिभुवनविजयसाधनास्त्रविशेषरूपिणीमित्यर्थः, स्त्रीमुद्राहपाशबलेन सर्वेषां स्वायत्तीकरणादिति भावः ; सर्वार्थसम्पत्करीं [ सर्वार्थसम्पदुपपदात् करोतेः "कृञो हेतुताच्छील्यानुलोम्येषु" (३।२।२० पा०)इति टप्रत्ययः, स्त्रियां ङीप्] प्रभूतधनसम्पत्ति-लाभेन यत् सुखं तादृशसुखविधायिनीम् इत्यर्थः, स्त्रीमुद्रां स्त्रिया मुद्रा चिह्नविशेषः तां, योषिदर्थानिमित्यर्थः, प्रविहाय परित्यज्य, मिथ्याफलानाम् अलीकभूतानां स्वर्गादीना-मित्यर्थः, अन्वेषिणः अर्थिनः सन्तः, यान्ति विचरन्ति इत्यर्थः, तपश्चरणार्थमिति भावः, ते तेनैव स्त्रियः विहाय गमनेनैवेत्यर्थः, निर्दयतरम् अतिनिष्ठुरं यथा तथा, निहत्य आहत्य, केचित् नग्नीकृता विवसनाः कृताः, तथा मुण्डिताः केचित् कृतशिरोमुण्डनाः, रक्तपटीकृताः केचित् रक्तवसनाः कृताः, जटिलाः केचित् जटाधारिणः कृताः, अपरे च अन्ये च केचित्, कापालिकाः नराशिरःकपालकृतभूरिभूषणाः, श्मशानवासिन इत्यर्थः, कृताः कामेन इति सर्वत्रोहनीयम् ; ये खलु जगति दिगम्बरादिसम्प्रदायाः, ते स्त्रीणामवहेलनात् कामेनैव विरूपीकृता इति श्लोकस्थगनमर्माभिप्रायः ; न हि एते

अथ असौ तद्वचनं श्रद्धेयतया श्रुत्वा भूयोऽपि तेन सह प्रस्थितः। अथवा साधु इदमुच्यते,—

जानन्नपि नरो दैवात् प्रकरोति विगर्हितम्।
कर्म किं कस्यचिल्लोके गर्हितं रोचते कथम्?॥ १७॥

अत्रान्तरे सज्जितक्रमेण सिंहेन स लम्बकर्णो व्यापादितः। ततस्तं हत्वा शृगालं रक्षकं निरूप्य स्वयं स्नानार्थं नद्यां गतः। शृगालेनापि (क) लौल्यौत्सुक्यात् तस्य कर्णहृदयं भक्षितम्। अत्रान्तरे सिंहो यावत् स्नात्वा (ख) कृतदेवार्चनः प्रतर्पितपितृगणः समायाति, तावत् कर्णहृदयरहितो रासभः तिष्ठति। तं दृष्ट्वा (ग) कोपपरीतात्मा सिंहः शृगालम् आह,—'पाप! किमिदमनुचितं कर्म समाचरितं, यत् कर्णहृदयभक्षणेन अयमुच्छिष्टतां नीतः?' शृगालः सविनयमाह,—'स्वामिन्!

---

चित्तवृत्तिनिरोधेन तत्त्वतः योगिनः, अपि तु स्वापराधतयैव विरूपीकृताः; वस्तुतस्तु कामिनीसंयोगवन्त एव योगिन इत्युच्यन्ते, इति तु वक्तुराशयः। शार्दूलविक्रीडितं वृत्तम् ॥ १६ ॥

जानन्निति।—नरः मानवः, जानन्नपि अखिलं विदन्नपि, दैवात् नियतिवशा-दित्यर्थः, न तु स्वेच्छयेति भावः, विगर्हितं विशेषेण निन्दितं, कर्म प्रकरोति अनु-तिष्ठति। ननु दुर्जनास्तु स्वभावादेव गर्हितमाचरन्ति, तत् कथं विगर्हितानुष्ठानस्य दैवमेव हेतुः? इति प्रश्नाशयमेतं तदेव समर्थयन्नाह, किमिति।—लोके जगति, कस्यचित् कस्यापि जनस्य इत्यर्थः, [सम्बन्धप्रयोगात् चतुर्थीप्राप्तावपि अत्र शेषे षष्ठी इति बोध्यम्] गर्हितं निन्दितं, कर्म इति शेषः, कथं केनापि प्रकारेणेत्यर्थः, रोचते किम्? नैव रोचते इत्यर्थः; गर्हितकर्माचरणे बहुलदोषात् जानतामपि जनानां तदाचरणे केषाञ्चित् प्रवृत्तिः केनाप्यचिन्त्यप्रवृत्तिवशात् दृश्यते, दैवमेव तत्र हेतुरिति भावः ॥ १७ ॥

(क) लौल्यौत्सुक्यात्—लौल्यात्—अतिलोभपरवशत्वात्, औत्सुक्याच्च—बुभुक्षिततया सत्वरभोजनाय अत्युत्कण्ठावशादित्यर्थः।

(ख) कृतदेवार्चनः,—आह्निकीं देवपूजां कृत्वा इत्यर्थः। प्रतर्पितेति।—पितृगणान् तर्पयित्वा इत्यर्थः।

(ग) कोपपरीतात्मा—कोपाक्रान्तहृदयः।

मा मा एवं वद ; (ख) कर्णहृदयरहितोऽयं रासभ आसीत्, येन इह आगत्य त्वाम् अवलोक्य भूयोऽपि आगतः[२]। अथ तद्वचनं (ङ) अहेयं मत्वा सिंहः तेनैव सह संविभज्य निःशङ्कितमनाः तं भक्षितवान्। अतोऽहं ब्रवीमि,—'आगतश्च गतश्चैव' इत्यादि।

तन्मूर्ख! कापटं कृतं त्वया, परं (क) युधिष्ठिरेणेव सत्य-वचनेन विनाशितम्। अथवा साधु इदमुच्यते,—

स्वार्थमुत्सृज्य यो दम्भी सत्यं ब्रूते सुमन्दधीः।
स स्वार्थात् भ्रश्यते नूनं युधिष्ठिर इवापरः" ॥ १८ ॥

मकर आह,—"कथमेतत्?" स कथयति,—

(ख) कर्णहृदयरहितः,—यस्य कर्णहृदयसत्त्वे सिंहगर्जनं श्रुत्वाऽपि कदाऽपि नैव पुनरागच्छेत्, तथा हृदयसत्त्वे किञ्चित् पूर्वं सिंहस्य तत्प्रहारात् कथमपि परित्रातोऽपि सपदि विस्मृततत्प्रहारः पुनर्नागच्छेत्, तस्मात् कर्णहृदयरहितः एवायमिति भावः।

(ङ) अहेय—त्याज्यम्; एतस्य युक्तिपूर्वकमुपपन्नत्वादिति भावः। संविभज्य—विभागं कृत्वा। निःशङ्कितमनाः,—चर्मान्तरस्थचित्तः।

(क) युधिष्ठिरेणेव—तन्नामकेन केनचित् कुम्भकारेणेव इत्यर्थः। सत्यवचनेन—तथ्यवचनेन। विनाशितं—विफलीकृतं, त्वयेति पूर्वानुषङ्गः, पूर्वमनुष्ठापितं कापट्य-जालमिति शेषः, युधिष्ठिरेण यथा प्राक् आत्मपरिचयमदत्त्वा राज्ञा राजपुत्रवदाहृतेन अवस्थितं, पश्चात् सत्यवचनेन निजपरिचयप्रदानात् प्रागेव च स्वस्य प्रकृतपरिचया-प्रकाशनरूप. कपटव्यवहार. विनाशितः, तथा त्वयाऽपि प्राक् छलेन मां नीत्वा, पश्चात् सत्यकथनेन तत्कापटजालं स्वयमेव विनाशितमिति निष्कर्षः। इदानीं तेनैव कापट्येन तव नीत्वा मां नाशयितुं तव प्रयासः सर्वथा विफल एवेति गभिताशय.।

स्वार्थमिति।—यः दम्भी कपटाचारः, अतएव सुमन्दधी, अतिमूढमति,, नरः इति शेषः, स्वार्थं स्वप्रयोजनम्, उत्सृज्य त्यक्त्वा, विस्मृत्य इत्यर्थः, सत्यं ब्रूते, इदानीं सत्यकथने न किमपि चौर्यं कर्त्तुं शक्येदिति मत्वेति भावः, स. अपरः द्वितीयः, युधिष्ठिर इव नूनं निश्चित. स्वार्थात् भ्रश्यते [ देवादिकस्य भ्रश्यते; कर्मकर्तरि लट् ] स्वप्रयोजन भ्रष्टो भवति ॥ १८ ॥

## कथा ३ ।

"कस्मिंश्चित् अधिष्ठाने कश्चित् कुम्भकारः प्रतिवसति स्म । स कदाचित् ( ख ) प्रमादात् अर्धभग्नघटकर्परतीक्ष्णाग्रस्य उपरि महता वेगेन धावन् पतितः। ततः (ग) कर्परकोट्या पाटित-ललाटो रुधिरप्लावितततनुः कृच्छ्रात् उत्थाय स्वाश्रयं गतः। ततश्च अपथ्यसेवनात् स प्रहारस्तस्य (घ) करालतां गतः, कृच्छ्रेण च नीरोगतां नीतः। अथ कदाचित् दुर्भिक्षपीड़िते देशे, स कुम्भकारः क्षुत्क्षामकण्ठः कैश्चित् राजसेवकैः सह देशान्तरं गत्वा कस्यापि राज्ञः सेवको बभूव। स च राजा तस्य ललाटे ( ङ ) विकरालं प्रहारक्षतं दृष्ट्वा चिन्तयामास यत्, 'वीरः पुरुषः कश्चित् अयं नूनं, तेन ललाटपट्टे सम्मुखप्रहारः'। अतस्तं सम्मानादिभिः सर्वेषां राजपुत्राणां मध्ये विशेषप्रसादेन पश्यति स्म। तेऽपि राजपुत्राः तस्य तं ( च ) प्रसादातिरेकं पश्यन्तः परमीर्ष्याधर्मं वहन्तो राजभयात् न किञ्चित् ऊचुः।

---

( ख ) प्रमादात्—अनवधानात्, केनचित् कारणेनान्यमनस्कतयेति भावः। अर्धेति।—अर्धं यथा तथा भग्नः यः घटः तस्य कर्परस्य—कपालस्य, घटादेरवयव-विशेषस्येत्यर्थः, ("स्यात् कर्परः कपालोऽस्त्री" इत्यमरः) यत् तीक्ष्णाग्रं तस्य।

( ग ) कर्परकोट्या—कपालस्य अग्रभागेन। पाटितेति।—पाटितं—विदारितं, ललाटं यस्य तथाभूतः। रुधिरेति।—रक्ताक्तशरीरः। स्वाश्रयं—स्वभवनम्।

( घ ) करालतां—भीषणत्वं, ( "करालो दन्तुरे तुङ्गे भीषणे चाभिधेयवत्" इति मेदिनी )। नीरोगताम्—आरोग्यम्।

( ङ ) विकरालम्—अत्युत्कटम्। तेन—वीरपुरुषत्वेन हेतुना इत्यर्थः। ललाट-पट्टे—भालतटे। सम्मुखप्रहारः,—सम्मुखसङ्ग्रामे आघात इत्यर्थः, प्राप्तोऽनेनेति शेषः। राजपुत्राणां मध्ये—राजपुत्राणामन्तरं, [ शेषे षष्ठी। "मध्यं विलग्ने न स्त्री स्यात् न्याय्येऽन्तरेऽधमेऽन्यवत्" इति मेदिनी ]। विशेषप्रसादेन—अनुग्रहातिशयेन।

( च ) प्रसादातिरेकम्—अनुग्रहातिशयम्। परम्—अत्यर्थम्, ईर्ष्याधर्मं—विद्वेषमूलं मानसविकारम्।

अथ अन्यस्मिन्नहनि तेन भूपतिना (छ) वीरसम्भावनायां क्रियमाणायां, विग्रहे समुपस्थिते, प्रकल्प्यमानेषु गजेषु, सन्नह्य-मानेषु वाजिषु, योधेषु प्रगुणीक्रियमाणेषु, तेन भूभुजा स कुम्भ-कारः प्रस्तावानुगतं पृष्टो निर्जने,—'भो राजपुत्र! किं ते नाम? का च जातिः? कस्मिन् सङ्ग्रामे प्रहारोऽयं ते ललाटे लग्नः?' इति। स आह,—'देव! नायं शस्त्रप्रहारः, युधिष्ठिराभिधः (ज) कुलालोऽहं, मद्गेहेऽनेककर्परा आसन्। अथ कदाचित् मद्यपानं कृत्वा निर्गतः प्रधावन् कर्परोपरि पतितः, तस्य प्रहारविकारोऽयं मे ललाटे एवं विकरालतां गतः'। तदाकर्ण्य राजा (झ) सव्रीड़माह,—'अहो! वञ्चितोऽहं राजपुत्रानुकारिणा अनेन कुलालेन!! तत् दीयतां द्राक् एतस्य चन्द्रार्द्धः'। तथाऽनुष्ठिते कुम्भकार आह,—'मा मा एवं कुरु, पश्य मे रणे (ञ) हस्तलाघवम्'। राजा प्राह,—'भोः! सर्वगुणसम्पन्नो भवान्, तथाऽपि गम्यताम्।

(छ) वीरेति।—वीराणां सम्भावना—परीक्षा 'अयं वीरो न वा?' इति संशयनिरूपणार्थम् इत्यर्थः, तस्याम्; यद्वा,—सम्भावना—सम्मानना, समादर इति यावत्, तस्याम्। विग्रहे—सङ्ग्रामे, क्षतिसंयुक्ते इति भावः, समुपस्थिते—सन्निहिते। प्रकल्प्यमानेषु—सज्जमानेषु। सन्नह्यमानेषु—आबध्यमानपल्ययनादिषु, वाजिषु—अश्वेषु। योधेषु—वीरेषु। प्रगुणीक्रियमाणेषु—समरसुदक्षीक्रियमाणेषु, सज्जीक्रियमाणेषु वा। भूभुजा—राज्ञा। प्रस्तावानुगतम्—अवसरप्राप्तं यथा तथा, प्रसङ्गक्रमेणेत्यर्थः।

(ज) कुलालः,—कुम्भकारः। प्रकृत्या—स्वभावतः, कुम्भकारजातिरीत्यनुसारेणेत्यर्थः।

(झ) सव्रीडं—सलज्जम्। वञ्चितः,—प्रतारितः। राजपुत्रानुकारिणा—राजकुमाराणामनुकरणपरायणेन। द्राक्—शीघ्रम्। चन्द्रार्द्धः,—अर्द्धचन्द्रः, गलहस्त इत्यर्थः।

(ञ) हस्तलाघवं—क्षिप्रहस्तताम्।

शूरोऽसि कृतविद्योऽसि दर्शनीयोऽसि पुत्रक ! ।
यस्मिन् कुले त्वमुत्पन्नो गजस्तत्र न हन्यते' ॥ १८ ॥

कुलाल आह,—'कथमेतत् ?' राजा कथयति,—

## कथा ४ ।

'कस्मिंश्चित् (ट) उद्देशे सिंहदम्पती प्रतिवसतः स्म । अथ सिंही पुत्रद्वयम् अजीजनत् । सिंहोऽपि नित्यमेव मृगान् व्यापाद्य सिंह्यै ददाति । अथ अन्यस्मिन्नहनि तेन किमपि न आसादितं, वने भ्रमतोऽपि रविरस्तं गतः । अथ तेन स्वगृहम् आगच्छता शृगालशिशुरेकः प्राप्तः । सिंहश्च 'बालकोऽयम्' इति अवधार्य्य, तं यत्नेन दंष्ट्रामध्यगतं कृत्वा सिंह्यै जीवन्तमेव समर्पितवान् । ततः सिंह्या अभिहितं,—'भोः कान्त ! त्वया आनीतं किञ्चित् अस्माकं भोजनम् ?' सिंह आह,—'प्रिये ! मया अद्य एनं शृगालशिशुं परित्यज्य न किञ्चित् सत्त्वम्

---

पुत्रवत्सला आत्मनः कौमारिकी शृगालोपाख्यानगोचरं स्वपुत्रद्वयेन विवदमानं तौ च जिघांसुं कृतपुत्रकं शृगालीसुतं सम्बोध्य सानुकम्पमित्थमाह, शूरोऽसीति ।—हे पुत्रक ! त्वं शूरः, बलवान्, असि, कृतविद्यः, अधिगताखिलशिक्षाविद्यापारं गतः, असि असि, तथा दर्शनीयः मनोहरकान्तिः, असि, तथाऽपि, यस्मिन् कुले वंशे, त्वम् उत्पन्नः जातः, तत्र तस्मिन् कुले, उत्पन्नेन प्राणिना इति शेषः, गजः न हन्यते न विनाश्यते ; सिंहशावकोचितं गजमारणरूपम् अतिदुष्करं कर्म शृगालीतनयस्यातीव अशक्यमिति भावः ; [अत्र "सिंहस्तत्र न हन्यते" इति केचित् पठन्ति, सिंहसुतद्वयवधोद्यमस्यात्र प्राकरणिकतया तत्स्वीकारे, सिंहद्वयं त्वया सुदुष्करमेव हन्तव्योऽस्तीयतीति इति ज्ञेयम् ] ॥ १८ ॥

(ट) उद्देशे—प्रदेशे । सिंहदम्पती—सिंहमिथुनं, [सिंही च सिंहश्च सिंही इति एकशेषः, ततः सिंही एव दम्पती इति कर्मधारयः, दम्पती तु जाया च पतिश्चेति द्वन्द्वे जायाशब्दस्य दमादेशात्, पक्षे—जम्पती जायापती च ; द्वन्द्वात् द्विवचनान्तता ]।

आसादितम् । (ठ) स च बालोऽयमिति मत्वा न व्यापादितः, विशेषात् स्वजातीयश्च । उक्तञ्च,—

स्त्रीविप्रलिङ्गिबालेषु प्रहर्त्तव्यं न कर्हिचित् ।
प्राणत्यागेऽपि सञ्जाते विश्वस्तेषु विशेषतः ॥ ४० ॥

इदानीं त्वम् एनं भक्षयित्वा पथ्यं कुरु, प्रभातेऽन्यत् किञ्चित् उपार्जयिष्यामि'। सा प्राह,—'भोः कान्त ! त्वया बालकोऽयं विचिन्त्य न हतः, तत् कथम् एनमहं स्वोदरार्थे विनाशयामि ? उक्तञ्च,—

अकृत्यं नैव कर्त्तव्यं प्राणत्यागेऽपि संस्थिते ।
न च कृत्यं परित्याज्यं धर्म एष सनातनः ॥ ४१ ॥

तस्मात् मम अयं तृतीयः पुत्रो भविष्यति' इति, एवमुक्त्वा तमपि (ड) स्वस्तनक्षीरेण परां पुष्टिम् अनयत । एवं ते त्रयोऽपि शिशवः परस्परम् (ढ) अज्ञातजातिविशेषा एकाचारविहारा बाल्यसमयं निर्वाहयन्ति ।

अथ कदाचित् तत्र वने भ्रमन् अरण्यगजः समायातः । तं

(ठ) स इति ।—स च—मया आसादितः मृगशिशुरित्यर्थः । स्वजातीयः,—श्वापदत्वेन स्ववर्गीय इत्यर्थः ।

स्त्रीति ।—प्राणत्यागे प्राणसंशये इत्यर्थः, सञ्जाते उपस्थितेऽपि, स्त्रीविप्रलिङ्गिबालेषु स्त्रीषु विप्रेषु लिङ्गिषु ब्रह्मचार्य्यादिषु, बालेषु शिशुषु, विशेषतः विशेषेण, विश्वस्तेषु कृतविश्वासेषु, जनेषु इति शेषः, कर्हिचित् कदाचित्, ["अनद्यतने र्हिलन्यतरस्याम्" (५।३।२१ पा०) इत्यनेन किम् इतिशब्दात् र्हिल्] न प्रहर्त्तव्यं न प्रहारः कर्त्तव्यः ॥४०॥

अकृत्यमिति ।— प्राणत्यागे संस्थिते उपस्थितेऽपि, अकृत्यम् अकार्य्यं, नैव कर्त्तव्यं, कृत्यं कर्त्तव्यञ्च, न परित्याज्यम् ; ["यजेश्च" इति वार्त्तिकसूत्रात् "परित्याज्यम्" इत्यत्र ण्यति न कुत्वम्]·एषः सनातनः नित्यः, ["सना" इत्यव्ययशब्दात् तनप्रत्ययात् सिद्धम् । "सना नित्ये" इत्यमरः ] धर्मः ; अतः कथमहमकृत्यं करोमि ? इति भावः ॥ ४१ ॥

(ड) स्वस्तनक्षीरेण—निजस्तनदुग्धेन ।

(ढ) अज्ञातजातिविशेषाः,—अविदितस्वस्वजातिपरिचयाः इत्यर्थः । निर्वाहयन्ति—यापयन्ति ।

दृष्ट्वा तौ सिंहसुतौ द्वौ अपि कुपिताननौ तं प्रति प्रचलितौ यावत्, तावत् तेन शृगालसुतेन अभिहितम्,—'अहो ! गजोऽयं युष्मत्कुलशत्रुः, तन्न गन्तव्यमेतस्य अभिमुखम्' एवमुक्त्वाऽसौ गृहं प्रधावितः। तौ अपि (य) ज्येष्ठबान्धवभङ्गान्निरुत्साहतां गतौ। अथवा साधु इदमुच्यते,—

एकेनापि सुधीरेण सोत्साहेन रणं प्रति।
सोत्साहं जायते सैन्यं भग्ने भङ्गमवाप्नुयात् ॥ ४२ ॥

तथा च,—अत एव हि वाञ्छन्ति भूपा योधान् महाबलान्।
शूरान् वीरान् कृतोत्साहान् वर्जयन्ति च कातरान् ॥४३॥

अथ तौ द्वौ अपि गृहं प्राप्य पित्रोरग्रतो विहसन्तौ ज्येष्ठभ्रातृचेष्टितम् ऊचतुः, यथा—'गजं दृष्ट्वा दूरतोऽपि नष्टः'। सोऽपि तदाकर्ण्य कोपाविष्टमना: (र) प्रस्फुरिताधरपल्लवः ताम्रलोचनः त्रिशिखां भ्रुकुटिं कृत्वा तौ निर्भर्त्सयन् परुषतर-

---

(य) ज्येष्ठेति।—ज्येष्ठबान्धवस्य—प्रधानस्वजनस्य, ज्येष्ठभ्रातुरित्यर्थः, शृगालसुतस्येति भावः, ("सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः" इत्यमरः) भङ्गात्—पलायनात, निरुत्साहतां—भग्नोत्साहत्वम्, उद्यमहीनतामित्यर्थः।

एकेनेति।—एकेनापि सुधीरेण बुद्धिमता, धैर्यशालिना वा, सोत्साहेन रणोत्साहवता इत्यर्थः, सेनानायकेन इति शेषः, सैन्यं सेनासमूहः, रणं युद्धं, प्रति सोत्साहम् उत्साहान्वितं, जायते, भग्ने पलायनोद्यते, हतोत्साहे इत्यर्थः, एकस्मिन्नेव सेनानायके इति शेषः, भङ्गं निरुत्साहत्वम्, अवाप्नुयात् प्राप्नोति इत्यर्थः ; प्रधानसेनानायकेनियमितं हि सैन्यमिति भावः ॥ ४२ ॥

अत इति।—अत एव हि अस्मादेव हेतोः, भूपाः राजानः, महाबलान् प्रभूतशक्तियुक्तान्, शूरान् पराक्रान्तान्, वीरान् वीर्यवतः, कृतोत्साहान् उत्साहवतः, योधान् सैनिकान्, वाञ्छन्ति अभिलषन्ति, कातरान् रणभीरून्, वर्जयन्ति त्यजन्ति च ॥ ४३ ॥

(र) प्रस्फुरितेति।—कम्पितकिसलयकोमलरदनच्छदः। ताम्रलोचनः,—आरक्तनेत्रः। त्रिशिखां—तिस्रः शिखाः,—कोट्यः, अग्रभागाः यस्याः तादृशीं, भाव-

वचनानि उवाच। ततः सिंह्या एकान्ते नीत्वा प्रबोधितोऽसौ,—'वत्स! मैवं कदाचित् (थ) जल्प, भवदीयलघुभ्रातरौ एतौ' इति। अथ असौ प्रभूतकोपाविष्टः तामुवाच,—'किमहम् एताभ्यां शौर्य्येण रूपेण विद्याऽभ्यासेन कौशलेन वा हीनः, येन माम् उपहसतः? तन्मया अवश्यम् एतौ व्यापादनीयौ'। तदाकर्ण्य सिंही तस्य जीवितमिच्छन्ती अन्तर्विहस्य प्राह,—

'शूरोऽसि कृतविद्योऽसि दर्शनीयोऽसि पुत्रक!।
यस्मिन् कुले त्वमुत्पन्नो गजस्तत्र न हन्यते॥ ४४॥

तत् सम्यक् शृणु वत्स! त्वं शृगालीसुतः, कृपया मया स्वस्तनक्षीरेण पुष्टिं नीतः। तत् यावत् एतौ मत्पुत्रौ शिशुत्वात् त्वां शृगालं न जानीतः, तावत् द्रुततरं गत्वा स्वजातीयानां मध्ये मिलितो भव, नो चेत् आभ्यां हतो मृत्युपथं समेष्यसि'। सोऽपि तद्वचनं श्रुत्वा भयव्याकुलमनाः शनैः शनैः अपसृत्य स्वजात्या मिलितः। तस्मात् त्वमपि, यावत् एते राजपुत्राः त्वां कुलालं न जानन्ति, तावत् द्रुततरम् अपसर, नो चेत् एतेषां सकाशात् (द) विडम्बनां प्राप्य मरिष्यसि'। कुलालोऽपि तदाकर्ण्य सत्वरं प्रनष्टः। अतोऽहं ब्रवीमि,—'स्वार्थमुत्सृज्य यो दम्भी' इत्यादि। धिक् मूर्ख! यत् त्वया

---

ईषदाकुञ्चनेन भ्रूद्वयमध्यवर्त्तिस्थाने विद्युद्वत् प्रतीयमानामित्यर्थः। भ्रुकुटिं—भ्रूभङ्गीम्। ["अभ्रुकुंसादीनाम्" इति वार्त्तिकसूत्रे अत्र "भ्रुकुटिः" "भृकुटिः" इत्यपि रूपद्वयं भवति; सम्प्रसारणे तु भ्रकुटिरित्यपि पदान्तरं भवतीति; अत्र वार्त्तिकसूत्रे दीक्षिताः,—"अकारोऽनेन विधीयते इति व्याख्यान्तरम्; अकंसः भ्रकुटिः" इति। अतः भ्रकुटिशब्दसिद्धिरिति ज्ञेयम्]।

(थ) जल्प—कथय। भवदीयलघुभ्रातरौ—त्वदीयकनिष्ठभ्रातरौ।

शूरोऽसीत्यादि।—श्लोकस्यायं ४७० पृष्ठे प्राक् व्याख्यातः॥ ४४॥

(द) विडम्बनां—विशेषेण अवमाननाम्।

स्त्रियोऽर्थे एतत् कार्य्यम् अनुष्ठातुम् आरब्धम्। न हि स्त्रीणां कथञ्चिद्विश्वासम् उपगच्छेत्।

उक्तञ्च,—यदर्थे स्वकुलं त्यक्तं जीवितार्द्धञ्च हारितम्।
सा मां त्यजति निःस्नेहा कः स्त्रीणां विश्वसेन्नरः ?"॥४५॥

मकर आह,—"कथमेतत् ?" वानरः कथयति,—

## कथा ५।

"अस्ति कस्मिंश्चित् अधिष्ठाने कोऽपि ब्राह्मणः। तस्य च (ध) भार्य्या प्राणेभ्योऽपि अतिप्रिया आसीत्; साऽपि प्रतिदिनं कुटुम्बेन सह कलहं कुर्वाणा न विश्राम्यति। सोऽपि ब्राह्मणः कलहम् असहमानः (न) भार्य्यावात्सल्यात् स्वकुटुम्बं परित्यज्य, ब्राह्मण्या सह विप्रकृष्टं देशान्तरं गतः। अथ

यदर्थे इति।—यदर्थे यस्याः पत्न्याः, अर्थे कृते, स्वकुलम् आत्मीयवर्गः, त्यक्तं विसृष्टं, परित्यज्य आगतमित्यर्थः, जीवितार्द्धञ्च आयुषः अर्द्धञ्च, हारितं परित्यक्तम् इत्यर्थः, सा निःस्नेहा त्यक्तप्रणया सती, मां त्यजति; अतः को नरः स्त्रीणां [सम्बन्ध-विवक्षया षष्ठी] विश्वसेत् ? विश्वासं कुर्य्यात् ? [ अधिनेरादादिकतया विश्वस्यादित्येव प्रयोगो भवितुं युक्त इत्यवधेयम् ], मम दृष्टान्तेन न केनापि स्त्रीषु विश्वासः कर्त्तव्य इत्यर्थः॥ ४५॥

(ध) भार्य्या—पत्नी, [ विभर्त्तेर्दीर्घोन्तात् भृ इति धातोः क्र्यादेर्वा "ऋहलो-र्ण्यत्" (३।१।१२४ पा०) इति सूत्रेण कर्मणि ण्यति कृते भार्य्या इति सिद्धम्। भरतेस्तु "भृञोऽसंज्ञायाम्" (३।१।११२ पा०) इति सूत्रेण असंज्ञार्थे क्यपा भाव्यम्; तेन च भृत्य इति स्यात्। संज्ञार्थेऽपि "संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः" (३।३।९९ पा०) इति सूत्रेण क्यपैव भाव्यं, तेन भृत्या इत्येव रूपं स्यात्, न तु भार्य्येति; यद्वा,—येषां मते भावे स्त्रियामस्य सूत्रस्य विषयः, तन्मते भरतेरपि कर्मणि ण्यता भार्य्येति सिद्धमेव; तथा चोक्तं काशिकायां,—"संज्ञायां पुंसि दृष्टत्वात् न ते भार्य्या प्रसिध्यति। स्त्रियां भावाधिकारोऽस्ति तेन भार्य्या प्रसिध्यति॥" इति। कुटुम्बेन—परिजनेन। विश्राम्यति—निवर्त्तते।

(न) भार्य्यावात्सल्यात्—पत्नीस्नेहात्। विप्रकृष्टम्—अतिदूरम्।

महाऽटवीमध्ये ब्राह्मण्या अभिहितम्,—'आर्य्यपुत्र ! तृष्णा मां बाधते, तदुदकं क्वापि अन्वेषय'। अथ असौ तद्वचनानन्तरं यावत् उदकं गृहीत्वा समागच्छति, तावत् तां मृताम् अपश्यत्। ततः सः (प) अतिवल्लभतया विषादं कुर्वन् यावत् विलपति, तावत् आकाशे वाचं शृणोति ; तथा हि,—'ब्राह्मण ! यदि त्वं स्वकीयजीवितस्यार्द्धं ददासि, ततः ते जीवति ब्राह्मणी' इति। तत् श्रुत्वा ब्राह्मणेन शुचीभूय तिसृभिः वाचाभिः स्वजीवितार्द्धं दत्तम् ; वाक्समममेव च ब्राह्मणी जीविता सा। अथ तौ जलं पीत्वा वनफलानि च भक्षयित्वा गन्तुम् आरब्धौ। ततः क्रमेण कस्यचित् नगरस्य प्रदेशे पुष्पवाटिकां प्रविश्य ब्राह्मणो भार्य्याम् अभिहितवान्,—'भद्रे ! यावत् अहं भोजनं गृहीत्वा समागच्छामि, तावत् अत्र त्वया स्थातव्यम्'। इत्यभिधाय ब्राह्मणो नगरमध्ये जगाम।

अथ तस्यां (फ) पुष्पवाटिकायां पङ्गुः कश्चित् अरघट्टं खेलयन् दिव्यगिरा गीतमुद्गिरति। तच्च श्रुत्वा (ब) कुसुमेषुणा अर्दितया ब्राह्मण्या तत्सकाशं गत्वा अभिहितं,—'भद्र ! यदि मां न कामयसे, तत् मत्सक्ता स्त्रीहत्या तव भविष्यति'। पङ्गुरब्रवीत्,

(प) अतिवल्लभतया—अति—अतिशयेन, वल्लभः,—प्रियः, अनुरागपात्रम् इत्यर्थः, तस्य भावः तत्ता तया, अतिप्रियतया। विषादं—शोकम्।

(फ) पुष्पवाटिकायां—पुष्पोद्याने इत्यर्थः। पङ्गुः,—गमनशक्तिहीनः पुरुषः, ["खजि गतिवैकल्ये" इति खजधातोः कुप्रत्यये खस्य पकारः, जस्य च गकारः, नुगागमश्च औणादिकः, तेन च सिद्धं पङ्गुरिति। तथा च उणादिकोषे "खजमञ्जु—" (१म पा० ३७ सू०) इत्यादिसूत्रे—"खजि गतिवैकल्ये बाहुलकादतोऽपि कुः। खजयोः पगौ नुगागमश्च पङ्गुः॥" इति]। अरघट्टं—कूपोपरिनिबद्धजलोत्तोलनकाष्ठयन्त्रम्। खेलयन् —हस्तेन रज्जुं धृत्वा उच्चावचं चिपन्निति भावः। दिव्यगिरा—मधुरवचसा। गीतम् उद्गिरति—उच्चारयति, गायति इत्यर्थः।

(ब) कुसुमेषुणा—कामेन। अर्दितया—पीड़ितया। कामयसे—प्रार्थयसे

—'किं व्याधिग्रस्तेन मया करिष्यसि ?' सा अब्रवीत्,—'किम् अनेन उक्तेन, अवश्यं त्वया सह मया सङ्गमः कर्त्तव्यः'। तत् श्रुत्वा पङ्गुः तथा कृतवान्। सुरतानन्तरं सा अब्रवीत्,—'इतः प्रभृति यावज्जीवं मया आत्मा भवते दत्तः, इति ज्ञात्वा भवानपि अस्माभिः सह आगच्छतु'। सोऽब्रवीत्,—'एवमस्तु'।

अथ ब्राह्मणो भोजनं गृहीत्वा समागत्य तया सह भोक्तुम् आरब्धः। सा अब्रवीत्,—'एष पङ्गुः बुभुक्षितः, तत् एतस्यापि कियन्तमपि ग्रासं देहि' इति। तथा अनुष्ठिते ब्राह्मण्या अभिहितं,—'ब्राह्मण ! सहायहीनः त्वं यदा ग्रामान्तरं गच्छसि, तदा मम वचनसहायोऽपि नास्ति, तत् एनं पङ्गुं गृहीत्वा गच्छावः'। सोऽब्रवीत्,—'न शक्नोमि आत्मानमपि आत्मना (भ) वोढुं, किं पुनः एनं पङ्गुम् ?' सा अब्रवीत्,—(म) 'पेटाभ्यन्तरस्थम् एनमहं नेष्यामि'। अथ तत् (य) कृतकवचनव्यामोहितचित्तेन तेन प्रतिपन्नम्। तथाऽनुष्ठिते, अन्यस्मिन् दिने (र) कूपोपकण्ठे विश्रान्तो ब्राह्मणः तया पङ्गुपुरुषासक्तया सम्प्रेर्य्य कूपान्तःपातितः। साऽपि पङ्गुं गृहीत्वा कस्मिंश्चित् नगरे प्रविष्टा। तत्र (ल) शुल्कचौर्य्यरक्षानिमित्तं राज-

---

ममाभिलाषं पूरयसीत्यर्थः। मत्सक्ता—मत्सम्बन्धिनी। स्त्रीहत्या—स्त्रीविनाशजनितं पातकम् इत्यर्थः, [ स्त्रियाः हननं स्त्रीहत्या, हनधातोः भावे "हनस्त च" ( ३।१।१०८ पा० ) इति क्यपि कृते रूपमिदम् ]।

(भ) वोढुं—वहनं कर्त्तुं, स्वदेहभारम् ऊढ्वा स्वयं गन्तुम् इत्यर्थः।

(म) पेटाभ्यन्तरस्थं—पेटकमध्यवर्त्तिनम्।

(य) कृतकेति।—कृतकेन—कपटेन, वचनेन व्यामोहितं चित्तं यस्य तादृशेन। तेन—ब्राह्मणेन। प्रतिपन्नम्—स्वीकृतम्।

(र) कूपोपकण्ठे—कूपसमीपे। सम्प्रेर्य्य—उच्चाल्य, ("धाक्का दिया" इति वङ्गभाषा)। कूपान्तः,—कूपमध्ये।

(ल) शुल्कचौर्य्येति।—शुल्कस्य—राजदेयकरविशेषस्य, यत् चौर्य्यम्—अप-

पुरुषैः इतस्ततो भ्रमद्भिः तन्मस्तकस्था पेटा दृष्टा, बलात् आच्छिद्य राजाग्रे नीता च। राजा च यावत् ताम् उद्घाटयति, तावत् तं पङ्गुं ददर्श। ततः सा ब्राह्मणी विलापं कुर्वती (व) राजपुरुषानुपदम् एव तत्र आगता राज्ञा पृष्टा,—'को वृत्तान्तः?' इति। सा अब्रवीत्,—'मम एष भर्त्ता (श) व्याधिबाधितो दायादसमूहैः उद्वेजितो मया स्नेहव्याकुलितमानसया शिरसि कृत्वा भवदीयनगरे आनीतः'। तत् श्रुत्वा राजा अब्रवीत्,—'ब्राह्मणि! त्वं मे भगिनी, ग्रामद्वयं गृहीत्वा भर्त्रा सह भोगान् (ष) भुञ्जाना सुखेन तिष्ठ'।

अथ स ब्राह्मणो दैववशात् केनापि साधुना कूपात् उत्तारितः परिभ्रमन् तदेव नगरम् आयातः, तया दुष्टभार्य्यया कदाचित् दृष्टश्च राज्ञे निवेदितः,—'राजन्! अयं मम भर्त्तुः वैरी समायातः'। राज्ञा अपि तस्य वध आदिष्टः। सोऽब्रवीत्,—'देव! अनया मम (स) सत्कं किञ्चित् गृहीतम् अस्ति, यदि त्वं धर्मवत्सलः, तदा तद्दापय'। राजा अब्रवीत्,—'भद्रे! यत् त्वया अस्य सत्कं किञ्चित् गृहीतम् अस्ति, तत् समर्पय'। सा

---

हरणं, प्रतारणापूर्वकमपहरणमित्यर्थः, तस्य रक्षानिमित्तं—निवारणार्थम् इत्यर्थः। राजपुरुषैः,—शुल्कापहरणं वारयितुं राजनियुक्तपुरुषैरिति भावः।

(व) राजेति।—राजपुरुषाणां—नगरपालानाम् इत्यर्थः, अनुपदं—पश्चात्, [पश्चादर्थेऽव्ययीभावः]।

(श) व्याधिबाधितः,—रोगपीड़ितः। दायादसमूहैः,—दायं—मृतपित्रादिस्वजनस्य धनम्, आददते—गृह्णन्ति ये ते दायादाः, तेषां समूहैः, पितृधनांशभाग्भिः बान्धवादिभिरित्यर्थः, ("दायादौ सुतबान्धवौ" इत्यमरः)। उद्वेजितः,—उत्पीड़ितः।

(ष) भुञ्जाना—सेवमाना इत्यर्थः, ["भुजोऽनवने" (१।३।६६ पा०) इति आत्मनेपदविधानात् शानच्प्रत्ययः]।

(स) सत्कं—सम्बन्धम्। धर्मवत्सलः,—धर्मप्रियः, धार्मिक इत्यर्थः। तत्—प्राक् गृहीतं वस्तु। दापय—मह्यं दातुमादिशेत्यर्थः।

प्राह,—'देव ! मया न किञ्चित् गृहीतम्'। ब्राह्मण आह,— 'यन्मया (ङ) त्रिवाचिकं स्वजीविताई दत्तं, तद्देहि'। अथ सा राजभयात् तत्र एव 'त्रिवाचिकम् एव जीवितम् अनेन दत्तम्' इति (क) जल्पन्ती प्राणैर्विमुक्ता। ततः सविस्मयं राजा अब्रवीत्, —'किमेतत् ?' इति। ब्राह्मणेनापि पूर्ववृत्तान्तः सकलोऽपि (ख) तस्मै निवेदितः, प्राह च,—'यदर्थे स्वकुलं त्यक्तम्' इति। अतोऽहं ब्रवीमि,—'यदर्थे स्वकुलं त्यक्तम्' इत्यादि"।

वानरः पुनराह,—"साधु च इदमुपाख्यानकं श्रूयते,—

> न किं दद्यात्र किं कुर्य्यात् स्त्रीभिरभ्यार्थितो नरः ?।
> अनश्वा यत्र ह्रेषन्ते शिरः पर्वणि मुण्डितम्" ॥ ४६ ॥

मकर आह,—"कथमेतत् ?" वानरः कथयति,—

(ङ) त्रिवाचिकम्—अस्यै स्वजीविताई ददामि ददामि ददामीति वारत्रयमुक्त्वा प्रतिज्ञातम् इत्यर्थः।

(क) जल्पन्ती—कथयन्ती। प्राणैः विमुक्ता—मृता इत्यर्थः।

(ख) तस्मै—राज्ञे, निवेदितः,—ज्ञापितः [ क्रियायहणात् चतुर्थी ]।

मकरोपाख्यानवर्णितेन नन्दराजेन मुण्डनहेतुः पृष्टः तत्सचिवः राजानं प्रति तदुत्तरमाह, नेति।—स्त्रीभिः अभ्यर्थितः सम्प्रार्थितः, नरः किं न दद्यात् ? किं वा न कुर्य्यात् ? सर्वमेव दद्यात्, सर्वमेव कुर्य्याच्च इत्यर्थः। यत्र यस्मिन् दर्शे, यस्यामवस्थायाम् आपतितायां वा, अनश्वाः अश्वादन्ये, अपोति शेषः, ह्रेषन्ते अश्ववत् ह्रेषारवं कुर्वन्ति, [राज्ञा सुगुप्तं गृहमध्ये एतदनुष्ठितमपि वररुचिना ज्योतिर्विद्याप्रभावात् तत् सर्वमवगतम्, एवञ्च तदाविष्कृतमीदृशं वचः नासङ्गतमित्यवधेयम्। अत्र यच्छब्दस्य साकाङ्क्षतया तर्हीति पदम् अध्याहार्य्यम्] तत्र तस्मिन् दर्शे, तस्यामवस्थायां समापतितायां वा, पर्वणि पर्वदिनेऽपि, शिरः मुण्डितं, वर्त्तत इति शेषः;—"चतुर्दश्यष्टमी चैव अमावस्याऽथ पूर्णिमा। पर्वाण्येतानि राजेन्द्र ! रविसङ्क्रान्तिरेव च॥" इति शास्त्रवचनात् 'चतुर्दश्यादीनि पञ्च पर्वाणि, तेषु मुण्डनस्य निषिद्धत्वात् कथं तस्मिन् एव दिने मुण्डनम्?' इति प्रश्ने उत्तरमिदमिति बोध्यम्। स्त्रिया वशं गताः कार्य्याकार्य्यं किमपि न विचार्य्य अवाहम्याः यथा राजा ह्रेषारवमकार्षुः तथा मन्त्र्यऽपि पर्वणि शिरः मुण्डितमिति वक्तुः तात्पर्य्यम् ॥ ४६ ॥

## कथा ६ ।

"अस्ति (ग) प्रख्यातबलपौरुषः, अनेकनरेन्द्रवृन्दमुकुट-मरीचिजालजटिलीकृतपादपीठः, शरच्छशाङ्ककिरणनिर्मल-यशाः, समुद्रपर्य्यन्तायाः पृथिव्या भर्त्ता नन्दो नाम राजा । तस्य (घ) सर्वशास्त्राधिगतसमस्ततत्त्वः सचिवो वररुचिर्नाम ; तस्य च प्रणयकलहेन जाया कुपिता । सा च (ङ) अतीव वल्लभा अनेकप्रकारं परितोष्यमाणाऽपि न प्रसीदति । ब्रवीति च भर्त्ता,—'भद्रे ! येन प्रकारेण तुष्यसि, तं वद, निश्चितं करोमि' । ततः कथञ्चित् तया उक्तं—'यदि शिरो मुण्डयित्वा मम पादयोः निपतसि, तदा प्रसादाभिमुखी भवामि । तथाऽनुष्ठिते च सा प्रसन्ना आसीत् ।

अथ नन्दस्य भार्य्याऽपि तथा एव रुष्टा प्रसाद्यमानाऽपि न तुष्यति । ततः तेन उक्तं,—'भद्रे ! त्वया विना मुहूर्त्तमपि न जीवामि, पादयोः पतित्वा त्वां प्रसादयामि' । सा अब्रवीत्—'अहं तव मुखे (च) खलीनं प्रक्षिप्य पृष्ठे समारुह्य च त्वां

---

(ग) प्रख्यातेति—प्रख्यातं—प्रसिद्धं, बलं—सैन्यं, सामर्थ्यं वा, ("स्थौल्य-सामर्थ्यसैन्येषु बलं ना काकसीरिणोः." इत्यमरः) पौरुषं—पराक्रमश्च यस्य तथाभूतः । अनेकेति ।—अनेकानां नरेन्द्राणां—राज्ञां, यत् वृन्दं—समूहः, तस्य मुकुटानां—किरीटानां, मरीचिजालैः,—प्रभापुञ्जैः, जटिलीकृतं—शबलीकृतमिति यावत्, पाद-पीठं—चरणासनं यस्य तथोक्तः, प्रणतराजमण्डलमुकुटमणिरञ्जितचरणनिधानासन-विशेष इत्यर्थः । शरदिति ।—शरदि यः शशाङ्कः,—चन्द्रः, तस्य किरणवत् निर्मलं—धवलं, सुविशुद्धमित्यर्थः, यशः यस्य तादृशः । समुद्रपर्य्यन्तायाः पृथिव्याः,—सागरपरि-च्छिन्नाया भूमेः, आ-समुद्रान्ततः इत्यर्थः ।

(घ) सर्वेति ।—सर्वेषां शास्त्राणाम् अधिगतं—ज्ञातं, समस्तं तत्त्वं—याथार्थ्यं, निगूढार्थ इत्यर्थः, येन सः ।

(ङ) अतीव वल्लभा—अतिप्रेयसी ।

(च) खलीनं—कविकां, वल्गाधीनतार्थे तुरङ्गाननस्थे लौहशलाकां "कड़िवाल"

धावयामि, धावितस्तु यदि अश्ववत् ह्रेषसे, तदा प्रसन्ना भवामि'। राज्ञाऽपि तथा एव अनुष्ठितम्।

अथ प्रभातसमये सभायामुपविष्टस्य राज्ञः समीपे वररुचिः आयातः। तञ्च दृष्ट्वा राजा पप्रच्छ—'भो वररुचे! किं पर्वणि मुण्डितं शिरस्त्वया !!' सोऽब्रवीत्—

'न किं दद्यान्न किं कुर्यात् स्त्रीभिरभ्यर्थितो नरः १।
अनश्वा यत्र ह्रेषन्ते शिरः पर्वणि मुण्डितम् ॥ ४७ ॥

तत् भोः दुष्टमकर! त्वमपि नन्द-वररुचिवत् (छ) स्त्री-वश्यः, ततोऽभद्रः; आगतेन त्वया मां प्रति (ज) वधोपाय-प्रयासः प्रारब्धः, परं स्ववाग्दोषेण एव प्रकटीभूतः। अथवा साधु इदमुच्यते,—

आत्मनो मुखदोषेण बध्यन्ते शुकसारिकाः।
बकास्तत्र न बध्यन्ते मौनं सर्वार्थसाधनम् ॥ ४८ ॥

इति ख्यातः लौहखण्डविशेष इत्यर्थः, ("कविका तु खलीनोऽस्त्री" इत्यमरः)। प्रक्षिप्य—स्थापयित्वा। धावयामि—द्रुतं चालयामि। ह्रेषसे—नदसि, ह्रेषारवं करोषि इत्यर्थः।

नेति।—पूर्वं व्याख्यातम्। अत्र वानरस्यायमाशयः,—ये खलु महाप्राज्ञा नन्दसदृशाः महान्तः नरपतयः वररुचिसदृशाः सुधियः मन्त्रिणश्च, तेऽपि कदाचित् स्त्रियाः वशं गताः विमुग्धाश्च सन्तः अकृत्यमपि साधयन्ति; रजन्यां गृहान्ते तथा स्त्रीसन्निधौ रहसि स्वयंकृतं किमपि सुगुप्तं रक्षितुं नालं भवन्ति च, अतः भवादृशस्य क्षुद्रस्य स्त्रीपारतन्त्र्यं, तेन च मम वधप्रयासः, रहःकृतकापट्याभिप्रायप्रकाशनञ्चा-वश्यमेव सम्भवतीति ॥ ४७ ॥

(छ) स्त्रीवश्यः,—भार्याऽधीनः, स्त्रैण इत्यर्थः।

(ज) वधोपायेति।—वधस्य उपायः,—साधनं, कौशलं वा, तस्मिन् प्रयासः,—तदनुष्ठानप्रयत्नः। प्रारब्धः,—प्रक्रान्तः। स्वेति।—स्वस्य—आत्मनः, वाग्दोषेण—वाचो दोषेणैव, प्रकटीभूतः,—प्रकाशतां गतः।

"जानन्नपि हि मेधावी जडवल्लोक आचरेत्" इत्युक्तेः, सर्वत्र सर्वार्थसिद्धिकारकतया मौनमेवाश्रयणीयमित्युपदिशति, आत्मन इति।—आत्मनः स्वस्य, मुखदोषेण

तथा च,—सुगुप्तं रक्ष्यमाणोऽपि दर्शयन् दारुणं वपुः।
व्याघ्रचर्मप्रतिच्छन्नो वाक्कृते रासभो हतः" ॥ ४९ ॥

मकर आह,—"कथमेतत् ?" वानरः कथयति,—

## कथा ७।

"कस्मिंश्चित् (झ) अधिष्ठाने शुद्धपटो नाम रजकः प्रतिवसति स्म। तस्य च गर्दभः एकोऽस्ति, स च घासाभावात् अतिदुर्बलतां गतः। अथ तेन रजकेन अटव्यां परिभ्रमता मृतो व्याघ्रो दृष्टः, चिन्तितञ्च,—'अहो! शोभनम् आपतितम्!! अनेन व्याघ्रचर्मणा (ञ) प्रतिच्छाद्य रासभं रात्रौ यवक्षेत्रेषु उत्स्रक्ष्यामि, येन व्याघ्रं मत्वा समीपवर्त्तिनः क्षेत्रपाला एनं न निष्कासयिष्यन्ति'। तथा अनुष्ठिते रासभो यथेच्छया यवभक्षणं करोति, प्रत्यूषे भूयोऽपि रजकः स्वाश्रयं नयति। एवं

मौनविरुद्धवाचालताप्रसूतेन दोषेणेत्यर्थः, मधुरभाषित्वरूपेणेति भावः, शुकसारिकाः शुकाः कीराः, तथा सारिकाः तदाख्याः पक्षिणश्च इत्यर्थः, ("मयना" इति बङ्गभाषा) बध्यन्ते संयम्यन्ते, पिञ्जरे शाकुनिकैः इति शेषः, बकास्तु तत्र न बध्यन्ते; तेषां तद्दोषाभावात् इति भावः; तस्मात् मौनं तूष्णीम्भावः, सर्वार्थसाधनं सर्वकार्य्यसिद्धिकरं, [सर्वे अर्थाः साध्यन्ते अनेनेति करणे ल्युट्]; अतः मौनमेव अवलम्बनीयं, न तु वाचालता, तस्या बहुविपज्जनकत्वादिति भावः ॥ ४८ ॥

श्लोकेः दार्ष्टान्तिमुपाख्यानविशेषं प्रकीर्त्तयति, सुगुप्तमिति।—व्याघ्रचर्मणा प्रतिच्छन्नः आवृतशरीरः, अत एव सुगुप्तं सुगूढं यथा तथा, रक्ष्यमाणः स्थाप्यमानोऽपि, रजकेनेति शेषः, रासभः गर्दभः, दारुणं गर्दभोस्वरश्रवणेन अतिहर्षोदयात् कठोरनिनादकरणेन भयङ्करं, वपुः शरीरं, दर्शयन् प्रकटयन्, वाक्कृते वाग्व्यापारनिमित्तं, वचनदोषेणेति भावः, हतः विनाशितः, क्षेत्रस्वामिनेति शेषः ॥ ४९ ॥

(झ) अधिष्ठाने—नगरे। शुद्धपटः,—शुद्धाः,—निर्मलीकृताः, शोधिताः इत्यर्थः, पटाः,—वस्त्राणि, अन्येषामिति भावः, येन तथोक्तः।

(ञ) प्रतिच्छाद्य—संवार्य्य, आवरणदेहमिति शेषः। यवक्षेत्रेषु—यवशस्यपूर्णभूमिषु। उत्स्रक्ष्यामि—मोक्ष्यामि। निष्कासयिष्यन्ति—ताडयित्वा दूरीकरिष्यन्ति।

गच्छता कालेन स रासभः (ट) पीवरतनुर्जातः, तत्क्षणात् बन्धनस्थानमपि नीयते ।

अथ अन्यस्मिन् अहनि स मदोद्धतो दूरात् रासभीशब्दम् अशृणोत् । तच्छ्रवणमात्रेण एव स्वयं शब्दायितुम् आरब्धः । अथ ते क्षेत्रपालाः 'रासभोऽयं व्याघ्रचर्मप्रतिच्छन्नः' इति ज्ञात्वा लगुडशरपाषाणप्रहारैः तं व्यापादितवन्तः । अतोऽहं ब्रवीमि,—'सुगुप्तं रक्ष्यमाणोऽपि' इत्यादि" ।

अथ एवं तेन सह वदतो मकरस्य, जलचरेण एकेन आगत्य अभिहितं,—"भो मकर ! त्वदीया भार्य्या अनशनोपविष्टा त्वयि (ठ) चिरयति प्रणयाभिभवाद्विपन्ना" । एवं तत् वज्रपात-सदृशवचनम् आकर्ण्य अतीव व्याकुलितहृदयः प्रलपितमेवं चकार,—"अहो ! किमिदं सञ्जातं मे मन्दभाग्यस्य !! उक्तञ्च,—

माता यस्य गृहे नास्ति भार्य्या च प्रियवादिनी ।
अरण्यं तेन गन्तव्यं यथाऽरण्यं तथा गृहम् ॥ ५० ॥

तत् मित्र ! क्षम्यतां, मया तेऽपराधः कृतः ; सम्प्रति अहं तु स्त्रीवियोगात् (ड) वैश्वानरप्रवेशं करिष्यामि" । तत् श्रुत्वा

(ट) पीवरतनुः,—स्थूलदेहः, बन्धनस्थानं—बन्धनागारं, रात्रौ अवस्थापनयोग्यं गृहमित्यर्थः ।

(ठ) चिरयति—विलम्बं कुर्वति सति । प्रणयाभिभवात्—प्रेमावमाननात्, अतिप्रेमभङ्गजनिततीव्रवेदनासहिष्णुतया इत्यर्थः । विपन्ना—मृता ।

मातेति ।—यस्य गृहे माता जननी, प्रियवादिनी हितमधुरभाषिणी, भार्य्या पत्नी च, नास्ति, तेन मातृ-पत्नीहीनेन जनेन इत्यर्थः, [ तेन इति कर्त्तरि तृतीया, पक्षे तु "कृत्यानां कर्त्तरि वा" ( २।३।७१ पा० ) इत्यनेन षष्ठ्यपि भवति] अरण्यं गन्तव्यम् । कथं हि जनवर्जितं श्वापदसङ्कुलमरण्यं गन्तुमुपदिश्यते इत्याशङ्कायां, तस्य द्वयोरेतयोः कश्चित् विशेषो नास्तीत्याह, यथेति ।—अरण्यं यथा गृहञ्च तथा, तस्य इति शेषः, युगपदोर्निर्विशेषत्वात् ; तस्य भवनस्य वनरूपतया उभयं समानम् इत्यर्थः ॥ ५० ॥

(ड) वैश्वानरप्रवेशम्—अग्निप्रवेशम् ।

वानरः प्रहसन् प्रोवाच,—"भोः! ज्ञातं मया प्रथममेव यत्, त्वं स्त्रीवश्यः स्त्रीजितश्च, साम्प्रतञ्च (ढ) प्रत्ययः सञ्जातः। तत् मूढ़! आनन्देऽपि जाते त्वं विषादं गतः!! तादृग्भार्य्यायां मृतायाम् उत्सवं कर्त्तुं युज्यते। उक्तञ्च यतः,—

> या भार्य्या दुष्टचारित्रा सततं कलहप्रिया।
> भार्य्यारूपेण सा ज्ञेया विदग्धैर्दारुणा जरा॥ ५१॥
> तस्मात् सर्वप्रयत्नेन नामापि परिवर्जयेत्।
> स्त्रीणामिह हि सर्वासां य इच्छेत् सुखमात्मनः॥५२॥
> यदन्तस्तन्न जिह्वायां यज्जिह्वायां न तद्बहिः।
> यद्बहिस्तन्न कुर्वन्ति विचित्रचरिताः स्त्रियः॥ ५३॥

(ढ) प्रत्ययः,—विश्वासः, नूनं त्वं स्त्रीवश्यः स्त्रीजितश्च इत्याकारकः निश्चयः इत्यर्थः; प्राक् तु मे संशयः आसीत्, इदानीन्तु एवं दृष्ट्वा त्वं तथैवेति निश्चयः सञ्जातः इति भावः।

येति।—या भार्य्या दुष्टं चारित्रं यस्याः तथाभूता दुश्चरित्रा, पांशुला इत्यर्थः, सततं कलहप्रिया च अहेतुकमेव विवदितुमभिलषति इत्यर्थः, विदग्धैः पण्डितैः जनैः, सा भार्य्यारूपेण भार्य्यारूपतया, संस्थितेति शेषः, पत्नीव्यपदेशा इत्यर्थः, दारुणा भीषणा, जरा वार्द्धकं, सर्वथा शान्तिविघातकत्वात् स्वशरीरक्षयकरीति भावः, ज्ञेया वेदितव्या; भार्य्याकाराकारिता जरा एव सा, न तु तात्त्विकी पत्नी इति भावः॥ ५१॥

तस्मादिति।—तस्माद्धेतोः, इह संसारे, यः आत्मनः सुखम् आनन्दम्, इच्छेत्, स सर्वप्रयत्नेन सर्वप्रकारेणेत्यर्थः, विशेषचेष्टयेति यावत्, सर्वासामेव स्त्रीणां नामापि परिवर्जयेत् परित्यजेत्, हि निश्चये, का कथा सहवासस्य इत्यपिकारार्थः; इह भुवि स्त्रीपरतन्त्राणां नास्ति मनागपि सुखमिति समुदिताशयः॥ ५२॥

यदिति।—स्त्रियः विचित्रचरिताः अद्भुतस्वभावसम्पन्नाः, भवन्तीति शेषः। तदेवोपपादयति, यदिति।—आसाम् अन्तः मनसि, यत्, विद्यते इति शेषः, जिह्वायां रसनायां, तत् न; जिह्वायां यत्, विद्यते इति शेषः, तत् बहिः बाह्ये, व्यवहारे इत्यर्थः, न प्रकाशं न ब्रूते इत्यर्थः; एता हि यत् हितं तच्च न कुर्वन्ति, हितबुद्धिरासां कदाऽपि नोदेति, अतश्च सर्वथैव परित्याज्या एता इति भावः॥५३॥

के नाम न विनश्यन्ति मिथ्याज्ञानात् नितम्बिनीम् ?।
रम्यां ये उपसर्पन्ति दीपाभां शलभा यथा ॥ ५४ ॥
अन्तर्विषमया ह्येता बहिश्चैव मनोरमाः।
गुञ्जाफलसमाकाराः स्वभावादेव योषितः ॥ ५५ ॥
ताडिता अपि दण्डेन शस्त्रैरपि विखण्डिताः।
न वशं योषितो यान्ति न दानैर्न च संस्तवैः ॥ ५६ ॥
आस्तां तावत् किमन्येन दौरात्म्येनेह योषिताम्।
विधृतं स्वोदरेणापि घ्नन्ति पुत्रं स्वकं रुषा!! ॥ ५७ ॥

---

के इति।—ये मोहोपहतचेतसः इति भावः, मिथ्याज्ञानात् बुद्धिविपर्ययात्, मोहवशादित्यर्थः, शलभाः पतङ्गाः, दीपाभां यथा आलोकशिखामिव, नितम्बिनीं रमणीं, रम्याम् एकत्र—मधुराकृतिम्, अन्यत्र—शोभनदर्शनां, कुर्वेति शेषः, उपसर्पन्ति सेवन्ते इत्यर्थः, तेषां के नाम न विनश्यन्ति ? विनाशं गच्छन्ति ? सर्वे एव विनश्यन्ति इत्यर्थः ; शलभा यथा प्रदीपस्य रमणीयतरमालोकमवलोक्य तत्पातिता विनाशमुपयान्ति, सुखलालसया रमणीमुपगता अपि तथा इति निष्कर्षः ॥ ५४ ॥

अन्तरिति।—हि यतः, एता योषितः नार्यः, स्वभावादेव प्रकृत्यैव, अन्तर्विषमयाः विषकल्पोपमाः, [ उपसर्जनत्वात नेह ङीप्, "बहुकुरुचरा" इतिवत् बोध्यम् ] बहिश्च मनोरमाः हृदयहारिण्यः, लावण्यविलासादिभिरेव नितरां चेतः मथ्नन्ति इति भावः, अत एव गुञ्जाफलैः समः आकारो यासां तादृश्यः एव। गुञ्जाफलानि यथा आरक्तवर्णानि बहिरेव सुदर्शनानि, सेव्यमानानि तु विषवदनिष्टजनकानि भवन्ति, तथा नार्यः अपि बहिरेव रमणीयाः, सेव्यमानाः तु प्राणनाशिन्यः ; अतः ललनाजनस्य रूपोपभोगलालसा सुधीभिः सर्वथैव हेया इति निष्कर्षः। पयोमुख-विषकुम्भकल्पाः हि भवन्ति रमण्यः इति भावः ॥ ५५ ॥

ताडिता इति।—योषितः स्त्रियः, दण्डेन ताडिताः प्रहृता अपि, शस्त्रैः विखण्डिता विच्छिन्नविग्रहा अपि, न, दानैर्न, संस्तवैः सम्यक् स्तुतिभिः, आदरातिशयैरित्यर्थः, परिचयैर्वा, ("संस्तवः स्यात् परिचयः" इत्यमरः) न वशं यान्ति न आयत्ता भवन्ति ; अदम्या अवशीभूताश्च ताः सर्वथैवेति भावः ॥ ५६ ॥

आस्तामिति।—इह संसारे, योषिताम् अन्येन वर्ण्यमानादितरेणेत्यर्थः, दौरात्म्येन, वर्णितेनेति शेषः, किम् ? अन्यत् दौरात्म्यं किमु वक्तव्यमिति भावः ; यतस्तत्

रूक्षायां स्नेहसद्भावं कठोरायां सुमार्दवम् ।
नीरसायां रसं बालो बालिकायां विकल्पयेत्" ॥ ५८ ॥

मकर आह,—"भो मित्र ! अस्तु एतत्, परं किं करोमि ? मम अनर्थद्वयमेतत् सञ्जातम्, एकः तावत् (घ) गृहभङ्गः, अपरः त्वद्विधेन मित्रेण सह चित्तविश्लेषः ; अथवा, भवति एवं दैवयोगात् । उक्तञ्च यतः,—

यादृशं मम पाण्डित्यं तादृशं द्विगुणं तव ।
नाभूज्जारो न भर्त्ता च किं निरीक्षसि नग्निके ! ?" ॥ ५९ ॥

वानर आह,—"कथमेतत् ?" मकरोऽब्रवीत्,—

---

आसां तावत् अन्यदौरात्म्योपवर्णनं तिष्ठतु तावत्, एताः स्वोदरेण निजजठरेण, विधृतं स्वकं निजं, पुत्रमपि रुषा क्रोधेन, घ्नन्ति नाशयन्ति ; तेष्वपि जीवितोपमेषु तासां वात्सल्यं नास्ति, अन्येषु का कथेति भावः ॥ ५७ ॥

रूक्षायामिति ।—बालः मूढमतिरेवेति भावः, बालिकायां स्त्रियामिति यावत्, रूक्षायां कर्कशस्वभावायां, स्नेहसद्भावं प्रणयभावं, तथा कठोरायां निष्ठुरायां, सुमार्दवम् अतिकोमलतां, तथा नीरसायां निरनुरागायां, रसम् अनुरागम् ; रूक्षाऽपि स्नेहवती, कठोराऽपि कोमला, नीरसाऽपि सानुरागा इत्येवमित्यर्थः, विकल्पयेत् [ वि-पूर्वात् कल्पतेः पचाद्यचि विकल्प इति पदात् तत्कुर्य्यादित्यर्थे णिचि लिङि सिद्धम् ] विरुद्धकल्पनां कुर्य्यात् इत्यर्थः ; विद्वांसस्तु न तथा, ते तु तासु रूक्षासु कठोरासु नीरसासु च स्त्रीषु ईषदपि स्नेहमार्दवरसयोगो नास्तीति विभावयन्तीति भावः ॥ ५८ ॥

(घ) गृहभङ्गः,—गृहिणीविनाशः, "न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते" इति स्मरणात् गृहशब्दोऽत्र गृहिणीपरः मन्तव्यः । चित्तविश्लेषः,—मनोभङ्गः ।

यादृशमिति ।—मम पाण्डित्यं [ पण्धातोः "अमन्तात् डः" ( उणा० १ पा० ११३ सू०) इति डप्रत्यये पण्डा बुद्धिरित्यर्थः, सा अस्यास्तीति तारकादित्वादितच्प्रत्यये पण्डित इति रूपं सिद्धं, तस्य भावः पाण्डित्यम् ] बुद्धिमत्त्वमित्यर्थः, यादृशं यद्विधं, तव, पाण्डित्यमिति शेषः, द्विगुणं द्विरावृत्तं, तादृशं तद्विधं, जारः उपपतिः, न अभूत्, भर्त्ता पतिः, च न, अभूदिति पूर्वानुषङ्गः, जारभर्त्तारौ उभावपि हारितौ इत्यर्थः, हे नग्निके ! हृतांशुकत्वात् दिगम्बरे ! किं निरीक्षसि ? किं पश्यसि ? [अत्र निरीक्षसे इत्यस्य साधुत्वेऽपि परस्मैपदं विवक्षितम् ] ॥ ५९ ॥

## कथा ८ ।

"कस्मिंश्चित् अधिष्ठाने (त) हालिकदम्पती प्रतिवसतः स्म। सा च हालिकभार्य्या पत्युर्वृद्धभावात् सदैव अन्यचित्ता न कथञ्चित् गृहे स्थैर्य्यम् आलम्बते, केवलं परपुरुषान् (थ) अन्वेषमाणा परिभ्रमति। अथ केनचित् परवित्तापहारकेण धूर्त्तेन सा लक्षिता, विजने प्रोक्ता च,—'सुभगे! मृतभार्य्योऽहं, त्वद्दर्शनेन स्मरपीड़ितश्च, तद्दीयतां मे रतिदक्षिणा' इति। ततः तया अभिहितं,—'भोः सुभग! यदि एवं, तदस्ति मे पत्युः प्रभूतं धनं, स च वृद्धत्वात् प्रचलितुमपि असमर्थः; ततः तद्धनम् आदाय अहमागच्छामि, येन त्वया सह अन्यत्र गत्वा यथेच्छया रतिसुखम् अनुभविष्यामि'। सोऽब्रवीत्,—(द) 'रोचते मह्यमपि एतत्; प्रत्यूषेऽत्र स्थाने शीघ्रमेव समागन्तव्यं, येन शुभतरं किञ्चित् नगरं गत्वा त्वया सह जीवलोकः सफलीक्रियते'। साऽपि 'तथा' इति प्रतिज्ञाय, प्रहसितवदना स्वगृहं गत्वा रात्रौ प्रसुप्ते भर्त्तरि, सर्वं वित्तम् आदाय, प्रत्यूषसमये तत्कथितस्थानम् (ध) उपाद्रवत्। धूर्त्तोऽपि तामग्रे विधाय दक्षिणां दिशम् आश्रित्य सत्वरगतिः प्रस्थितः।

एवं तयोः व्रजतोः योजनद्वयमात्रेण अग्रतः काचित् नदी समुपस्थिता। (न) तां दृष्ट्वा धूर्त्तः चिन्तयामास,—'किम् अहम् अनया यौवनप्रान्ते वर्त्तमानया करिष्यामि? किञ्च, कदाऽपि

---

(त) हालिकदम्पती—हलोपजीविनौ स्त्रीपुंसौ, कृषकतज्जाया च इत्यर्थः।

(थ) अन्वेषमाणा—अनुसन्दधाना, [अनुपूर्व-स्वार्थात्मनेपदिनः 'एष'-धातोः रूपम्]।

(द) रोचते—स्वदते, तवायं प्रस्तावः मम अनुमत एवेत्यर्थः। शुभतरं—समृद्धमित्यर्थः। जीवलोकः,—संसारः इत्यर्थः, इह जगति जननं वा।

(ध) उपाद्रवत्—धावितवती, पलायिष्ट इत्यर्थः।

(न) तां—नदीमित्यर्थः। यौवनप्रान्ते—यौवनसीमायां, प्रौढ़ावस्थायामित्यर्थः, वर्त्तमानया—स्थितया, विगतयौवनया इत्यर्थः; अनया—एतया हालिकस्त्रिया,

अस्या: पृष्ठत: कोऽपि समेष्यति, तन्मे महान् अनर्थ: स्यात् ; तत् केवलमस्या वित्तम् आदाय गच्छामि' इति निश्चित्य ताम् उवाच,—'प्रिये ! सुदुस्तरा इयं महानदी ; तदहं (प) द्रव्यमात्रं पारे धृत्वा समागच्छामि, तत: त्वाम् एकाकिनीं स्वपृष्ठमारोप्य सुखेन उत्तारयिष्यामि'। सा प्राह,—'सुभग ! एवं क्रियताम्' इत्युक्त्वा अशेषं वित्तं तस्मै समर्पयामास। अथ तेन अभिहितं,—'भद्रे ! परिधानाच्छादनवस्त्रमपि समर्पय, येन जलमध्ये नि:शङ्का व्रजसि'। तथा अनुष्ठिते धूर्त्तो वित्तं वस्त्रयुगलञ्च आदाय ( फ ) यथाचिन्तितविषयं गत:। साऽपि ( ब ) कण्ठ-निवेशितहस्तयुगला सोद्वेगा नदीपुलिनदेशे उपविष्टा यावत् तिष्ठति, तावत् काचित् शृगालिका मांसपिण्डगृहीत-वदना तत्र आजगाम ; आगत्य च यावत् पश्यति, तावत् नदीतीरे महान् मत्स्य: सलिलात् निष्क्रम्य वहि: स्थित: आस्ते; एतञ्च दृष्ट्वा सा मांसपिण्डं समुत्सृज्य तं मत्स्यं प्रति उपाद्रवत्। अत्रान्तरे आकाशात् अवतीर्य्य कोऽपि गृध्र: तं मांसपिण्डमादाय पुन: खमुत्पपात ; मत्स्योऽपि शृगालिकां दृष्ट्वा नद्यां प्रविवेश। सा शृगालिका व्यर्थश्रमा गृध्रम् अवलोकयन्ती तया नग्निकया सस्मितम् अभिहिता,—

---

अचितयौवनया एतया सार्द्धं सुरतसम्भोगे बहवोऽसम्भोगसहनमसामर्थ्यानुदयादिति भाव:। अस्या: पृष्ठत:,—अस्या: पश्चात्, एनामनुसृत्य इत्यर्थ:। अनर्थ:,—विपत्।

( प ) द्रव्यमात्रं—केवलं धनं, ("द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु" इत्यमर:)। पारे—नद्या अपरतीरे, ("पारं परतटे प्रान्ते न स्त्री" इति मेदिनी)। धृत्वा—संस्थाप्य।

( फ ) यथाचिन्तितविषयं—यथेप्सितदेशम् ; ("विषयो गोचरे देशे तथा जन-पदेऽपि च" इति मेदिनी)।

( ब ) कण्ठेति।—लज्जया वक्षोजद्वयप्रच्छादनार्थं विपर्य्यस्तभावेन गलदेश-विन्यस्तकरयुगेत्यर्थ:। उपाद्रवत्—अधावत।

'गृध्रेणापहृतं मांसं मत्स्योऽपि सलिलं गतः ।
मत्स्यमांसपरिभ्रष्टे! किं निरीक्षसि जम्बुकि ! ?' ॥६०॥

तच्छ्रुत्वा शृगालिका तामपि (भ) पति-धन-जारपरिभ्रष्टां दृष्ट्वा सोपहासमाह,—

'यादृशं मम पाण्डित्यं तादृशं द्विगुणं तव ।
नाभूज्जारो न भर्त्ता च किं निरीक्षसि नग्निके ! ?' ॥६१॥इति"।

एवं तस्य कथयतः पुनरन्येन जलचरेण आगत्य निवेदितं यत्,—"अहो ! त्वदीयं गृहमपि अपरेण महामकरेण गृहीतम्"। तत् श्रुत्वा असौ अतिदुःखितमनाः तं गृहात् निःसारयितुं मनसि उपायं चिन्तयामास,—"अहो ! पश्यतां मे (म) दैवोपहतत्वम्,—

मित्रं ह्यमित्रतां यातमपरं मे प्रिया मृता ।
गृहमन्येन च व्याप्तं किमद्यापि भविष्यति !! ॥६२॥

अथवा युक्तमिदमुच्यते,—

क्षते प्रहारा निपतन्त्यभीक्ष्णम्
अन्नक्षये वर्द्धते जाठराग्निः ।

---

गृध्रेणेति ।—गृध्रेण मांसम् अपहृतं, मत्स्योऽपि सलिलं जलं, गतः प्रविष्टः, हे मत्स्यमांसपरिभ्रष्टे ! मीनपललाभ्यां वञ्चिते ! जम्बुकि ! शृगालि ! किं निरीक्षसि ? अतिलोभात् त्वमिदानीं द्वाभ्यामेव वञ्चिता इति तात्पर्य्यम् । [ अत्रापि निरीक्षसे इत्यस्यैव साधुत्वं ज्ञेयम् ] ॥ ६० ॥

(भ) पतीति ।—पतिश्च धनानि च जारश्च तेभ्यः परिभ्रष्टा विच्युता ताम् ।

यादृशमिति ।—४८५ पृष्ठे प्राक् व्याख्यातम ॥ ६१ ॥

(म) दैवोपहतत्वं—दुर्दैवग्रस्तत्वम् ।

मित्रमिति ।—मित्रं सुहृत्, वानरः इति यावत्, हि निश्चयेन, अमित्रतां यातम्, अपरम् अन्यत्, मे मम, प्रिया मृता ; गृहञ्च अन्येन अपरेण, जलचरेणेति शेषः, व्याप्तम् आक्रान्तम्, अद्यापि अतः परमित्यर्थः, किं भविष्यति, तन्न जाने इति शेषः ॥ ६२ ॥

आपत्सु वैराणि समुद्भवन्ति
वामे विधौ सर्वमिदं नराणाम् ॥ ६३ ॥

तत् किं करोमि? किमनेन सह युद्धं करोमि? किंवा (य) साम्ना एव सम्बोध्य गृहात् निःसारयामि? किंवा भेदं दानं वा करोमि? अथवा अमुमेव वानरं मित्रं पृच्छामि? उक्तञ्च,—यः पृष्ट्वा कुरुते कार्य्यं प्रष्टव्यान् स्वहितान् गुरून्।
न तस्य जायते विघ्नः कस्मिंश्चिदपि कर्मणि" ॥६४॥

एवं सम्प्रधार्य्य भूयोऽपि तमेव जम्बूवृक्षम् आरूढं कपिम् अपृच्छत्,—"भो मित्र! पश्य मे मन्दभाग्यतां यत्, सम्प्रति गृहमपि मे बलवत्तरेण मकरेण रुद्धम्; तदहं त्वां (र) प्रष्टुम् अभ्यागतः, कथय, किं करोमि? सामादीनाम् उपायानां मध्ये कस्य अत्र विषयः?" स आह,—"भोः कृतघ्न! पापचारिन्! मया निषिद्धोऽपि किं भूयो माम् अनुसरसि? नाहं

---

क्षते इति।—विधौ दैवे, ("विधिर्विधाने दैवे च" इत्यमरः) वामे प्रतिकूले सति, नराणाम् इदं सर्वं घटते इति शेषः; तथा हि, क्षते क्षतस्थाने एव, अभीक्ष्णं सततं, प्रहारा आघाताः, निपतन्ति भवन्ति, अन्नक्षये भक्ष्याभावे सति, जाठराग्निः उदरानलः, वर्द्धति वृद्धिं गच्छति, ["परस्मैपदमिच्छन्ति आत्मनेपदिनां क्वचित्। आत्मनेपदमिच्छन्ति परस्मैपदिनां क्वचित् ॥" इति महाजनवाक्यात् वर्द्धते इत्यस्य साधुत्वेऽपि अत्र परस्मैपद वैवाचकं ज्ञेयम्] तथा आपत्सु विपत्तिकालेष्वेव, वैराणि शत्रुताः, समुद्भवन्ति; अहो! विधिविडम्बितम्!! इति भावः। उपजातिः वृत्तम् ॥ ६३ ॥

(य) साम्ना—सामप्रयोगेण, मधुरवचसा इत्यर्थः। सम्बोध्य—आभाष्य इत्यर्थः। भेदम्—उपजापं, तस्य स्वपक्षीयैः मनोभङ्गरूपं तृतीयमुपायम्। दानम्—अर्थेन सन्तोषरूपं द्वितीयमुपायम्।

य इति।—यः जनः, प्रष्टव्यान् प्रष्टुमर्हान्, विपश्चित इत्यर्थः, स्वहितान् निजमङ्गलकामिनः, गुरून् महतः, स्वापेक्षया श्रेष्ठानित्यर्थः, जनान् इति शेषः, पृष्ट्वा कार्य्यं कुरुते, तेषामनुमत्या इति भावः, तस्य कस्मिंश्चिदपि कर्मणि विघ्नः न जायते ॥६४॥

(र) प्रष्टुं—जिज्ञासितुम्। विषयः,—अधिकार इत्यर्थः, सामादीनामुपायानां मध्ये कमुपायमधिकृत्य कार्य्यं साधयामीति भावः।

तव मूर्खस्य उपदेशमपि दास्यामि"। तत् श्रुत्वा मकरः प्राह,—"भो मित्र! सापराधस्य मे पूर्वस्नेहम् अनुस्मृत्य हितोपदेशं देहि"। वानर आह,—"नाहं ते कथयिष्यामि, यत् भार्य्यावाक्येन भवता अहं समुद्रे प्रक्षेप्तुं नीतः, तदेवं न युक्तम्; यद्यपि भार्य्या सर्वलोकादपि वल्लभा भवति, तथाऽपि न मित्राणि बान्धवाश्च भार्य्यावाक्येन समुद्रे प्रक्षिप्यन्ते। तन्मूर्ख! मूढ़त्वेन नाशः तव मया प्रागेव निवेदित आसीत्; यतः,—

सतां वचनमादिष्टं मदेन न करोति यः।
स विनाशमवाप्नोति घण्टोष्ट्र इव सत्वरम्" ॥ ६५ ॥

मकर आह,—"कथमेतत्?" सोऽब्रवीत्,—

## कथा ९।

"कस्मिंश्चित् अधिष्ठाने उज्ज्वलको नाम रथकारः प्रतिवसति स्म। स च (ल) अतीव दारिद्र्योपहतः चिन्तितवान्,—'अहो! धिक् इयं दरिद्रता अस्मद्गृहे!! यतः सर्वोऽपि जनः स्वकर्मणा एव रतः तिष्ठति; अस्मदीयः पुनः

---

सतामिति।—यः मदेन गर्वेण, सतां साधूनां, विपश्चिद्भिरित्यर्थः, हितैषिभिरिति यावत्, ("विद्वान् विपश्चिद्दोषज्ञः सन् सुधीः कोविदो बुधः" इत्यमरः) आदिष्टम् उपदिष्टं, वचनम् ईदृशं कर्म मा कुरु, कृते विपत्तिः भवितुमर्हति इत्येवंरूपमित्यर्थः, न करोति न पालयति, स घण्टोष्ट्र इव घण्टया उपलक्षितः उष्ट्रः इव, घण्टावादकोष्ट्र इवेत्यर्थः, सत्वरं शीघ्रं, विनाशं ध्वंसम्, अवाप्नोति लभते; घण्टोष्ट्रो यथा सजातीयानां सावधानताज्ञापकं हितवाक्यमवगणय्य एकाकी आगच्छन् सिंहेन विनष्टः अभूत्, तथा सदुपदेशमगृह्णतां विनाशो भवति इति निष्कर्षः ॥६५॥

(ल) अतीवेति।—अतीव—अत्यर्थं, दारिद्र्येण—निर्धनतया, उपहतः,—पीड़ितः, आक्रान्तः इत्यर्थः। अहो इति।—अहो! धिक्—हा अतिकष्टमेतदित्यर्थः, इयं दरिद्रता—इदं दारिद्र्यम्, अस्मद्गृहे—मदीयभवने इत्यर्थः, [अत्र धिक्शब्दस्य निन्दार्थकत्वेऽपि तद्योगाभावात् न द्वितीया इत्यवधेयम्]। रतः,—आसक्तः, आवद्ध इत्यर्थः।

(व) व्यापारो न अत्र अधिष्ठाने अर्हति ; यतः, सर्व-लोकानां चिरन्तनाः चतुर्भूमिका गृहाः सन्ति ; तत् किं मदीयेन रथकारत्वेन प्रयोजनम् ?' इति चिन्तयित्वा देशात् निष्क्रान्तः यावत् किञ्चित् वनं गच्छति, तावत् (श) गह्वराकारवनगहनमध्ये सूर्य्यास्तमनवेलायां स्वयूथात् भ्रष्टां प्रसववेदनया पीड्यमानां उष्ट्रीम् अपश्यत्। स च (ष) दासेरकयुक्ताम् उष्ट्रीं गृहीत्वा स्वस्थानाभिमुखः प्रस्थितः ; गृहम् आसाद्य रज्जुं गृहीत्वा ताम् उष्ट्रिकां बबन्ध च। ततश्च तीक्ष्णं (स) परशुम् आदाय तस्याः कृते पल्लवानयनार्थं पर्वतैकदेशे गतः। तत्र च नूतनानि कोमलानि बहूनि पल्लवानि छित्त्वा शिरसि समारोप्य तस्या अग्रे निचिक्षेप ; तया च तानि शनैः शनैः भक्षितानि। पश्चात् पल्लवभक्षणप्रभावात् अहर्निशं पीवरतनुः उष्ट्री सञ्जाता। सोऽपि दासेरको महान् उष्ट्रः सञ्जातः। ततः स नित्यमेव (ह) दुग्धं गृहीत्वा स्वकुटुम्बं

---

(व) व्यापारः,—कार्य्यं, सूत्रधरवृत्तिरित्यर्थः। अधिष्ठाने—पुरे, नगरे इत्यर्थः, ("अधिष्ठानं पुरे चक्रे प्रभावेऽध्यासनेऽपि च" इति मेदिनी)। अर्हति—युज्यते। चिरन्तनाः,—प्राचीनाः, ["सायंचिरंप्राह्णे—" (४।३।२३ पा०) इत्यादिना ट्युट्युलौ तुट् च, ततः तुटः प्रागनादेशः] बहुकालिका इत्यर्थः। चतुर्भूमिकाः,—चतुः-प्रकोष्ठाः ; यद्वा,—चतस्रः भूमयः,—उपर्य्युपरि अवस्थिताः कक्षदेशा इत्यर्थः, यत्र तादृशाः "चतुस्तल" इति यस्य भाषा, गृहाः,—भवनानि।

(श) गह्वरेति।—गह्वरस्य आकार इव आकारो यस्य तादृशं, सूर्य्यकिरण-प्रवेशायोग्यमिति यावत्, यत् वनगहनं—निबिड़ं वनमित्यर्थः, तस्य मध्ये ; ("…गहनं कलिले त्रिषु। नपुंसकं गह्वरं स्याद्दुःखकाननयोरपि॥" इति मेदिनी)।

(ष) दासेरकयुक्तां—करभयुक्तां, शिशूष्ट्रसहितामित्यर्थः, ("दासेरकस्तु करभे दासीपुत्रे च धीवरे" इति मेदिनी)।

(स) परशुं—कुठारम्। तस्याः कृते—उष्ट्रिकायाः आहारार्थम् इत्यर्थः।

(ह) दुग्धम्, उष्ट्र्या इति शेषः।

परिपालयति। अथ रथकारेण वल्लभत्वात् दासेरकग्रीवायां महती घण्टा प्रतिबद्धा। पश्चात् रथकारो व्यचिन्तयत्,—'अहो ! किमन्यैः (क) दुष्कृतकर्मभिः ? यावत् मम एतस्मादेव उष्ट्रीपरिपालनात् अस्य कुटुम्बस्य भव्यं सञ्जातं, तत् किम् अन्येन व्यापारेण ?' एवं विचिन्त्य गृहम् आगत्य प्रियामाह,—'भद्रे ! (ख) समीचीनोऽयं व्यापारः; तव सम्मतिः चेत् कुतोऽपि धनिकात् किञ्चित् द्रव्यमादाय मया गुर्जरदेशे गन्तव्यं करभग्रहणाय; तावत् त्वया एतौ यत्नेन रक्षणीयौ, यावत् अहमपराम् उष्ट्रीं नीत्वा समागच्छामि'। ततश्च गुर्जरदेशं गत्वा उष्ट्रीं गृहीत्वा स्वगृहम् आगतः। किं बहुना ? तेन तथा कृतं, यथा तस्य प्रचुरा उष्ट्राः (ग) करभाश्च सम्मिलिताः। ततस्तेन महत् उष्ट्रयूथं कृत्वा (घ) रक्षापुरुषो धृतः, तस्य वर्षं प्रति वृत्त्या करभम् एकं प्रयच्छति, अन्यच्च, अहर्निशं दुग्धपानं (ङ) तस्य निरूपितम्। एवं रथकारोऽपि नित्यमेव उष्ट्रीकरभव्यापारं कुर्वन् सुखेन तिष्ठति।

(क) दुष्कृतकर्मभिः,—दुःखसाध्यकर्मभिः। भव्यं—कुशलम्; [ भूधातोः "अचो यत्" (३।१।९७ पा०) इति यत्प्रत्यये भव्यम्, आवश्यकार्थे तु ण्यति भाव्यं, भावे अनुपसर्गे सुप्युपपदे तु "भुवो भावे" (३।१।१०७ पा०) इति क्यप् च स्यात्। "भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम्" इत्यमरः ]। व्यापारेण—क्रियया।

(ख) समीचीनः,—साधुः। व्यापारः,—उपायः। द्रव्यमादाय—धनं गृहीत्वा। करभग्रहणाय—उष्ट्रशावकानयनाय, ("करभो मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते" इति मेदिनी)।

(ग) करभाः,—उष्ट्रशावकाः। सम्मिलिताः,—सञ्जाताः।

(घ) रक्षापुरुषः,—रक्षकः। धृतः,—नियुक्तः। तस्य—रक्षापुरुषस्य। वर्षं प्रति—प्रतिवर्षं। वृत्त्या—वेतनेन। करभम्—उष्ट्रशावकम्।

(ङ) तस्य—रक्षापुरुषस्य। निरूपितं—व्यवस्थापितम्।

अथ ते दासेरकाः (च)अधिष्ठानोपवने आहारार्थं गच्छन्ति, कोमलवल्लीः यथेच्छया भक्षयित्वा महति सरसि पानीयं पीत्वा सायन्तनसमये मन्दं मन्दं लीलया गृहम् आगच्छन्ति । स च (छ) पूर्वदासेरको मदातिरेकात् पृष्ठे आगत्य मिलति । ततस्तैः कलभैः अभिहितम्,—'अहो ! (ज) मन्दमतिः अयं दासेरको यथा यूथाद्भ्रष्टः पृष्ठे स्थित्वा घण्टां वादयन् गच्छति, यदि कस्यापि दुष्टसत्त्वस्य मुखे पतिष्यति, तन्नूनं मृत्युम् अवाप्स्यति'। अथैकदा तैः असकृदेव निषिद्धः सन् अपि स तद्वचनं कर्णमदत्त्वैव मदातिरेकात् घण्टां वादयन् वनं प्रविष्टः। इत्थं तस्य तद्वनं (झ) गाहमानस्य कश्चित् सिंहः ततस्थः घण्टारवम् आकर्ण्य शब्दानुसारेण दृष्टिं निपात्य अवलोकयति यत्, उष्ट्रोदासेरकाणां यूथं गच्छति। (ञ) स पुनः प्रतिदिवसमिव पृष्ठे क्रीड़ां कुर्वन् चरंश्च वल्लरीः यावत् गच्छति, तावत् अन्ये दासेरकाः पानीयं पीत्वा स्वगृहे गताः। ततः स वनात् निष्क्रम्य दिशोऽवलोकयन् (ट) न कश्चित् मार्गं पश्यति

(च) अधिष्ठानोपवने—नगरसमीपस्थारण्ये । आहारार्थं—भक्षणार्थम् । कोमलवल्लीः,—मृद्वीर्लताः । सायन्तनसमये—प्रदोषे, सायंकाले इत्यर्थः ।

(छ) पूर्वदासेरकः,—प्रथमानीतः उष्ट्रः । मदातिरेकात्—गर्वातिशयात्, प्रभोः वल्लभतयेति भावः । पृष्ठे—पश्चात्, अन्येषामागमनानन्तरमित्यर्थः ।

(ज) मन्दमतिः,—अल्पबुद्धिः । दुष्टसत्त्वस्य—हिंस्रजन्तोः । अवाप्स्यति—प्राप्स्यति ।

(झ) गाहमानस्य—प्रविशतः । अवलोकयति—पश्यति ।

(ञ) क्रीड़ां कुर्वन्—विविधविलासं प्रदर्शयन्नित्यर्थः । चरन्—भक्षयन् । वल्लरीः,—मञ्जरीः ।

(ट) नेति ।—कश्चित् मार्गं न पश्यति—सायङ्कालात्ययेन तिमिरोदयादिति भावः ।

वेत्ति वा। एवं यूथाद्भ्रष्टतया (ठ) बृहच्छब्दायमाने कियद्दूरं गच्छति च तस्मिन् तच्छब्दानुसारी सिंहः क्रमं कृत्वा निभृतोऽग्रे व्यवस्थितः। ततः यावत् उष्ट्रः समीपम् आगतः, तावत् सिंहेन (ड) लम्फयित्वा ग्रीवायां गृहीतो मारितश्च। अतोऽहं ब्रवीमि,—'सतां वचनमादिष्टम्' इत्यादि"।

अथ तत् श्रुत्वा मकरः प्राह,—"भद्र!—

> प्राहुः साप्तपदं मैत्रं जनाः शास्त्रविचक्षणाः।
> मित्रताञ्च पुरस्कृत्य किञ्चिद्वक्ष्यामि तत् शृणु॥ ६६॥
> उपदेशप्रदातॄणां नराणां हितमिच्छताम्।
> परस्मिन्निह लोके च व्यसनं नोपपद्यते॥ ६७॥

तत् सर्वथा कृतघ्नस्यापि मे कुरु प्रसादम् उपदेशप्रदानेन।

---

(ठ) बृहच्छब्दायमाने—उच्चैः घण्टानादं कुर्वाणे। क्रमं—परिकरं, लम्फनार्थमुद्यमनित्यर्थः। निभृतः,—निश्चलः। व्यवस्थितः,—तस्थौ।

(ड) लम्फयित्वा—उत्प्लुत्य इत्यर्थः, [रफि गत्यामिति भौवादिकस्य इदनुबन्धस्य रफधातोः णिचि क्त्वाप्रत्यये च रूपं, रलयोरभेदाच्च रस्य लत्वमिति वेदितव्यम्; लम्फधात्वन्तरस्याद‍र्शनात्]।

प्राहुरिति।—शास्त्रविचक्षणाः शास्त्रज्ञाः, जनाः, मैत्रं सख्यं, साप्तपदं ["साप्तपदीनं सख्यम्" (५।२।२२ पा०) इत्यनेन सख्येऽर्थे साप्तपदीनम् एव स्यात; 'साप्तपदं' पदन्तु सुधीभिर्विचार्य्यम्, अथवा,—सप्तभिः पदैः सुप्तिङन्तरूपैः, उच्चारितैः निर्वृत्तमित्यर्थे, सप्तानां पदानां समाहार इति विग्रहेण निष्पन्नात् सप्तपदशब्दात् विवक्षया अणि रूपम्] सप्तसङ्ख्यकपदोच्चारणपूर्वकमिति यावत्; "सख्यमाभाषणपूर्वमाहुः" इति कालिदासवचनादिति भावः; प्राहुः कथयन्ति; त्वया सह मे बहवः संलापा जाताः, तस्मात् त्वं मे मित्रं नात्र नास्ति सन्देहः, मित्रत्वस्य सप्तपदमात्रसंलापनिष्पाद्यत्वादित्याशयः; अत एव मित्रतां बन्धुतां, प्राक् सञ्जातामिति भावः, पुरस्कृत्य अवलम्ब्य, किञ्चित् वक्ष्यामि; यदिदानीं कथयिष्यामि तत्तु पूर्वसौहार्दमनुरुध्यैवेति भावः; तत् शृणु आकर्णय॥ ६६॥

उपदेशेति।—इह अस्मिन्, परस्मिंश्च लोके उपदेशप्रदातॄणां तथा हितमिच्छताम् अभीष्टं श्रेयः वाञ्छतां, नराणां व्यसनं विपत्, न उपपद्यते न भवति॥ ६७॥

उक्तञ्च,—उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ?।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते" ॥ ६८ ॥

तदाकर्ण्य वानरः प्राह—"भद्र ! यदि एवं, तर्हि तत्र गत्वा तेन सह युद्धं कुरु। उक्तञ्च,—

हतस्त्वं प्राप्स्यसि स्वर्गं जीवन् गृहमथो यशः।
युध्यमानस्य ते भावि गुणद्वयमनुत्तमम् ॥ ६९ ॥
उत्तमं प्रणिपातेन शूरं भेदेन योजयेत्।
नीचमल्पप्रदानेन समशक्तिं पराक्रमैः" ॥ ७० ॥

मकरः प्राह,—"कथमेतत् ?" सोऽब्रवीत्,—

उपकारिष्विति।—यः उपकारिषु उपकारकेषु, साधुः सद्व्यवहारपरायणः, स्वोपकारमपेक्ष्यैव हितैषी इति यावत्, तस्य साधुत्वे को गुणः ? का प्रशंसा ? न कोऽपि गुण इत्यर्थः ; यः अपकारिषु स्वानिष्टकारकेषु, जनेषु अपीति शेषः, साधुः समदर्शी, स्वोपकारमनपेक्ष्यैव केवलं हितसाधनतत्पर इति यावत्, सद्भिः सज्जनैः, स एव साधुः महानित्यर्थः, उच्यते कथ्यते। "सुरधुनि ! मुनिकन्ये ! तारयेः पुण्यवन्तं स तरति निजपुण्यैस्तत्र किं ते महत्त्वम् ? यदि च गतिविहीनं [illegible]येः पापिनं मां तदिह तव महत्त्वं तन्महत्त्वं महत्त्वम् ॥" इति श्लोकान्तरमत्रानुध्येयम् ॥ ६८ ॥

समेन सह दण्डरूपोपायावलम्बनस्य फलमाह, हत इति।—त्वं हतः सन्, तेनेति शेषः, स्वर्गं प्राप्स्यसि, युद्धे मरणस्य स्वर्गसाधनत्वादिति भावः ; अथो पक्षान्तरे, जीवन् प्राणन्, शत्रुं निर्जित्येति शेषः, गृहं स्वालयं, यशः कीर्तिञ्च, प्राप्स्यसीत्यनुषङ्गः। "हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्" इति स्मरणादिति भावः। अतः युध्यमानस्य युद्धं कुर्वतः, ते तव, अनुत्तमम् अत्युत्कृष्टं, गुणद्वयम् उक्तशुभफल-युगलं, भावि भविष्यति इत्यर्थः ; तथा च समशक्तिना सह अन्तिमः उपायः विग्रह एव करणीयः, न तु सामादित्रितयम् इति तात्पर्य्यम् ॥ ६९ ॥

सामादिषु कः उपायः कुत्र अवलम्बनीय इत्यपेक्षायां तत्प्रयोगस्थानं निर्दिशति, उत्तममिति।—उत्तमं बलाधिकं, प्रणिपातेन सान्त्वा, शूरं बलवन्तं, भेदेन उपजापेन, आत्मीयैः सह विच्छेदसाधनेन इत्यर्थः, नीचं क्षुद्रं शत्रुं, किन्तु बलासाध्यमिति भावः, अल्पप्रदानेन शक्तिविहानेन, तथा समशक्तिं तुल्यबलं, पराक्रमैः शौर्य्यैः, शौर्य्यप्रदर्शने-

## कथा १० ।

"आसीत् कस्मिंश्चित् वनोद्देशे महाचतुरको नाम शृगालः । तेन कदाचित् अरण्ये स्वयंमृतो गजः समासादितः । अथ शृगालः तस्य समन्तात् परिभ्रमति, परं कठिनां त्वचं भेत्तुं न शक्नोति । (ढ) अत्रावसरे इतश्चेतश्च विचरन् कश्चित् सिंहस्तत्रैव प्रदेशे समाययौ । अथ सिंहं समागतं दृष्ट्वा स (ण) क्षितितलविन्यस्तमौलिमण्डलः संयोजितकरयुगलः सविनयम् उवाच,—'स्वामिन् ! त्वदीयोऽहं लागुडिकः स्थितः, त्वदर्थे गजामिमं रक्षामि ; तत् एनं भक्षयतु स्वामी' । तं प्रणतं दृष्ट्वा सिंहः प्राह,—'भोः ! न अहमन्येन हतं सत्त्वं कदाचिदपि भक्षयामि । उक्तञ्च,—

> वनेऽपि सिंहा मृगमांसभक्ष्या
> बुभुक्षिता नैव तृणं चरन्ति ।

रित्यर्थः, योजयेत् सन्दध्यात् ; तत्र तत्र सामादिचतुष्कं प्रयुज्य तान् तान् रिपून् विजयेत इति भावः ॥ ७० ॥

(ढ) अत्रावसरे—अस्मिन्नवकाशे, शृगालो यदा मृतं गजं परितः परिभ्रमति, तदा इत्यर्थः ।

(ण) क्षितीति ।—क्षितितले—भूमौ, विन्यस्तं—पातितं, मौलिमण्डलं—मस्तकदेशः, ("मण्डलं परिधौ कोठे देशे द्वादशराजसु" इति मेदिनी ) येन तथोक्तः, प्रणिपतन् इत्यर्थः । संयोजितेति ।—संयोजितं करयुगलं येन तथोक्तः, बद्धाञ्जलिरित्यर्थः । लागुडिकः,—याष्टीकः, लगुडधारी इत्यर्थः, लगुडवाही भृत्य इति यावत्, [ लगुडः प्रहरणमस्येति लगुडशब्दात् "प्रहरणम्" ( ४।४।५७ पा० ) इति ठक् ] ।

वने इति ।—वने मृगमांसभक्ष्याः मृगाणां मांसं भक्ष्यम् आहार्य्यं येषां तथोक्ताः, पशुमांसभोजिन इत्यर्थः, सिंहाः [ हिनस्ति यः सः सिंहः, इदशब्दात् हिंस्-धातोः कप्रत्यये वर्णविपर्य्ययो निपातनात् ] बुभुक्षिताः क्षुधिता अपि सन्तः, [ भोक्तुमिच्छा बुभुक्षा, भुज् धातोः "धातोः कर्मणः—" ( ३।१।७ पा० ) इति सन्, "अ प्रत्ययात्" ( ३।३।१०२ पा० ) इति स्त्रियाम् अ-प्रत्ययः, ततः टाप्, बुभुक्षा एषां सञ्जाता: इत्यर्थे

एवं कुलीना व्यसनाभिभूता
न नीतिमार्गं परिलङ्घयन्ति ॥ ७१ ॥

तत् तव एव गजोऽयं मया (त) प्रसादीकृतः'। तत् श्रुत्वा शृगालः सानन्दमाह,—'युक्तमिदं स्वामिनो निजभृत्येषु। उक्तञ्च यतः,—

अन्त्यावस्थोऽपि महान् स्वामिगुणान् न जहाति तु शुद्धतया।
न श्वेतभावमुज्झति शङ्खः शिखिभुक्तमुक्तोऽपि' ॥ ७२ ॥

अथ सिंहे गते कश्चित् व्याघ्रः समाययौ ; तमपि दृष्ट्वा असौ व्यचिन्तयत्,—'अहो! एकस्तावत् दुरात्मा प्रणिपातेन (थ) अपवाहितः, तत् कथमिदानीम् एनम् अपवाहयिष्यामि? नूनं शूरोऽयं, न खलु भेदं विना साध्यो भविष्यति। उक्तञ्च यतः,—

"तदस्य सञ्जातं तारकादिभ्य इतच्" (५।२।३६ पा०) इति इतच्प्रत्यये च सिद्धम् ] नैव तृणं चरन्ति भक्षयन्ति ; मांसानामलाभेऽपि न हि ते तृणानि भक्षयित्वा नष्टप्रकृतिका भवन्ति इति भावः ; एवं कुलीनाः सत्कुलप्रसूता जनाः, महिमवन्त इत्यर्थः, व्यसनेन विपदा, अभिभूता आक्रान्ताः, अपीति शेषः, नीतिमार्गं न्याय्यपथमित्यर्थः, न परिलङ्घयन्ति न त्यजन्ति ; अतोऽहमन्येन विनष्टं जीवं भक्षयित्वा न स्वात्मानं हीनं करोमि इत्याशयः ; "न हि सिंहः पराखीढ़मामिषं भोक्तुमिच्छति" इति माघोक्तं स्मर्त्तव्यम्। उपजातिः वृत्तम् ॥ ७१ ॥

(त) प्रसादीकृतः,—प्रसन्नत्वेन दत्तः।

अन्त्यावस्थ इति।—महान् जनः, अन्त्यावस्थः अपि चरमदशाक्रान्तोऽपि, दुर्दशायाश्चरमसीमां प्राप्तोऽपीत्यर्थः, शुद्धतया पवित्रतया, निर्दोषतया इत्यर्थः, उन्नतान्तःकरणतया इति यावत्, स्वामिगुणान् महतो गुणानित्यर्थः, प्रभुभावानिति यावत्, न तु जहाति नैव त्यजति ; शङ्खः कम्बुः, शिखिनः अग्नेः, भुक्तिः ग्रासः, भक्षीकरणमिति भावः, तस्याः मुक्तोऽपि परित्यक्तोऽपि, अग्निना दाहानन्तरमपि इत्यर्थः, श्वेतभावं नम्रशौक्ल्यं, न उज्झति न त्यजति ; "प्राणान्तेऽपि प्रकृतिविकृतिर्जायते नोत्तमानाम्" इति भावः। अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः। आर्या वृत्तम् ॥७२॥

(थ) अपवाहितः,—दूरीकृतः। अपवाहयिष्यामि—अपसारयिष्यामि,

न यत्र शक्यते कर्त्तुं साम दानमथापि वा ।
भेदस्तत्र प्रयोक्तव्यो यतः स वशकारकः ॥ ७३ ॥

किञ्च, सर्वगुणसम्पन्नोऽपि भेदेन बध्यते । उक्तञ्च यतः,—

अन्तःस्थेन विरुद्धेन सुवृत्तेनातिचारुणा ।
अन्तर्भिन्नेन सम्प्राप्तं मौक्तिकेनापि बन्धनम्' ॥ ७४ ॥

एवं (द) सम्प्रधार्य्य तस्याभिमुखो भूत्वा गर्वात् उन्नतकन्धरः ससम्भ्रमम् उवाच,—'माम ! कथम् अत्रभवान् मृत्युमुखे

---

दूरीकरिष्यामीत्यर्थः । शूरः,—बलवान् । भेदम्—उपजापम् । साध्यः,—प्रतीकार्य्यः ।

नेति ।—यत्र साम सान्त्वप्रयोगः, विनयव्यवहारः इत्यर्थः, अथवा दानमपि कर्त्तुं न शक्यते, जनैरिति शेषः, तत्र भेदः उपजापः, प्रयोक्तव्यः विधेयः, यतः यस्माद्धेतोः, सः भेदः, वशकारकः तृतीयः शत्रुवशीकरणोपायः ॥ ७३ ॥

अन्तर्भिन्ना एव हि महान्तः प्रतिपक्षस्य वश्यतामवाप्नुवन्ति इति भेदोपायमप्रस्तुतमौक्तिकवर्णनेन प्रशंसति, अन्तःस्थेनेति ।—अन्तःस्थेन अन्तर्गतेन, शुक्तिप्रभृतीनामिति भावः, अन्यत्र,—दुर्गाभ्यन्तरस्थेनेत्यर्थः ; सुवृत्तेन सुवर्तुलेन, अन्यत्र—सुचरित्रेण, नीतिपथावलम्बिना इत्यर्थः ; अतिचारुणा अतिमनोज्ञेन, अन्यत्र—लोकरञ्जकेन, विरुद्धेन विशेषतो रुद्धेन, आवरणान्तर्वर्त्तित्वादिति भावः ; अन्यत्र,—विरोधिना, शत्रुणा विरोधवता इत्यर्थः, किन्तु अन्तर्भिन्नेन अन्तः मध्यस्थाने, भिन्नेन कृतच्छिद्रेण ; अन्यत्र,—प्रकृतिभिः उपजापं नीतेन, अमात्यादिभिः भेदं प्राप्तेनेत्यर्थः, मौक्तिकेन मुक्ताफलेन अपि, दुर्गमसमुद्रान्तर्वर्त्तिनाऽपि तथा कठिनावरणावृतेनापीति भावः, किमुत अपरैरित्यपिशब्दार्थः, बन्धनं सूत्रसंयमनत्वं, जनैरायत्तीकृतत्वं वा ; अन्यत्र,—शत्रुभिः वश्यत्वम, उपजप्तत्वादिति भावः, सम्प्राप्तं लब्धं, प्रोक्तगुणयुतानि मौक्तिकानि यथा अन्तर्भिन्नान्येव बन्धनानि अवाप्नुवन्ति, एवमेव बहुसहायशालिनोऽपि वीरपुरुषाः भेदेन वश्यतां नीयन्ते इत्यर्थः ; आत्मीयविच्छेदो हि पराभूतिहेतुरिति भावः । अत्र समादप्रस्तुतात् मौक्तिकात् समस्य प्रस्तुतस्य वैरिणो गम्यता इति अप्रस्तुतप्रशंसाऽलङ्कारः ॥ ७४ ॥

( द ) सम्प्रधार्य्य—निश्चित्य । गर्वात्—गर्वमाश्रित्य, निर्भयमिति यावत् । उन्नतकन्धरः,—उन्नतग्रीवः । ससम्भ्रमं—सत्वरं सादरं वा । अत्रभवान्—पूज्यः ।

प्रविष्टः? येन एष गजः सिंहेन व्यापादितः। स च माम् एतद्रक्षणे नियुज्य नद्यां स्नानार्थं गतः। तेन च गच्छता मम समादिष्टं—'यदि कश्चिदिह व्याघ्रः समायाति, तत् त्वया सुगुप्तं मम आवेदनीयं, येन वनमिदं मया निर्व्याघ्रं कर्त्तव्यम्; यतः पूर्वं व्याघ्रेण एकेन मया व्यापादितो गजः (ध) शून्ये भक्षयित्वा उच्छिष्टतां नीतः; तद्दिनम् आरभ्य व्याघ्रान् प्रति प्रकुपितोऽस्मि' इति'। तत् श्रुत्वा व्याघ्रः (न) सन्त्रस्तः तमाह,—'भो भागिनेय! देहि मे प्राणदक्षिणाम्!! त्वया तस्य अत्र चिराय आयातस्यापि मदीया काऽपि वार्त्ता न आख्येया' एवमभिधाय सत्वरं पलायाञ्चक्रे।

अथ गते व्याघ्रे तत्र कश्चित् (प) द्वीपी समायातः। तमपि दृष्ट्वा असौ व्यचिन्तयत्,—(फ) 'दृढ़दंष्ट्रोऽयं चित्रकः; तदस्य पार्श्वादस्य गजस्य यथा चर्मच्छेदो भवति तथा करोमि'। एवं निश्चित्य तमपि उवाच,—'भो भगिनीसुत! किमिति चिरात् दृष्टोऽसि? कथञ्च बुभुक्षित इव लक्ष्यसे? तत् अतिथिरसि मे, एष गजः सिंहेन हतः तिष्ठति, अहञ्च अस्य (ब) तदादिष्टो रक्षपालः, परं तथाऽपि यावत् सिंहो न समायाति,

(ध) शून्ये—एकान्ते, मम अनुपस्थितदशायाम् इत्यर्थः।

(न) सन्त्रस्तः,—भीतः। प्राणदक्षिणां—जीवनदानमित्यर्थः, आख्येया—कथनीया।

(प) द्वीपी—चित्रकाऽऽख्यव्याघ्रविशेष इत्यर्थः, ("शार्दूलद्वीपिनौ व्याघ्रे" इत्यमरः)।

(फ) दृढ़ेति।—दृढ़ा—कठिना, निशितेत्यर्थः, दंष्ट्रा—दन्तः यस्य तादृशः, कठिनमपि वस्तु अयं दंष्ट्रया भेत्तुं शक्नोति इति भावः। चित्रकः,—कर्बूरकायो व्याघ्रविशेषः।

(ब) तदादिष्टः,—तेनाज्ञप्तः। रक्षपालः,—रक्ष्यते इति रक्षः, [ कर्मण्यल्-प्रत्ययः ] ततश्च रक्षं रक्षणीयं पालयतीति तथोक्तः, रक्षक इति यावत्।

तावत् अस्य गजस्य मांसं भक्षयित्वा तृप्तिं कृत्वा द्रुततरं व्रज'। स आह,—'माम ! यदि एवं, तन्न कार्य्यं मे मांसाशनेन, यतो जीवन् नरो (भ) भद्रशतानि पश्यति।

उक्तञ्च,—यच्छक्यं ग्रसितुं ग्रस्तं ग्रस्तं परिणमेच्च यत्।
हितञ्च परिणामे यत् तदाद्यं भूतिमिच्छता ॥ ७५ ॥

तत् सर्वथा तदेव भुज्यते, यदेव ( म ) परिणमति ; तत् अहम् इतोऽपयास्यामि'। शृगाल आह,—'भोः ( य ) अधीर ! विस्रब्धो भूत्वा भक्षय त्वं, तस्य आगमनं दूरतोऽपि तव अहं निवेदयिष्यामि'। तथा अनुष्ठिते द्वीपिना ( र ) भिन्नां त्वचं विज्ञाय जम्बुकेन अभिहितं,—'भो भगिनीसुत ! गम्यताम् !! गम्यताम् !! एष सिंहः समायाति'। तत् श्रुत्वा चित्रको दूरं (ल) प्रनष्टः। अथ यावदसौ (व) तद्भेदकृतद्वारेण किञ्चिन्मांसं भक्षयति, तावत् अतिसङ्क्रुद्धोऽपरः शृगालः समाययौ। अथ तम् आत्मतुल्यपराक्रमं दृष्ट्वा एनं श्लोकम् अपठत्,—

'उत्तमं प्रणिपातेन शूरं भेदेन योजयेत्।
नीचमल्पप्रदानेन समशक्तिं पराक्रमैः' ॥ ७६ ॥

---

( भ ) भद्रशतानि—बहूनि मङ्गलानि।

यदिति।—श्लोकस्यास्य व्याख्या ४५४ पृष्ठे द्रष्टव्या ॥ ७५ ॥

( म ) परिणमति—सुखेन पाकं गच्छति। इतः,—अस्मात् स्थानात्। अपयास्यामि—अपसरिष्यामि।

( य ) अधीर !—कातर ! भीत इत्यर्थः। विस्रब्धः,—निःशङ्कः।

( र ) भिन्नां—छिन्नाम्। त्वचं—चर्म।

( ल ) प्रनष्टः,—अदर्शनं गतः, पलायित इत्यर्थः। [ द्वीपिनोऽपसारणमिदं "नीचमल्पप्रदानेन" इत्यस्य निदर्शनमिति बोद्धव्यम ]।

( व ) तदिति।—तेन—द्वीपिना, भेदात्—दंष्ट्रया छेदनात्, कृतं यत् द्वारं—रन्ध्रमित्यर्थः, भक्षणोपाय इत्यर्थो वा, तेन।

उत्तममिति।—४९५ पृष्ठे ७० सङ्ख्यकश्लोके व्याख्यातं प्राक् ॥ ७६ ॥

ततश्च (श) तदभिमुखकृतप्रयाणः स्वदंष्ट्राभिः तं विदार्य्य दिशो भागं कृत्वा स्वयं सुखेन चिरकालं हस्तिमांसं बुभुजे।

एवं त्वमपि तं रिपुं स्वजातीयं युद्धेन परिभूय दिशो भागं कुरु, नो चेत्, पश्चात् (ष) बद्धमूलात् अस्मात् त्वमपि विनाशम् अवाप्स्यसि। उक्तञ्च यतः,—

सम्भाव्यं गोषु सम्पन्नं सम्भाव्यं ब्राह्मणे तपः।
सम्भाव्यं स्त्रीषु चापल्यं सम्भाव्यं जातितो भयम्॥ ७७॥

अन्यच्च,—सुभिक्षाणि विचित्राणि शिथिलाः पौरयोषितः।
एको दोषो विदेशस्य स्वजातिर्यद्विरुध्यते"॥ ७८॥

---

(श) तदिति।—तस्य—शृगालस्य, अभिमुखे—सम्मुखे, तं प्रतीत्यर्थः, कृतं प्रयाणं—युद्धार्थं गमनं येन तथाभूतः, युद्धाय तदभिमुखं गच्छन् इत्यर्थः। तम्—अपरं शृगालम्। विदार्य्य—विदीर्णं कृत्वा, निहत्येत्यर्थः। दिशः,—ककुभः, [सम्बन्धे षष्ठी]। भागं—बण्टनम्, अंशमित्यर्थः, बलिरूपत्वेनेति भावः। कृत्वा—दत्त्वा इत्यर्थः, तस्य मांसं चतुर्दिक्षु विक्षिप्येति यावत्। चिरकालं—सुबहुदिनमित्यर्थः।

(ष) बद्धमूलात्—दीर्घकालाधिकारेण दृढसन्निविष्टादित्यर्थः। अस्मात्—तस्करात्।

सम्भाव्यमिति।—गोषु धेनुषु [गच्छतीति गौः, गम्धातोः "गमेर्डोः" (उणा० २ अध्या० ६७ सू०) इति डो.प्रत्ययः] सम्पन्नं, [सम्पूर्वकात् पद्धातोः भावे क्तः "रदाभ्यां निष्ठातो नः—" (८।२।४२ पा०) इति निष्ठातस्य दस्य च नकारः] ऐश्वर्य्याऽऽधायकत्व, सम्पत्तिरित्यर्थः, सम्भाव्य मन्तव्यं, गोषु तर्पितासु प्रचुरसम्पदागमः सम्भाव्यते, यतस्ता लक्ष्मीभूताः; यद्वा,—गोषु, वर्त्तमानासु इति शेषः, सम्पन्नं सम्पद्युक्तं, सम्भाव्यं, धनभूता एव गावः इति भावः, गोधनत्वादुक्तेः। ब्राह्मणे तपः तपश्चरणं, सम्भाव्यं विश्वास्यमिति भावः; स्त्रीषु चापल्यं चाञ्चल्यं, सम्भाव्यं, स्त्रियश्चपला इति प्रसिद्धेरिति भावः; जातितः स्वजातीयात्, भयं सम्भाव्यम्; परस्परमुत्कर्षासहिष्णुत्वादिति भावः॥ ७७॥

सुभिक्षाणीति।—विचित्राणि विविधानि, अन्नानि इति शेषः, सुभिक्षाणि अनायासलभ्यानि, विदेशे इति भावः; पौरयोषितः पुरस्त्रियः, शिथिला अनवहिता इत्यर्थः, किन्तु विदेशस्य एको दोषः यत् स्वजातिः स्वस्यैव जातिः जननं यस्य सः; एकजातीयो लोक इत्यर्थः, विरुध्यते विरुद्धमाचरतीत्यर्थः; [विपूर्वकात् देवादिक-

निष्पाद्यते !! यदि एनं सजीवं करिष्यति, ततः सर्वानपि व्यापादयिष्यति'। इति तेन अभिहितः स आह,—'धिक् मूर्ख ! नाहं विद्याया विफलतां करोमि'। ततः तेनाभिहितं,—'तर्हि (न) प्रतीक्षस्व क्षणं, यावदहं वृक्षमारोहामि'। तथाऽनुष्ठिते, यावत् सजीवः कृतः, तावत् ते त्रयोऽपि सिंहेन उत्थाय व्यापादिताः ; स च पुनः वृक्षात् अवतीर्य्य गृहे गतः। अतोऽहं ब्रवीमि,—'वरं बुद्धिर्न सा विद्या' इत्यादि'। अतः परमुक्तञ्च सुवर्णसिद्धिना,—

'अपि शास्त्रेषु कुशला लोकाचारविवर्जिताः।
सर्वे ते हास्यतां यान्ति यथा ते मूर्खपण्डिताः' ॥३९॥

चक्रधर आह,—'कथमेतत् ?' सोऽब्रवीत्,—

## कथा ४।

'कस्मिंश्चित् अधिष्ठाने चत्वारो ब्राह्मणाः परस्परं मित्रत्वम् आपन्ना वसन्ति स्म। (प) बालभावे तेषां मतिः अजायत यत्,—'देशान्तरं गत्वा विद्याया उपार्जनं क्रियते' इति। अथ अन्यस्मिन् दिवसे ते ब्राह्मणाः परस्परं निश्चयं कृत्वा विद्योपार्जनार्थं

---

प्राणितूर्य्यसेनाङ्गानाम" (२।४।२पा०) इति प्राण्यङ्गत्वादेकवद्भावः]। संयोजितं—सम्बद्धीकृतं, मन्त्रशक्त्या चर्मादियुक्तं कृतमित्यर्थः। निष्पाद्यते—सृज्यते इत्यर्थः। सजीवं—जीवनसहितम्।

(न) प्रतीक्षस्व—अपेक्षस्व, विलम्बं कुरु इत्यर्थः।

अपीति।—ये शास्त्रेषु हितानुशासनग्रन्थेषु, [शिष्यते अनेनेति शास्त्रं, शास्‌धातोः "सर्वधातुभ्यः ष्ट्रन्" (उणा० ४पा० १५८ सू०) इत्यौणादिकः ष्ट्रन्-प्रत्ययः] कुशला निपुणाः अपि, लोकाचारविवर्जिताः लौकिकव्यवहारानभिज्ञाः, भवन्तीति शेषः, ते सर्वे, ते प्रसिद्धा इत्यर्थः, मूर्खाश्च ते पण्डिताश्चेति मूर्खपण्डिताः, यथा, तथा हास्यताम् उपहासास्पदत्वं, यान्ति ॥ ३९ ॥

(प) बालभावे—शैशवे।

कान्यकुब्जे गताः ; तत्र च ( फ ) विद्यामठे गत्वा पठन्ति । एवं द्वादशाब्दान् यावत् एकचित्ततया विद्याकुशलास्ते सर्वे सञ्जाताः । ततः तैः चतुर्भिर्मिलित्वा उक्तं,—'वयं सर्वविद्यापारे गताः, तदुपाध्यायम् (ब)उत्कलापयित्वा स्वदेशे गच्छामः' । एवं मन्त्रयित्वा ब्राह्मणा उपाध्यायमुत्कलापयित्वा, अनुज्ञां लब्ध्वा च पुस्तकानि नीत्वा प्रचलिताः यावत् किञ्चित् मार्गं यान्ति, तावत् द्वौ पन्थानौ समायातौ दृष्ट्वा उपविष्टाः सर्वे । तत्रैकः प्रोवाच,—'केन मार्गेण गच्छामः ?' एतस्मिन् समये तस्मिन् ( भ ) पत्तने कश्चित् वणिक्पुत्रो मृतः, तस्य दाहार्थे ( म ) महाजनो गतोऽभूत् । ततः चतुर्णां मध्यात् एकेन पुस्तके अवलोकितं,—( य ) 'महाजनो येन गतः स पन्थाः' इति ; ततस्तेन अभिहितं—'तत् महाजनमार्गेण गच्छामः' इति । अथ ते पण्डिता यावत् (र) महाजनमेलापथिकेन सह

( फ ) विद्यामठे—विद्यायै—विद्यालाभार्थं, मठः,—छात्रनिलयः, छात्रावास इत्यर्थः, ( "मठश्छात्रादिनिलयः" इत्यमरः ) तत्र, चतुष्पाठ्यामित्यर्थः ।

( ब ) उत्कलापयित्वा—उत्केन—तेषां स्वदेशगमनोद्यमाज्ञातोः शिष्यवत्सलत्वेन उन्मनस्केन गुरुणा सह, लापः,—भाषणम्, अनुमतिप्रार्थनारूपमित्यर्थः, तथा कृत्वा, स्वदेशगमनाय गुरोरनुमतिग्रहणं कृत्वेत्यर्थः, [ करोत्यर्थे णिचि पश्चात् त्वा-प्रत्ययेन साध्यम् ]। उत्कं लापयित्वा इति पाठस्तु सुगमार्थकम ; उत्कम्—उत्कण्ठितं गुरुं, लापयित्वा—याचयित्वा, धनादिकमिति शेषः, धनादिदानेन सन्तोष्येत्यर्थः ।

( भ ) पत्तने—नगरे, ("पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम्" इत्यमरः) ।

( म ) महाजनः,—बहुसङ्ख्यकलोकः ।

( य ) महाजनो येनेति ।—महान् जनः,—महापण्डित-ऋषिसमूहः इत्यर्थः, तथा चोक्तं,—"पतञ्जलि-व्यास-कणाद-गौतमाः, महाजनाश्च कपिलश्च जैमिनिः" इति, साधुजन इति यावत्, येन—येन मार्गेण, याहशाचारेणेत्यर्थः, गतः,—प्रचलितः, स पन्थाः,—मार्गः, आचरणीयः इत्यर्थः । महाजनमार्गेण—महान्—प्रभूतः, जनः,—मृतवणिक्पुत्रानुगामिलोक इत्यर्थः, तस्य मार्गेण—पथा, तदनुसरणक्रमेणेत्यर्थः ।

( र ) महाजनेति ।—महाजनानां मेला—तथाविधमिलनं, तस्य पन्थाः,—मार्गः, तमनुसरति यः तेन, दाहार्थं समवेतानां जनानाम् अनुयायिना जनेन ।

यान्ति, तावत् रासभः कश्चित् तत्र श्मशाने दृष्टः। अथ द्वितीयेन पुस्तकम् उद्घाट्य अवलोकितम्, उक्तञ्च,—

'उत्सवे व्यसने प्राप्ते दुर्भिक्षे शत्रुसङ्कटे।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥४०॥ इति।

तत् अहो! अस्मदीयो बान्धवः'। ततः कश्चित् तस्य ग्रीवायां लगति, कोऽपि पादौ प्रक्षालयति। अथ तैः पण्डितैः दिशाम् अवलोकनं कुर्वद्भिरेव कश्चित् उष्ट्रो द्रुतं गच्छन् दृष्टः। तैश्च उक्तम्,—'एतत् किम्?' ततः तृतीयेन पुस्तकम् उद्घाट्य उक्तं —'धर्मस्य त्वरिता गतिः' इति; 'तन्नूनमेष धर्मः साक्षात्!!' चतुर्थेन उक्तम्,—(ल) 'इष्टं धर्मेण योजयेत्' इति; 'तत् बान्धवोऽयमस्माकं धर्मेण नियुज्यताम्'। अथ तैः (व) रासभ उष्ट्रग्रीवायां बद्धः। तत्त् केनचित् तत्स्वामिनः रजकस्य अग्रे कथितम्। श्रुत्वा च असौ रजकः तेषां मूर्खपण्डितानां प्रहारकरणाय समायातः, दृष्ट्वा च तं दूरत एव ते (श) प्रनष्टाः; ततः स्तोकं पन्थानमतिक्रम्य प्रधावद्भिस्तैः काचित् नदी समासादिता; तस्या जलमध्ये पलाशपत्रम् आयातं दृष्ट्वा पण्डितेन एकेन उक्तम्,—'आगमिष्यति यत् पत्रं तदस्मांस्तारयिष्यति'

उत्सवे इति।—यः प्राप्ते उपस्थिते उत्सवे माङ्गलिके आनन्दजनकव्यापारे, व्यसने विपदि, ("व्यसनं विपदि भ्रंशे दोषे कामजकोपजे" इत्यमरः) दुर्भिक्षे अन्नकष्टसमये, शत्रुसङ्कटे वैरिसमागमे, राजद्वारे राजसमीपे इत्यर्थः, व्यवहारादौ इति शेषः, तथा श्मशाने शवदाहनयोग्यस्थाने, च तिष्ठति साहाय्यं करोति, स बान्धवः सुहृत् ॥४०॥

(ल) इष्टं—प्रियम्।

(व) रासभः,—गर्दभः; श्मशाने अवस्थानात् बान्धवत्वेन मननात् इष्टभूत इति भावः।

(श) प्रनष्टाः,—पलायिताः [प्रपूर्वात् नश्धातोः क्तप्रत्ययेन सिद्धम्; "नशेः षान्तस्य" (८।४।३६ पा०) इति णत्वाभावः]। स्तोकम्—अल्पमात्रम्। तस्याः,—नद्या इत्यर्थः। पलाशपत्रं—किंशुकाख्यतरोः पत्रम्।

इत्येतत् कथयित्वा तत्पवस्य उपरि पतितो यावत् नद्या नीयते, तावत् तं नीयमानम् अवलोक्य अन्येन पण्डितेन केशान्तं गृहीत्वा उक्तम्,—

'सर्वनाशे समुत्पन्ने अर्द्धं त्यजति पण्डितः।
अर्द्धेन कुरुते कार्य्यं सर्वनाशो हि दुःसहः' ॥ ४१ ॥

इत्युक्त्वा तस्य शिरश्छेदो विहितः। अथ तैः पश्चात् गत्वा कश्चिद्ग्राम आसादितः, ( ष ) ग्रामीणैः निमन्त्रिताश्च पृथक् पृथक् गृहेषु नीताः। ततः एकस्य ( स ) सूत्रिका घृत-खण्डसंयुक्ता भोजने दत्ता। दृष्ट्वा च तां विचिन्त्य पण्डितेन उक्तं यत्,—( ह ) 'दीर्घसूत्री विनश्यति' इति; एवमुक्त्वा भोजनं परित्यज्य गतः। तथा द्वितीयस्य ( क ) मण्डका दत्ताः।

सर्वेति।—पण्डितो जनः सर्वनाशे सर्वस्य निखिलस्य, नाशे ध्वंसे, समुत्पन्ने समुपस्थिते सति, अर्द्धं त्यजति, अर्द्धेन च कार्य्यं कुरुते, हि यतः, सर्वनाशः दुःसहः सोढ़मशक्यः, [ दुःखेन सह्यते इति दुरुपपदात् सहधातोः "ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्" ( ३।३।१२६ पा० ) इति खल्-प्रत्ययः ] ॥ ४१ ॥

( ष ) ग्रामीणैः,—ग्रामे भवा इति तैः, ग्रामवासिभिरित्यर्थः, [ "ग्रामात् य-खञौ" ( ४।२।९४ पा० ) इत्यनेन खञ्। "ग्रामीणा नीलिकायां स्त्री ग्रामोद्भूतेऽभिधेयवत" इति मेदिनी ]।

( स ) सूत्रिका—सूत्राकारः अपूपभेदः, ("सिमाइ" इति भाषा)। घृत-खण्डेति।—घृतेन—सर्पिषा, खण्डेन—इक्षुविकारेण च, संयुक्ता, घृत-शर्करा-मिश्रिता इत्यर्थः।

( ह ) दीर्घसूत्री—दीर्घेण—दीर्घकालेन, सूत्रयति—कर्त्तव्यं कर्म करोतीति तथोक्तः; यद्वा,—दीर्घं सूत्रं—व्यवस्था अस्यास्तीति तथोक्तः, ( "सूत्रं तन्तुव्यवस्थयोः" इति विश्वः ) चिरक्रियः इत्यर्थः। विनश्यति—विनाशं प्राप्नोति, विफलमनोरथो भवतीति भावः।

( क ) मण्डकाः,—पिष्टकभेदाः, "वारिणा कोमलां कृत्वा समितां साधु मर्दयेत्। हस्ताभ्यामनया तस्या लोप्त्रीं सम्यक् प्रसारयेत् ॥ अधोमुखघटस्येतां विस्तृतां प्रक्षिपेत् बहिः। मृदुना वह्निना साध्यः सिद्धो मण्डक उच्यते ॥" इति भावप्रकाशः।

तेनापि,—( ख ) 'अतिविस्तारविस्तीर्णं न तद्भवेत् चिरायुषम्' इत्युक्त्वा भोजनं त्यक्त्वा गतः। अथ तृतीयस्य (ग) वटिकाभोजनं दत्तम्। तत्रापि पण्डितेन उक्तं,—( घ ) 'छिद्रेष्वनर्था बहुलीभवन्ति'। एवं ते त्रयोऽपि पण्डिताः क्षुत्क्षामकण्ठाः लोकैः ( ङ ) हस्यमानाः ततः स्थानात् स्वदेशं प्रत्यागताः'।

अथ सुवर्णसिद्धिः आह,—'यत् त्वं ( च ) लोकव्यवहारम् अजानन् मया वार्यमाणोऽपि न स्थितः, तत ईदृशीम् अवस्थाम् उपगतः। अतोऽहं ब्रवीमि,—'अपि शास्त्रेषु कुशलाः'इत्यादि'।

तत् श्रुत्वा चक्रधर आह,—'अहो! अकारणमेतत्,—

सुबुद्धयोऽपि नश्यन्ति दुष्टदैवेन नाशिताः।
स्वल्पधीरपि तस्मिंस्तु कुले नन्दति सन्ततम्॥ ४२॥

( ख ) अतीति।—अतिविस्तारेण विस्तीर्णं—विस्तारयुक्तं, बृहदाकारमित्यर्थः, यद्भोज्यमिति शेषः, तत् चिरायुषं—दीर्घजीवनप्रदं, न भवेत्। बृहदाकारद्रव्यविशेषो न चिरस्थायी भवेदिति प्रकृतार्थः।

( ग ) वटिकेति।—वटिका—कलायकृत-पिष्टकभेदः, सा एव भोजनं—भोज्यम्।

( घ ) छिद्रेष्विति।—छिद्रेषु—छिद्रयुक्तेषु, सच्छिद्रपिष्टकविशेषेषु इति भावः, [ छिदधातोः "स्फायितञ्चिवञ्चि—" ( उणा० २ पा० १३ सू० ) इत्यादिना रक्-प्रत्ययः ] विपदवसरेष्विति प्रकृतार्थः। अनर्थाः,—विपदः, बहुलीभवन्ति—विस्तारं गच्छन्ति।

( ङ ) हस्यमानाः,—उपहस्यमानाः इत्यर्थः।

( च ) लोकव्यवहारं—लोकप्रसिद्धाचारं, "गन्तव्यं पञ्चभिः सार्द्धं" "नैकः शून्याटवीं गच्छेत्" "अतिलोभो न कर्त्तव्यः" "सुहृदां हितकामानां न शृणोति च यो वचः" इत्यादिरूपमित्यर्थः; यद्वा,—सज्जनसम्प्रदायसिद्धं सदाचरणं, लुब्धस्य चेतसः प्रथमोपात्तवस्तुना स्थैर्यविधानरूपमिति यावत। स्थितः,—गमनान्निवृत्तः इत्यर्थः।

सुबुद्धय इति।—यस्मिन् कुले इति पदमध्याहर्त्तव्यम्; सुबुद्धयः महामतयः अपि, दुष्टदैवेन दुर्दैवेन, नाशिताः आक्रान्ता इति भावः, नश्यन्ति विपद्यन्ते इत्यर्थः, तस्मिंस्तु कुले तस्मिन्नेव गोत्रे,("कुलं जनपदं गोत्रे सजातीयगणेऽपि च। भवने च तनौ क्लीबम्",

अन्यच्च,—अरक्षितं तिष्ठति दैवरक्षितं
सुरक्षितं दैवहतं विनश्यति ।
जीवत्यनाथोऽपि वने विसर्जितः
कृतप्रयत्नोऽपि गृहे न जीवति ॥ ४३ ॥

तथा च,—शतबुद्धिः शिरःस्थोऽयं लम्बते च सहस्रधीः ।
एकबुद्धिरहं भद्रे ! क्रीड़ामि विमले जले' ॥ ४४ ॥

सुवर्णसिद्धिः आह,—'कथमेतत् ?' स आह,—

## कथा ५ ।

'कस्मिंश्चित् जलाशये शतबुद्धिः सहस्रबुद्धिश्च द्वौ मत्स्यौ निवसतः स्म। अथ तयोः एकबुद्धिर्नाम मण्डूको मित्रतां गतः। एवं ते त्रयोऽपि कञ्चित् कालं (छ) वेलायां सुभाषित-सुखम् अनुभूय भूयोऽपि सलिलं प्रविशन्ति। अथ कदाचित् (ज) तेषां गोष्ठीगतानां जालहस्तधीवराः प्रभूतैः मत्स्यैः व्यापादितैः मस्तके विधृतैः अस्तमनवेलायां तस्मिन् जलाशये समायाताः। ततः सलिलाशयं दृष्ट्वा (झ) मिथः प्रोचुः,—'अहो ! बहुमत्स्योऽयं ह्रदो दृश्यते स्वल्पसलिलश्च, तत् प्रभाते

इति मेदिनी ) स्वल्पधीरपि अल्पबुद्धिरपि, अनुकूलदैव इति भावः, सन्तत निरन्तरं, नन्दति वाञ्छितार्थसिद्धेः सुखीभवति इत्यर्थः; सुदैवमेव सर्वोपरि वर्वर्त्तीति भावः ॥४२॥

अरक्षितमिति।—१५५ पृष्ठे २५१ सङ्ख्यकश्लोके व्याख्यातोऽयम् ॥ ४३ ॥

शतबुद्धिरिति।—हे भद्रे ! अयं शतबुद्धिः तदाख्यः मत्स्यः, शिरःस्थः शिरसि तिष्ठति इति तथोक्तः, [ शिर-उपपदात् स्थाधातोः "सुपि स्थः" (३।२।४ पा० ) इति कः ] सहस्रधीः तदभिधानो मत्स्यश्च, लम्बते लम्बमानो नीयते इत्यर्थः; अहन्तु एकबुद्धिः तन्नामा मण्डूकः, विमले निर्मले, जले क्रीड़ामि विहरामि ॥ ४४ ॥

(छ) वेलायां—जलाशयतीरे, ("वेला स्यात् तीरनीरयोः" इति वैजयन्ती)।

(ज) तेषां—मित्रत्रयाणां, गोष्ठीगतानां—समागतानां, संलपतामित्यर्थो वा, ("गोष्ठी सभासंलापयोः स्त्रियाम्" इति मेदिनी ) जलाशये इति शेषः।

(झ) मिथः,—परस्परम्।

अत्र आगमिष्यामः' एवमुक्त्वा स्वगृहं गताः। मत्स्याश्च विषण्ण-वदना मिथो मन्त्रं चक्रुः। ततो मण्डूक आह,—'भोः! शतबुद्धे! श्रुतं धीवरोक्तं भवता ? तत् किमत्र युज्यते कर्त्तुम् ? पलायनम् (ञ) अवष्टम्भो वा ? यत् कर्त्तुं युक्तं भवति, तत् आदिश्यताम् अद्य'। तत् श्रुत्वा सहस्रबुद्धिः प्रहस्य प्राह,—'भो मित्र! मा भैषीः, यतो वचनश्रवणमात्रा-देव भयं न कार्य्यम्। उक्तञ्च,—

> सर्पाणाञ्च खलानाञ्च सर्वेषां दुष्टचेतसाम्।
> अभिप्राया न सिध्यन्ति तेनेदं वर्त्तते जगत् ॥४५॥

तत् तावत् तेषाम् आगमनमपि न सम्पत्स्यते, भविष्यति वा, तर्हि त्वां बुद्धिप्रभावेण आत्मसहितं रक्षयिष्यामि; यतः अनेकां (ट) सलिलगतिचर्य्याम् अहं जानामि'। तत् आकर्ण्य शतबुद्धिः आह,—'भोः! युक्तमुक्तं भवता, सहस्रबुद्धिरेव भवान्। अथवा साधु इदमुच्यते,—

> बुद्धेर्बुद्धिमतां लोके नास्त्यगम्यं हि किञ्चन।
> बुद्ध्या यतो हता नन्दाश्चाणक्येनासिपाणयः ॥ ४६ ॥

(ञ) अवष्टम्भः,—स्तब्धीभूय अविचलितभावेनावस्थानम् इत्यर्थः, स्वभवदचलाव-स्थानं वा।

सर्पाणामिति।—सर्पाणां भुजङ्गानां, खलानां धूर्त्तानां, तथा सर्वेषां दुष्टचेतसां दुर्जनानाञ्च इत्यर्थः, अभिप्रायाः अभिलाषाः, लोकानिर्य्यातनेच्छा इत्यर्थः, न सिध्यन्ति न सफला भवन्ति, तेन इदं जगत् विश्वं, [ गच्छति विलयं याति इत्यर्थे गमधातोः "द्युतिगमिजुहोतीनां द्वे च" इति वार्त्तिकसूत्रेण क्विप्-प्रत्ययान्तो निपातनीयः ] वर्त्तते तिष्ठति ; यदि एषामभिलाषः सर्व एव सिध्यति, तदा जगत् त्वरितमेव नश्यतीति भावः ॥ ४५ ॥

(ट) सलिलगतिचर्य्यां—सलिले—जले, गतौ—गमने, चर्य्याम्—अनुष्ठानं, विहरणप्रक्रियामित्यर्थः।

बुद्धेरिति।—लोके जगति, बुद्धिमतां बुद्धेः अगम्यम् अविषयम् इत्यर्थः, [ नञ्-

तथा च,—न यत्रास्ति गतिर्वायो रश्मीनाञ्च विवस्वतः।
तत्रापि प्रविशत्याशु बुद्धिर्बुद्धिमतां सदा ॥४७॥

ततो वचनश्रवणमात्रादपि (ठ) पितृपर्य्यायाऽऽगतं जन्मस्थानं त्यक्तुं न शक्यते। उक्तञ्च,—

न तत् स्वर्गेऽपि सौख्यं स्यात् दिव्यस्पर्शनशोभने।
कुस्थानेऽपि भवेत् पुंसां जन्मनो यत्र सम्भवः ॥४८॥

तन्न कदाचिदपि गन्तव्यम्। अहं त्वां सुबुद्धिप्रभावेण रक्षयिष्यामि'। मण्डूक आह,—'भद्रौ! मम तावत् एका एव बुद्धिः पलायनपरा, तत् अहम् अन्यं जलाशयम् अद्य एव सभार्य्यो यास्यामि'। एवमुक्त्वा स मण्डूको रात्रौ एव अन्यजलाशयं गतः। (ड) धीवरैः अपि प्रभाते आगत्य जघन्यमध्यमोत्तमजलचरा मत्स्यकूर्ममण्डूककर्कटादयो गृहीताः, तौ अपि शतबुद्धिसहस्र-

पूर्वाद्गमधातोः "पोरदुपधात्" (३।१।९८ पा०) इति ण्यतोऽपवादः यत-प्रत्ययः]
किञ्चन किमपि, वस्तु इति शेषः, नास्ति हि नास्त्येव, यतः चाणक्येन निरस्त्रेणापि
इति भावः, बुद्ध्या बुद्धिप्रभावेण, असिपाणयः खड्गधारिणः, [पाणौ असयो येषां ते
इति समासे "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ" इति वार्त्तिकसूत्रेण पूर्वनिपातः]
नन्दाः नन्दवंशीया नव राजानः, हताः विनाशं नीताः ॥ ४६ ॥

नेति।—यत्र वायोः पवनस्य, विवस्वतः सूर्य्यस्य, रश्मीनाञ्च गतिः प्रवेशः, न
अस्ति, बुद्धिमतां बुद्धिः तत्रापि आशु शीघ्रं, सदा प्रविशति ॥ ४७ ॥

(ठ) पितृपर्य्यायाऽऽगतं—पितृक्रमाऽऽयातं, पितृपैतामहिकमित्यर्थः।

नेति।—यत्र यस्मिन् स्थाने, जन्मनः सम्भवः उत्पत्तिरित्यर्थः, स्यादिति शेषः, तस्मिन्
कुस्थानेऽपि व्याधिशोकभयादिकारणानां बाहुल्यतया सत्त्वेन कुदेशेऽपीति भावः, पुंसां
यत् सौख्यं भवेत्, दिव्यस्पर्शनशोभने दिव्यानां दिवि भवानां, स्वर्गीयाणाम इत्यर्थः,
वस्तूनामिति शेषः, [दिवशब्दात भवार्थे यत्-प्रत्ययः] स्पर्शनेन शोभने मनोरमे, स्वर्गेऽपि
तत् सौख्यं, [सुखमेव सौख्यं, सुखशब्दात "चतुर्वर्णादीनां स्वार्थे उपसंख्यानम्" इति
वार्त्तिकसूत्रेण ष्यञ्-प्रत्ययः] न स्यात् ॥ ४८ ॥

(ड) धीवरैः,—जालजीविभिः।

बुद्धौ सभार्य्यौ पलायमानौ चिरम् आत्मानं गतिविशेषविज्ञानैः कुटिलचारेण रक्षन्तौ अपि जाले पतितौ व्यापादितौ च। अथ अपराह्णसमये प्रहृष्टास्ते धीवराः स्वगृहं प्रति प्रस्थिताः। गुरुत्वाच्च एकेन शतबुद्धिः स्कन्धे कृतः, सहस्रबुद्धिः प्रलम्बमानो नीयते। ततश्च (ढ) वापीकण्ठोपगतेन मण्डूकेन तौ तथा नीयमानौ दृष्ट्वा अभिहिता स्वपत्नी,—'प्रिये! पश्य पश्य,—

शतबुद्धिः शिरस्थोऽयं लम्बते च सहस्रधीः।
एकबुद्धिरहं भद्रे! क्रीड़ामि विमले जले'॥ ४९॥

अतश्च 'वरं बुद्धिर्न सा विद्या' इत्यादि यत् भवता उक्तं, तत्रेयं मे मतिः यत्, (ण) न एकान्ते बुद्धिरपि प्रमाणम्'। सुवर्णसिद्धिः आह,—'यद्यपि एतदस्ति, तथाऽपि मित्रवचनम् अनुलङ्घनीयम्। परं किं क्रियते? निवारितोऽपि मया न स्थितोऽतिलौल्यात् विद्याऽहङ्काराच्च। अथवा साधु इदमुच्यते,—

साधु मातुल! गीतेन मया प्रोक्तोऽपि न स्थितः।
अपूर्वोऽयं मणिर्बद्धः सम्प्राप्तं गीतलक्षणम्'॥ ५०॥

चक्रधर आह,—"कथमेतत्?" सोऽब्रवीत्,—

---

(ढ) वापीति।—वाप्याः,—दीर्घिकायाः, कण्ठः,—सन्निधानं, समीपमित्यर्थः, ("कण्ठो गले सन्निधाने ध्वनौ मदनपादपे" इति मेदिनी) तम् उपगतः तेन।

शतबुद्धिरिति।—५२६ पृष्ठे व्याख्यातोऽयं प्राक्॥ ४९॥

(ण) न एकान्ते इति।—एकान्ते—एकान्ततः, केवलमेव इत्यर्थः, बुद्धिरपि न प्रमाणं—प्रमाणतया गण्यते; दैवस्यैव बलीयस्त्वादिति भावः।

साध्विति।—हे मातुल! साधु भद्रमस्तु, ते इति शेषः, मया प्रोक्तोऽपि सङ्केतितोऽपीत्यर्थः, गीतेन गानप्रियतया इत्यर्थः, ["हेतौ" (२।३।२३ पा०) इति हेत्वर्थे तृतीया] न स्थितः न निवृत्तः, न तूष्णीमासीरित्यर्थः, तेन बद्धः, क्षेत्रपतिनेति शेषः; अयं गलदेशस्थः, अपूर्वो मणिः उदूखलमिति भावः, गीतलक्षणं गीतस्य चिह्नं, पुरस्कारभूतमिति भावः, ("लक्षणं नाम्नि चिह्ने च" इति मेदिनी) सम्प्राप्तं लब्धम्; लोके यथा मधुरसङ्गीतश्रवणेन परितुष्टाः केचित् गायकाय अभिज्ञानपदकादिकं

## कथा ६।

'कस्मिंश्चित् अधिष्ठाने उद्धतो नाम गर्दभः प्रतिवसति स्म। स सदैव रजकगृहे भारोद्वहनं कृत्वा रात्रौ स्वेच्छया पर्य्यटति, ततः प्रत्यूषे बन्धनभयात् स्वयमेव रजकगृहम् आयाति। रजकोऽपि ततस्तं बन्धनेन नियुनक्ति। अथ तस्य रात्रौ पर्य्यटतः क्षेत्राणि कदाचित् शृगालेन सह मैत्री सञ्जाता। स च (त) पीवरत्वात् वृतिभङ्गं कृत्वा कर्कटिकाक्षेत्रे शृगालसहितः प्रविशति। एवं तौ यदृच्छया (थ) चिर्भटिकाभक्षणं कृत्वा प्रत्यहं प्रत्यूषे स्वस्थानं व्रजतः।

अथ कदाचित् तेन मदोद्धतेन रासभेन क्षेत्रमध्यस्थितेन शृगालोऽभिहितः,—'भो भगिनीसुत! पश्य पश्य!! अतीव निर्मला रजनी; तदहं गीतं करिष्यामि; तत् कथय (द) कतमेन रागेण करोमि?' स आह,—'माम! किमनेन वृथा (ध) अनर्थप्रचालनेन? यतः चौरकर्मप्रवृत्तौ आवाम्; निभृतैश्च चौरजारैः अत्र स्थातव्यम्। उक्तञ्च,—

---

प्रयच्छन्ति, तथा तुभ्यमपि क्षेत्रपतिरिदमुदूखलमिति भावः। सम्प्राप्तः गीतलक्षणः इति पाठो युक्तः, गीतलक्षणः सम्प्राप्तः अयमपूर्वो मणिर्बन्धः इति तदर्थः॥ ५०॥

(त) पीवरत्वात्—स्थूलकायत्वात्, ['पा पाने' इति धातोः "छित्वरछत्वरधीवरपीवर—"(उणा० ३ पा० १ सू०) इत्यादिना ष्वरच्-प्रत्ययः, निपातनादीकारागमश्च। पीवरस्य भावः "तस्य भावस्त्वतलौ" (५।१।११९ पा०) इति त्व-प्रत्ययात पीवरत्वं, तस्मात्]। वृतिभङ्गं—वृक्षशाखावंशादिकृतप्राचीरभेदम। कर्कटिकाक्षेत्रे—कर्कटिका नाम फलविशेषः, ("काँकुड्" इति बङ्गभाषा) तस्याः क्षेत्रे, चिर्भटीभूमौ इति यावत्।

(थ) चिर्भटिकाभक्षणं—कर्कटिकाभोजनम।

(द) कतमेन—बहुषु रागेषु केन, ["वा बहूनां जातिपरिप्रश्ने डतमच्" (५।३।९३ पा०) इति किंशब्दात् डतमच्-प्रत्ययेन सिद्धम]। रागेण—गान्धारादिस्वरग्रामेण, ("रागस्तु मात्सर्य्ये लोहितादिषु। क्लेशादावनुरागे च गान्धारादौ नृपेऽपि च॥" इति मेदिनी)।

(ध) अनर्थप्रचालनेन—अनर्थानां—विपदां, प्रचालनं—उद्गमम्, आह्वय

कासयुक्तस्त्यजेत् चौर्य्यं निद्रालुश्चेत् स पुंश्चलीम् ।
जिह्वालौल्यं रुजाऽऽक्रान्तो जीवितं योऽत्र वाञ्छति ॥५१॥

अपरं, त्वदीयं गीतं न मधुरस्वरं, (न) शङ्खशब्दानुकारं दूरादपि श्रूयते । अत्र चेत् रक्षापुरुषाः सन्ति ; ते उत्थाय वधं बन्धं वा करिष्यन्ति ; तत् भक्षय तावत् (प) अमृतमयीः चिर्भटीः, मा त्वम् अत्र गीतव्यापारपरो भव' । तत् श्रुत्वा रासभ आह,—'भोः ! वनाश्रयत्वात् त्वं गीतरसं न वेत्सि ; तेन एतत् ब्रवीषि ।
उक्तञ्च,—शरज्ज्योत्स्नाहते दूरं तमसि प्रियसन्निधौ ।
धन्यानां विशति श्रोत्रे गीतझङ्कारजा सुधा' ॥ ५२ ॥

---

आनयनमित्यर्थः, सम्भ्रमणमिति यावत्, तेन । निभृतैः,—निःशब्दैः, चौरजारैः,—तस्करोपपतिभिरित्यर्थः । अत्र—संसारे ।

कासेति ।—अत्र संसारे, यः जीवितं वाञ्छति अभिलषति, स कासयुक्तः कासरोगाक्रान्तश्चेत्, चौर्य्यम् ; निद्रालुश्चेत् निद्रातुरश्चेत् [ निद्रालुरिति निपूर्वकात् द्राधातोः "स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्" ( ३।२।१५८ पा० ) इति सूत्रेण शीलार्थे आलुच्-प्रत्ययः] पुंश्चलीं कुलटां, प्रच्छन्नकामुकीमित्यर्थः, "बृस्कौ" इति बङ्गभाषा, [ पुंसः,—भर्त्तुः सकाशात्, चलति—पुरुषान्तरं गच्छति इति चल्धातोः पचादित्वादच्, ततः पुंश्चलशब्दात् "षिद्गौरादिभ्यश्च" ( ४।१।४१ पा० ) इति स्त्रियां ङीष्-प्रत्ययः । "पुंश्चली धर्षिणी बन्धक्यसती कुलटेत्वरी । स्वैरिणी पांशुला च स्यात्" इत्यमरः ]; तथा रुजाऽऽक्रान्तः रोगी चेत्, जिह्वालौल्यं रसनाचाञ्चल्यं, लोभमिति यावत्, त्यजेत् त्यजतु ; चौर्य्ये प्रवृत्ते यदि तदानीं कासोपस्थितिः स्यात्, तदा गृहस्थस्य निद्राभङ्गेन महान् अनर्थः स्यात् ; निद्रातुरश्चेत् जारकर्म्मणि मुख्योद्देश्यादिसम्भवे सति महाननर्थः स्यात्, तथा रोगसत्त्वे लोभात् आहारव्यतिक्रमे सहसा मृत्युरपि सम्भवेदिति भावः ॥५१॥

( न ) शङ्खेति ।—शङ्खशब्दम् अनुकरोतीति तादृशं, शङ्खध्वनिसदृशमित्यर्थः, कर्कशमिति यावत् ।

( प ) अमृतमयीः,—पीयूषरूपाः, सुरसाः इति यावत् ।

शरज्ज्योत्स्नेति ।—तमसि तिमिरे, दूरम् अत्यर्थं यथा तथा, शरदि या ज्योत्स्ना चन्द्रातपः, चन्द्रकिरणः इत्यर्थः, [ ज्योतिरस्त्यस्यामिति ज्योतिःशब्दात् "ज्योत्स्नातमिस्रा—" ( ५।२।११४ पा० ) इत्यादिना निपातनात् न-प्रत्ययः, उपधालोपश्च ।

शृगाल आह,—'माम ! अस्ति एतत्, परं न वेत्सि त्वं गीतं, केवलम् ( फ ) उन्नदसि ; तत् किं तेन स्वार्थभ्रंशकेन ?' रासभ आह,—'धिक् धिक् मूर्ख ! किमहं न जानामि गीतम् !! तत् यथा ( ब ) तस्य भेदाः, शृणु,—

सप्त स्वरास्त्रयो ग्रामा मूर्च्छनाश्चैकविंशतिः ।
तालास्त्वेकोनपञ्चाशत् तिस्रो मात्रा लयास्त्रयः ॥ ५३ ॥
स्थानत्रयं यतिपञ्च षड़ास्यानि रसा नव ।
रागाः षट्त्रिंशतिर्भावाश्चत्वारिंशत् ततः स्मृताः ॥ ५४ ॥
पञ्चाशीत्यधिकं ह्येतद्गीताङ्गानां शतं स्मृतम् ।
स्वयमेव पुरा प्रोक्तं भरतेन श्रुतेः परम् ॥ ५५ ॥

---

"ज्योत्स्ना चन्द्रातपेऽपि स्यात् ज्योत्स्नायुक्तनिशि स्मृता" इति मेदिनी ] तथा इते नाशिते सति, प्रियसन्निधौ प्रेमास्पदजनसमीपे, गीतस्य झङ्कारः स्वनः, तस्मात् जाता उद्भूता, सुधा अमृतं, धन्यानां पुण्यभाजामिव, [ धनं लब्धा इति धनशब्दात् "धनगणं लब्धा" ( ४।४।८४ पा० ) इति यत्-प्रत्ययः ] श्रोत्रे कर्णविवरे, विशति ; अकृतपुण्यसम्पदां न खलु सङ्गीतरसास्वादः सम्भवतीति भावः ॥ ५२ ॥

( फ ) उन्नदसि—उच्चैः शब्दायसे । तेन—गीतव्यापारेणेत्यर्थः । स्वार्थभ्रंशकेन—स्वकार्य्यध्वंसिना ।

( ब ) तस्य—गीतस्य । भेदाः,—प्रकाराः ।

सप्तेत्यादि ।—स्वराः निषादादयः, सप्त, ("निषादर्षभगान्धार-षड्जमध्यमधैवताः । पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ॥" इत्यमरः ) ग्रामाः त्रयः,—"यथा कुटुम्बिनः सर्वेऽप्येकीभूता भवन्ति हि । तथा स्वराणां सन्दोहो ग्राम इत्यभिधीयते ॥ षड्जग्रामो भवेदादौ मध्यमग्राम एव च । निषादग्राम इत्येतत् ग्रामत्रयमुदाहृतम् ॥" इति । एकविंशतिः मूर्च्छनाः स्वराणाम् आरोहावरोहक्रमभेदाः, "क्रमात् स्वराणां सप्तानामारोहश्चावरोहणम् । सा मूर्च्छेत्युच्यते ग्रामस्था एताः सप्त सप्त च ॥" इत्युक्तेः । तालास्तु एकोनपञ्चाशत् । मात्राः तिस्रः । लयाः त्रयः । स्थानानाम् उदात्तादीनां, त्रयम् । यतीनां विरामाणां, पञ्च स्थानानि । आस्यानि मुखानि, षट् । रसाः शृङ्गारहास्यकरुणरौद्रवीरभयानकबीभत्साद्भुतवत्सलाख्याः, नव । रागाः षट्त्रिंशतिः । ततः भावाः चत्वारिंशत् स्मृताः, एतद्धि गीतस्य अङ्गानां पञ्चाशीत्यधिकं शतं स्मृतम् ।

नान्यद्गीतात् प्रियं लोके देवानामपि दृश्यते।
शुष्कस्नायुस्वराह्लादात् त्र्यक्षं जग्राह रावणः॥ ५६॥

तत् कथं भगिनीसुत! माम् अनभिज्ञं वदन् निवारयसि?' शृगाल आह,—'माम! यदि एवं, तदहं तावत् वृतेः द्वारस्थितः क्षेत्रपालम् अवलोकयामि, त्वं पुनः स्वेच्छया गीतं कुरु'। तथा अनुष्ठिते (भ) रासभरटनम् आकर्ण्य क्षेत्रपः क्रोधात् दन्तान् घर्षयन् प्रधावितः; ततो यावत् तेन रासभो दृष्टः, तावत् लगुडप्रहारैः तथा आहतः, यथा प्रताडितो भूपृष्ठे पतितः। ततश्च सच्छिद्रम् (म) उदूखलं तस्य गले बद्ध्वा क्षेत्रपालः प्रसुप्तः। रासभोऽपि स्वजातिस्वभावात् गतवेदनः क्षणेन अभ्युत्थितः।
उक्तञ्च,—सारमेयस्य चाश्वस्य रासभस्य विशेषतः।
मुहूर्त्तात् परतो न स्यात् प्रहारजनिता व्यथा॥ ५७॥

ततः तमेव उदूखलम् आदाय वृतिं चूर्णयित्वा पलायितुम्

---

पुरा भरतेन नाट्यशास्त्रप्रणेत्रा तदाख्येन मुनिना, अथर्मेव श्रुतेः वेदस्य, परम् उत्कृष्टं, सारांशमित्यर्थः, एतत् गीताङ्गमिति शेषः, प्रोक्तम्। लोके जगति, देवानामपि गीतात् अन्यत् प्रियं प्रीतिकरं, न दृश्यते, तथा हि, रावणः शुष्काः कठिनतपश्चरणात् नीरसाः, स्नायवः सूक्ष्मशिराजालभेदा यस्य तथाभूतस्य, शरीरस्य इत्यर्थः, यः स्वरः स्तुत्यर्थं कण्ठ-ध्वनिविशेषः इत्यर्थः, यद्वा,—शुष्काः नीरसाः, याः स्नायवः स्नायुमय्यः वीणातन्त्र्य इत्यर्थः, तासां स्वराः तन्त्र्युत्थध्वनिविशेषाः इत्यर्थः, वीणावादनपूर्वकस्तुतिगीतानीति यावत्, तेन तेषां आह्लादात् आनन्दात्, आनन्दजननादिति भावः, त्र्यक्षं त्रिलोचनं, [ त्रीणि अक्षीणि यस्य तं "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" (५।४।११३ पा०) इति सूत्रेण षच् ] जग्राह वशीचकार; स्तुतिसूचकगीतेन हरं प्रीणयामासेति भावः॥५३—५६॥

(भ) रासभरटनं—गर्दभचीत्कारम्। क्षेत्रपः,—क्षेत्रस्वामी। घर्षयन्—दशन्नित्यर्थः, ("दाँत किड़्मिड़ि" इति वङ्गभाषा)।

(म) उदूखलं—धान्यादिकण्डनसाधनं काष्ठमयं पात्रम्। तस्य—रासभस्य।

सारमेयस्येति।—सारमेयस्य कुक्कुरस्य, अश्वस्य विशेषतः रासभस्य गर्दभस्य च, प्रहारजनिता व्यथा मुहूर्त्तात् परतः क्षणात् परं, न स्यात् न तिष्ठेत्॥ ५७॥

आरब्धः। अत्रान्तरे शृगालोऽपि दूरादेव तं दृष्ट्वा सस्मितम् आह,—'साधु मातुल ! गीतेन' इत्यादि।

तत् भवानपि मया वार्य्यमाणोऽपि (य) न स्थितः। अथवा साधु इदमुच्यते,—

यस्य नास्ति स्वयं प्रज्ञा मित्रोक्तं न करोति यः।
स एव निधनं याति यथा मन्थरकौलिकः' ॥ ५८ ॥

चक्रधर आह,—'कथमेतत् ?' सोऽब्रवीत्,—

## कथा ७।

'कस्मिंश्चित् अधिष्ठाने मन्थरको नाम (र) कौलिकः प्रतिवसति स्म। तस्य कदाचित् (ल) पट्टकर्माणि कुर्वतः सर्वपट्टकर्मकाष्ठानि भग्नानि। ततः स कुठारम् आदाय वने काष्ठार्थं गतः। स च समुद्रतटं यावत् भ्रमन् प्रयातः, तावत् तत्र शिंशपापादपस्तेन दृष्टः। ततः चिन्तितवान्,— 'महान् अयं वृक्षो दृश्यते ; तदनेन (व) कर्त्तितेन प्रभूतानि पट्टकर्मोपकरणानि भविष्यन्ति' इति अवधार्य्य तस्योपरि कुठारमुत्क्षिप्तवान्। अथ तत्र वृक्षे कश्चित् (श) व्यन्तरः समाश्रित आसीत् ; तेन अभिहितं,—'भोः ! मदाश्रयोऽयं

(य) न स्थितः,—त्वमत्राग्रहात् अवगमनात् निवृत्तः, मम वाक्यं न श्रुतवानिति भावः।

यस्येति।—यस्य स्वयम् आत्मना, आत्मन इत्यर्थः, प्रज्ञा बुद्धिः, नास्ति, यश्च मित्रोक्तं बन्धुवाक्यं, न करोति, स एव मन्थरकौलिको यथा मन्थराख्यतन्तुवायवदित्यर्थः, निधनं नाशं, याति प्राप्नोति ॥५८॥

(र) कौलिकः,—तन्तुवायः।

(ल) पट्टकर्माणि—वस्त्रवयनकार्य्याणि। सर्वेति।—सर्वाणि पट्टकर्मकाष्ठानि —वस्त्रवयनयन्त्रदारूणि।

(व) कर्त्तितेन—खण्डितेन।

(श) व्यन्तरः,—अलौकिकशक्तिसम्पन्नदेवयोनिविशेषः। मदाश्रयः,—ममावासः।

पादपः सर्वथा रक्षणीयः, यतोऽहम् अत्र महासौख्येन तिष्ठामि समुद्रकल्लोलस्पर्शनात् शीतवायुना आप्यायितः'। कौलिक आह,—'भोः! किमहं करोमि? (ष) दारु-सामग्रीं विना मे कुटुम्बकदम्बं बुभुक्षया पीड्यते; तस्मात् अन्यत्र शीघ्रं गम्यताम्, अहम् एनं कर्त्तयिष्यामि'। व्यन्तर आह,—'भोः! (स) तुष्टः तव अहम्; तत् प्रार्थ्यताम् अभीष्टं किञ्चित्, रक्षैनं पादपम्' इति। कौलिक आह,—'यदि एवं, तदहं स्वगृहं गत्वा स्वमित्रं स्वभार्य्याञ्च पृष्ट्वा आगमिष्यामि, ततः त्वया देयम्'।

अथ 'तथा' इति प्रतिज्ञाते व्यन्तरेण, स कौलिकः प्रहृष्टः स्वगृहं प्रति निवृत्तः यावत् अग्रे गच्छति, तावत् ग्रामप्रवेशे निजसुहृदं नापितम् अपश्यत्। ततस्तस्य व्यन्तरवाक्यं निवेद-यामास यत्,—'अहो मित्र! मम कश्चित् व्यन्तरः सिद्धः; तत् कथय, किं प्रार्थये? अहं त्वां प्रष्टुम् आगतः'। नापित आह,—'भद्र! यदि एवं, तत् राज्यं प्रार्थय, येन त्वं राजा भवसि, अहञ्च त्वन्मन्त्री। द्वौ अपि इह सुखमनुभूय परलोक-सुखम् अनुभवावः। उक्तञ्च,—

> राजा दानपरो नित्यमिह कीर्त्तिमवाप्य च।
> तत्प्रभावात् पुनः स्वर्गे स्पर्द्धते त्रिदशैः सह' ॥ ५९ ॥

पादपः,—वृक्षः। समुद्रेति।—समुद्रकल्लोलानां—सागरतरङ्गाणां, स्पर्शनात्—सम्पर्कादित्यर्थः। आप्यायितः,—पोषितः।

(ष) दारुसामग्रीं—काष्ठमयोपकरणम्। कुटुम्बकदम्बं—परिजनवर्गः। बुभुक्षया—क्षुधया।

(स) तुष्टः,—प्रीतः।

राजेति।—नित्यं सततं, दानपरः त्यागशीलः, राजा इह संसारे, कीर्त्तिं यशः, अवाप्य लब्ध्वा, तत्प्रभावात् तस्य दानस्य माहात्म्यात्, पुनः स्वर्गे त्रिदशैः देवैः, [ त्रिः तृतीया यौवनाख्या दशा सदा येषाम्; यद्वा,—त्रिर्दश परिमाणमेषामिति "सङ्ख्यया-

कौलिक आह,—'अस्ति एतत् परं, तथाऽपि गृहिणीं पृच्छामि'। स आह,—'भद्र! शास्त्रविरुद्धमेतत्, यत् स्त्रिया सह मन्त्रः; यतस्ताः स्वल्पमतयो भवन्ति। उक्तञ्च,—

भोजनाच्छादने दद्यात् ऋतुकाले च सङ्गमम्।
भूषणाद्यञ्च नारीणां न ताभिर्मन्त्रयेत् सुधीः॥ ६०॥
यत्र स्त्री यत्र कितवो बालो यत्राप्रशासितः।
तत् गृहं क्षयमायाति भार्गवो हीदमब्रवीत्॥ ६१॥
तावत् स्यात् सुप्रसन्नाऽऽस्यस्तावत् गुरुजने रतिः।
पुरुषो योषितां यावन्न शृणोति वचो रहः॥ ६२॥

---

ऽन्यथा—" (२।२।२५ पा०) इत्यादिना बहुव्रीहिः, "बहुव्रीहौ सङ्ख्येये—" (५।४।७३ पा०) इत्यादिना डच्। केचित्तु,—त्रीन् तापान् दशन्ति इति "दशश्च दंशने" इत्यस्मात् मूलविभुजादित्वात् क-प्रत्यये सिद्धमिति मन्यन्ते। "अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः" इत्यमरः] सह स्पर्द्धते देवानां प्रतिस्पर्द्धी भवति इत्यर्थः; दानादीनां स्वर्गादिसाधकत्वात् तेषाञ्च वित्तमूलकत्वात् राजपदमेव प्रार्थयितव्यमिति भावः॥५९॥

भोजनेति।—सुधीः पण्डितो जनः, [सु सुष्ठु, ध्यायति चिन्तयति इति सुधीः, सुपूर्वकात् "ध्यै चिन्तायाम्" इत्यस्मात् "ध्यायतेः सम्प्रसारणञ्च" (वा०) इति क्विप् सम्प्रसारणञ्च। "विद्वान् विपश्चित् दोषज्ञः सन् सुधीः कोविदो बुधः।……पण्डितः कविः" इत्यमरः] नारीणां भोजनाच्छादने अन्नवस्त्रे, भूषणाद्यञ्च अलङ्कारादिकञ्च, दद्यात्, ऋतुकाले रजःप्रवृत्तिसमये च, रजोदर्शनात् त्रिदिनानन्तरमिति भावः, सङ्गमं, कुर्य्यात् इति शेषः, किन्तु ताभिः सह न मन्त्रयेत् न मन्त्रणां कुर्य्यात्॥ ६०॥

यत्रेति।—यत्र स्त्री मन्त्रणादायिनीति भावः, यत्र कितवः धूर्त्तः, वञ्चक इति यावत्, ("कितवो धूर्त्तवन्मत्ते वञ्चके कनकाह्वये" इति विश्वः) वसतीति शेषः, यत्र बालश्च अप्रशासितः अदमितः, तिष्ठतीति शेषः, हि नूनं, तत गृहं क्षयं ध्वंसम् आयाति प्राप्नोति, इदं भार्गवः भृगुतनयः शुक्रः, [भृगोरपत्यमिति भृगुशब्दात् "ऋष्यन्धकवृष्णिकुरुभ्यश्च" (४।१।११४ पा०) इत्यण्। "भार्गवो गजधन्विनोः। शुक्रे परशुरामे च" इति मेदिनी] अब्रवीत्। ["बालो यत्र प्रशासिता" इति पाठे—प्रशासिता प्रशासकः, इत्येवं व्याख्येयम्]॥ ६१॥

तावदिति।—पुरुषः यावत् रहः निर्ज्जने, योषितां वचः न शृणोति स्त्रियाः

एताः स्वार्थपरा नार्य्यः केवलं स्वसुखे रताः।
न तासां वल्लभः कोऽपि सुतोऽपि स्वसुखं विना' ॥ ६३ ॥

कौलिक आह,—'तथाऽपि प्रष्टव्या सा मया, यतः पतिव्रता सा। अपरं, ताम् अपृष्ट्वा अहं न किञ्चित् करोमि'। एवं तमभिधाय सत्वरं गत्वा ताम् उवाच,—'प्रिये! अद्य अस्माकं कश्चित् व्यन्तरः सिद्धः, स वाञ्छितं प्रयच्छति, तदहं त्वां प्रष्टुम् आगतः, कथय, किं प्रार्थये? एष तावत् मम मित्रं नापितो वदति एवं यत्, 'राज्यं प्रार्थयस्व' इति'। सा आह,—'आर्य्यपुत्र! का मतिर्नापितानाम्! तत् न कार्य्यं तद्वचः। उक्तञ्च,—

चारणैर्वन्दिभिर्नीचैर्नापितैर्बालकैस्तथा।
न मन्त्रं मतिमान् कुर्य्यात् सार्द्धं भिक्षुभिरेव च ॥ ६४ ॥

---

गुरूपदेशेन न चलतीत्यर्थः, तावत् प्रसन्नम् आस्यं मुखं यस्य तादृशः स्यात्, तावच्च अस्य गुरुजने पित्रादौ, रतिः अनुरागः, भक्तिरिति यावत्, तिष्ठतीति शेषः; रमण्यो-मन्त्रपरिचालितस्तु पोष्यवर्गं कुपोष्यं मत्वा सदा पेचकगम्भीरमुखः गुर्वादौ भक्तिशून्यश्च दृश्यते इति तात्पर्य्यम् ॥ ६२ ॥

एता इति।—एताः नार्य्यः केवलं स्वार्थपराः स्वकार्य्यसाधनपरायणाः, स्वस्य आत्मनः, सुखे रताश्च, भवन्तीति शेषः, स्वसुखम् आत्मसुखं विना, कोऽपि जनः, तासां नारीणां, वल्लभः प्रियः, दयित इति यावत्, ["वल्ल संवरणे" इति वल्लधातोः "रासिवल्लिभ्याञ्च" (उणा० ३ पा० १२५ सू०) इत्यभच्-प्रत्ययः। "वल्लभो दयिते-ऽध्यक्षे सल्लक्षणतुरङ्गमे" इति विश्वः] न, किं बहुना? सुतोऽपि पुत्रोऽपि, न वल्लभ इत्यनुषङ्गः ॥ ६३ ॥

चारणैरिति।—मतिमान् बुद्धिमान् जनः, चारणैः नटवृत्तिभिः कुशीलवैरित्यर्थः, [चारयन्ति कीर्त्तिम् इति चरधातोः णिजन्तात् "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" (३।१।१३४ पा०) इति ल्युः। "चारणास्तु कुशीलवाः" इत्यमरः] वन्दिभिः स्तुतिपाठकैः, [वन्दन्ते स्तुवन्ति इति वन्दिधातोः ग्रहादित्वात् "नन्दिग्रहि—" इत्यादिना णिनिः। "वन्दिनः स्तुतिपाठकाः" इत्यमरः] नीचैः क्षुद्रैः, नापितैः बालकैः तथा भिक्षुभिश्च याचकैश्च, [भिक्षधातोः "सनाशंसभिक्ष उः" (३।२।१६८ पा०) इति उ-प्रत्ययः] सार्द्धं सह, मन्त्रं न कुर्य्यादेव; मन्त्राश्रमभीत्येत्यभिप्रायः ॥ ६४ ॥

अपरं, महती (छ) क्लेशपरम्परा एषा राज्यस्थितिः, सन्धिविग्रहयानाऽऽसनसंश्रयद्वैधीभावादिभिः कदाचित् पुरुषस्य सुखं न प्रयच्छतीति । यतः,—

(छ) क्लेशपरम्परा—क्लेशनिचयः, दुःखानुबन्धिनी इत्यर्थः । राज्यस्थितिः,—राज्यपालनम् । सन्धीति ।—सन्धिः,—बलवता विगृहीतेन नृपेण स्वशक्तिपूरणाय कालातिवाहनार्थं कृतेन पणबन्धेन सम्मेलनम् ; विग्रहः,—युद्धम् ; यानं—बलवीर्य-सम्पन्नस्य विजिगीषोः शत्रुं प्रति यात्रा ; आसनम्—अरिविजिगीष्वोः परस्परं तुल्य-शक्तिमत्त्वात् आक्रमणानन्तरमुपेक्षया अवस्थानं, मिथः प्रतिबद्धशक्त्योः कालप्रतीक्षया तूष्णीमवस्थानमिति यावत् ; संश्रयः,—बलिना स्वदेशात् निष्कास्यमानस्य प्रतीकारा-समर्थस्य च तस्मात् शत्रोः बलवतः आश्रयणम् ; द्वैधीभावः,—बलवतोर्द्वयोः शत्रोः समीपे 'इदं राज्यमहञ्च तवाधीनः' इत्येवमुभयोरेव परस्पराज्ञाततत्त्वयोः काकाक्षिवद्-लक्षिततया वाचा आत्मसमर्पणपूर्वकं दुर्गाश्रयेणावस्थानमित्यर्थः ; यथायमाशयः,—यथा एकस्य काकचक्षुषः प्रयोजनवशात् द्वयोरक्षिगोलकयोः कस्मिन् गोलके सत्ता इति केनचिदपि निर्णेतुं न शक्यते, तथा प्रयोजनवशात् उभयोरेव शत्रोः कपटतया अलक्षितावस्थानम् इति ; बलवति शत्रौ केवलं कापट्येन वाचिकमात्मसमर्पणं कृत्वा अलक्षितभावेनावस्थानमिति वा ; बलवता शत्रुणा, 'अयं मयि आत्मानं सर्वथा समर्पितवान् ? उत वाङ्मात्रेण केवलम् आत्मानं समर्पितवान् इति वदति' एतत् यथा न ज्ञातुं शक्यते, तथा कृत्वा कालक्षेपम् अवस्थानमिति प्रथम ; स च द्वैधी-भावः द्विविधः,—एकः स्वतन्त्रः, परतन्त्रश्चान्यः ; तयोः स्वतन्त्रः उक्तविधः ; परतन्त्रस्तु—यः प्रणिधिः अरिविजिगीष्वोरुभयोरेव सकाशात् वेतनमाददानः काकाक्षिवदलक्षित-भावेन उभयत्रैव वर्त्तते, स परकर्मप्रधानत्वात् परतन्त्रः, तदादिभिः,—तत्प्रभृतिभिः । षाड्गुण्यमुक्तं कामन्दकीये यथा,—"बलिना विगृहीतः सन् नृपोऽनन्यप्रतिक्रियः । आपन्नः सन्धिमन्विच्छेत् कुर्वाणः कालयापनम् ॥" "अमर्षोपगृहीतानां मन्युसन्तप्त-चेतसाम् । परस्परापकारेण पुंसां भवति विग्रहः ॥ आत्मनोऽभ्युदयाकाङ्क्षी पीड्यमानः परेण वा । देशकालबलोपेतः प्रारभेतैव विग्रहम् ॥" "उत्कृष्टबलवीर्यस्य विजिगीषोर्जयैषिणः । गुणानुरक्तप्रकृतेर्यात्रा यानमिति स्मृतम् ॥" "परस्परस्य सामर्थ्यविघातादासनं स्मृतम् । अरेश्च विजिगीषोश्च—॥" "बलिनोर्द्विषतोर्मध्ये वाचाऽऽत्मानं समर्पयन् । द्वैधीभावेन वर्त्तेत काकाक्षिवदलक्षितः ॥ द्वैधीभावो द्विधा प्रोक्तः स्वतन्त्रपरतन्त्रयोः । स्वतन्त्र उक्तो ह्यन्यस्तु यः स्यादुभयवेतनः ॥" "उच्छिद्यमानो

यदैव राज्ये क्रियतेऽभिषेकस्तदैव याति व्यसनेषु बुद्धिः।
घटा नृपाणामभिषेककाले सहाम्भसैवापदमुद्गिरन्ति ॥६५॥

तथा च,—रामस्य व्रजनं वने निवसनं पाण्डोः सुतानां वनं
वृष्णीनां निधनं नलस्य नृपते राज्यात् परिभ्रंशनम्।
सौदासं तदवस्थमर्जुनवधं सञ्चिन्त्य लङ्केश्वरं
दृष्ट्वा राज्यकृते विडम्बनगतं तस्मान्न तत् वाञ्छयेत् ॥६६॥

यदर्थं भ्रातरः पुत्रा अपि वाञ्छन्ति ये निजाः।
वधं राज्यकृतां राज्ञां तद्राज्यं दूरतस्त्यजेत्' ॥६७॥

---

बलिना निरुपायप्रतिक्रियः। कलोद्गतं मध्यमार्थ्यमाश्रयेत वनोत्कटम् ॥" इति। एवञ्च बहवो भेदा विस्तरभयान्नात्र उल्लिखिताः, जिज्ञासुभिः तत्रैव अनुसन्धेयाः।

यदैवेति।—४२६ पृष्ठे व्याख्यातः। पाठान्तरत्वात् अत्रायं विशेषः,—याति गच्छति, व्यसननिरता भवति इत्यर्थः, मृगयादिषु कामक्रोधादिजेषु दोषेषु वा नृपाणां बुद्धिरासज्यते इति निष्कर्षः। अम्भसा सहैव यदैव अम्भांसि उद्गिरन्ति, तदैव इत्यर्थः, आपदमपि उद्गिरन्ति ॥६५॥

रामस्येति।—रामस्य दाशरथेरिति यावत्, व्रजनं प्रयाणं, निर्वासनमित्यर्थः, तथा वने निवसनम् अवस्थानम्; चतुर्दशवर्षाणीति यावत्; सौदासं कल्माषपादापराख्यं सूर्य्यवंशीयराजविशेषं, तदवस्थं गुरोरभिशापात राक्षसयोनित्वमापन्नमिति भावः; तथा अर्जुनवधं कार्त्तवीर्य्यार्जुननिधनं, परशुरामेणेति भावः; तथा लङ्केश्वरं रावणञ्च, राज्यकृते राज्यार्थं, विडम्बनगतं प्राप्तविडम्बनम्, अनुभूतक्लेशमित्यर्थः, सञ्चिन्त्य संस्मृत्य, दृष्ट्वा च, पुराणादौ इति भावः, ज्ञानप्रबोधोऽभूदिति शेषः; तस्मात् राज्यस्य विडम्बनहेतुत्वात्, तत् राज्यं, न वाञ्छयेत न कामयेत, बुद्धिमानिति शेषः। अवशिष्टः ४१७ पृष्ठे व्याख्यातः ॥६६॥

यदर्थमिति।—ये निजाः स्वकीयाः, भ्रातरः सोदराः इत्यर्थः, तथा ये च पुत्राः, ते अपि यदर्थं यस्य राज्यस्य कृते, राज्यकृतां राज्यं पालयतां, राज्ञां ["कर्तृकर्मणोः कृति" (२।३।६५ पा०) इति कर्मणि षष्ठी] वधं निहननं, [हनधातोः "हनश्च वधः" (३।३।७६ पा०) इति भावे अप्, वधादेशश्च, पक्षे,—घञपि, यथा—घातः] वाञ्छन्ति प्रार्थयन्ते, तत् राज्यं दूरतः दूरे स्थित्वा, त्यजेत् परिहरेत्; परमप्रीतिमन्तो बन्धवोऽपि यदर्थे शत्रवो भवन्ति, तत्तु न स्पृशेदिति भावः ॥६७॥

कौलिक आह,—'सत्यमुक्तं भवत्या ; तत् कथय, किं प्रार्थये ?' सा आह,—'त्वं तावदेकं (क) पटं नित्यमेव निष्पादयसि, तेन सर्वा व्ययशुद्धिः सम्पद्यते। इदानीं त्वम् आत्मनोऽन्यत् बाहुयुगलं द्वितीयं शिरश्च याचस्व, येन पटद्वयं सम्पादयसि ( ख ) पुरतः पृष्ठतश्च। एकस्य मूल्येन गृहे यथापूर्वं व्ययं सम्पादयिष्यसि, द्वितीयस्य मूल्येन ( ग ) विशेषकृत्यानि करिष्यसि, एवं सौख्येन स्वजातिमध्ये ( घ ) श्लाघ्यमानस्य कालो यास्यति, लोकद्वयस्य च उपार्जना भविष्यति'। सोऽपि तदाकर्ण्य प्रहृष्टः प्राह,—'साधु पतिव्रते ! साधु, युक्तमुक्तं भवत्या ; तदेवं करिष्यामि, एष मे निश्चयः'। ततोऽसौ गत्वा व्यन्तरं प्रार्थयाञ्चक्रे,—'भोः ! यदि मम ईप्सितं प्रयच्छसि, तत् देहि मे द्वितीयं बाहुयुगलं शिरश्च'। एवम् अभिहिते तत्क्षणादेव द्विशिराः चतुर्बाहुश्च सञ्जातः। ततो हृष्टमना यावत् गृहम् आगच्छति, तावत् लोकैः 'राक्षसोऽयम्' इति मन्यमानैः लगुड़पाषाणप्रहारैः ताड़ितो मृतश्च। अतोऽहं ब्रवीमि,—'यस्य नास्ति स्वयं प्रज्ञा' इत्यादि'।

चक्रधरः आह,—'भोः ! सत्यमेतत्, सर्वोऽपि जनः ( ङ ) अश्रद्धेयामग्राम्यपिशाचिकां प्राप्य हास्यपदवीं याति। अथवा साधु इदमुच्यते केनापि,—

( क ) पटं—वस्त्रम्। निष्पादयसि—वयसि इत्यर्थः। व्ययशुद्धिः,—व्ययनिर्वाहः।

( ख ) पुरतः,—सम्मुखम्। पृष्ठतः,—पश्चाद्भागे।

( ग ) विशेषकृत्यानि—दानादीनि फलाधिकानि कार्याणीत्यर्थः।

( घ ) श्लाघ्यमानस्य—प्रशस्यमानस्य। लोकद्वयस्य—ऐहिकपारत्रिकरूपस्य। उपार्जना—संसाधनम्।

( ङ ) अश्रद्धेयां—श्रद्धाऽनर्हां, तुच्छामित्यर्थः, ग्राम्यपिशाचिकां—ग्राम्यपिशाचीम्।

अनागतवतीं चिन्तामसम्भाव्यां करोति यः।
स एव पाण्डुरः शेते सोमशर्मपिता यथा' ॥ ६८ ॥

सुवर्णसिद्धिः आह,—'कथमेतत् ?' सोऽब्रवीत्,—

## कथा ८।

'कस्मिंश्चित् नगरे कश्चित् स्वभावकृपणो नाम ब्राह्मणः प्रतिवसति स्म ; तेन भिक्षाऽर्जितैः (च) शक्तुभिः भुक्तशेषैः कलसः सम्पूरितः। तञ्च घटं (छ) नागदन्ते अवलम्ब्य तस्य अधस्तात् खट्वां निधाय सततम् एकदृष्ट्या तम् अवलोकयति। अथ कदाचित् रात्रौ (ज) सुप्तः चिन्तयामास यत्,—'परिपूर्णोऽयं घटस्तावत् शक्तुभिः वर्त्तते !! तत् यदि दुर्भिक्षं भवति, तदा अनेन रूपकाणां शतमुत्पद्यते ; ततस्तेन मया (झ) अजाद्वयं ग्रहीतव्यम्। ततः (ञ) षाण्मासिकप्रसववशात् ताभ्यां यूथं

---

अनागतवतीमिति।—यः अनागतवतीम् अनुपस्थिताम्, असम्भाव्यां सम्भावनारहितां, चिन्तां करोति, स सोमशर्मणः पिता यथा, तथा पाण्डुरः पीतार्द्धमिश्रितश्वेतवर्णविशिष्टः, पाण्डुवर्णः सन् इति यावत्, [पाण्डुवर्णोऽस्यास्तीति पाण्डुशब्दात् "नगपांशुपाण्डुभ्यश्च" (वा॰) इति रः। "पाण्डुस्तु पीतभागार्द्धकेतकीधूलिसन्निभः" इति शब्दार्णवः। "हरिणः पाण्डुरः पाण्डुः" इत्यमरश्च] शेते एव शयितः सन् दुःखमनुभवत्येवेत्यर्थः ॥ ६८ ॥

(च) शक्तुभिः,—भृष्टयवचूर्णैः। भुक्तशेषैः,—भक्षितावशिष्टैः, उद्धृतैः उच्छिष्टैर्वा।

(छ) नागदन्ते—गृहान्निर्गतदारुणि, गृहभित्तौ प्रोते दण्डविशेषे इत्यर्थः, ("नागदन्तो हिपरदे गृहान्निर्गतदारुणि" इति मेदिनी)।

(ज) सुप्तः,—शयितः, ("स्वापः शयननिद्रयोः" इति मेदिनी)। रूपकाणां शतं—शतं रौप्यमुद्रा इत्यर्थः।

(झ) अजाद्वयं—छागीयुगलम्। ग्रहीतव्यं—क्रेतव्यमित्यर्थः।

(ञ) षाण्मासिकेति।—षड्भिः मासैः निष्पन्नः षाण्मासिकः, ["षण्मासाण्ण्यच्च" (५।१।८३ पा॰) इति ठञ्] स चासौ प्रसवश्चेति, तद्वशात्—तद्धेतोः ; छाग्यो हि षण्मासानन्तरं प्रसुवते इति प्रसिद्धिः।

भविष्यति। ततोऽजाभिः प्रभूता गाः ग्रहीष्यामि; गोभिः महिषीः, महिषीभिः (ट) वड़वाः, वड़वाप्रसवतः प्रभूता अश्वा भविष्यन्ति; तेषां विक्रयात् प्रभूतं सुवर्णं भविष्यति; सुवर्णेन चतुःशालं गृहं सम्पद्यते; ततः कश्चित् ब्राह्मणो मम गृहम् आगत्य प्राप्तवयस्कां ( ठ ) रूपाढ्यां कन्यां दास्यति; तत्-सकाशात् पुत्रो मे भविष्यति, तस्य अहं सोमशर्मेति नाम करिष्यामि। ततः तस्मिन् ( ड ) जानुचलनयोग्ये सञ्जातेऽहं पुस्तकं गृहीत्वा अश्वशालायाः पृष्ठदेशे उपविष्टः तदवधारयिष्यामि। अत्रान्तरे सोमशर्मा मां दृष्ट्वा ( ढ ) जनन्युत्सङ्गात् जानु-प्रचलनपरः अश्वखुरासन्नवर्त्ती मत्समीपम् आगमिष्यति। ततोऽहं ब्राह्मणीं कोपाविष्टोऽभिधास्यामि,—'गृहाण तावत् बालकम्'। साऽपि गृहकर्मव्यग्रतया अस्मद्वचनं न श्रोष्यति, ततोऽहं समुत्थाय तां पादप्रहारेण ताड़यिष्यामि'। एवं तेन ( ण ) ध्यानस्थितेन तथा एव पादप्रहारो दत्तः, यथा स घटो भग्नः शक्तुभिः पाण्डुरतां गतः। अतोऽहं ब्रवीमि,—'अनागतवतीं चिन्ताम्' इत्यादि'।

सुवर्णसिद्धिः आह—'एवमेतत्, कस्ते दोषः? यतः सर्वोऽपि लोभेन ( त ) विड़म्बितो बाध्यते। उक्तञ्च,—

---

( ट ) वड़वाः,—अश्वाः। चतुःशालं—चतसृषु दिक्षु शालाः,—गृहाणि यस्य तादृशं, परस्पराभिमुखगृहचतुष्टयसम्पन्नभवनमित्यर्थः, हर्म्यम् इति भावः।

( ठ ) रूपाढ्यां—सौन्दर्य्यसम्पन्नाम। तत्सकाशात—तस्याम इत्यर्थः।

( ड ) जानुचलनयोग्ये—जानुभ्यां—जानुद्वयमवलम्ब्येत्यर्थः, चलनयोग्ये—गमनार्हे। तदवधारयिष्यामि—पुस्तकं वाचयिष्यामि इत्यर्थः।

( ढ ) जनन्युत्सङ्गात्—मातुः क्रोड़ात्। जानुप्रचलनपरः,—जानुभ्यां विहरण-प्रायणः। अश्वेति।—घोटकखुरसमीपस्थो भूत्वा इत्यर्थः।

( ण ) ध्यानस्थितेन—चिन्तामग्नेन। पाण्डुरतां—पाण्डुवर्णतां, क्षयमिति शेषः।

( त ) विड़म्बितः,—प्रतारितः इत्यर्थः। बाध्यते—पीड्यते।

यो लौल्यात् कुरुते कर्म नैवोदर्कमवेक्षते।
विडम्बनामवाप्नोति स यथा चन्द्रभूपतिः' ॥ ६९ ॥

चक्रधर आह,—'कथमेतत्?' स आह,—

## कथा ९।

'कस्मिंश्चित् नगरे चन्द्रो नाम भूपतिः प्रतिवसति स्म। तस्य पुत्रा वानरक्रीड़ारताः वानरयूथं नित्यमेव अनेकभोजन-भक्ष्यादिभिः पुष्टिं नयन्ति स्म। अथ वानरयूथाधिपो यः, स (थ) औशनस-बार्हस्पत्य-चाणक्यमतवित्, तदनुष्ठाता च तान् सर्वानपि अध्यापयति स्म। अथ तस्मिन् राजगृहे (द) लघु-कुमारवाहनयोग्यं मेषयूथमस्ति; तन्मध्यात् एको जिह्वालौल्यात् अहर्निशं निःशङ्कं महानसे प्रविश्य यत् यत् पश्यति तत् सर्वं भक्षयति। ते च (ध) सूपकाराः यत्किञ्चित् काष्ठं मृन्मयं

---

य इति।—यः लौल्यात् चापल्यात्, लोभादित्यर्थः, कर्म कुरुते, उदर्कम् औत्तर-कालिकं फलं, परिणामम् इत्यर्थः, ("उदर्कः फलमुत्तरम्" इत्यमरः) नैव अवेक्षते न च पश्यति, न आलोचयति इत्यर्थः, स चन्द्रभूपतिर्यथा चन्द्राख्यनृपतिरिव, विडम्बनां तिरस्कारं, क्लेशमिति यावत्, अवाप्नोति लभते ॥ ६९ ॥

(थ) औशनसेति।—उशनसा प्रोक्तम् औशनसं—शुक्रप्रोक्तम् इत्यर्थः,["तेन प्रोक्तम्" (४।३।१०१ पा०) इति अण्-प्रत्ययः] बृहस्पतिना प्रोक्तं बार्हस्पत्यं—बृहस्पतिप्रोक्तम् इत्यर्थः,["तेन प्रोक्तम्" इति ण्यः] चाणक्येन प्रोक्तं [पूर्ववदण्-प्रत्ययः] यन्मतं तत् वेत्तीति तथोक्तः, विविधनीतिशास्त्रज्ञ इत्यर्थः, तदनुष्ठाता—औशनसादिप्रोक्तनयमार्गानुसारी इत्यर्थः। [उशनस्-शब्दस्य प्रथमायाम् "उशना" इति निर्विसर्गं पदम्; सम्बोधने च—"हे उशन उशनन् उशनः" इति पदत्रयं भवति]। तान् सर्वान्—वानरानित्यर्थः।

(द) लघ्विति।—लघूनां—क्षुद्राणां, कुमाराणां—शिशूनां, वाहनयोग्यं—यानोपयोगि। एकः, मेष इति शेषः। जिह्वालौल्यात्—रसनाचापल्यात्, लोभात् इत्यर्थः। महानसे—पाकस्थाने, रन्धनशालायामित्यर्थः, ("रसवत्यान्तु पाक-स्थानमहानसे" इत्यमरः)।

(ध) सूपकाराः,—पाचकाः। मृन्मयं—मृत्तिकानिर्मितमित्यर्थः, [मृदो विकारः इति मयट्, पदान्तत्वात् पञ्चमादेशः]।

भाजनं कांस्यपात्रं ताम्रपात्रं वा पश्यन्ति, तेनाशु ताड़यन्ति। सोऽपि वानरयूथपः तद्दृष्ट्वा व्यचिन्तयत्,—'अहो! मेषसूपकार-कलहोऽयं वानराणां (न) क्षयाय भविष्यति ; यतो अन्नास्वाद-लम्पटोऽयं मेषः, महाकोपाश्च सूपकाराः यथासन्नवस्तुना प्रहरन्ति ; तत् यदि वस्तुनोऽभावात् कदाचित् (प) उल्मुकेन ताड़यिष्यन्ति, तदा ऊर्णाप्रचुरोऽयं मेषः स्वल्पेनैव वह्निना प्रज्वलिष्यति, दह्यमानः पुनः अश्वकुट्यां समीपवर्त्तिन्यां प्रवेक्ष्यति, (फ) साऽपि तृणप्राचुर्य्यात् ज्वलिष्यति ; ततोऽश्वा वह्निदाहम् अवाप्स्यन्ति। (ब) शालिहोत्रेण पुनः एतदुक्तं यत्, —'वानरवसया अश्वानां वह्निदाहदोषः प्रशाम्यति' तत् नूनम् एतेन भाव्यम् अत्र निश्चयः'। एवं निश्चित्य सर्वान् वानरान् आहूय रहसि प्रोवाच। यतः,—

'मेषेण सूपकाराणां कलहो यत्र जायते।
स भविष्यत्यसन्दिग्धं वानराणां क्षयावहः ॥ ७० ॥

---

(न) क्षयाय—विनाशाय। अन्नेति।—अन्नस्य आस्वादे लम्पटः,—लालसः, लुब्ध इत्यर्थः, अत एव अयं कामं प्रहृतोऽपि नास्मात् कदाऽपि निवर्त्तिष्यते इत्याशयः। यथासन्नवस्तुना—निकटस्थेन येन केनापि वस्तुना इत्यर्थः।

(प) उल्मुकेन—अङ्गारेण, ज्वलत्काष्ठेन इत्यर्थः, ("अथ न स्त्री स्यादङ्गारोऽलातमुल्मुकम्" इत्यमरः) ऊर्णाप्रचुरः,—लोमबहुलः, ("ऊर्णा मेषादिलोम्नि स्यात्" इत्यमरः)। अश्वकुट्याम—अश्वशालायाम।

(फ) साऽपि—अश्वकुटी। तृणप्राचुर्य्यात्—तृणबाहुल्यात्।

(ब) शालिहोत्रेण—केनचित् अश्वचिकित्साशास्त्रप्रणेत्रा। वानरवसया—वानरमेदसा। एतेन—एवंविधेन व्यापारेण।

मेषेणेति।—यत्र मेषेण, सहेति शेषः, सूपकाराणां पाचकानां, [सूपं कुर्वन्ति इति सूपोपपदात् कृञः "कर्मण्यण्" (३।२।१ पा०) इत्यण्] कलहः जायते, ("दृश्यते" इति पाठान्तरम्) तत्र सः, कलह इति शेषः, असन्दिग्धं निःसंशयं, वानराणां क्षयावहः विनाशप्रदः, भविष्यति ॥ ७० ॥

तस्मात् स्यात् कलहो यत्र गृहे नित्यमकारणः ।
तत् गृहं जीवितं वाञ्छन् दूरतः परिवर्जयेत् ॥ ७१ ॥

तथा च,—कलहान्तानि हर्म्याणि कुवाक्यान्तञ्च सौहृदम् ।
कुराजान्तानि राष्ट्राणि कुकर्मान्तं यशो नृणाम् ॥ ७२ ॥

तत्र यावत् सर्वेषां सङ्क्षयो भवति, तावदेतत् राजगृहं सन्त्यज्य वनं गच्छामः' । अथ तत् तस्य वचनम् अश्रद्धेयं श्रुत्वा मदोद्धता वानराः प्रहस्य प्रोचुः,—'भोः ! भवतो वृद्धभावात् (भ) बुद्धिवैकल्यं सञ्जातं, येन एतत् ब्रवीषि ।' उक्तञ्च,—

वदनं दशनैर्हीनं लाला स्रवति नित्यशः ।
न मतिः स्फुरति क्वापि बाले वृद्धे विशेषतः ॥ ७३ ॥

न वयं स्वर्गसमानोपभोगान् नानाविधान् भक्ष्यविशेषान्

तस्मादिति।—तस्मात् कलहस्य अनिष्टकरत्वात्, यत्र गृहे नित्यं सततम्, अकारणः निरर्थकः, कलहः स्यात्, जीवितं वाञ्छन् इच्छन्, जनः इति शेषः, तत् गृहं दूरतः परिवर्जयेत् परित्यजेत ; तत्र गृहे न तिष्ठेदित्यर्थः ॥ ७१ ॥

कलहान्तानीति।—हर्म्याणि धनवतां वासगृहाणि, अट्टालिकाः इति यावत्, कलहेन अन्तः अवसानं येषां तानि, यत्र हर्म्ये कलहः वर्तते, तत् शीघ्रं क्षयं यातीत्यर्थः, हर्म्याधिकारिणः परस्परं विवदमानाः स्वं स्वमंशं विभज्य गृह्णात् हर्म्य-विनाशः वेदितव्यः ; सौहृदं मैत्रं, कुवाक्येन अन्तः नाशः यस्य तथोक्तं, कुवाक्येन सौहार्दं नश्यतीत्यर्थः ; राष्ट्राणि कुराजान्तानि कुराजेन अन्तो नाशो येषां तादृशानि, राजदोषेणैव राष्ट्रं ध्वंसं गच्छतीत्यर्थः ; नृणां यशः कुकर्मान्तं कुकर्मणा अन्तो यस्य तादृशं, दुष्कर्मणा यशो नश्यतीत्यर्थः ॥ ७२ ॥

(भ) बुद्धिवैकल्यं—मतिभ्रंशः ।

वदनमिति।—वदनं मुखं, वृद्धस्य बालकस्य चेति शेषः, दशनैः दन्तैः, हीनं शून्यं, पतनादनुद्गमाच्चेति भावः, नित्यशः सततं, [नित्यं नित्यम इति वीप्सार्थे "सङ्ख्यैकवच-नाच्च वीप्सायाम" (५।४।४२ पा०) इति शस्-प्रत्ययः ] लाला स्रवति क्षरति, वदना-दिति शेषः ; तथा बाले शिशौ, विशेषतः वृद्धे क्वापि कुत्रचिदपि, मतिः बुद्धिः, न स्फुरति न विकाशते ॥७३॥

राजपुत्रैः स्वच्छन्दस्तान् अमृतकल्पान् परित्यज्य तत्र अटव्यां कषायकटुतिक्तक्षाररूक्षफलानि भक्षयिष्यामः’। तत् श्रुत्वा (म) अश्रुकलुषां दृष्टिं कृत्वा स प्रोवाच,—‘रे रे मूर्खाः! यूयम् एतस्य सुखस्य परिणामं न जानीथ; किं न (य) पापरसास्वादनप्रायम् एतत् सुखं परिणामे विषवत् भविष्यति? तदहं कुलक्षयं स्वयं न अवलोकयिष्यामि, साम्प्रतं वनं यास्यामि।

उक्तञ्च,—मित्रं व्यसनसम्प्राप्तं स्वस्थानं परपीड़ितम्।

धन्यास्ते ये न पश्यन्ति देशभङ्गं कुलक्षयम्’ ॥ ७४ ॥

एवम् अभिधाय सर्वान् तान् परित्यज्य स यूथाधिपोऽटव्यां गतः।

अथ तस्मिन् गतेऽन्यस्मिन् अहनि स मेषो महानसे प्रविष्टो यावत् सूपकारेण न अन्यत् किञ्चित् समासादितं, तावत् अर्द्धज्वलितकाष्ठेन ताड्यमानो जाज्वल्यमानशरीरः शब्दायमानः अश्वकुट्यां (र) प्रत्यासन्नवर्त्तिन्यां प्रविष्टः। तत्र तृणप्राचुर्य्ययुक्तायां क्षितौ तस्य प्रलुठतः सर्वत्रापि (ल) वह्निज्वालाः

(म) अश्रुकलुषां—नेत्रजलेराविलाम्। परिणामं—शेषफलमित्यर्थः।

(य) पापेत्यादि।—पापस्य—दुष्कर्मणः, लोभजस्येति भावः, यः रसः,—अनुभवप्रीतिरित्यर्थः, तस्य आस्वादनप्रायम्—आस्वादनसदृशम्; पापाचरणम् आपाततः सुखप्रदमपि परिणामे अतिविरसमिति भावः।

मित्रमिति।—ये जनाः, मित्रं बन्धुं, व्यसनसम्प्राप्तं विपदापन्नं, ("व्यसनं विपदि भ्रंशे" इत्यमरः) स्वस्थानं जन्मभूमिं, स्वगृहं वा, परैः शत्रुभिः, पीड़ितम् उपद्रुतं, देशभङ्गं, तथा कुलक्षयं वंशनाशं, न पश्यन्ति, ते धन्याः पुण्यवन्तः, ("धन्यं पुण्यवति त्रिषु" इति मेदिनी), अशक्यप्रतीकारं सम्भावितविपदमनाश्रयं मित्रप्रभृतिकं परित्यज्य स्थानान्तरगमनमेव श्रेयः, न तु तत्क्षयावलोकनमित्यभिप्रायः ॥ ७४ ॥

(र) प्रत्यासन्नवर्त्तिन्यां—समीपस्थायाम्।

तथा समुत्थिताः, यथा केचिदश्वाः स्फुटितलोचनाः पञ्चत्वं गताः, केचित् बन्धनानि त्रोटयित्वा अर्द्धदग्धशरीरा इतश्चेतश्च क्रेषमाणा धावमानाः सर्वमपि जनसमूहम् आकुलीचक्रुः ।

अत्रान्तरे राजा सविषादः (व) शालिहोत्रज्ञान् वैद्यान् आहूय प्रोवाच,—'भोः ! प्रोच्यताम् एषाम् अश्वानां कश्चित् दाहोपशमनोपायः' । तेऽपि शास्त्राणि सञ्चिन्त्य प्रोचुः,—'देव ! प्रोक्तमत्र विषये भगवता शालिहोत्रेण, यत्,—

'कपीनां मेदसा दोषो वह्निदाहसमुद्भवः ।
अश्वानां नाशमभ्येति तमः सूर्य्योदये यथा' ॥ ७५ ॥

तत् क्रियताम् एतत् चिकित्सितं (श) द्राक्, यावत् एते न दाहदोषेण विनश्यन्ति' । सोऽपि तदाकर्ण्य समस्तवानर-बधम् आदिष्टवान् । किं बहुना ? सर्वेऽपि ते वानरा विविधायुधलगुडपाषाणादिभिः व्यापादिता इति ।

अथ सोऽपि वानरयूथपः तं पुत्रपौत्रभ्रातृसुतभागिनेयादि-सङ्क्षयं ज्ञात्वा परं विषादम् उपागतः त्यक्ताहारक्रियो वनात् वनं पर्य्यटत्, अचिन्तयच्च,—'कथमहं तस्य (ष) नृपापसदस्य अनृणताकृत्येन अपकृत्यं करिष्यामि ? उक्तञ्च,—

---

(ल) वह्निज्वालाः,—अग्निशिखाः । स्फुटितलोचनाः,—भिन्ननेत्राः, निःसृत-कनीनिका इत्यर्थः । क्रेषमाणाः,—क्रेषाध्वनिं कुर्वन्त इत्यर्थः ।

(व) शालिहोत्रज्ञान्—अश्वचिकित्सकशालिहोत्रप्रणीतचिकित्साशास्त्राभिज्ञान् ।

कपीनामिति ।—अश्वानां वह्निदाहसमुद्भवः दोषः रोग इति यावत्, कपीनां वानराणां, मेदसा वसया, सूर्य्योदये तमो यथा अन्धकार इव, नाशम् उपशमम्, अभ्येति प्राप्नोति ॥ ७५ ॥

(श) द्राक्—झटिति, ("स्राग्झटित्यञ्जसाऽह्नाय द्राङ्मङ्क्षु सपदि द्रुते" इत्यमरः) ।

(ष) नृपापसदस्य—राजाधमस्य । अनृणताकृत्येन—आनृण्यसम्पादनेन, वैरिता-रूपस्य ऋणस्य परिशोधार्थमित्यर्थः । अपकृत्यम्—अपकारं, वैरनिर्य्यातनमिति भावः ।

'मर्षयेद्धर्षणां योऽत्र वंशजां परनिर्मिताम् ।
भयाद्वा यदि वा कामात् स ज्ञेयः पुरुषाधमः' ॥ ७६ ॥

अथ तेन वृद्धवानरेण कुत्रचित् पिपासाकुलेन भ्रमता (अ) पद्मिनीषण्डमण्डितं सरः समासादितम् । (इ) तत् यावत् सूक्ष्मेक्षिकया अवलोकयति, तावत् वनचरमनुष्याणां पद-पङ्क्तिप्रवेशोऽस्ति, न निष्क्रमणम् इति अवलोकितवान् । ततः चिन्तितं,—'नूनम् अत्र (क) जलान्ते दुष्टग्राहेण भाव्यम् ; तत् पद्मिनीनालम् आदाय दूरस्थोऽपि जलं पिबामि' । (ख) तथा-ऽनुष्ठिते तन्मध्यात् राक्षसो निष्क्रम्य रत्नमालाविभूषितकण्ठः तमुवाच,—'भोः! अत्र यः सलिले प्रवेशं करोति, स मे भक्ष्य इति ; तत् नास्ति धूर्त्ततरस्त्वत्समोऽन्यः, यः पानीयम् अनेन विधिना

---

मर्षयेदिति ।—अत्र संसारे, यः भयाद्वा त्रासाद्वा, यदि वा कामात् स्वस्य इच्छया इत्यर्थः, उपेक्षावशादिति यावत्, ("कामः स्मरेच्छयोः पुमान् । रेतस्यपि निकामे च काम्येऽपि स्यान्नपुंसकम् ॥" इति मेदिनी) परनिर्मिताम् अन्यकृतां, वंशजां कुलसञ्जाताम् इत्यर्थः, धर्षणां धर्षणं, परिभवमित्यर्थः, ["धर्षणं स्यात् परिभवे" इति मेदिनी । धृष्धातोः "भाषायां शासियुधिदृशिधृषिमृषिभ्यो युच् वाच्यः" इति वार्त्तिकसूत्रेण युच्-प्रत्यये स्त्रियाम् आ-प्रत्यये च धर्षणा इति सिद्धम्] मर्षयेत् क्षमेत, स पुरुषाधमः ज्ञेयः ॥७६॥

(अ) पद्मिनीति ।—पद्मिनीनां षण्डः—सङ्घः, तेन मण्डितं—शोभितम् ।

(इ) तत्—सरः । सूक्ष्मेक्षिकया—सूक्ष्मदृष्ट्या । वनचरमनुष्याणाम्—अरण्यवासिनां नराणाम् । पदपङ्क्तिप्रवेशः,—पदचिह्नश्रेणीनां जलान्तर्गमनमित्यर्थः । निष्क्रमणं—बहिरागमनं, प्रत्यावर्त्तनमित्यर्थः ।

(क) जलान्ते—जलमध्ये । दुष्टग्राहेण—दुष्टेन—दारुणेन, ग्राहेण—जल-चरविशेषेण । भाव्यं—स्थातव्यम् इत्यर्थः ।

(ख) तथा—तस्मिन् प्रकारे, अनुष्ठिते—कृते सति, पद्मिनीनालेन जलं पीते सति इत्यर्थः, तन्मध्यात्—जलमध्यात्, राक्षसो निष्क्रम्य—निर्गत्य । रत्नेत्यादि ।—रत्नमालया—रत्नहारेण, विभूषितः,—शोभितः, कण्ठो यस्य स तथोक्तः । तत्—तस्मात् । धूर्त्ततरः,—अतिधूर्त्तः । त्वत्समः,—त्वत्तुल्यः । विधिना—प्रकारेण,

पिबति ; ततः तुष्टोऽहम् ; प्रार्थयस्व हृदयवाञ्छितम्'। कपिराह, —'भोः ! कियती ते भक्षणशक्तिः ?' स आह,—'शतसहस्रायुतलक्षाणि अपि जलप्रविष्टानि भक्षयामि,(ग) वाह्यतः शृगालोऽपि मां दूषयति'। वानर आह,—'अस्ति मे केनचित् भूपतिना सह अत्यन्तं वैरम् ; यदि एनां रत्नमालां मे प्रयच्छसि, तदा सपरिवारमपि तं भूपतिं (घ) वाक्प्रपञ्चेन लोभयित्वा अत्र सरसि प्रवेशयामि'। सोऽपि श्रद्धेयं वचस्तस्य श्रुत्वा रत्नमालां दत्त्वा प्राह,—'भो मित्र ! यत् समुचितं भवति, तत् कर्त्तव्यम्' इति। वानरोऽपि रत्नमालाविभूषितकण्ठः (ङ) वृक्षप्रासादेषु परिभ्रमन् जनैः दृष्टः पृष्टश्च,—'भो यूथप ! भवान् इयन्तं कालं कुत्र स्थितः ? भवता ईदृशी रत्नमाला कुत्र लब्धा, या दीप्त्या सूर्य्यमपि तिरस्करोति ?' वानरः प्राह,—'अस्ति कुत्रचित् अरण्ये(च)गुप्ततरं महत् सरो धनदनिर्मितं, तत्र सूर्य्येऽर्द्धोदिते रविवारे यः कश्चित् निमज्जति, स धनदप्रसादात् ईदृक् रत्नमालाविभूषितकण्ठो निःसरति'। अथ भूभुजा तदाकर्ण्य, स वानरः समाहूतः पृष्टश्च, —'भो यूथाधिप ! किं सत्यमेतत्,(छ) रत्नमालासनाथं सरोऽस्ति क्वापि ?' कपिराह,—'स्वामिन् ! एष प्रत्यक्षतया मत्कण्ठस्थितया रत्नमालया (ज) प्रत्ययस्ते ; तत् यदि रत्नमालया

पानीयनालग्रहणेनेति भावः। हृदयवाञ्छितं—मनोऽभिलषितम्।

(ग) वाह्यतः—बहिःप्रदेशे, स्थले इत्यर्थः। दूषयति—पराभवति।

(घ) वाक्प्रपञ्चेन—वाग्जालेन।

(ङ) वृक्षप्रासादेषु—वृक्षेषु प्रासादेषु राजभवनेषु च। तिरस्करोति—अभिभवति, आच्छादयतीत्यर्थः।

(च) गुप्ततरम्—अन्यैरज्ञातं, सुरक्षितं वा। धनदनिर्मितं—कुवेरकृतम्।

(छ) रत्नमालासनाथं—रत्नहारसहितम्।

(ज) प्रत्ययः,—विश्वासः, भवतु इति शेषः ; मत्कण्ठे प्रत्यक्षदृष्टया एतया रत्नमालया ते विश्वासो भवतु यत् ईदृशं सरोऽस्ति इति भावः।

प्रयोजनं, तदा मया सह कमपि प्रेषय, येन दर्शयामि'। तत् श्रुत्वा नृपतिः प्राह,—'यदि एवं, तदहं सपरिजनः स्वयम् (झ) एष्यामि, येन प्रभूता रत्नमालाः सम्पद्यन्ते'। वानर आह,—'एवं क्रियताम्'। तथा अनुष्ठिते भूपतिना सह रत्नमाला-लोभेन सर्वे कलत्रभृत्याः प्रस्थिताः। वानरोऽपि राज्ञा (ञ) दोला-ऽधिरूढेन स्वोत्सङ्गे आरोपितः सुखेन प्रीतिपूर्वम् आनीयते। अथवा साधु इदमुच्यते,—

तृष्णे देवि! नमस्तुभ्यं यया वित्तान्विता अपि।
अकृत्येषु नियोज्यन्ते भ्राम्यन्ते दुर्गमेष्वपि ॥ ७७ ॥

तथा च,—इच्छति शती सहस्रं सहस्री लक्षमीहते।
लक्षाधिपस्तथा राज्यं राज्यस्थः स्वर्गमीहते ॥ ७८ ॥

---

(झ) एष्यामि—गमिष्यामि। सम्पद्यन्ते—सम्भवन्ति इत्यर्थः।

(ञ) दोलाऽधिरूढेन—दोलामधिष्ठितेन। स्वोत्सङ्गे—आत्मक्रोडे। आरोपितः,—नीतः, उपवेशित इत्यर्थः, [ आरोपितः इति आ-पूर्वात् रुहधातोः णिचि कर्मणि क्तः, "रुहः पोऽन्यतरस्याम्" ( ७।३।४३ पा० ) इति सूत्रेण प-आदेशे सिद्धम् ]।

तृष्णे इति।—हे तृष्णे! स्पृहे! आशे! इत्यर्थः, ("तृष्णे स्पृहापिपासे द्वे" इत्यमरः) देवि! तुभ्यं नमः त्वां प्रणमामि इत्यर्थः, यया, त्वयेति शेषः, [प्रयोजक-कर्त्तरि तृतीया ] वित्तान्विता धनवन्तोऽपि, अकृत्येषु अकरणीयेषु विषयेषु, अन्याय्य-कार्य्येषु इत्यर्थः, नियोज्यन्ते प्रवर्त्त्यन्ते, नियुक्ताः क्रियन्ते इत्यर्थः, [ नि-पूर्वकात् युज्धातोः "हेतुमति च" (३।१।२६ पा०) इति णिच्, ततः "सार्वधातुके यक्" ( ३।१।६७ पा०) इति कर्मणि यक्-प्रत्यये लटि रूपम् ] तथा दुर्गमेषु अगम्येषु अपि स्थानेषु, भ्राम्यन्ते भ्रान्ताः क्रियन्ते, [ ण्यन्तात् भ्रमधातोः पूर्ववत् कर्मणि लटि रूपम् ] ॥ ७७ ॥

इच्छतीति।—शती शतसङ्ख्यकधनवान्, [ शतमस्यास्तीति इनिः ] सहस्रं सहस्र-सङ्ख्यकधनम्, इच्छति, सहस्री सहस्रसङ्ख्यकधनवान्, [ सहस्रमस्यास्तीति इनिः ] लक्षम् ईहते अर्जयितुं वाञ्छति, लक्षाधिपः लक्षसङ्ख्यकधनेश्वरः, राज्यं, तथा राज्यस्थः राज्येश्वरः, स्वर्गं स्वर्गाधिपत्यमित्यर्थः, ईहते अभिलषति; प्रचुरतरविभव-प्राप्तावपि अर्थाकाङ्क्षाया हविषा कृष्णवर्त्मेव इव भूयसा अभिवर्द्धमानत्वादिति भावः। पथ्यावक्त्रं वृत्तम् ॥ ७८ ॥

जीर्य्यन्ते जीर्य्यत: केशा दन्ता जीर्य्यन्ति जीर्य्यत: ।
जीर्य्यतश्चक्षुषी श्रोत्रे तृष्णैका तरुणायते ॥ ७९ ॥

अथ तत् सर: समासाद्य वानर: प्रत्यूषसमये राजानम् उवाच,—'देव ! अर्द्धोदिते सूर्य्येऽत्र प्रविष्टानां सिद्धिर्भवति ; तत् सर्वोऽपि जन एकदा एव प्रविशतु, त्वया पुन: मया सह प्रवेष्टव्यम् ; येन पूर्वदृष्टस्थानम् आसाद्य प्रभूता: ते रत्नमाला दर्शयामि' ।

अथ प्रविष्टा: ते लोका: सर्वे भक्षिता राक्षसेन । तत: तेषु चिरायमाणेषु राजा वानरमाह,—'भो यूथाधिप ! किमिति चिरयति मे परिजन: ?' तत् श्रुत्वा वानर: सत्वरं वृक्षम् आरुह्य राजानम् उवाच,—'भो दुष्टनरपते ! राक्षसेन अन्त:सलिल-स्थितेन भक्षितस्ते परिजन:, साधितं मया कुलक्षयजं वैरम् ; तत् गम्यताम् । त्वं स्वामीति मत्वा न अत्र प्रवेशित: । उक्तञ्च,—

कृते प्रतिकृतं कुर्य्याद्धिंसिते प्रतिहिंसनम् ।
न तत्र दोषं पश्यामि दुष्टे दुष्टं समाचरेत् ॥ ८० ॥

यत् त्वया मम कुलक्षय: कृत:, मया पुनस्तव' इति । अथ एतदाकर्ण्य राजा कोपाविष्ट: (ट) पदाति: एकाकी यथाऽऽयात-

---

जीर्य्यन्ते इति ।—५१३ पृष्ठे पूर्वं व्याख्यातोऽयं श्लोक: ॥ ७९ ॥

कृते इति ।—कृते उपकारे अपकारे वा इति भाव:, प्रतिकृतं प्रतिकारं, प्रत्युप-कारं प्रत्यपकारं वा इत्यर्थ:, तथा हिंसिते हिंसायां कृतायां, प्रतिहिंसनं प्रतिहिंसा-साधनं, कुर्य्यात् ; तत्र प्रतिहिंसने इत्यर्थ:, दोषं न पश्यामि, यत: दुष्टे कृतापकारे, जने इति शेष:, दुष्टं प्रत्यपकारमित्यर्थ:, समाचरेत् अनुतिष्ठेत् ; शठे शाठ्यं समा-चरेदिति भाव: ॥ ८० ॥

(ट) पदाति:,—पदग:, पादचारीत्यर्थ:, [ पादाभ्याम् अतति गच्छति ' इति पादोपपदात् "अत सातत्यगमने" इत्यस्माद्धातो: "अज्यतिभ्यां च" ( उणा० ४ पा० १२० सू० ) "पादे च" ( उणा० ४ पा० १२१ सू० ) इति सूत्रेण इणि कृते "पादस्य

मार्गेण निष्क्रान्तः। अथ तस्मिन् भूपतौ गते राक्षसः हृष्टो जलात् निष्क्रम्य सानन्दम् इदमाह,—

'हतः शत्रुः कृतं मित्रं रत्नमाला न हारिता।
नालेन पिबता तोयं भवता साधु वानर !' ॥ ८१ ॥

अतोऽहं ब्रवीमि,—'यो लौल्यात् कुरुते' इत्यादि'।

एवमुक्त्वा भूयोऽपि स चक्रधरमाह,—'भो मित्र ! प्रेषय मां, येन स्वगृहं गच्छामि'। चक्रधर आह,—'भद्र ! आपदर्थे धनमित्रसङ्ग्रहः क्रियते, तत् माम् एवंविधं त्यक्त्वा क्व यास्यसि ? उक्तञ्च,—

यस्त्यक्त्वा सापदं मित्रं याति निष्ठुरतां सुहृत्।
कृतघ्नस्तेन पापेन नरके यात्यसंशयम् ॥ ८२ ॥

---

पदान्यातिगोपहतेषु" (६।१।५२ पा०) इति पादस्य पदादेशः]। यथाऽऽयात-मार्गेण—येन मार्गेण आगतः, तेनैव पथा इत्यर्थः।

हत इति।—हे वानर ! नालेन पद्मदण्डेन, [नलति इति नालं "नल् बन्धे" इति भौवादिकात् नल्धातोः "ज्वलितिकसन्तेभ्यो णः" (३।१।१४० पा०) इति ण-प्रत्ययः। "नालं न ना पद्मदण्डे" इति विश्वः] तोयं जलं, पिबता भवता साधु सुष्ठु यथा तथा, अनायासेनेत्यर्थः, शत्रुः हतः विनाशितः, मित्रं सुहृत्, कृतं सख्यमित्यर्थः; रत्नमाला, महार्घेति भावः, न हारिता न विनाशिता, न याचिता इत्यर्थः, अपरेणेति शेषः, [णिजन्तात् हृधातोः कर्मणि निष्ठाप्रत्ययः, "हृक्रोरन्यतरस्याम्" (१।४।५३ पा०) इति विकल्पत्वात् प्रयोज्यकर्त्तुः न कर्मत्वम्] ॥ ८१ ॥

य इति।—यः सुहृत् सापदम् आपद्युक्तं, मित्रं त्यक्त्वा निष्ठुरतां याति गच्छति, स कृतघ्नः तेन पापेन असंशयं नरके निरये, [नृधातोः "कृञादिभ्यः संज्ञायाम्" (उ० ५ पा० ३५ सू०) इत्यादिना वुन्। "नरकः पुंसि निरय-दैत्यप्रतिप्रभेदयोः" इति विश्वमेदिन्यौ] याति गच्छति। ["सापदम्" इत्यत्र केचित् क्लीवलिङ्ग-मित्रशब्दस्य विशेषणत्वात् 'आपत्'-शब्दस्य व्यञ्जनान्तत्वाच्च "सापत्" इति साधु इति ब्रुवते; केचित्तु,—आङ्पूर्वपदधातोरच्-प्रत्ययान्त "आपद"-स्वरान्तशब्दस्य रूपमिति; अन्ये तु,—व्यञ्जनान्तत्वात् "आपत्"-शब्दात् स्त्रियां विभाषितटाप्-प्रत्ययं विधाय "आपदया सह

सुवर्णसिद्धिः आह,—'भोः! सत्यमेतत्, यदि (ठ) गम्यस्थाने शक्तिर्भवति ; एतत् पुनः मनुष्याणाम् अगम्यस्थानम् ; नास्ति कस्यापि त्वाम् उन्मोचयितुं शक्तिः। अपरं, यथा यथा चक्रभ्रमवेदनया तव मुखविकारं पश्यामि, तथा तथा अहमेतत् जानामि यत्, द्राक् गच्छामि, मा कश्चित् ममापि (ड) अनर्थो भवतु। यतः,—

याद्दशी वदनच्छाया दृश्यते तव वानर ! ।
विकालेन गृहीतोऽसि यः परैति स जीवति' ॥ ८३ ॥

चक्रधर आह,—'कथमेतत् ?' सोऽब्रवीत्,—

## कथा १० ।

'कस्मिंश्चित् नगरे भद्रसेनो नाम राजा प्रतिवसति स्म। तस्य सर्वलक्षणसम्पन्ना रत्नवती नाम कन्या अस्ति, तां

---

वर्त्तमानः" इति विग्रहम् आहुः ; अपरे पुनः,—"शब्दा गृह्णन्ति शब्दस्य लिङ्गमर्थस्य कुत्रचित्" इत्याद्युक्त्या मित्रशब्दस्य क्लीवत्वेऽपि तदर्थस्य पुंस्त्वमाश्रित्य "दारान् पश्यति शोभनाः" इत्यादौ पुंविशेषणस्य शोभनशब्दस्य स्त्रिया प्रयोगवत् पुमर्थस्य मित्रशब्दस्य विशेषणतया स्वापच्छब्दस्य पुंसि प्रयोगं साधु मन्यन्ते ] ॥ ८२ ॥

( ठ ) गम्यस्थाने—सुगमप्रदेशे। शक्तिः, विपन्नं मित्रं विपदः मोचयितुमिति शेषः।

( ड ) अनर्थः,—अनिष्टपातः।

याद्दशीति।—हे वानर ! तव वदनस्य मुखस्य, छाया कान्तिः, ("छाया सूर्य्यप्रिया कान्तिः प्रतिबिम्बमनातपः" इत्यमरः ) याद्दशी दृश्यते, मयेति शेषः, 'तेन त्वम्' इति पदद्वयमत्र अध्याहरणीयम् ; विकालेन वि विशेषेण, कालः यमस्तद्वत् इत्यर्थः, तेन, तद्रूपदेशिना केनचित् भीषणसत्त्वविशेषेण इति यावत् ; अथ च—विपरीतसमयेन, दौर्भाग्येणेति यावत्, यद्वा—रलयोरभेदात् विकालेन केनचित् विकारेणेत्यर्थः, गृहीतोऽसि आक्रान्तोऽसि, इति मन्ये इति शेषः, तस्मात् यः परैति पलायते, [ परापूर्वात् "इ गतौ" इत्यस्मात् धातोः लट्-ति ] स जीवति प्राणिति, मृत्युहाद्रक्षित भाव; ॥ ८३ ॥

कश्चित् राक्षसः (ढ) जिहीर्षति, रात्रौ आगत्य उपभुङ्क्ते च, परं कृतरक्षोपधानां हर्तुं न शक्नोति। साऽपि (ण) तत्समये रक्षःसान्निध्यजामवस्थाम् अनुभवति कम्पादिभिः। एवम् अतिक्रामति काले कदाचित् स राक्षसो मध्यनिशायां गृह-कोणे स्थितः। साऽपि राजकन्या स्वसखीम् उवाच,—'सखि! पश्य, एषः (त) विकालः समये नित्यमेव मां कदर्थयति; अस्ति तस्य दुरात्मनः (थ) प्रतिषेधोपायः कश्चित्?' तत् श्रुत्वा राक्षसोऽपि व्यचिन्तयत्,—'नूनं यथा अहं, तथा अन्योऽपि कश्चित् विकालनामा अस्या हरणाय नित्यमेव आगच्छति; परं सोऽपि एनां हर्तुं न शक्नोति; तत् तावत् अश्वरूपं कृत्वा अश्वमध्य-गतो निरीक्षयामि, किंरूपः सः, किम्प्रभावश्च' इति। एवं राक्षसोऽश्वरूपं कृत्वा अश्वानां मध्ये तिष्ठति। तथाऽनुष्ठिते, निशीथसमये राजगृहे कश्चित् अश्वचौरः प्रविष्टः। स च सर्वान् अश्वान् अवलोक्य तं राक्षसम् अश्वतमं विज्ञाय अधिरूढः। अत्रान्तरे राक्षसः चिन्तयामास,—'नूनमेष विकालनामा मां

---

(ढ) जिहीर्षति—हर्तुमिच्छति। उपभुङ्क्ते—रमते इत्यर्थः। कृतेत्यादि।—कृतं रक्षार्थे उपधानम्—उपबर्हः, रक्षोनिवारकमन्त्रपूतमौषधपूर्णं वा शिरोनिधानम् इति यावत्; ("उपधानं तूपबर्हः" इत्यमरः) यद्वा,—उपधानं—गण्डुः, ग्रन्थिविशेष इत्यर्थः, रक्षोभयनिवारणार्थं तद्वेदिभिः वस्त्रादौ केशादौ वा विहितमिति भावः; ("उपधानं विषे गण्डौ प्रणयेऽपि नपुंसकम्" इति मेदिनी) यस्याः तथोक्ताम्; यद्वा,—कृतं—गृहीतमित्यर्थः, उपधानं—व्रतभेदः, आत्मरक्षार्थम् उपायविशेष इत्यर्थः, यया तथोक्ताम्।

(ण) तत्समये—राक्षससम्भोगकाले। रक्ष इत्यादि।—रक्षसः,—राक्षसस्य, सान्निध्यजां—संसर्गजनिताम्, अवस्थां—दशाम्।

(त) विकालः,—वि—विशेषेण, विरूपो वा, कालः,—यमप्रायः, यमरूपो दुराचारः कश्चित् सत्त्वविशेष इत्यर्थः, कम्पादिरूपविकारविशेष इत्यर्थो वा। समये—सुरतकाले, रात्रौ इत्यर्थः। कदर्थयति—क्लेशयति इत्यर्थः।

(थ) प्रतिषेधोपायः,—निवारणोपायः।

चौरं मत्वा कोपात् निहन्तुम् आगतः ; ततः किं करोमि ?' एवं चिन्तयन् सोऽपि ( द ) तेन खलीनं मुखे निधाय कशाघातेन ताडितः ।

अथ असौ भयत्रस्तमनाः प्रधावितुम् आरब्धः । चौरोऽपि दूरं गत्वा खलीनाकर्षणेन तं स्थिरं कर्त्तुम् आरब्धवान् । स तु केवलं वेगात् वेगतरं गच्छति ।

अथ ( ध ) तं तथा अगणितखलीनाकर्षणं मत्वा चौरः चिन्तयामास,—'अहो ! न एवंविधा वाजिनो भवन्ति अगणित-खलीनाः !! तत् नूनम् अनेन अश्वरूपेण राक्षसेन भवितव्यम् ; तत् यदि कश्चित् (न) पांशुलं भूमिदेशम् अवलोकयामि, तदा आत्मानं तत्र पातयामि, न अन्यथा मे जीवितव्यमस्ति' ।

एवं चिन्तयत इष्टदेवतां स्मरतस्तस्य सोऽश्वो वटवृक्षस्य तले ( प ) निष्क्रान्तः । चौरोऽपि ( फ ) वटप्ररोहम् आसाद्य तत्रैव विलग्नः । ततो द्वौ अपि तौ पृथग्भूतौ परमानन्दभाजौ जीवित-विषये लब्धप्रत्याशौ सम्पन्नौ ।

---

( द ) तेन—अश्वचौरेण । खलीनं—कविकाम्, अश्वमुखे देयं लौहमययन्त्र-विशेषमित्यर्थः, खलीननिबद्धवल्गामिति यावत् । कशाघातेन—कशा—अश्वादिताड-नोपकरणविशेषः, ("अश्वादेस्ताडनी कशा" इत्यमरः ) तस्याः आघातेन—प्रहारेण ।

( ध ) तम्—अश्वरूपराक्षसम् । अगणितेति ।—अगणितम्—अनाचितम्, अवहेलितमित्यर्थः, खलीनेन—अश्वमुखरज्ज्वा इति भावः, आकर्षणं येन तादृशम् ।

( न ) पांशुलं—धूलिपूर्णं, धूलिराशेरुपरि पाते न काचित् शरीरव्यथा भव-तीति भावः । अन्यथा—अपतने । जीवितव्यं—प्राणितव्य, जीवनसम्भावना इत्यर्थः ।

( प ) निष्क्रान्तः,—उपस्थितः इत्यर्थः ।

( फ ) वटप्ररोहं—न्यग्रोधावरोहं, वटवृक्षस्य स्थूलशाखातः अधोलम्बमानमीहश-मंशविशेषम् इत्यर्थः, "वटेर बोया" इति वङ्गभाषा । आसाद्य—अवलम्ब्य । विलग्नः,—संलग्नः, अश्वं परित्यज्य स्थित इत्यर्थः, [ विपूर्वकात् 'ओ लगी' इति सङ्ग-धातोः क्त-प्रत्ययः, "श्वीदितो निष्ठायाम्" ( ७ २ १४ पा० ) इतीट्प्रतिषेधः, "ओदि-तश्च" ( ८.२।४५ पा० ) इति निष्ठातस्य नकारः ; अत्र केचिदाहुः,—'लगे सङ्गे' इति

अथ तत्र वटे कश्चित् राक्षससुहृत् वानरः स्थितः आसीत्। तेन राक्षसं त्रस्तम् आलोक्य व्याहृतं,—'भो मित्र! किमेवं पलाय्यतेऽलीकभयेन ? त्वद्भक्ष्योऽयं मानुषः, भक्ष्यताम्'। सोऽपि वानरवचो निशम्य स्वरूपम् (ब) आधाय शङ्कितमनाः स्खलितगतिः निवृत्तः। चौरोऽपि तं वानराहूतं ज्ञात्वा कोपात् तस्य लाङ्गूलं लम्बमानं मुखे निधाय चर्वितवान्। वानरोऽपि तं राक्षसाभ्यधिकं मन्यमानो भयात् न किञ्चिदुक्तवान्, केवलं व्यथार्त्तो निमीलितनयनः तिष्ठति। राक्षसोऽपि तं तथाभूतम् अवलोक्य श्लोकमेनम् अपठत्,—

'यादृशी वदनच्छाया दृश्यते तव वानर!।
विकालेन गृहीतोऽसि यः परैति स जीवति' ॥८४॥इति।

तत् प्रेषय मां, येन ममापि कश्चिदनर्थो न भवेत्, त्वरितमेव च गृहं गच्छामि। त्वं पुनः अनुभुङ्क्ष्व अत्र स्थित एव लोभवृक्षफलम्'। चक्रधरः प्राह,—'भोः! अकारणमेतत्, दैववशात् सम्पद्यते नृणां शुभाशुभम्। उक्तञ्च,—

दुर्गस्त्रिकूटः परिखा समुद्रो
रक्षांसि योधा धनदाच्च वित्तम्।

भौवादिकगमधातोः क्त-प्रत्यये "क्षुब्धस्वान्तध्वान्त—" (७।२।१८ पा०) इत्यादिना मन्त्राथें निपातनात् इट्प्रतिषेधः, तस्य नश्च इति ; तथा च कामिकाया,—"लघ्वभिति भवति नकश्चेत्, श्रागितमन्यत" ]।

(ब) आधाय—धृत्वा इत्यर्थः। स्खलितगतिः,—प्रशिथिलगमनव्यापारः, मन्दचरणः इत्यर्थः।

यादृशीति।—५६२ पृष्ठे व्याख्यातपूर्वोऽयं श्लोकः ॥ ८४ ॥

दुर्ग इति।—यस्य त्रिकूटः सटाख्यो गिरिः, दुर्गः कोट्टः, ('केल्ला' इति वङ्गभाषा) स परैर्न लङ्घितुं शक्यते इति भावः, [ दुःखेन गन्तव्यम् इति दुरुपपदात् गम-धातोः आधारे ड. ] समुद्रः परिखा खेयं, दुर्गचतुष्पार्श्वेषु स्थितः खातः इत्यर्थः, या शत्रुभिः न लङ्घयितुं शक्यते इति भावः,[ परितः खन्यते इति खन्धातोः "अन्येष्वपि दृश्यते"

शास्त्रञ्च यच्चोशनसा प्रणीतं
स रावणो दैववशाद्विपन्नः ॥ ८५ ॥

तथा च,—अन्धकः कुब्जकश्चैव त्रिस्तनी राजकन्यका।
त्रयोऽप्यन्यायतः सिद्धाः सम्मुखे कर्मणि स्थिते' ॥८६॥

सुवर्णसिद्धिः प्राह,—'कथमेतत् ?' सोऽब्रवीत्,—

## कथा ११।

'अस्ति उत्तरापथे मधुपुरं नाम नगरम्। तत्र मधुसेनो नाम राजा बभूव ; तस्य कदाचित् विषयसुखम् अनुभवतः त्रिस्तनी कन्या बभूव। अथ तां त्रिस्तनीं जातां श्रुत्वा स राजा कञ्चुकिनः प्रोवाच यत्,—'भोः ! त्यज्यतामियं त्रिस्तनी गत्वा दूरेऽरण्ये, यथा कश्चित् न जानाति'। तत् श्रुत्वा कञ्चुकिनः प्राहुः,—'महाराज ! ज्ञायते यत् अनिष्टकारिणी त्रिस्तनी कन्या भवति ; तथाऽपि ब्राह्मणा आहूय प्रष्टव्याः, येन (भ) लोकद्वयं न विरुध्यते। यतः,—

(वा०) इति ङः। "वैश्रवण पौलस्त्या" इत्यमरः] रक्षांसि राक्षसाः, योधाः सैन्यानि, धनदात् कुबेरात्, वित्तं धनम्, अधिकम् इति शेषः ; यद्वा,—धनदात् कुबेरात्, कुबेरं विजित्येत्यर्थः, [ल्यब्लोपे पञ्चमी] वित्तं, गृहीतमिति शेषः ; उशनसा शुक्रेण, ("शुक्रो दैत्यगुरुः काव्यः उशना भार्गवः कविः" इत्यमरः) प्रणीतं शास्त्रं नीतिशास्त्रम् इत्यर्थः, यो हि शुक्रनीतेरध्येता अनुष्ठाता चेत्यर्थः, स रावणः अपि दैववशात् विपन्नः नाशं गत इत्यर्थः ; प्रभूतपुरुषकारसम्पन्नानामपि दैवप्रतिकूलत्वेन विपदागमो दृश्यते, का कथा साधारणजनानाम ? इति भावः। उपजाति, वृत्तम् ॥ ८५ ॥

अन्धक इति।—कर्मणि प्राक्तनकर्मणि, दैवे इत्यर्थः, सम्मुखे अभिमुखे, अनुकूले इत्यर्थः, स्थिते सति, अन्धकः आपन्नदृष्टिः, कुब्जकः कुब्जः, तथा त्रिस्तनी स्तनत्रयसम्पन्ना, राजकन्यका एते त्रयोऽपि, अन्यायतः अन्यायेन, अवैधरूपेण इत्यर्थः, अतर्कितभावेन इति यावत्, सिद्धाः सिद्धिं गताः, दैवानुकूल्येन स्वस्ववैरूप्यात् मुक्ताः' इति यावत् ॥ ८६ ॥

(भ) लोकद्वयं न विरुध्यते—यथा इह लोके निन्दा न भवेत्, परत्र च नरकपातो न स्यादिति भावः

य: सततं परिपृच्छति शृणोति सन्धारयत्यनिशम् ।
तस्य दिवाकरकिरणैर्नलिनीव विवर्द्धते बुद्धि: ॥ ८७ ॥

तथा च,—प्रच्छकेन सदा भाव्यं पुरुषेण विजानता ।
राक्षसेन्द्रगृहीतोऽपि प्रश्नान्मुक्तो द्विज: पुरा' ॥ ८८ ॥

राजा आह,—'कथमेतत् ?' ते प्रोचु:,—

## कथा १२ ।

'देव ! कस्मिंश्चित् वनोद्देशे चण्डकर्मा नाम राक्षस: प्रतिवसति स्म । एकदा तेन भ्रमता अटव्यां कश्चित् ब्राह्मण: समासादित: । तत: तस्य स्कन्धमारुह्य स राक्षस: प्रोवाच,—'भो: ! अग्रेसरो गच्छ' । ब्राह्मणोऽपि भयत्रस्तमना: तमादाय प्रस्थित: ।

अथ तस्य ( म ) कमलोदरकोमलौ पादौ दृष्ट्वा ब्राह्मणो राक्षसम् अपृच्छत्,—'भो: ! किमेवंविधौ ते पादौ अति-

---

य इति ।—य: जन:, सततं नित्यं, सर्वविधकर्मसम्पादनकाले इत्यर्थ:, परिपृच्छति ज्ञानिसन्निधौ जिज्ञासते इत्यर्थ:, संशयनिर्णयार्थमिति भाव: ; शृणोति, तेषां सदुपदेशवचनमिति शेष:, अनिशं सततं, सन्धारयति सदुपदेशं चेतसि अभिनिवेशेन धारयति इत्यर्थ:, दिवाकरकिरणै: सूर्य्यमयूखै:, नलिनीव पद्मिनीव, तस्य जनस्य, बुद्धि: धी:, मतिरित्यर्थ:, [ बुध्यतेऽनया इति बुध्धातो: "स्त्रियां क्तिन्" ( ३।३।९४ पा० ) इति क्तिन्-प्रत्यय: । "बुद्धिर्मनीषा धिषणा धी: प्रज्ञा शेमुषी मति:" इत्यमर: ] विवर्द्धते विशेषेण वृद्धिं गच्छति । आर्य्या वृत्तम् ॥ ८७ ॥

प्रच्छकेनेति ।—विजानता विज्ञेन, [ अपिरत्राध्याहार्य्य: ] पुरुषेण सदा प्रच्छकेन प्रश्नकारिणा, जिज्ञासुना इत्यर्थ:, भाव्यं भवितुं योग्यम । कथम ? इत्याकाङ्क्षायामाह, राक्षसेन्द्रेति ।—पुरा पूर्वं, राक्षसेन्द्रेण केनापि राक्षसश्रेष्ठेनेत्यर्थ:, गृहीतोऽपि आक्रान्तोऽपि, द्विज: कश्चित ब्राह्मण:, प्रश्नात् प्रश्नेन राक्षसस्य गुप्तरहस्यज्ञानादित्यर्थ:, मुक्त: निष्कृतिं गत इत्यर्थ: ॥ ८८ ॥

( म ) कमलेति ।—कमलोदरवत—पद्माभ्यन्तरस्थकिञ्जल्कवत् ; यद्वा,—पद्मानां गर्भस्थच्छदपत्रवत्, कोमलौ—मृदू ।

कोमलौ?' राक्षस आह,—'भोः! (य) व्रतमस्ति, नाहम् आर्द्र-पादो भूमिं स्पृशामि'। स च तत् श्रुत्वा आत्मनः (र) मोक्षो-पायं चिन्तयन् सरः प्राप्तः। ततो राक्षसेन अभिहितं,—'भोः! यावदहं स्नानं कृत्वा देवताऽर्चनविधिं विधाय आगच्छामि, तावत् त्वया अतः स्थानात् अन्यत्र न गन्तव्यम्'। तथाऽनुष्ठिते द्विजः चिन्तयामास,—'नूनं देवताऽर्चनविधेरूर्ध्वं मामेष भक्षयि-ष्यति; तत् द्रुततरं गच्छामि, येन एष आर्द्रपादो न मम पृष्ठम् एष्यति'। तथाऽनुष्ठिते राक्षसो व्रतभङ्गभयात् तस्य पृष्ठं न गतः। अतो वयं ब्रूमः,—'प्रच्छन्नेन सदा भाव्यम्' इत्यादि'।

अथ तेभ्यः तत् श्रुत्वा राजा द्विजान् आहूय प्रोवाच,—'भो ब्राह्मणाः! त्रिस्तनी मे कन्या समुत्पन्ना, तत् किं तस्याः प्रति-विधानम् अस्ति? न वा?' ते प्रोचुः,—'देव! श्रूयताम्,—

हीनाङ्गी वाऽधिकाङ्गी वा या भवेत् कन्यका नृणाम्।
भर्त्तुः स्यात् सा विनाशाय स्वशीलनिधनाय च ॥ ८९ ॥
या पुनस्त्रिस्तनी कन्या याति लोचनगोचरम्।
पितरं नाशयत्येव सा द्रुतं नात्र संशयः ॥ ९० ॥

(य) व्रतं—नियमः। आर्द्रपादः,—सिक्तचरणः; राक्षसाक्रान्तब्राह्मणस्य मुक्त्युपायप्रदर्शनार्थं वक्तव्यं "नाहमार्द्रपादः" इत्यादि कौशलमुद्भावितमिति मन्ये, आर्द्र-पादेन भूमिस्पर्शात् चरणकाठिन्यसम्भावनायाः शास्त्रेऽदर्शनादिति; यद्वा—बहुत्वं त्याप्य शीतस्पृष्टमङ्गं कठिनीभवति इति लोके दृश्यते, एवञ्च आर्द्रत्वात् कठिनीभूताभ्यां चरणाभ्यां कठिनभूमिस्पर्शात् तयोरधिकतरं काठिन्यमेव जायते इति वक्तुराशयः।

(र) मोक्षोपायम्—उद्धारोपायम्। सरः,—तडागम्।

हीनाङ्गीति।—नृणां नराणां, हीनाङ्गी केनचिदङ्गेन रहिता वा, अधिकाङ्गी अतिरिक्तेन केनचिदङ्गेन उपलक्षिता वा, या कन्यका भवेत, सा कन्या, भर्त्तुः स्वामिनः, विनाशाय मरणाय, तथा स्वस्य शीलं चरित्रं, तस्य निधनाय ध्वंसाय च, स्यात् ॥८९॥

येति।—या पुनः त्रिस्तनी कन्या लोचनगोचरं दृष्टिविषयं, पितुरिति शेषः, याति गच्छति, सा द्रुतं शीघ्रं पितरं नाशयति एव, अत्र संशयो न, अस्तीति शेषः ॥९०॥

तस्मात् अस्या दर्शनं (ख) परिहरतु देवः! तथा यदि कश्चित् उद्वाहयति, तदेनां तस्मै दत्त्वा देशत्यागेन नियोजयितव्य इति; एवं कृते लोकद्वयाविरुद्धता भवति'।

अथ तेषां तद्वचनम् आकर्ण्य स राजा (ग) पटहशब्देन सर्वत्र घोषणाम् आज्ञापयामास,—'अहो! त्रिस्तनीं राजकन्यां यः कश्चित् उद्वाहयति, स सुवर्णलक्षम् आप्नोति देशत्यागश्च'। एवं तस्याम् आघोषणायां क्रियमाणायां महान् कालो व्यतीतः, न कश्चित् तां प्रतिगृह्णाति। साऽपि यौवनोन्मुखी सञ्जाता सुगुप्तस्थानस्थिता यत्नेन रक्ष्यमाणा तिष्ठति।

अथ तत्रैव नगरे कश्चित् (घ) चिरान्धः तिष्ठति, तस्य च मन्थरकनामा कुब्जोऽग्रेसरः यष्टिग्राही। ताभ्यां तं पटहशब्दम् आकर्ण्य (ङ) मिथो मन्त्रितं,—'स्पृश्यतेऽयं पटहो यदि कथमपि दैवात्, तदा कन्या लभ्यते, तथा सुवर्णप्राप्तिश्च भवति, सुखेन सुवर्णप्राप्त्या कालो व्रजति च। अथ यदि (च) तस्या दोषतो मृत्युर्भवति, दारिद्र्योपात्तस्य अस्य क्लेशस्य पर्य्यन्तो भवति। उक्तञ्च,—

लज्जा स्नेहः स्वरमधुरता बुद्धयो यौवनश्रीः
कान्तासङ्गः स्वजनममता दुःखहानिर्विलासः।

(ख) परिहरतु—परित्यजतु। उद्वाहयति—उद्वाहेन ग्रहीतुमिच्छति इत्यर्थः। तत्—तदा। नियोजयितव्यः,—आदेशयितव्य इत्यर्थः।

(ग) पटहशब्देन—वाद्यविशेषध्वनिना सह; "ढ्याँडा" इति वङ्गभाषा।

(घ) चिरान्धः,—बहुवर्षं व्याप्य दृष्टिशक्तिहीनः, न तु जातान्धः। यष्टिग्राही—यष्टिधरः, अन्धस्य यष्ट्यग्रं गृहीत्वा यः तं स्थानात् स्थानान्तरं नयति, स इत्यर्थः।

(ङ) मिथः,—परस्परम्। स्पृश्यते—धार्य्यते, मया इति शेषः; घोषणाडिण्डिमं धृत्वा यो घोषणां निवारयति, स एव तत् कार्य्यं कारयिष्यति इति प्रसिद्धिः।

(च) तस्याः,—विस्तन्याः कन्यायाः। दोषतः,—स्तनत्रयरूपदुर्लक्षणादित्यर्थः। दारिद्र्योपात्तस्य—दैन्येन प्राप्तस्य, दारिद्र्यजनितस्येत्यर्थः। पर्य्यन्तः,—अवसानम्।

धर्मः शास्त्रं सुरगुरुमतिः शौचमाचारचिन्ता
पूर्णे सर्वे जठरपिठरे प्राणिनां सम्भवन्ति' ॥ ९१ ॥

एवमुक्त्वा अन्धेन गत्वा स पटहः स्पृष्टः, उक्तञ्च,—'भोः ! अहं तां कन्याम् उद्वाहयामि, यदि राजा मे प्रयच्छति'। ततस्तैः राजपुरुषैः गत्वा राज्ञे निवेदितं,—'देव ! अन्धकेन केनचित् पटहः स्पृष्टः। तदत्र विषये देवः प्रमाणम्'। राजा प्राह,—

'अन्धो वा बधिरो वाऽपि कुष्ठो वाऽप्यन्त्यजोऽपि वा ।
प्रतिगृह्णातु तां कन्यां सलक्षां स्याद्विदेशगः' ॥ ९२ ॥

अथ राजादेशात् तैः रक्षापुरुषैः तं नदीतीरे नीत्वा सुवर्ण-

लज्जेति ।—जठरपिठरे उदररूपे स्थालीविशेषे, पूर्णे भक्ष्यपेयादिभिः पूरिते सति इत्यर्थः, ["पूरी आप्यायने" इति पूर्‌धातोः णिचि क्तः, "वा दान्तशान्तपूर्ण—" (७।२।२७ पा०) इत्यनेन निपातनात् सिद्धम् ; पक्षे,—पूरित इति । "पूर्णः कृत्स्ने पूरिते च" इति हैमः ] प्राणिनां लज्जा त्रपा, अकार्यकरणजनिता इति भावः, स्नेहः प्रियता, पुत्रादिषु वात्सल्यमित्यर्थः, ("प्रेमा ना प्रियता हार्दं प्रेम स्नेहः" इत्यमरः) भक्ष्याभावे तु तानपि अप्रियानेव मन्यन्ते इति भावः ; स्वरमधुरता, बुद्धयः मतयः, यौवनश्रीः यौवनस्य तारुण्यस्य, श्रीः शोभा, [युवन्‌शब्दात् "हायनान्तयुवादिभ्यः अण्" (५।१।१३० पा०) इत्यनेन अण्। "तारुण्यं यौवने समे" इत्यमरः] कान्तासङ्गः कान्तया मैथुनं, स्वजनममता स्वजनेषु आत्मीयजनेषु, ममता मदीयत्वबोधः, दुःखहानिः क्लेशोपशमः, विलासः सुखाभिलाषः, धर्मः धरति लोकानिति व्युत्पत्त्या वेदविहितयागाद्यनुष्ठानं, शास्त्रं हितानुशासनयन्थविशेषोक्तनियमपालनमित्यर्थः, सुरगुरुमतिः देवतागुरुजनेषु भक्तिः ; यद्वा,—सुरगुरुवत् बृहस्पतेरिव, मतिः बुद्धिः, शौचं पवित्रता, [शुचेः भावः इति शुचिशब्दात् "इगन्ताच्च लघुपूर्वात्" (५।१।१३१ पा०) इत्यण्] आचारचिन्ता सदाचारानुष्ठानम् इत्यर्थः, एते सर्वे सम्भवन्ति ; बुभुक्षया परिपीडितस्य तु विद्यमानेष्वपि लज्जादिकेषु तद्रक्षणासम्भवादिति भावः। मन्दाक्रान्ता वृत्तम् ॥ ९१ ॥

अन्ध इति ।—अन्धो वा, बधिरो वा, कुष्ठो कुष्ठरोगग्रस्तो वा, अन्त्यजः नीच-कुलोत्पन्नो वा, स्यात् यः कोऽपि भवेद्वा, स विदेशगः देशत्यागी सन्, सलक्षां लक्षमुद्रासमेतां, तां कन्यां प्रतिगृह्णातु स्वीकरोतु ; यद्वा,—यः तां कन्यां प्रतिगृह्णातु, सः विदेशगः स्यादित्यन्वयः ॥ ९२ ॥

लक्षेण समं विवाहविधिना त्रिस्तनीं तस्मै दत्त्वा (छ) जलयाने निधाय कैवर्त्ताः प्रोक्ताः,—'भोः ! देशान्तरं नीत्वा कस्मिंश्चित् अधिष्ठाने अन्धः सपत्नीकः कुब्जकेन सह मोचनीयः'। तथा अनुष्ठिते विदेशम् आसाद्य कस्मिंश्चित् अधिष्ठाने कैवर्त्तदर्शिते त्रयोऽपि मूल्येन गृहं प्राप्ताः सुखेन कालं नयन्ति स्म। केवलम् अन्धः पर्य्यङ्के सुप्तः तिष्ठति, गृहव्यापारं मन्थरकः करोति। एवं गच्छता कालेन त्रिस्तन्याः कुब्जकेन सह (ज) विकृतिः समपद्यत। अथवा साधु इदमुच्यते,—

यदि स्यात् शीतलो वह्निश्चन्द्रमा दहनात्मकः।
सुस्वादः सागरः स्त्रीणां तत् सतीत्वं प्रजायते ॥ ९१ ॥

अथ अन्येद्युः त्रिस्तन्या मन्थरकोऽभिहितः,—'भोः सुभग ! यदि एषः अन्धः कथञ्चित् व्यापाद्यते, तदा आवयोः सुखेन कालो याति ; तदन्विष्यतां कुत्रचित् विषं, येन अस्मै तत् प्रदाय सुखिनी भवामि'।

अन्यदा कुब्जकेन परिभ्रमता मृतः कृष्णसर्पः प्राप्तः। तं गृहीत्वा प्रहृष्टमना गृहमभ्येत्य तामाह,—'सुभगे ! लब्धोऽयं कृष्णसर्पः ; तदेनं खण्डशः कृत्वा (झ)प्रभूतशुण्ठ्यादिभिः संस्कार्य्य अस्मै विकलनेत्राय मत्स्यामिषं भणित्वा प्रयच्छ, येन द्राक्

(छ) जलयाने—नौकायाम्। कैवर्त्ताः,—धीवराः, नौजीविनः कर्णधारादयः इत्यर्थः।

(ज) विकृतिः,—स्वभावस्य अन्यथाभावः, व्यभिचार इत्यर्थः।

यदीति।—यदि वह्निः शीतलः, चन्द्रमाः चन्द्रः, दहनात्मकः दहनशक्तिमान्, तथा सागरः समुद्रजलमित्यर्थः, सुस्वादः सुखपेयः, स्यात्, तत् तदा, स्त्रीणां सतीत्वं प्रजायते सम्भवति. वह्न्यादीनां शीतलत्वादिकं यथा अतीवासम्भवं, तथा स्त्रीणामपि सतीत्वमिति भावः ॥ ९१ ॥

(झ) प्रभूतशुण्ठ्यादिभिः,—प्रभूतैः—बहुभिः, शुण्ठति कफमिति शुण्ठी—शुष्कार्द्रकमित्यर्थः, तदादिभिः,—तत्प्रभृतिभिः, सहेति शेषः, संस्कार्य्य—पाचयित्वा।

विनश्यति; यतोऽस्य मत्स्यामिषं सदा प्रियम्' एवमुक्त्वा मन्थरको बाह्ये गतः। साऽपि प्रदीप्ते वह्नौ कृष्णसर्पं खण्डशः कृत्वा तक्रम् (ग) आदाय गृहव्यापाराकुला तं विकलाक्षं सप्रश्रयम् उवाच,—'आर्य्यपुत्र! तव अभीष्टं मत्स्यमांसं समानीतं, यतः त्वं सदा एव तत् पृच्छसि; ते च मत्स्या वह्नौ पाचनाय तिष्ठन्ति; तत् यावत् अहं गृहकृत्यं करोमि, तावत् त्वं दर्वीम् आदाय क्षणमेकं तान् प्रचालय'। सोऽपि तदाकर्ण्य हृष्टमनाः (घ) सृक्कणी परिलिहन् द्रुतम् उत्थाय दर्वीम् आदाय प्रमथितुम् आरब्धः।

अथ (ङ) तस्य तदामिषं मथतो विषगर्भवाष्पेण संस्पृष्टं नीलपटलं चक्षुर्भ्याम् अगलत्। असौ अपि अन्धः (च) बहुगुणं मन्यमानो विशेषात् नेत्राभ्यां वाष्पग्रहणम् अकरोत्, ततो लब्धदृष्टिः यावत् पश्यति, तावत् तक्रमध्ये कृष्णसर्पखण्डानि केवलानि एव अवलोकयति। ततो व्यचिन्तयत्,—'अहो! किमेतत्!! मम मत्स्यामिषं कथितम् आसीत् अनया, एतानि तु कृष्णसर्पखण्डानि; तत् तावत् विजानामि सम्यक्

---

विकलनेत्राय—अन्धाय। मत्स्यामिष—मत्स्यस्य मांसं, ("पिशितं तरसं मांसं पललं क्रव्यमामिषम्" इत्यमरः)। भणित्वा—उक्त्वा।

(ग) आदाय—सम्यक् दत्त्वा। सप्रश्रयं—सविनयम्। पाचनाय तिष्ठन्ति—पच्यन्ते इत्यर्थः। गृहकृत्यं—गृहकार्य्यम्। दर्वीं—पाकद्रव्यप्रचालनयन्त्रम्; ('हाता' इति वङ्गभाषा)।

(घ) सृक्कणी—ओष्ठप्रान्तौ, ("प्रान्तावोष्ठस्य सृक्कणी" इत्यमरः)। परिलिहन्—जिह्वया पुनः पुनः परिमृशन्नित्यर्थः, मत्स्यभक्षणलोभादिति भावः। प्रमथितुं—चालयितुम्।

(ङ) तस्य—अन्धस्य। मथतः,—प्रचालयतः। [भ्वादिगणीय "मथ्" धातोः रूपम्]। विषगर्भवाष्पेण—अन्तर्गरलधूमेन, सर्पमांसादुत्थितेन इति भावः। नीलपटलं—कालिमचयः, दृष्टिमण्डलावरकमिति शेषः।

(च) बहुगुणं—प्रभूतगुणकरं, तत् वाष्पमिति शेषः।

त्रिस्तन्याः चेष्टितं किं मम वधोपायक्रमः? कुब्जस्य वा? उताहो अन्यस्य वा कस्यचित्?' एवं विचिन्त्य स्वाकारं (क) गूहन् अन्धवत् कर्म करोति यथा पुरा।

अत्रान्तरे कुब्जः समागत्य निःशङ्कतया आलिङ्गनचुम्बनादिभिः त्रिस्तनीं सेवितुम् उपचक्रमे। सोऽपि अन्धः तम् अवलोकयन् अपि (ज) यावत् न किञ्चित् शस्त्रं पश्यति, तावत् कोपव्याकुलमनाः पूर्ववत् शयनं गत्वा कुब्जं चरणाभ्यां सङ्गृह्य सामर्थ्यात् स्वमस्तकोपरि भ्रामयित्वा त्रिस्तनीं हृदये व्यताडयत्। अथ कुब्जप्रहारेण तस्याः तृतीयः स्तनः (झ) उरसि प्रविष्टः; तथा बलात् मस्तकोपरि भ्रामणेन कुब्जः प्राञ्जलतां गतः। अतोऽहं ब्रवीमि,—'अन्धकः कुब्जकश्चैव' इत्यादि'।

सुवर्णसिद्धिः आह,—'भोः! सत्यमेतत्, दैवानुकूलतया सर्वं कल्याणं सम्पद्यते, तथाऽपि पुरुषेण (ञ) सतां वचनं कार्य्यम्; न पुनः असंहतेन कदाचिदपि भवितव्यम्; यः खलु एवमेव वर्त्तते, स त्वमिव नूनं विनश्यति।

तथा च,—एकोदराः पृथग्ग्रीवा अन्योऽन्यफलभक्षिणः।
असंहता विनश्यन्ति भारण्डा इव पक्षिणः' ॥ ८४ ॥

(क) गूहन्—गोपायन्, अप्रकाशयन् इत्यर्थः।

(ज) यावत्—यदा इत्यर्थः। तावत्—तदा इत्यर्थः। पूर्ववत्—प्रागिव, अन्धदशायां यथा हस्तपरामर्शेन गच्छति, तथा इत्यर्थः। सामर्थ्यात्—बलात्, बलपूर्वकमित्यर्थः। व्यताडयत्—निर्दयं प्रहृतवान्।

(झ) उरसि—वक्षसि, तदभ्यन्तरे इत्यर्थः, सा द्विस्तनी जातेति भावः। प्राञ्जलतां—सरलतां, कुब्जतादोषरहितोऽभवदिति भावः।

(ञ) सतां वचनं—"नैकः शून्याटवीं गच्छेत्" इत्यादिरूपानुशासनम्; तच्च १७७संख्यकपृष्ठे स्फुटीभविष्यति। असंहतेन—मिथो वियुक्तेन, एकाकिना इत्यर्थः। च;—पुनः।

एकोदरा इति।—असंहता, संहताः सङ्गताः न भवन्तीति असंहताः पर-

चक्रधर आह,—'कथमेतत् ?' सोऽब्रवीत्,—

## कथा १३ ।

'कस्मिंश्चित् सरोवरे भारुण्डनामा पक्षी एकोदरः पृथग्ग्रीवः प्रतिवसति स्म। तेन च समुद्रतीरे परिभ्रमता किञ्चित् फलम् (ट) अमृतकल्पं तरङ्गाक्षिप्तं सम्प्राप्तम्। स च तत् भक्षयन् इदमाह,—'अहो! बहूनि मया अमृतप्रायाणि समुद्रकल्लोलाहृतानि फलानि भक्षितानि, (ठ) परम् अपूर्वोऽस्य आस्वादः; तत् किं पारिजातहरिचन्दनतरुसम्भवम्!! किं वा किञ्चित् अमृतमयफलम् अव्यक्तेनापि विधिना आपतितम्!!' एवं तस्य ब्रुवतो द्वितीयमुखेन अभिहितं,—'भोः! यदि एवं, तत् ममापि स्तोकं प्रयच्छ, येन जिह्वासौख्यम् अनुभवामि'। ततो विहस्य प्रथमवक्त्रेण अभिहितम्,—'आवयोः तावदेकम् उदरम्, एका तृप्तिश्च भवति; तत् किं पृथक् भक्षितेन ? वरमनेन (ड) शेषेण प्रिया तोष्यते' एवम् अभिधाय तेन शेषं भारुण्ड्याः प्रदत्तम्। साऽपि

---

क्लृप्ताः, अमिलिताः इत्यर्थः, एकताविरहिता इति यावत्, ("संहतं मसृणे दृढे" इति हैम.) तथाः इति शेषः, एकोदराः अभिन्नकुक्षयः, पृथग्ग्रीवाः, भिन्नमुखाः इति भावः, परन्तु अन्योऽन्यफलभक्षिणः परस्परफलभोजनाभिलाषिणः, भारुण्डाः तदाख्याः, पक्षिण इव विनश्यन्ति विनाशं गच्छन्ति ॥ ९४ ॥

(ट) अमृतकल्पम्—अमृततुल्यम्, अमृतादीषदूनमित्यर्थः, ["ईषदसमाप्तौ कल्पब्देश्यदेशीयरः." (५।३।६७ पा॰) इति सूत्रेण कल्पप्]। तरङ्गाक्षिप्तं—तरङ्गताडनेन वेलाम् आनीतम् इत्यर्थः।

(ठ) परं—किन्तु। अव्यक्तेन—अस्फुटेन, अलक्षितेन इत्यर्थः, ("अव्यक्तः प्राकृते विष्णावव्यक्तं महदादिके। आत्मन्यपि स्यादव्यक्तमस्फुटे त्वभिधेयवत्।" इति विश्वः) विधिना—दैवेन, मम शुभादृष्टेन इत्यर्थः। आपतितं—प्रेरितमित्यर्थः।

(ड) शेषेण—भुक्तावशिष्टेन इत्यर्थः। प्रिया—भार्या। भारुण्ड्याः,—स्वप्रियायाः, [सम्बन्धविवक्षया षष्ठी]।

तत् आस्वाद्य प्रहृष्टतया (ढ) आलिङ्गन-चुम्बन-सम्भावनाद्यनेक-चाटुपरा बभूव। द्वितीयं मुखं तद्दिनादेव प्रभृति ( ण ) सोद्वेगं सविषादञ्च तिष्ठति।

अथ अन्येद्युः द्वितीयमुखेन विषफलं प्राप्तम्। तत् दृष्ट्वा (त) अपरमाह,—'भोः ! निस्त्रिंश ! पुरुषाधम ! निरपेक्ष ! मया विषफलम् आसादितम्; तत् तवापमानात् भक्षयामि'। अपरेण अभिहितं,—'मूर्ख ! मा मा एवं कुरु, एवं कृते द्वयो-रपि विनाशो भविष्यति'। अथ एवं वदन्तमपि तेन पूर्वाप-मानात् फलं भक्षितम्; किं बहुना ? द्वौ अपि विनष्टौ। अतोऽहं ब्रवीमि,—'एकोदराः पृथग्ग्रीवाः' इत्यादि'।

चक्रधर आह,—'सत्यमेतत्, त्वद्वचनमनाकर्ण्य त्वां परि-त्यज्य च एकाकिना आगच्छता मया दुःखमेतदनुभूयते; तत् गच्छ गृहम्'। एवं श्रुत्वा सुवर्णसिद्धिस्तमनुज्ञाप्य स्वगृहं प्रति निवृत्तः'।

अथ ब्राह्मणी एवमुक्त्वा पुनः ब्राह्मणम् आह,—'यत् त्वया-ऽपि अतिलुब्धेन न कृतं मद्वचः, तेनैव ईदृशी अवस्था उपागता। अतोऽहं ब्रवीमि,—'अतिलोभो न कर्त्तव्यः' इत्यादि'।

तत् श्रुत्वा देवशर्मा कथयति,—'यस्य गृहे अशनजातं किमपि नास्ति, तस्य जीविकाऽर्थं भिक्षाऽटनं न पुनरतिलोभकारणं

---

( ढ ) आलिङ्गनेत्यादि।—आलिङ्गनम्—आश्लेषः, चुम्बनम्—अधरास्वादनं, सम्भावनम्—आदरप्रदर्शनमित्यर्थः, तानि आदीनि येषां तादृशाः, अनेकाः,—विविधाः, चाटवः,—प्रियाचरणानीत्यर्थः, तत्परा—तत्प्रवणा।

( ण ) सोद्वेगं—व्याकुलचित्तम्। सविषादं—सदुःखम्।

( त ) अपरं—प्रथममुखम्। निस्त्रिंश !—निर्दय ! ("निस्त्रिंशः खड्गे ना निर्दये त्रिषु" इति मेदिनी )। पुरुषाधम !—पुरुषेषु अधमः,—नीचः, तत्सम्बुद्धौ। निरपेक्ष !—अपरमुखानपेक्षिन् इत्यर्थः।

भवितुमर्हति। त्वमेव अपरीक्षितकारिणी, येन चिरं पुत्रवत् (थ) रक्ष्यमाणं, सुखप्रसुप्तस्य स्वपुत्रस्य कृष्णसर्पात् रक्षितारम्, अमुं नकुलं सविशेषमज्ञात्वैव सहसा विनाशयन्त्या त्वया अतीव अकार्य्यमनुष्ठितम्'। सा तु तथाविधं भर्त्तृवाक्यं निशम्य अपरीक्षितकारितायाः दोषं विभाव्य च नकुलार्थं परं सन्तापमाययौ, तद्वधशोकेन च प्रमुक्तकण्ठं चिरमरुदत्। अतोऽस्माभि-रुच्यते,—'अपरीक्ष्य न कर्त्तव्यम्' इत्यादि"।

मणिभद्र आह,—"सत्यमेतत्, सम्यगुपदिष्टम् अत्रभवद्भिः, साम्प्रतमनुमन्यतामयं जनः स्वगृहगमनाय"। ततो धर्माधि-कारिभिरुक्तं—"गच्छतु स्वगृहं भवान्, परमेकाकिना न गन्तव्यम्। उक्तञ्च,—

एकः स्वादु न भुञ्जीत नैकः सुप्तेषु जागृयात्।
एको न गच्छेदध्वानं नैकस्त्वार्थान् प्रचिन्तयेत्॥ ८५॥

---

(थ) रक्ष्यमाणं—प्रीयमाणं, प्रियबुद्ध्या पाल्यमानमित्यर्थः।

एक इति।—एकः एकाकी, अन्येभ्यः अदत्त्वा इत्यर्थः, स्वादु सुस्वादं द्रव्यं, न भुञ्जीत, स्वादुद्रव्यम् आश्रितेभ्यः किञ्चित् किञ्चित् दत्त्वा भक्षितव्यमित्यर्थः, एकाकी यदि कश्चित् सकृद्भुञ्जीत तदा एकाहोपवासः कार्यः, यथोक्तं प्रायश्चित्तविवेके,—"अथैकाकिमिष्टान्नभक्षणप्रायश्चित्तम् ; तत्र निन्दायां मनुः,—"एकाकी मिष्टमश्नाति वञ्चयित्वा सुहृत्-सुतान्। दारान् भृत्यातिथींश्चैव तथा सम्बन्धिबान्धवान्॥ उपास्य-देवतादींश्च पशुघाती च यो नरः। तावत्स नरके घोरे दुर्गन्धे पात्यते नरः॥" अत्र प्रायश्चित्तविशेषाश्रवणात् "नैकाकी मिष्टान्नमश्नाति" इति श्रुतत्वाचारातिक्रम-प्रायश्चित्तम्। वेदोदितानामित्यनेन मनुनोक्त एकाहोपवासः कार्यः, एतत् सकृत्, अभ्यासे तु द्वैगुण्यादिकमूहनीयम्" इति। सुप्तेषु निद्रितेषु जनेषु मध्ये, एको जनः, न जागृयात् न जागरितः तिष्ठेत् ; सुप्तजनानां हि अपहृते सति कस्मिन्नपि वस्तुनि कारणान्तरेण मृते वा कस्मिंश्चित् जाग्रत एव तदपराधारोपणसम्भवात्, यद्वा,—निद्राणानाम् उत्स्वप्नायमानानां विविधभीतिव्यञ्जकवाक्चेष्टादिभ्यः जाग्रतः प्राणवियोगादिकमाशङ्कया इति भावः ; एक एकाकी, असहायः सन्नित्यर्थः, अध्वानं

अपि च,—अपि कापुरुषो मार्गे द्वितीयः क्षेमकारकः ।
कर्कटेन द्वितीयेन जीवितं परिरक्षितम्" ॥ ८६ ॥

मणिभद्र आह,—"कथमेतत् ?" धर्माधिकारिणः प्रोचुः,—

## कथा १४ ।

"कस्मिंश्चित् अधिष्ठाने ब्रह्मदत्तनामा ब्राह्मणः प्रतिवसति स्म ; स च प्रयोजनवशात् ( द ) ग्रामे प्रस्थितः स्वमात्रा अभिहितः,—'वत्स ! कथमेकाकी व्रजसि ? अन्विष्यतां कश्चित् द्वितीयः सहायः' । स आह,—'अम्ब ! मा भैषीः ; (ध) निरुपद्रवोऽयं मार्गः, कार्य्यवशात् एकाकी गमिष्यामि' । अथ तस्य तं निश्चयं ज्ञात्वा समीपस्थवाप्याः सकाशात् ( न ) कर्कटमेकम् आदाय मात्रा अभिहितः,—'वत्स ! अवश्यं यदि गन्तव्यं, तदा एष कर्कटोऽपि सहायः भवतु ; तत् एनं गृहीत्वा गच्छ' । सोऽपि मातुर्वचनात् उभाभ्यां पाणिभ्यां तं सङ्गृह्य (प) कर्पूरपुटिकामध्ये निधाय पात्रमध्ये संस्थाप्य च शीघ्रं प्रस्थितः ।

पन्थानं न गच्छेत्, विपदि समुपस्थितायां साहाय्यप्राप्तेरसम्भवादिति भावः ; च किञ्च, एको जनः, अर्थान् प्रयोजनानि, प्रयोजनीयकार्य्याणीत्यर्थः, न प्रचिन्तयेत् अपरेण असमालोच्य कार्य्यं कुर्य्यादित्यर्थः, कदाचित् स्वस्य भ्रान्तिवशात् सकलकार्य्यहानिसम्भावनेति भावः, "गच्छन्तं पथिकं साहाय्यं गन्तव्यं पन्थानः सह" इत्यादि स्मरणात् ॥ ८५ ॥

ससहायकगमनस्य गुणं वर्णयिष्यन् दृष्टान्तमुपन्यस्तुमाह, अपीति ।—मार्गे पथि, कापुरुषोऽपि अधमोऽपि, द्वितीयः सहाय इत्यर्थः, तिष्ठति चेत् तदेति शेषः, क्षेमकारकः शुभकरः, भवतीति शेषः ; तथा हि, द्वितीयेन सहायेन इत्यर्थः, कर्कटेन कुलीरेण, जीवितं, कस्यचित् पान्थस्येति शेषः, परिरक्षितं परित्रातं, सर्पात् इति भावः ॥ ८६ ॥

( द ) ग्रामे—कस्मिंश्चित् ग्रामान्तरे इत्यर्थः । स्व[illegible]—निजजनन्या ।

( ध ) निरुपद्रवः,—उपद्रवरहितः, शङ्काया अनास्पदम् इत्यर्थः ।

( न ) कर्कटं—कुलीरं, ("स्यात् कुलीरः कर्कटकः" इत्यमरः) । कर्कटोऽपि—कर्कटः पुनः ।

( प ) कर्पूरपुटिकामध्ये—कर्पूराधारमध्ये इत्यर्थः ।

अथ गच्छन् (फ) ग्रीष्मोष्मणा सन्तप्तः कञ्चित् मार्गस्थं वृक्षम् आसाद्य तत्रैव प्रसुप्तः। अत्रान्तरे वृक्षकोटरात् निर्गत्य कृष्णसर्पस्तत्समीपम् आगतः, स च (ब) कर्पूरसुगन्धसहज-प्रियत्वात् तं परित्यज्य वस्त्रं विदार्य्य अभ्यन्तरगतां कर्पूरपुटि-काम् अतिलौल्यात् अभक्षयत्। सोऽपि कर्कटः तत्रैव स्थितः सन् सर्पप्राणान् अपाहरत्। ततो ब्राह्मणः प्रबुद्धः पश्यति यत्, एको मृतः कृष्णसर्पो निजपार्श्वे कर्पूरपुटिकोपरि स्थितः तिष्ठति। तं दृष्ट्वा व्यचिन्तयत्,—'कर्कटेन अयं हतः' इति प्रसन्नो भूत्वा अब्रवीत्,—'भोः! सत्यम् अभिहितं मम मात्रा यत्—'पुरुषेण कोऽपि सहायः कार्य्यः, न एकाकिना गन्तव्यम्'। यतो मया (भ) श्रद्धापूरितचेतसा तद्वचनम् अनु-ष्ठितं, तेनाहं कर्कटेन सर्पव्यापादनात् रक्षितः। अथवा साधु इदमुच्यते—

क्षीणः स्रवति शरीरविवृद्ध्यै वर्द्धयति पयसां नाथम्।
अन्ये विपदि सहाया धनिनां श्रियमनुभवन्त्यन्ये ॥८७॥

---

(फ) ग्रीष्मोष्मणा—निदाघतापेन।

(ब) कर्पूरेति।—कर्पूरस्य यः सुगन्धः,—शोभनो गन्धः, तस्मिन् सहजप्रियः,—स्वाभाविकप्रीतिमान्, तस्य भावः तत्त्वात्। तं—ब्राह्मणम्। अतिलौल्यात्—अतिलोभात्।

(भ) श्रद्धापूरितचेतसा—गुरुजनादेशत्वात् सादरविश्वस्तमनसा। अनुष्ठितं—प्रतिपालितम्। तेन—मातृवचनानुष्ठानेन। सर्पव्यापादनात्—सर्पेण व्यापादनात्—मारणात्, सर्पकर्तृकदंशनादित्यर्थः, कर्कटेन—कर्त्रा, अहं रक्षित इत्यन्वयः; यद्वा,—कर्कटेन सर्पस्य व्यापादनात्—हननात्, अहं रक्षितः, कर्कटेनेति पूर्वानुषङ्गः।

सहायस्य प्रशंसां प्रतिपादयितुमाह, क्षीण इति।—क्षीणः अल्पः, क्षुद्र इत्यर्थः, इन्दुमिति [illegible] भावः, कापुरुष इति ध्वनिः, शरीरविवृद्ध्यै शरीरस्य [illegible]त्यर्थः, विवृद्ध्यै वर्द्धनाय, तडागादीनामिति भावः, स्रवति क्षरति, आकाशात् पतितः सन् मिलतीत्यर्थः, तथा पयसां नाथं वारिधिं यथा तथा।,

मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ ।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥ ९८ ॥

---

रत्नाकरवदित्यर्थः, क्षुद्रं जलाशयमपि महान्तं जलाधारं करोतीति भावः; रत्नाकरवत् धनवन्तमिति ध्वनिः; वर्द्धयति वर्द्धयितुं शक्नोति, क्षुद्रोऽपि सहायेन क्षुद्रान्तरं महान्तं कर्त्तुं शक्नोतीति समुदितार्थः; तथा हि,—अन्ये अपरे, विपदि आपदि, सहायाः अनुकूलाः, भवन्ति चेदिति शेषः, तदा अन्ये सहाययुक्ता इत्यर्थः, धनिना धनवतां, श्रियं सम्पदं, सौभाग्यमित्यर्थं, अनुभवन्ति भुञ्जते, धनवन्तो भवन्तीत्यर्थः; यथा,—शरीरविवृद्धौ शरीरस्य देहस्य, जलमयस्येति भावः, वारिधेरिति शेषः, विवृद्धौ विशेषेण वर्द्धनाय, क्षीणः क्षयरोगयुक्तः, चन्द्र इत्यर्थः, ["चतुर्दशमष्टमे यामे क्षीणो भवति चन्द्रमाः" इति स्मृतिः। क्षिधातोः कर्त्तरि क्त-प्रत्यये "क्षियो दीर्घात्" (८।२।४६ पा०) इति सूत्रेण निष्ठातस्य नकारः, "निष्ठायामण्यदर्थे" (६।४।६० पा०) इति सूत्रेण दीर्घत्वं, "अण्यदर्थः भावकर्मणी ताभ्यामन्यत्र या निष्ठा तस्यां क्षियो दीर्घो भवति" इति काशिकोक्तेः भावे कर्मणि च क्षितमिति भवितव्यम्। चन्द्रस्य क्षयरोगवत्त्वे प्रमाणं यथा चरके,—"रोहिण्यामतिसक्तस्य शरीरं नानुरक्षतः। आजगामाल्पतां निन्दोर्देहः स्नेहपरिक्षयात्॥ दुहितॄणामसम्भोगात् शेषाणाञ्च प्रजापतेः। क्रोधो निःश्वासरूपेण मूर्त्तिमान् निःसृतो मुखात्॥ प्रजापतेर्हि दुहितॄरष्टाविंशतिमंशुमान्। भार्यार्थे प्रतिजग्राह न च सर्वास्ववर्त्तत॥ गुरुणा तमवध्यातं भार्यास्वसमवर्त्तिनम्। रजोऽस्मपरीतं दीनं यक्ष्मा शशिनमाविशत्॥ ......... । यस्मात् स राज्ञः प्रागासीत् राजयक्ष्मा ततो मतः॥" इति चिकित्सितस्थाने अष्टमाध्याये २.........९ सङ्ख्यक श्लोकाः] स्रवति क्षरति, किरणामृतं यदा वर्षतीत्यर्थः, समुद्रपुष्टिसाधनार्थं सहायतां विदधातीति भावः; तदा पयसां नाथम् अपां पतिं, समुद्रमित्यर्थः, वर्द्धयति पूरयति, वर्द्धयितुं शक्नोतीत्यर्थः; चन्द्रोदये समुद्रस्य वृद्धिः लोकप्रसिद्धा एव; क्षीणस्यापि शशिनः सहायतामकरेण रत्नाकरस्यापि वृद्धिर्न सम्भवतीति भावः; एतदेव दृढयति, अन्ये इति।—धनिनां धनवतामपि इत्यर्थः, विपदि आपदि उपस्थितायां सत्यामिति इत्यर्थः, अन्ये अपरे, सहायाः अनुकूलाः भवन्ति चेदिति शेषः, तदा अन्ये अपरे, ते धनिनः इत्यर्थः, श्रियं सम्पदम्, अनुभवन्ति भुञ्जते; सम्पदामभावेऽपि पूर्ववत् सम्पद्धार्यैर्भवितव्यमिति भावः ॥ ९७ ॥

"यतो मया श्रद्धापूरितचेतसा" इत्यादिना चूर्णकेन यदुक्तं, तस्यैव समर्थनाय आह, मन्त्रे इति।—मन्त्रे देवादीनां साधने, जप्ये इत्यर्थः, वेदविशेषे वा, ("मन्त्रो

एवमुक्त्वा असौ ब्राह्मणो (म) यथाऽभिप्रेतं गतः। अतो-ऽस्माभिरुच्यते—'अपि कापुरुषो मार्गे' इत्यादि"। सोऽपि

वेदविशेषे आहिताग्न्यादीनाञ्च साधने। गुह्यवादेऽपि च पुमान्—" इति मेदिनी) तीर्थे पुण्यक्षेत्रे, द्विजे ब्राह्मणे, देवे देवतायां, दैवज्ञे ज्योतिषिके, भेषजे औषधे, तथा गुरौ पूजार्हे पित्रादौ, यस्य जनस्य, यादृशी यादृग्विधा, भावना चिन्ता, [ सा च ब्रह्म-कर्म तदुभयभेदात् त्रिविधा, यथोक्तं विष्णुपुराणे,—"त्रिविधा भावना भूप! विश्वमेतन्निबोध मे। ब्रह्माख्या कर्मसंज्ञा च तथा चैवोभयात्मिका॥" ( ६ अंशः ७ अ० ४८ श्लोकः ) इति ; तत्र "सर्वं खल्विदं ब्रह्म" ( छान्दो० उप० ३ अ० १४ ख० १ मन्त्रः ) इत्येवं भावना प्रथमा ; ["सर्वं कर्ममयम्" इत्येवं द्वितीया भावना; उभयात्मिका च तृतीया ] तस्य तादृशी तादृग्विधा, सिद्धिः फलमिति यावत्, भवति ; जपेनानेन मन्त्रेण अवश्यमेवाहं सिद्धकामो भविष्यामि, मन्त्रे चेत् साधकस्य एवं दृढविश्वासः, तदा अवश्यमेव तस्य फलसिद्धिर्जायते ; अनेन मन्त्रेण सिद्धिर्भविष्यति न वा? किं वा भवति? इत्येवं सन्दिहानस्य फलसिद्धिर्न भवतीति भावः। मन्त्रस्य ब्रह्मस्वरूपत्वात् यस्तु "मन्त्र एव ब्रह्म" इति विभावयन् मन्त्रं जपति, तस्य मन्त्रजपेन तेन पुण्योदयात् स्वर्गादिसिद्धिः ऐहिकसिद्धिर्वा भवति ; यस्तु "सर्वं कर्म" इत्यभि-सन्धाय मन्त्रं जपति, तस्य कर्मसिद्धिः स्यात् ; यश्च "ऐहिकसुखानन्तरं ब्रह्मप्राप्तिः" इति विभाव्य जपति, तस्य उभयसिद्धिः भवति ; एवं "तीर्थे ब्रह्म तिष्ठति, तद्दर्शने ब्रह्मदर्शनं भवति" इति भावनया यः तीर्थं याति, तस्य ब्रह्मसिद्धिः ; श्रुतौ तीर्थगमनस्य सुखापादकत्वमाकर्ण्य तदुद्दिश्य यस्तीर्थं याति तस्य कर्मसिद्धिः ; तीर्थदर्शने ब्रह्मदर्शन-फलं सुखञ्च स्यादिति सञ्चिन्त्य यस्तीर्थं याति, तस्योभयसिद्धिर्भवतीति ; एवमेव द्विजादावपि इति निष्कर्षः। "एष कर्कटोऽपि ते सहायो भवतु" इति मातृवचसि श्रद्धावशात् क्षुद्रोऽपि अयं कर्कटः अवश्यमेव मां पथि विपदः रक्षितुं शक्ष्यति इति दृढप्रत्ययात् ब्राह्मणः पथि सहायेन कर्कटेन सर्पदंशनात् रक्षां प्राप्तवान् इति तात्पर्य्यम्॥ ९८॥

( म ) यथाऽभिप्रेतम्—अभिप्रेतम्—अभिलषितस्थानमनतिक्रम्येत्यर्थे, "अव्ययं विभक्ति—" ( २।१।६ पा० ) इति यथार्थेऽव्ययीभावः ; "योग्यतावीप्सापदार्थानतिवृत्ति-सादृश्यानि यथार्थाः" इति दीक्षितोक्तेः, यत् स्थानं प्रतिष्ठासोर्ब्राह्मणस्याभीप्सितमासीत् तत् स्थानमिति यावत्।

मणिभद्रस्तेषामितदुपदेशवचनमाकलय्य ताननुज्ञाप्य केनचित् सहायेन स्वगृहं गत्वा सुखेन भोगं (य) भुञ्जानश्चिरं तस्थौ ।

इति श्रीविष्णुशर्मविरचिते पञ्चतन्त्रे अपरीक्षितकारकं
नाम पञ्चमं तन्त्रम् ॥ ५ ॥

(य) भुञ्जानः,—सेवमानः, स्रक्चन्दनवनितादिविषयजातानामुपभोगकरण-शील इत्यर्थः; [ "ताच्छील्यवयोवचनशक्तिषु चानश्" ( ३।२।१२९ पा० ) इति सूत्रेण ताच्छील्ये द्योत्ये कर्त्तरि चानश्-प्रत्यय इत्यवधेयम् ]।

इत्थं शब्दशास्त्राटवीसञ्चरणपञ्चाननेन वात्स्यवंशावतंसेन पण्डितकुलपतिना बि, ए,
उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता,
तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण-पण्डितश्रीमन्नित्य-
बोधविद्यारत्नाभ्यां परिवर्द्धिता प्रतिसंस्कृता च पञ्चतन्त्रव्याख्या ।

